सरस्वतीभवन-अध्ययनमाला
[ ३६ ]

श्रीनागेशभट्टविरचितः

# परिभाषेन्दुशेखरः

श्रीशेषशर्मसूरिविरचितया

सर्वमङ्गलाख्यव्याख्यया

समलङ्कृतः

सम्पादकः
डॉ० गिरिजेशकुमारदीक्षितः
प्राध्यापकः,
व्याकरणविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SARASVATĪBHAVANA–STUDIES

[ Vol. 36 ]

# PARIBHĀṢENDUŚEKHARAḤ

OF

ŚRĪ NĀGEŚA BHAṬṬA

With the Commentary

## SARVAMAṄGALĀ

BY

ŚRĪ ŚEṢAŚARMA SŪRI

EDITED BY

DR. GIRIJEŚA KUMĀRA DĪXITA

Lecturer in the Deptt. of 'Vyākaraṇa'

Sampurnanand Sanskrit University

Varanasi



VARANASI

1987

**Research Publication Supervisor—**
**Director, Research Institute,**
**Sampurnanand Sanskrit University**
**Varanasi.**

**[ This Thesis has been approved for the 'Vidyāvāridhi' (P-H.D.) degree of Sampurnanand Sanskrit University and has been published out of generous grant from University Grants Commission, New Delhi ]**

**Published by—**
**Dr. Harish Chandra Mani Tripathi**
**Publication Officer,**
**Sampurnanand Sanskrit University**
**Varanasi–221002.**

**Available at—**
**Sales Department,**
**Sampurnanand Sanskrit University,**
**Varanasi–221002.**

**First Edition, 1000 Copies**
**Price Rs. 80·00**

**Printed by—**
**VIJAYA PRESS,**
**Sarasauli, Varanasi.**

सरस्वतीभवन-अध्ययनमाला

[ ३६ ]

श्रीनागेशभट्टविरचितः

# परिभाषेन्दुशेखरः

श्रीशेषशर्मसूरिविरचितया

सर्वमङ्गलाख्यव्याख्यया

समलङ्कृतः

सम्पादकः

डॉ० गिरिजेशकुमारदीक्षितः

प्राध्यापकः,

व्याकरणविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी




वाराणस्याम्

२०४४ तमे वैक्रमाब्दे १९०९ तमे शकाब्दे १९८७ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

□

[ अनुसन्धानप्रबन्धोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन 'विद्यावारिधिः' (पी-एच्० डी०) इत्युपाध्यर्थं स्वीकृतः, विश्वविद्यालयानुदानायोगतो लब्धेनार्थिकसाहाय्येन मुद्रापितः प्रकाशितश्च ]

प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१००२.

□

प्राप्तिस्थानम्—
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१००२.

□

प्रथमं संस्करणम्, ५०० प्रतिरूपाणि
मूल्यम्—८०.०० रूप्यकाणि

□

मुद्रकः—
विजय-प्रेस,
सरसौली, वाराणसी ।

( २ )

# उपोद्घातः

**शब्दशास्त्रमहत्त्वप्रतिपादनम्—**

सुरगवीमुपजीव्य वैज्ञानिकपद्धत्त्या व्यवस्थितो हृदयङ्गमो विचारो यथा भारतभूवलयेऽभूत् न तथा विमर्शो देशान्तरेष्विति विदन्त्येव विज्ञाः। संस्कृत-भाषायाः श्रेणीविभागः, प्रकृतिप्रत्ययार्थविचारः, पदवाक्यानां मूलशब्दगवेषणम्, निखिलस्यापि जगतः शब्दकारणतान्वेषणं भारतीयशाब्दिकानामनुपमं कर्म दर्शं दर्शं पाश्चत्त्या विपश्चित आश्चर्यवारिधौ निपतन्ति।

अस्यैव देशस्य भागधेयमेतद् यदब्दानि यावत् तपस्तप्त्वा पाणिनीय-व्याकरणसदृशानि शब्दशास्त्राणि मनीषिणो निर्मितवन्तः, येन देशस्यास्य गौरव-मद्यापि विजृम्भते भाषान्तरशब्दविदाञ्च यशांसि लोपं गच्छन्ति। भारतीयशब्दविदां प्रयत्नेनैवेयं सुरगवी अद्यापि जीवति। नियतस्य व्याकरणशास्त्रस्याभावादनेका भाषाः विलोपं गता अगम्यार्था वा अभूवन्। पाणिनीयव्याकरणशास्त्रस्याध्ययन-स्यैवायं परिणामो यद् भाषाविज्ञानाभिधेयं नवीनं शास्त्रमेकं जन्म लेभे।

किञ्च विदितमेतत् सर्वेषां पण्डितप्रवराणां यत्सर्वेष्वपि व्याकरणेषु प्राधान्यं पाणिनीयव्याकरणस्यैव। तथा चोक्तं भगवता भाष्यकारेण पतञ्जलिना "पूर्वापरप्रथमचरम०" (पा० सू० २।१।५८) इत्यादिसूत्रे भाष्ये "सर्ववेदपारिषदं हीदं शास्त्रम्" इति। व्यासेनापि कथितम्—

**पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।**
**सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥** इति।

इदञ्च व्याकरणशास्त्रं ज्योतिषामपि ज्योतिः, यतो हि शब्दो ज्योतिः, तस्य प्रकाशनम् = अन्वाख्यानम् = प्रकृतिप्रत्ययतदर्थप्रतिपादनं व्याकरणमेव करोति। तथा चोक्तं दण्डिना काव्यादर्शे—

**इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥** इति।

शब्दशास्त्रं समधिगम्य स्वाशयं प्रकाशयद्भिः भर्तृहरिपादैः प्रतिपादितम्—

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः[1]॥** इति।

---

१. वा० प० १।१६।

पदमञ्जरीकारा हरदत्तमिश्रा अप्यवोचन् शब्दानुशासनप्रस्तावे—

**उपासनीयं यत्नेन शास्त्रं व्याकरणं महत् ।**
**प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम् ।।**
**रूपान्तरेण ते देवा विचरन्ति महीतले ।**
**ये व्याकरणसंस्कारपवित्रितमुखा नराः**[1] ।। इति ।

चिकित्साऽध्यात्मादिशास्त्रवद् व्याकरणशास्त्रमपि लोकानामत्यन्तायोपकारकम् ।

समर्थितमेतद् भर्तृहरिणा—

**कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।**
**चिकित्सालक्षणाध्यात्मशास्त्रंस्तेषां विशुद्धयः**[2] ।। इति ।

व्याकरणमभिनन्दन् भगवान् शेषावतारोऽप्याह—

'सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः, सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति, मातापितरौ चास्य स्वर्गे लोके महीयेते'[3] इति ।

एवञ्चानुशासनतः श्रेष्ठस्य गुणतो गरिष्ठस्य दुर्मेधसो दविष्ठस्य मुख्यवेदाङ्गत्वेन लब्धप्रतिष्ठस्य शब्दानुशासनस्य सम्प्रति स्वरूपं श्रीमतां समक्षं समुपस्थाप्यते । शब्दसाधुत्वप्रतिपादनपरेषु तेषु तेष्वाकरग्रन्थेषु सम्यक्समीक्ष्यमाणेषु शब्दानुशासनस्य स्वरूपद्वयं समुपलभ्यते—एकं लौकिकशब्दव्युत्पादकम्, अपरं परमार्थवस्तुप्रतिपादकम् । 'पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणमिदम्' इत्यादिनाद्यं निर्दिष्टम्, 'इयं सा मोक्षमाणानाम्' इत्यादिना चान्त्यम् ।

एतेनेदं वक्तुं शक्यते यज्जनैः कामं प्रयुज्यमाना पुनः पुनर्व्यवह्रियमाणा काचन वाग् यदा लोकभाषात्वमवाप्नोति, विस्तरञ्चैति, भाषान्तरसम्पर्कात् साङ्कर्यदोषमादधाति, तदा तस्याः स्वरूपनिर्धारणाय सीमानियमनाय च प्रयतमाना विद्वांसः कांश्चन नियमान् निबध्नन्ति । तेषामेव नियमानां व्याकरणपदेन व्यपदेशो भवति । तात्पर्यमिदं यत् शब्दानां निष्पन्नानामेव लघुना यत्नेन ज्ञानं साध्यतेऽनेन व्याकरणेन, न तु नवीनानां शब्दानां निष्पादनं क्रियते ।

संस्कृतभाषाया अपि व्याकरणस्यायमेव धर्मः । व्याकरणाध्ययनं विनैव जना भाषामवगच्छन्ति प्रयुञ्जन्ति चेत्यस्योदाहरणं तु स्वमातृभाषायाः प्रयोग एव वर्तते । व्याकरणशास्त्रेतिहासज्ञा जानन्त्येवेदं यद् यदा व्याकरणशास्त्रं नात्मलाभं

---

१. का० वृ० पृ० १४; २. वा० प० १।१४६ ।
३. व्या० म० भा० शि० सू० पृ० १०२ ।

लभमानमासीत्, नापि तस्याध्ययनपरम्परा प्रसृतासीत् तदानीमपि मानवा येषां संस्कृतभाषा व्यवहारभाषासीत्, व्याकरणनियमज्ञानं विनापि, अर्थात् विनापि उकारेत्संज्ञकात्'वृत्' धातोर्लटि, आत्मनेपदे, ते, शपि, गुणे, टेरेत्वे चेति ज्ञानम्, 'वर्तते' इति प्रयुञ्जाना आसन् । इत्थं व्याकरणाभावकालेऽपि 'जानाति', 'करोति' इत्यादीनां प्रयोग आसीदेवेति निश्चप्रचम् ।

नावश्यकं भाषाज्ञानार्थं व्याकरणमिति व्याकरणप्रयोजनप्रतिपादनावसरे "वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः । अनर्थकमिदं व्याकरणम्[1]" इति भाष्योद्धृतवचनेन स्पष्टीभवति। व्यवहारे जनाः शब्दानुशासनस्य निखिलान् नियमान् नानुसरन्ति, प्रत्युत वैपरीत्यमप्याचरन्ति । अत्र साक्ष्यं तु "अजेर्व्यघञपोः" ( पा० सू० २।४।५६ ) इत्यत्रत्यं वैयाकरणरथकारसंवादप्रतिपादनपरं भाष्यमेव ।

तथाहि...'एवं हि कश्चिद् वैयाकरण आह.....'कोऽस्य रथस्य प्रवेता' इति । सूत आह "अहमायुष्मन्, अस्य रथस्य प्राजिता"इति। वैयाकरण आह ... 'अपशब्दः' इति । सूत आह...'प्राप्तिज्ञो देवानांप्रियः, न तु इष्टिज्ञः, इष्यत एतद् रूपम्' इति । वैयाकरण आह...'अहो ? खल्वेतेन दुरुतेन बाध्यामहे' इति । सूत आह 'न खलु वेञः सूतः, सुवतेरेव सूतः । यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेनेति वक्तव्यम्[2]' । नियमनिगडितान् शब्दान् कदाचित् न प्रयुञ्जन्तीत्यस्यापि निदर्शनम्..... 'नहि वचिरन्तिरपरः प्रयुज्यते, बहुवचनपर इत्यन्ये, झिपर इत्यपरे'[3] इत्यादीनि प्रचुराणि वचनानि तत्र तत्र शास्त्रेष्वुपलभ्यन्ते । व्याकरणस्य नियमानामुपेक्षणं तु लोकानाम् 'बाहुलकात्, निपातनात्, आकृतिगणत्वात्, आप्तवचनात् सिद्धयति' इत्यादिशब्दैः शास्त्रकारैस्तत्र तत्र प्रदर्श्यते ।

किञ्चैतेनेदं वक्तुं शक्यते यत् संस्कृतशब्दा अपि सिद्धाः, तेषामर्थाः, शक्तिः, लिङ्गानि च सिद्धानि सन्ति, लोकतश्च ज्ञातानि भवन्ति । एवं सिद्धे सति शब्दानुशासनस्य साध्वसाधुशब्दविवेकज्ञानपूर्वकसाधुशब्दप्रयोगे धर्मः, व्याकरणव्युत्पादिताश्च शब्दाः साधवः, अन्येऽसाधव इत्यत्र तात्पर्यमध्यवस्यति ।

अत एव व्याकरणस्य साक्षात् परम्परया च प्रयोजनप्रतिपादनावसरे रक्षोहागमलघ्वसन्देहानां साक्षात् प्रयोजनत्वं भाष्ये[4] प्रतिपादितम् । लोके 'अदुहत', 'जहार' इत्यादावदृष्टान् लोपागमवर्णविकारान् 'अदुह्र', जभार' इत्यादौ वेदे दृष्ट्वाऽशाब्दिको भ्रमेण पाठान्तरं कल्पयेत् । वैयाकरणस्तु न व्यामुह्येत्, वेदार्थश्चाध्यवस्येत् । एवञ्च वेदार्थज्ञानपूर्वकं शुद्धैस्तत्तन्मन्त्रैस्तद्विहितकर्मानुष्ठानेन

---

१. व्या० म० भा० १।१।१ पृ० ४० ।
२. व्या० म० भा० पा० सू० २।४।५६ पृ०-५५७ ।
३. वै० सि० कौ० अदा० धा० सं० ११३९ ।
४. व्या० म० भा० १।१।१ पृ० १५ ।

स्वर्गसुखम्, उपनिषदर्थज्ञानेन वा मोक्ष एव पुरुषार्थो व्याकरणाध्ययनस्य फलमिति भावः।

**परिभाषाशब्दार्थनिरूपणम्—**

शब्दशास्त्रमधिगत्य विवेचनस्य पद्धतिद्वयमक्षिगोचरीभवति। तत्रैका अष्टाध्यायीपद्धतिः, अपरा च प्रक्रियापद्धतिः। पद्धतिद्वयस्यापि पन्थानं परिष्कर्त्तुमनेकैश्शाब्दिकैस्तपःस्वाध्यायनिरतैस्ते ते ग्रन्था निर्मिताः, महतायासेन देशस्य कोणे-कोणे प्रचारिताश्च। तत्र प्रथमायाः पद्धतेः परिष्काराय काशिकाभाषावृत्तिप्रमुखा वृत्तिग्रन्थाः, द्वितीयायाश्च पद्धतेः प्रख्यापनाय प्रक्रियाकौमुदीतट्टीकाप्रभृतयो भूयांसो ग्रन्था ग्रथिताः।

शब्दानुशासनस्य परमं प्रयोजनं शब्दानां व्युत्पादनम्, व्युत्पादितानाञ्च शब्दानां साधुत्वसमर्थनम्। तत्र भगवता पाणिनिना शब्दानां व्युत्पादनाय केचन नियमा विनिर्मिताः। तेषाञ्च विभाजनमष्टस्वध्यायेषु कृतम्। ते चाष्टस्वध्यायेषु विभक्ता नियमाः समुदिताः सूत्रपदेन, तदवयवाश्च योगपदेन व्यवह्रियन्त इति जानन्त्येव विद्वांसः। ग्रामैकदेशे ग्रामपदवत् सूत्रैकदेशे योगे सूत्रशब्दप्रयोगश्च न विरुध्यते।

एवमेव प्रयोगनिष्पत्तौ स्वस्वविधेयमादाय परस्परं विरुद्धानां सूत्राणां विरोधनाशाय, इष्टप्रयोगप्रतिपादनायानिष्टप्रयोगव्यावर्त्तनाय च तेषां सूत्राणां समुचितार्थपरिष्काराय वा भगवता पाणिनिना कानिचित् परिभाषासूत्राण्यपि प्रोक्तानि, किन्तु तावताप्यनेकेषु स्थलेष्विष्टप्रयोगनिष्पत्तावनिष्टप्रयोगव्यावृत्तौ सम्भावितसमस्यासमाधानायाक्षमा अन्तेवासिनो भवन्ति। यथा—'महांश्चासौ चन्द्रमा महाचन्द्रमा' इत्यत्रात्वं सूत्रेण साक्षाद् विधीयते, महद्भूतश्चन्द्रमा इत्यत्रात्वाभावः कथम्? एवं गर्गशब्दाद् यञ्, परमगर्गशब्दात्तदभावः कथम्? तुल्यबलविरोधे यथा पूर्वापेक्षया परस्य बलवत्त्वव्यवस्था सूत्रे वर्तते तथा पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरस्य बलीयस्त्वव्यवस्था कथन्न विलोक्यते?

एवमनेकासां समस्यानां समाधानाय परवर्त्तिन आचार्याः काश्चन परिभाषाः सूत्रतो लोकतश्च गवेषयामासुः। ताभिश्चाप्रामाण्यज्ञानानास्कन्दितसूत्रार्थसम्पादनेनेष्टप्रयोगनिष्पत्तावनिष्टप्रयोगव्यावृत्तौ च साहाय्यं सम्पाद्यते। चोक्तं परिभाषालक्षणम्—"सङ्केतग्राहकभिन्नत्वे सति शब्दधर्मिकसाधुत्वप्रकारकशास्त्रजन्याप्रामाण्यज्ञानानास्कन्दितबोधे सहकारित्वेन मुन्यभिप्रेतितत्वे सति पाणिन्युच्चरितभिन्नत्वं परिभाषात्वम्" इति।

नन्वित्थं परिभाषालक्षणस्वीकारेऽपि "अकः सवर्णे दीर्घः" (पा० सू० ६।१।१०१) इत्यस्य "इको यणचि" (पा० सू० ६।१।७७) इत्येतदपेक्षया

व्याप्यत्वेन तस्य च व्यापकत्वात् तस्मिन् सवर्णाजतिरिक्तत्वेन सङ्कोचात् तद्बोधोपयोगिबोधजनकत्वेन परिभाषात्वम् "अकः सवर्णे दीर्घः" ( पा० सू० ६।१।१०१ ) इत्यत्रातिव्याप्तमिति चेत् ? न, लक्ष्यधर्मिकसाधुत्वप्रकारकबोधाऽजनकत्वस्यापि निवेशेनादोषात्। "षष्ठी स्थानेयोगा" ( पा० सू० १।४।४९ ) इत्यादीनां पाणिन्युच्चरितत्वेऽपि "निर्दिश्यमानस्यादेशा भवन्ति" ( परि० १२ ) इत्यानुपूर्वीमद्वाक्यस्य पाणिन्यनुच्चरितत्वान्न दोषः। स्वातन्त्र्येण व्यवस्थापिकानाम् "असिद्धं बहिरङ्गमन्तरङ्गे" ( परि० ५० ) इत्यादीनामनेवंविधत्वेऽपि पाणिनिप्रयत्नानुमितत्वसादृश्यादारोपितं परिभाषात्वमनुसन्धेयमिति[1]।

यद्यपि व्याकरणाकरेषु सर्वेष्वपि ग्रन्थेषु परिभाषाशब्दस्तु विलोक्यते किन्तु तस्य निर्दुष्टं लक्षणं क्वचनापि न दृश्यते। किम्बहुना, पाणिनिना तु तस्य नामापि नोच्चारितम्। एवञ्च परिभाषापदार्थनिरूपणप्रसङ्गे वैयाकरणैः किञ्चित्काठिन्यमनुभूयते। तथापि परवर्तिनो विद्वांसः परिभाषापदार्थनिरूपणे लेखनीं व्यापारयामासुः। तथा च पदमञ्जरीकारो हरदत्तमिश्रः—'परितः सर्वत्र पूर्वत्र परत्र व्यवहितेऽनन्तरे च भाष्यते कार्यमनया सा परिभाषा' इति।

अन्येऽपि प्राक्तना आचार्याः—'परितो व्यापृतां भाषां परिभाषां प्रचक्षते', 'भाष्यन्ते परितो यस्मात् परिभाषास्ततः स्मृताः', 'परितो भाष्यते या सा परिभाषा', 'विधौ नियमकारिणी परिभाषा, 'अनियमे नियमकारिणीत्वं परिभाषात्वम्', 'लिङ्गवत्त्वे सति फलवत्त्वं परिभाषात्वम्' इत्यादि परिभाषालक्षणं स्वीकुर्वन्ति। परन्त्वेतत् सर्वलक्षणापेक्षया परिभाषेन्दुशेखरटीकाभूतिकारस्य पूर्वोक्तं लक्षणमतीव स्पष्टं दोषरहितञ्च प्रतीयते।

सर्वमङ्गलाकारेणापि परिभाषापदार्थनिरूपणावसरे—'अत्र वाचनिकानीत्यन्तं विशेषणं परिभाषाशब्दस्य रूढ्यर्थबोधनाय। परिभाषात्वञ्च—सङ्केतसम्बन्धेन तत्पदवत्त्वम्, तच्च प्राचीनतन्त्रस्थसंज्ञादिकाण्डपञ्चकान्यकाण्डस्थानामेव। तेषामेव तथा शिष्टव्यवहारविषयत्वात्। तेन "पूर्वत्रासिद्धे न स्थानिवत्" ( का० वा० १।१।५८ ) इत्यादीनां व्यावृत्तिः, निषेधातिदेशयोः पूर्वोक्तयोः सङ्ग्रहश्च सिद्धः।

केचित्तु वाचनिकानीत्यन्तमेका कोटिः, ज्ञापकन्यायसिद्धनीत्यन्तमपरा कोटिः, भाष्यवार्तिकयोर्निबद्धानीति तूभयत्र विशेषणम्। तेन सौत्राणाम् 'संज्ञापूर्वको विधिरनित्यः' ( परि०९४ ) इत्यादीनाञ्च व्युदास इत्याहुः, तच्चिन्त्यम्। सीरदेवादिभिः परिभाषात्वेनाभ्युपगतानाम् "पूर्वत्रासिद्धे न स्थानिवत्" (का०वा०१।१।५८) इत्यादीनां पाणिनीयतन्त्रस्थज्ञापकन्यायसिद्धत्वेन भाष्यसम्मतत्वेन तासामव्या-

---

१. परि० शे० टी० भू० तत्त्वा० पृ० ४।

ख्यानेन न्यूनतापत्तेर्दुर्वारत्वात्, ज्ञापकन्यायसिद्धानामपि तन्त्रान्तरे वाचनिकत्वेन तेनैव सङ्ग्रहसम्भवेन द्वितीयकोटेः फलाभावाच्च ।

ज्ञापकपदेनैतच्छास्त्रीयं लिङ्गम्, न्यायपदेन लोकतन्त्रप्रसिद्धा युक्तिः । एतेनाऽनियमे नियमकारित्वम्, पक्षप्राप्तार्थानुवादकत्वम्, संज्ञाशास्त्रान्यत्वे सति विध्यपेक्षितार्थसमर्पकत्वं वा परिभाषात्वमित्यपास्तम् । 'अनुदात्तं पदमेकवर्जम्" ( पा० सू० ६।१।१८ ) "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" ( परि० २१ ) इति विधिनिषेधरूपपरिभाषाणामसङ्ग्रहापत्तेस्तस्मात् प्रत्याहारपदवत् परिभाषापदं तथा शिष्टव्यवहारविषयेषु योगरूढम् । तदुक्तम्—

**एकदेशस्थिता शास्त्रभवने याति दीपताम् ।**
**परितो व्यापृतां भाषां परिभाषां प्रचक्षते[1] ॥**

इति प्रतिपादितम् । एवञ्च परिभाषापदस्य योगरूढत्वं प्रतिपादितं भवतीति विभावयन्तु विद्वांसः ।

**व्याडिप्रभृतिकृतपरिभाषाव्याख्यासु परिभाषेन्दुशेखरस्य महत्त्वम्—**

व्याकरणशास्त्रस्य तस्य तस्य सम्प्रदायस्य तैस्तैर्वैयाकरणैस्ते ते परिभाषा-विषयका ग्रन्था व्याकरणशास्त्राकरग्रन्थान् पर्यालोच्य महता परिश्रमेण विनि-र्मिताः । यद्यपि तेषां परितोऽवगाहनेन, परिभाषाविषयकतत्तद्व्याख्यानावलोकनेन तावदर्थसमावेशपरिपाटीपाटवदर्शनेन च चेषां कोविदानां व्याकरणशास्त्रपरि-शीलनबुद्धिवैभवस्य पराकाष्ठा परिलक्ष्यते, तथापि परिभाषेन्दुशेखरस्य तेषु किमप्यपूर्वमेव महत्त्वं वर्तत इति स्वीकुर्वन्त्येव तत्तत्परिभाषाग्रन्थपरिशीलनरता विद्वांसः ।

परिभाषाणां दुरवबोधतया तासां सम्यग् ज्ञानार्थं काचिद् व्याख्यापेक्षिताऽऽ-सीदतः श्रीमता सीरदेवेन संक्षिप्तो नातिसरलः परिभाषावृत्तिनामको व्याख्या-नरूपो ग्रन्थो विरचितः । किन्तु विरचितेन नानेन ग्रन्थेन जिज्ञासूनां छात्राणां सन्तोषः समजायतेति हृदि निधाय श्रीमता नागेशेनैतासां परिभाषाणां नव्यन्याय-शैलीमुखेन विस्तृता व्याख्या विरचिता । सा एव व्याख्या 'परिभाषेन्दुशेखर' इति नाम्ना पण्डितमण्डलीषु प्रसिद्धा ।

परिभाषेन्दुशेखरनिर्माणकालमारभ्याऽद्यावधि केनाऽपि वैयाकरणेन नागेशनिर्धारितं परिभाषाविषयकं वस्तु मनागपीतस्ततः कर्तुं साहसं कृतम्भवेदिति वक्तुं सुतरां दुश्शकम् । कारणञ्चात्रेदं यद् व्याख्येयं तस्य समयस्य रचना प्रतिभाति यस्मिन् समये व्याकरणशास्त्रस्याकरग्रन्थानां सर्वतः परिशीलनेन व्याकरणविषय-माश्रित्यानेकमौलिकग्रन्थनिर्माणेन पण्डितप्रवराणां परिषदि सततं प्रवचनेन च

---

१. सर्वमङ्गला पृ० ३ ।

शब्दशास्त्रे नागेशेन परा प्रौढिः प्राप्तासीत् । यद्यपि आधुनिकेन दाक्षिणात्येन विदुषा शेषाद्रिशर्मणा विरचिते परिभाषाविवरणात्मके परिभाषाभास्कराभिधे ग्रन्थे नागेशस्य मतं प्रचुरं खण्डितम्, तथापि खण्डनमिदं नातीव समञ्जसमिति नवनवोन्मेषशालिप्रतिभावद्भिरेतस्य ग्रन्थस्य अनादरादेव सूचितप्रायम् । अतः परिभाषेन्दुशेखरस्य सर्वातिशायित्वं निर्विवादमेव ।

परिभाषेन्दुशेखरस्य पूर्णतोऽध्ययनेन परितः प्रमाणयितुं शक्यते यदयं व्याकरणविषयकोऽन्तिमो ग्रन्थोऽप्रतिमप्रतिभस्य नागेशस्य । शब्दशास्त्रस्य पदार्थ-बोधे अस्य महानुभावस्य महती प्रौढिरासीद् यया प्रौढ्या स्वप्राग्वर्तिनां प्रायः सर्वेषां व्याकरणशास्त्रनिर्माणकर्तॄणां विदुषां सिद्धान्ता आलोचिताः प्रत्याख्याताश्च । किम्बहुना, निखिलसम्प्रदायसम्मानितसिद्धान्तो भगवान् भाष्यकारः **पतञ्जलि**रपि शब्दशास्त्रसिद्धान्तस्थापने नागेशस्य एकदेशोक्तिप्रभृतिप्रहारादात्मानं रक्षितुं नाशकत् ।

श्रीमता नागेशभट्टेन ग्रन्थनिर्माणे सूत्रशैली एव समाद्रियते । अथ च व्याख्यालेखनेऽपि काममभ्यस्ता सा सूत्रशैली क्वचनापि तेन महानुभावेन न परित्यक्ता सैव च परिभाषेन्दुशेखरेऽपि नियोजिता विलोक्यते । अत एव पाणिनीय-व्याकरणग्रन्थेषु परिभाषेन्दुशेखरस्य यावत्यो व्याख्याः सन्ति न तावत्योऽन्येषां ग्रन्थानाम् । यतो हि ग्रन्थस्यास्याध्ययनावसरे पदे पदे काठिन्यमनुभवन्तो विद्वांसश्छात्राणामुपकारायाऽनेका व्याख्या विनिर्मितवन्तः । परिभाषेन्दुशेखरस्य निर्माण-रीतेरवलोकनेन पदे पदे प्रतीयते यत् प्रयोगसिद्धिसमयेऽन्तेवासिभिरुद्भावितानां समस्यानां समाधानाय प्रयुक्तानां परिभाषाणां संक्षिप्तं व्याख्यानमेव कालेन परिभाषेन्दुशेखरग्रन्थरूपेण प्रसिद्धिं प्राप्तवत् । यतो यथा मञ्जूषायामन्यत्र च विषयविवेचनविस्तरो न तथात्राऽवलोक्यते ।

यद्यपि काश्चन परिभाषा अस्यापवादभूता अपि विलोक्यन्ते तथापि भूयस्यः परिभाषास्तथाविधा एव व्याख्यायामस्यामुपलभ्यन्ते यासां व्याख्यानं ज्ञापकफलप्रदर्शनेनैव समाप्तिमगात् । यत्र तत्र परिदृश्यमानं विशदविवेचनमपि ग्रन्थममुं परिभाषाव्याख्याग्रन्थयशसा समलङ्कर्तुं नालमिति प्रतिपादने मनागपि मनो न सङ्कुचति सुमेधसां शब्दशास्त्रज्ञानाम् ।

**परिभाषेन्दुशेखरस्थप्रकरणत्रयसमीक्षा—**

परिभाषेन्दुशेखरस्य भूतिप्रभृतिव्याख्यापर्यालोचनेनावगम्यते यद् व्याख्यायामस्यां त्रीणि प्रकरणानि सन्ति । शास्त्रत्वसम्पादकं प्रथमं प्रकरणम्, बाधबीज-कथनं द्वितीयम्, शेषार्थकथनञ्च तृतीयम् । तत्र 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्' ( परि० १ ) इत्यत आरम्भ 'एकदेशविकृतमनन्यवत्' ( परि०

३७ ) इत्येतत्पर्यन्तं प्रथमं प्रकरणम् । तदनु 'पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' ( परि० ३८ ) इत्यारभ्य 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' ( परि० ७१ ) इत्येतत्पर्यन्तं द्वितीयं प्रकरणम् । ततश्च 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' ( परि० ७२ ) इत्यारभ्य 'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' ( परि० १३३ ) इत्येतत्पर्यन्तमन्तिमं तृतीयं प्रकरणम् ।

एवञ्च प्रकरणविभाजनं विधाय प्रथमे प्रकरणे शास्त्रत्वसम्पादकं प्रथमं प्रकरणमित्यन्वर्थकशास्त्रत्वसम्पादिकानां परिभाषाणां निवेशः कृतः ग्रन्थकृता । अप्रामाण्यज्ञानानास्कन्दितबोधजनकत्वमेव शास्त्राणां शास्त्रत्वम् । अप्रामाण्यज्ञानानास्कन्दितबोधं विनेष्टानिष्टस्थलप्रवृत्तिनिवृत्ती न भवतो लोकानाम् ।

एतदनन्तरं प्रथमप्रकरणे व्याख्याताभिः परिभाषाभिः सूत्राणां शास्त्रत्वे प्रतिपादितेऽपि उत्पद्यत एवेयं जिज्ञासा यत् तिसृणामित्यत्र त्रयादेशस्य तिस्रादेशस्य च प्राप्तिर्वर्तते । तत्र त्रयादेशतिस्रादेशयोर्मध्ये कतरस्य प्रवृत्तिः स्यात् ? द्वयोः प्रवृत्तौ त्वनिष्टमेव जायेत । 'विप्रतिषेधे परं कार्यम्' ( पा० सू० १।४।२ ) इत्यनेन परत्वात् तिस्रादेशस्य प्राक्प्रवृत्तिप्रतिपादनेऽपि पुनस्त्रयादेशप्रवृत्तिः केन निवार्येत इति शङ्का वरीवर्त्येव । तस्या निरासार्थम् 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' ( परि० ४० ) इत्यस्या उपन्यासः कृतस्तस्याश्च पुनर्बाधो बोधितः ।

एवं पूर्वापेक्षया परस्य बलवत्त्वं सम्पादितम् । तच्च शास्त्रेण न स्यादिति बाधचिन्ताया उपयोगः प्रदर्शितः । तदर्थमेव 'पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' ( परि० ३८ ) इत्यारभ्य 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' ( परि० ७१ ) इत्यन्तं बाधबीजाख्यं द्वितीयं प्रकरणमारब्धम् ।

ततश्च प्रकरणद्वयावशिष्टानां कासांश्चित् परिभाषाणां व्याख्यानमन्तिमे प्रकरणे समुपलभ्यते । तथा च—'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' ( परि० ७२ ) 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' ( परि० ७३ ) इत्याभ्यां परिभाषाभ्यां पूर्वोक्तं शास्त्रत्वमेव सम्पाद्यते । एवंविधा अनेकाः परिभाषा अत्र प्रकरणे वर्तन्ते यासां साक्षात्परम्परया शास्त्रत्वसाहाय्यसम्पादने एव व्यापारो विलोक्यते । अतस्तासां प्रथमतन्त्रावशिष्टत्वं निश्चप्रचमेव । एवं काश्चन द्वितीयप्रकरणावशिष्टा अपि यथा—'सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् भवेत्' ( परि० १०० ) 'निषेधाश्च बलीयांसः' ( परि० १२१ ) इत्यादयः । एतद्भिन्ना अपि काश्चन विलोक्यन्ते, यथा—'पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते' ( परि० १२४ ) इत्यादयः ।

एवञ्च प्रकरणस्येत्थं विभाजने किं बीजमिति शङ्का जागर्त्येव शब्दशास्त्रतत्त्वज्ञानां मनसि । तत्रेत्थं वक्तुं शक्यते यत्—परिभाषेन्दुशेखरस्य तत्तद्व्याख्या-

दर्शनेनेदमवगम्यते यद् ग्रन्थस्यास्य व्याख्यानकर्तॄणामासीत् काचन महती परम्परा। तस्यां परम्परायां विद्यमानानां प्रतिभासम्पन्नानां केषाञ्चन व्याकरणशास्त्रतत्त्वज्ञानां तस्यां दिशि दृष्टिपातः स्वाभाविकश्छात्राणामध्ययनसौविध्यायैवेति । इदमपि कल्पयितुं शक्यते यत् पूर्वाचार्यव्याख्यातपरिभाषातिरिक्ता याः परिभाषाः श्रीमता विदुषा नागेशेन पश्चात् सङ्कलितास्ताः—क्रममनादृत्य परिशिष्टे प्रकरणे निवेशिता इति । अत्र युक्तायुक्तत्वञ्च सुधीभिरूहनीयमित्यलमधिकेन ।

**परिभाषेन्दुशेखरकर्तुर्नागेशस्य संक्षिप्तं जीवनवृत्तान्तम्--**

महामहिमशाली निखिलशास्त्रतत्त्वज्ञतागुणैकमाली माननीयोऽयं नागेशः कदा, कुत्र, कस्मिन् कुले च समजनि, कदा च कालकवलितोऽभूत् इत्येतत्सर्वं प्रबलप्रमाणाभावेन तिमिरततितिरोहितमेवाद्यापि वर्तते । यद्यप्यन्येषां प्राचीनानां सर्वेषां प्रखरप्रसिद्धिमुपगतानामपि भारतीयमहापुरुषाणां जीवनवृत्तं तिमिराच्छन्नमेव, तथाप्यनुमानेन कल्पनया वा इतिहासज्ञैः यन्निरूपितं तदेवात्राप्युपस्थाप्यते ।

यद्यपि विविधविद्याविलासोल्लसितबुद्धिविभवशाली वैयाकरणकुलमान्यो नागेशः कदा भारतवर्षं स्वजन्मनालङ्कृतवान् इति निश्चयाऽवसरे सर्वैरपि इतिहासज्ञैः प्रबलप्रमाणत्वेन किञ्चिदपि कुत्रापि नोपस्थापितम्, तथापि पण्डितराजजगन्नाथरचितरसगङ्गाधरग्रन्थस्य मर्मप्रकाशनामकटीकायाः कर्ता नागेश एवेति सर्वैरेवेतिहासज्ञैः स्वीक्रियते । पण्डितराजस्तु शाहजहांभिधेयस्य दिल्लीश्वरस्य यवनाधिपतेः संसदि आसीत् । तत एव पण्डितराजपदवीञ्च लब्धवान् । यवनाधिपतेः शाहजहांभिधेयस्य च राज्यसमयः १६२८–१६५८ ख्रिस्ताब्द आसीदितीतिहासविदां परामर्शः ।

एतावता प्रबन्धेनेदं वक्तुं शक्यते यदयमेव कालः पण्डितराजजगन्नाथस्यासीत् । एवञ्च पण्डितराजकृतरसगङ्गाधरस्य मर्मप्रकाशाख्यटीकायाः कर्तुर्नागेशस्य कालस्तदुत्तरमेव निश्चेतुं शक्यते । अन्यच्च, नागेशस्य गुरोः पितुः **श्रीभानुदीक्षितस्य** सामयिक एव पण्डितराज इत्यपि प्रमाणीकुर्वन्तीतिहासज्ञाः । अतः पण्डितराजात् प्रायः पञ्चाशद्वर्षाणि पश्चादस्य महानुभावस्य नागेशस्य जन्म इत्यनुमानप्रमाणेन निश्चप्रचम् । इत्थमष्टादशशताब्दस्य प्रारम्भ एवास्य महापुरुषस्य जन्मकाल इति निश्चीयते ।

किञ्चापरमपि प्रमाणमत्रेतिहासज्ञा उपस्थापयन्ति । तत्त्विदं यद् जयपुराधीशेन श्रीसवाईजयसिंहवर्ममहोदयेनाश्वमेधयज्ञप्रसङ्गेऽयं महानुभावो नागेश आमन्त्रित आसीत् । आमन्त्रितोऽपि नागेशः 'अहं क्षेत्रसन्यासं गृहीत्वा काश्यां स्थितोऽस्मि, अतः काशीं परित्यज्य नान्यत्र गन्तुं शक्नोमि' इति तदामन्त्रणमस्वीकृतवान् । जयपुराधीशस्तु १७१४ ख्रिस्ताब्दे अश्वमेधयज्ञं समारब्धवानिति

महामहोपाध्यायदुर्गाप्रसादशर्मणो लेखादवगम्यते । अतः प्रमाणेनानेनापि नागेशस्य कालोऽष्टादशशताब्दस्य प्रारम्भ एव आयाति ।

महानुभावस्यास्य माता सतीदेवी, पिता च शिवभट्ट इति विदितमेव तत्र भवतां वैयाकरणाग्रणीनां विदुषाम् । स्वयं चानेन लघुशब्देन्दुशेखरस्य मङ्गलश्लोके प्रतिपादितम्—

**पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः ।**
**शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः ।।** इति ।

विविधशास्त्रज्ञेनानेन वहवो ग्रन्था ग्रथिताः, येषु निम्नलिखिता इदानीमप्युपलभ्यन्ते—(१) भाष्यप्रदीपोद्द्योतः (२) काव्यप्रदीपोद्द्योतः (३) लघुशब्देन्दुशेखरः (४) बृहच्छब्देन्दुशेखरः (५) परमलघुमञ्जूषा (६) लघुमञ्जूषा (७) बृहन्मञ्जूषा (८) परिभाषेन्दुशेखरः (९) प्रायश्चित्तेन्दुशेखरः (१०) परमार्थसारविवरणम् (११) योगसूत्रवृत्तिः (१२) दुर्गासप्तशतीटीका (१३) रसगङ्गाधरमर्मप्रकाशः (१४) रसतरङ्गिणीटीका (१५) रसमञ्जरीटीका (१६) वृत्तिसङ्ग्रहः (१७) वेदान्तसूत्रवृत्तिः (१८) सांख्यसूत्रवृत्तिः (१९) सापिण्डचनिर्णयः (२०) एकश्रुत्यवादः (२१) वाल्मिकीयरामायणटीका (२२) अध्यात्मरामायणटीका च । केचित्तु-शब्दरत्नमपि नागेशस्यैवेति वदन्ति । तत्रेतिहासविद एव प्रमाणभूताः ।

एवं विविधगुणविशिष्टस्य विद्वज्जनलब्धप्रतिष्ठस्यापि नागेशस्य सन्ततिर्नासीदिति **'शब्देन्दुशेखरं पुत्रं मञ्जूषां चैव कन्यकाम्'** इत्यादिकया मञ्जूषान्तं तदीयोक्त्यैव निर्णेतुं शक्यते । अतः परं न किञ्चिद्वक्तुं शक्यते महानुभावस्यास्य जन्मादिविषये । मन्ये यत्तस्मिन् काले ग्रन्थकाराणां जन्मादिज्ञानसूचकलेखनप्रणाली एतादृशी नासीद्यादृशीदानीमुपलभ्यते । अतः परम्परादोषेणैव वहूनां प्राचीनानां महापुरुषाणां वास्तविकमितिवृत्तमज्ञातमेवेति सुधियो विभावयन्तु ।

**परिभाषेन्दुशेखरस्य सर्वमङ्गलाख्यव्याख्यायाः कर्तुः शेषशर्मणः परिचयः—**

सुविदितमेवास्ति तत्रभवतां प्रेक्षावतां विदुषां यत् संस्कृतवाङ्मये सुप्रसिद्धानां बहुसख्यककवीनामन्येषाञ्च सारस्वतसाधकानामुदन्तं प्रायेणाज्ञातमेव । हेतुश्चात्र तेषां लौकिकप्रतिष्ठानिरपेक्षवृत्तिः । अद्यत्वे खलु यथा लघुकायग्रन्थरचनाप्रसङ्गे लेखकानां स्वीयवृत्तख्यापनप्रवृत्तिरवलोक्यते, नैव तादृशी प्रवृत्तिरासीत् प्राक्तनानाम् । सन्ततविद्याभ्यसनाभ्यासनपराणां सारस्वतह्रदनिमज्जनमात्रतुष्टानां विविधशास्त्रानुशीलनविचाररचनानिपुणानां सुधियामात्मचरितालेखनं प्रति दृश्यते सर्वत्रोपेक्षा । अपरञ्च अन्येन केनचिदपि नैव तादृशी सरणिरनुसृता यया पूर्वेषामाचार्याणां जीवनवृत्तं विज्ञातं भवेत् । अत एव

इतस्ततो विकीर्णसामग्रीभिः तत्र तत्र ग्रन्थादिषु समुपलब्धप्रमाणान्तरैश्च काल्पनिकः कोऽपि संस्तवो ग्रन्थकृतामनुसन्धीयते इदानीन्तनैः। तच्च सम्यक्पुष्टप्रमाणाभावे आनुमानिकं काल्पनिकं सन्दिग्धमेव भवति, तथापि तत्र प्रयत्नो विधीयत एव सर्वैः।

परिभाषेन्दुशेखरस्य सर्वमङ्गलाटीकाकर्तुः शेषशर्मणः किमप्यैतिहासिकं वृत्तं नोपलभ्यते। असौ महानुभावः कमुद्देशं स्वीयजन्मना समलञ्चकार इति न ज्ञायते। एवमेव कस्मिन् काले असौ जन्म लेभे, कदा च ग्रन्थमरचयत्, सर्वमेतदन्धकाराच्छन्नमेव। अनेन विदुषा नव्यव्याकरणपरम्परायां शेखरायमाणयोः नागेशभट्टविरचितयोः परिभाषेन्दुशेखर–लघुशब्देन्दुशेखरेति नामभ्यां प्रसिद्धयोः ग्रन्थयोः विशिष्टा व्याख्यात्मिका टीका व्यधायि। उभयत्रापि स्वीयं संक्षिप्तमपि वृत्तं नोदभावि। ग्रन्थगर्भेऽपि न तादृशः कोऽप्युल्लेखोऽवाप्यते येनैतस्य विषये कश्चिन्निर्णयः स्फुटो भवेत्। अस्यामवस्थायामस्य परिचयान्वेषणमतिदुष्करं प्रतीयते, तथापि पूर्वानुसृतदिशा केचन विचारा अत्र प्रस्तूयन्ते। मन्ये ते आनुमानिका एव। सन्दिग्धहेतुकेन अनुमानेन कृतो निर्णयश्च आपातरमणीय एव भवतीति सुप्रथितम्। तथा चोक्तं भर्तृहरिणा—

> **अवस्थादेशकालानां भेदाद्भिन्नासु शक्तिषु।**
> **भावानामनुमानेन प्रसिद्धिरतिदुर्लभा**[1] ॥
> **हस्तस्पर्शादिवान्धेन विषमे पथि धावता।**
> **अनुमानप्रधानेन विनिपातो न दुर्लभः**[2] ॥ इति।

परिभाषेन्दुशेखरस्य प्राचीनतमासु टीकासु अन्यतमेयं शेषशर्मणः सर्वमङ्गला[3]। परिभाषेन्दुशेखरस्य प्रकाशिता अप्रकाशिताश्च यावत्यः टीकाः अद्यावधि समुपलब्धाः तासु कस्याश्चिदपि सर्वमङ्गलायामनुल्लेखात् टीकाकर्तॄणाञ्च स्मरणाभावादनुमीयते यत् टीकेयं प्रारम्भिकदशायामेव विरचिता स्यात्। अन्यथा कस्यचिदेकस्यापि टीकाकर्तुः कुत्रचिद् खण्डनमण्डनप्रसङ्गे स्मरणमवश्यमेव स्यात्। इदमपि सम्भाव्यते यत् शेषशर्मा नागेशभट्टस्य अनुपदपरवर्त्ती भवेत्। यतो हि नागेशभट्टस्य स्थितिकालः ( सं० १७३०-१८१० ) अवधारितः सुधीभिः। गदा-टीकाकर्ता वैद्यनाथपायगुण्डमहोदयः ( सं० १७५०-१८०० ) नागेशभट्टस्य साक्षात् शिष्य आसीत्–इत्यपि सुप्रथितम्, ऐतिहासिक प्रमाणैश्च सिद्धम्[4]। गदाटीकायाः कश्चिदपि प्रसङ्गः सर्वमङ्गलायां नैव समुपलभ्यते।

---

१. वा० प० ब्र० का० कारि० ३२;  २. वा० प० ब्र० का० कारि० ४२।

३. द्रष्टव्यम्–युधिष्ठिरमीमांसकस्य–व्याकरणशास्त्रस्येतिहासः, द्वितीयो भागः पृ० २६०।

४. उपर्युक्तग्रन्थस्यैव प्रथमो भागः पृ० ३९१-३९४।

मन्ये शेषशर्मणा यदा स्वीया सर्वमङ्गलाटीका विरचिता तदा गदा-टीका सुधियां समाजे विशिष्टं स्थानं लब्धुं नाशकत् ।

यद्यपि शेषशर्मसूरिणा स्वस्मिन् टीकाग्रन्थे काचिदपि एतादृशी सूचना न प्रदत्ता येनास्य सुनिश्चितः स्थितिकालः स्थिरो भवेत्, तथापि ग्रन्थारम्भे स्वगुरोः विश्वेश्वरस्य स्मरणमकारि। तेनैवास्य समयः स्थिरयितुं शक्यते। परिभाषेन्दुशेखरस्य टीकामारभमाणः शेषशर्मसूरिः अधोनिर्दिष्टेन श्लोकेन प्रथमं स्वविद्यागुरुं नमस्कृत्य व्याख्यानमुपस्थापयति—

**गुरुं विश्वेश्वरं नत्वा ध्यात्वा च हृदि भारतीम् ।**
**विवृणोमि यथामेधं परिभाषेन्दुशेखरम्**[1] ।। इति ।

अनेन शब्देन्दुशेखरस्यापि प्रभानाम्नी टीका व्यरचि, अद्यापि सा सरस्वतीभवनपुस्तकालये उपलभ्यते। तत्र गुरोराख्यां विनैव नमनं विहितम् । तद्यथा—

**नत्वा गुरुपदद्वन्द्वं ध्यात्वा च हृदि भारतीम् ।**
**शब्देन्दुशेखरव्याख्या क्रियते शेषसूरिणा**[2] ।। इति ।

एतेन ज्ञायते यत् पूर्वं परिभाषेन्दुशेखरं विवृण्वता अनेन विदुषा गुरोः नामस्मरणं कृतमासीत्, अस्माद्धेतोः अपरस्मिन् ग्रन्थे अभिख्यास्मरणस्य आवश्यकता नान्वभावि। अस्तु, सुस्पष्टमेतद् यदसौ विश्वेश्वरस्यान्तेवासी आसीत् । अतः अमुष्य कालः विश्वेश्वरस्य स्थितिकालसापेक्ष इति सुनिश्चितम् ।

अष्टादशे शतके विश्वेश्वरेति नाम्ना विश्रुतः एक एव आचार्यः स्मर्यते समीक्षकैः। स च आलङ्कारिकाचार्यपरम्परायामन्तिम इत्यपि ज्ञायते। असौ उत्तरप्रदेशान्तर्गत-गढवाल-मण्डले पार्वत्यक्षेत्रे पाटिया-ग्रामे पाण्डेय-ब्राह्मणकुले जन्म लेभे। अस्य पितुर्नाम श्रीलक्ष्मीधर आसीत्। सोऽपि स्वीये समये विदुषां समाजे विशिष्टां प्रतिष्ठामभजत्। तदीयसंस्कारानुप्राणितः विश्वेश्वरोऽपि आलङ्कारिकेषु, वैयाकरणनिकाये, नैयायिकव्यूहे च ग्रन्थनिर्मिति-शास्त्राध्ययनाध्यापनादिना सर्वातिशायि गौरवपूर्णं च स्थानमलभत। एतेन सर्वतन्त्रस्वतन्त्रप्रतिभया साहित्यशास्त्रे पञ्च, न्यायशास्त्रे द्वौ, शब्दशास्त्रे च 'वैयाकरणसिद्धान्त-

---

१. सर्वमङ्गला—पृ० १ ।

२. द्र०—लघुशब्देन्दुशेखरस्य प्रभाव्याख्या—सरस्वतीभवनपुस्तकालयः, सं० सं० वि० वि० ग्रन्थ-संख्या ३८४८४ ।

सुधानिधिः' इति नाम्ना प्रसिद्धः एकः सुमहान् ग्रन्थो विरचित इति सुविदितम्। आचार्यविश्वेश्वरस्य समयोऽष्टादशे शतके निर्धारितः[1]।

एतेनेदं सम्भाव्यते यत् शेषशर्मा अस्यैवाचार्यविश्वेश्वरस्य शिष्य आसीत्। इदमपि नैवासम्भाव्यं यत् किल शेषशर्माऽपि तस्मिन्नेव पार्वत्यप्रदेशे कुत्रचिज्जातो भवेत्। विश्वेश्वरस्यान्तेवासित्वादस्य स्थितिकालः अष्टादशतमशतकस्य उत्तरार्द्धमेकोनविंशतितमशतकस्य पूर्वार्द्धश्च निश्चीयते। युधिष्ठिरमीमांसको विश्वेश्वरं विश्वेश्वरसूरीति नाम्ना स्मरति,[2] मन्ये गुरोरनुकारी शेषशर्मा स्वकं नाम 'सूरि' इत्युपाधिना समलङ्करोत्। अत एवासौ शेषशर्मा, शेषसूरिः, शेषशर्मसूरिः, इति त्रिभिर्नामभिर्व्यपदिश्यते।

अत्रेदं बोध्यम्—'शेषशर्मा' इति नाम युधिष्ठिरमीमासकस्य 'संस्कृत व्याकरणशास्त्र का इतिहास' इत्याख्ये ग्रन्थे वर्तते[3]। 'शेषसूरिः' इति तु लघुशब्देन्दुशेखरस्य व्याख्यायां स्वयं चायं लिखति 'क्रियते शेषसूरिणा' इति। सम्पूर्णश्लोकस्तु प्राक् प्रदर्शित एव। 'शेषशर्मसूरिः' इत्याकारकमपि नाम भवितुमर्हति इत्यपि अनेनैव महानुभावेन प्रमाणितं सर्वमङ्गलायामन्ते। तद् यथा 'इति श्रीमदद्वैतविद्यापारावारीणसुब्रह्मण्यसूरितनूजशेषशर्मसूरिविरचिता सर्वमङ्गला समाप्ता' इति। इत्यलमधिकेनानल्पजल्पनेन।

**परिभाषेन्दुशेखरस्य सर्वमङ्गलाख्यव्याख्याया वैशिष्ट्यम्—**

परिभाषेन्दुशेखरस्य यावत्योऽपि व्याख्या अद्यावधि प्रकाशिताः, तावतीषु

---

1. Viśveśvara was the son of Lakṣmīdhara of Pāṇḍeya family of Almoda. His descendants of the ninth generation are know there. He lived in the begining of 18th century. He was a literary genius and began writing when he was ten. Such men are rarely long lived and he died at 34. In poetics, his writings are Alaṇkara-Kaustubha, Alaṇkara Karnabharan, Alaṇkara Kulpradip, Alaṇkara muktāvalīm, Kāvyalila and Kāvyaratna, Rasa–Candrikā and commentary on Bhānudatta's Rasamañjarī.

   In Alaṇkāra–Kaustubha, he mentions his plays Rukmiṇipariṇaya and Śṛngara mañjarī ( in Prakrit),

   —From History of Classieal Sanskrit Lit.

   —Krisna. Chari. P. 786.

   आचार्यविश्वेश्वरसम्पादितस्य काव्यप्रकाशस्य भूमिका च, पृ० ९६।

२. व्याकरणशास्त्रस्येतिहासः, प्रथमो भागः पृ० ४५३।

३. ,, ,, द्वितीयो भागः पृ० २६०।

सर्वासु प्रकाशितासु व्याख्यासु सम्प्रति सर्वोत्कृष्टं स्थानं पण्डितमण्डलीषु श्रीरामकृष्णशास्त्रिणः भूतेरेव वर्तते, यद्यपि भूतिव्याख्यानं परिष्कारबहुलमतीव दुरूहं छात्रानुद्वेलयति तथापि केचन तादृशा अपि अंशाः सन्ति परिभाषेन्दुशेखरस्य येषां सम्यग् ज्ञानं भूतिव्याख्यानमन्तरा न भवति । 'अनेकान्ता अनुबन्धाः' ( परि० ४ ) 'एकान्ता अनुबन्धाः' ( परि० ५ ) इति परिभाषाद्वयव्याख्याने या ह्यनुमानप्रक्रिया प्रदर्शिता भूतिकारेण तां विना परिभाषाशयो हृदयमवगाहयितुं न शक्यते जिज्ञासुभिः । एवम् 'व्यपदेशिवदेकस्मिन्' ( परि० ३० ) इत्यस्याः परिभाषाया व्याख्याने सूत्रकारवार्तिककारभाष्यकारमतानि यथायथं विविच्य सिद्धान्तपक्षं व्यवस्थापयता टीकाकारेण श्रीरामकृष्णशास्त्रिणा प्रतिपाद्यो विषयः साधु प्रदर्शितः येन मनागपि संशीतिर्नावशिष्यते ।

परिभाषायास्स्वरूपनिरूपणे श्रीमता शास्त्रिणा लौकिकं तादृशमुदाहरणं प्रस्तुतं येन परिभाषायाः स्वरूपज्ञानमनायासेन सम्पद्येत । अप्रवृत्तिस्थानानि च तानि तानि परिभाषाया उद्धृत्य परिभाषायाः प्रतिपाद्यविषयः स्पष्टतां नीतः । व्याख्यानेनानेन लौकिका अपि विषयाः स्फुटं जायन्ते । तत्र जेष्ठत्वमध्यमत्वकनिष्ठत्वानि च परिष्कृत्य एकस्मिन्नेव सत्यपि पुत्रे ज्येष्ठत्वं व्यवहर्तुं शक्यते, अनेकेषु च पुत्रेषु सत्सु प्रथम एव ज्येष्ठत्वं व्यवहर्तुं शक्यते इति च ज्ञानं सम्यग् भवति ।

किम्बहुना 'एकदेशविकृतमनन्यवत्' ( परि० ३७ ) इति परिभाषाव्याख्यानावसरे विकृतेनाप्येकदेशेन तत्त्वव्यवहारस्य यदुदाहरणं व्याख्याकारेण प्रस्तुतं समन्वितश्च तेनापि परिभाषायाः लोकन्यायसिद्धत्वं स्फुटं प्रतीयते । एवमेव 'येन नाऽप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' ( परि० ५८ ) इति न्यायं व्याचक्षाणेन शास्त्रिणा चतुर्णां वाधबीजानां समीचीनान्युदाहरणानि प्रदर्श्य न्यायस्यास्य विषयः स्पष्टतां नीतः ।

इत्थं समादृतास्वपि विविधासु परिभाषाव्याख्यासु सर्वमङ्गलाव्याख्यायाः किमप्यपूर्वमेव वैशिष्ट्यं वर्तते । व्याख्यायामस्यां श्रीशेषशर्मसूरिणा दुरूहाणि पदानि सम्यग् व्याख्याय निगूढानामभिप्रायाणामाविष्करणं कृतम् ।

परिभाषेन्दुशेखरकारस्य नागेशस्य यावन्तोऽपि ग्रन्था वर्तन्ते तेषु सर्वेषु ग्रन्थेषु सर्वनामशब्दानां प्रयोगो बाहुल्येन दृश्यते । अनेकेषु स्थलेषु तु विभिन्नविभक्तिकस्यैकस्यैव सर्वनामशब्दस्य प्रयोगपरम्परा विलोक्यते नागेशस्य, यथा 'तेन तत्र तस्य तथात्वं सूचितम्' इति । एतादृशेषु स्थलेषु अन्ये व्याख्याकाराः प्रायेण मौनमेव भजन्ते । परन्तु सर्वमङ्गलाकारेण श्रीशेषशर्मणा परिभाषेन्दुशेखरग्रन्थिं भित्त्वा, महावैयाकरणस्य नागेशस्य मतं तत्र तत्र प्रत्याख्याय व्याकरणाकरप्रमाणप्रमाणितं स्वमतं सिद्धान्तरूपेण व्यवस्थापितम् । व्याख्याकारेणानेन पदे पदे दुरूह-

प्रयोगाणां प्रक्रियाऽपि प्रदर्शिता वर्तते । यत्र स्वमतं व्यवस्थापयता नागेशेन प्रदीपो-द्द्योतयोः सङ्केतमात्रमेव कृतम् तत्र तत्पङ्क्तिसमुद्धरणपुरस्सरं तयोराशयं प्रकटयतीयं व्याख्या ।

व्याख्यायाञ्चास्यां परिभाषाव्याख्यातॄणां परमप्राचीनानां मतानि सम्यग् आलोच्य सम्भावितान् दोषान् प्रदर्श्य नागेशाभिप्रेतानि सन्निवेशितानि सन्ति । 'प्राचीनवैयाकरणतन्त्रे वाचनिकान्यत्र ज्ञापकन्यायसिद्धानि भाष्यवार्तिकयोरुप-निबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते' परिभाषेन्दुशेखरस्य पङ्-क्तेरस्याः प्राक्तनैरनेकैः टीकाकारैरनेकधा व्याख्यानं प्रस्तुतम् । परन्तु तासां सर्वा-सामप्यवलोकनेन स्पष्टतया कश्चनार्थो नावभासितो भवति । किन्तु सर्वमङ्ग-लाख्यव्याख्यायाः प्रतिपदव्याख्यानेन सर्वविधः संशयो दूरीभवति स्पष्टीभवति च पङ्क्तेराशयः ।

शैली चास्याः व्याख्याया अतीव सरला वर्तते । तया च मूलार्थावगमोऽना-यासेन जिज्ञासुभिर्विधीयते । व्याख्यया चानया पूर्वं मूलस्याक्षरार्थः स्पष्टतया प्रति-पाद्यते, पश्चात् मूलं गुणदोषैर्विविच्यते । स्थाने स्थाने स्वसिद्धान्तोऽपि निवेश्यते टीकाकारेण । व्याख्यायामस्यां सर्वासामपि परिभाषाणां व्याख्यानं सुस्पष्टं वर्तत । यतो भाषा चास्या अतीव सरला अतो न भवति कुत्रापि सन्देहोऽस्याम् । व्याख्यान-पद्धतिश्चेदृशी यया अनायासेनैव बोधो जायते ।

**व्याख्याया अस्याः सम्पादने बीजम् —**

सन्ति परिभाषेन्दुशेखरस्यानेकाः प्रसिद्धा व्याख्याः, याभिः परिभाषेन्दु-शेखरस्य निगूढोऽभिप्रायोऽवगन्तुं शक्येत । तासु च श्रीयागेश्वरपण्डितविरचिता हैमवती, महामहोपाध्याय-तात्याशास्त्र्यपरनामधेयश्रीरामकृष्णशास्त्रिविरचितं भूतितिलकम्, श्रीजयदेवमिश्रविरचिता विजया सम्प्रति पण्डितमण्डलीषु पठनपाठनद्वारा प्रसिद्धिमातन्वन्ति । अन्याश्च व्याख्याः ग्रन्थालयस्य शोभां वर्धयन्त्यो न प्रसिद्धिं प्राप्ताः ।

हैमवतीव्याख्या च परिभाषेन्दुशेखरग्रन्थमालापयन्ती स्थाने स्थाने समा-लोचयन्ती च टीकाकर्तुः यशोमालां दिग्वधून् परिधापयति । भूतितिलकं परि-ष्कारविषये तिलकायमानमपि परिभाषेन्दुशेखरग्रन्थस्य मूलं मनागेव स्पृशति । अतोऽन्तेवासिनां दुरूहार्थतां भजति । विजया च विजयेव छात्रान्—अर्थावबोधे पथि भ्रमयति । ततश्च छात्राणां यावानुपकार अपेक्ष्यमाण आसीत्, न तावानु-पकारो जातः ।

इयञ्च सर्वमङ्गलाख्या व्याख्या विदुषामपि मनांस्यावर्जयन्ती शाब्दिकानां सदसि प्रतिष्ठां प्रापत् । अस्या व्याख्यायाः कर्त्ता जीवनकाल एव स्वीययशसा

सुरभितामकरोत् पण्डितमण्डलीम् । ग्रन्थालापनशैली तु व्याख्याया अस्या अद्भुतं वैशिष्ट्यम् । सरलानां सुबोधानां वाक्यानां ततिभिः व्याख्येयं विलसति छात्राणां पुरः । तत्र तत्र स्वतन्त्रा अपि विचारा अनुपमं यशो लभन्ते ।

सरस्वतीभवनग्रन्थालये व्याकरणग्रन्थपाण्डुलिपिं पश्यतो मम दृष्टिगोचरतां व्याख्येयं गता । दर्शं दर्शं च मे मनसि विचारोऽयं समुद्भूतो यदीयं व्याख्या प्रकाश्यं गच्छेत् तर्हि शब्दविद्यामधीयानानां छात्राणां महानुपकारः स्यात् । विचारेणानेन प्रेरितोऽहं शोधविषयत्वेन अस्याः सम्पादनमङ्गीकृतवान् । तदनु प्रायः वर्षचतुष्टयं सम्यक् परिश्रम्य व्याख्येयं सम्पादिता विदुषां पुरः समुपस्थापिता च । मानवसुलभः प्रमादवशात् स्युरेव त्रुटयोऽत्र, ताः करुणावरुणालयैः विद्वद्धौरेयैरवश्यं क्षन्तव्या इति प्रार्थयमानो विरमामि ॥

## कृतज्ञताज्ञापनम्–

अचिरादुपकर्तुराचरेदथवात्मौपयिकीमुपक्रियाम् ।
पृथुमित्थमथाणुरस्तु वा न विशेषे विदुषामिह ग्रहः ॥

इति श्रीहर्षोक्ति स्मारं स्मारं 'कृतज्ञो ननु दुर्लभः' इति च विद्वदुपज्ञं वचनं ध्यायं ध्यायं कृतज्ञताज्ञापनमप्यत्यावश्यकं कर्मेति तत्र ममापि प्रवृत्तिः ।

शब्दशास्त्रे शेखरायमाणस्य श्रीनागेशभट्टविरचितस्य "परिभाषेन्दुशेखरस्य सर्वमङ्गलाख्यव्याख्यायाः सम्पादनम्" इति विषयोऽस्माभिः शोधकार्यार्थं सुनिश्चितः । जानन्त्येव महनीयकीर्त्तयो विद्वांसोऽनुसन्धानकार्यस्य दुष्करताम् । तत्रापि कस्यापि ग्रन्थस्य कस्या अपि नूतनाया व्याख्याया वा सम्पादनं कियत्कठिनमित्यपि नाविदितं तत्र भवतां प्रेक्षावताम् ।

मनुष्यो वर्तते सामाजिकः प्राणी । समाजे खलु समेषां कार्यं परस्परसाहाय्येनैव प्रचलति । अनुसन्धानकार्येऽपेक्षते प्रायो नूतनविषयाणां गवेषणया प्रकाशनम् । तत्तु रत्नजातं रत्नाकर इव यद्यपि ग्रन्थाब्धौ प्रकीर्णं वर्तते तथापि तत्र निमज्ज्य तेषामुन्नयनं कीदृशं दुष्करमिति नाविदितं मतिमताम् । तत्र मान्यानामदूष्यवैदुष्यविभूषितानां प्रथितयशसां संख्यावतां गुरुजनानां ज्ञानसृतिसाहाय्यमेवोपकरणं नान्यदिति ।

अतोऽहं येषां ज्ञानेन, निर्देशनेन, प्रवचनेनाध्यापनेन, विषयोपस्थापनकौशलेन, सौष्ठवाधानेन वोपकृतस्तत्प्रत्युपक्रियामन्यथा विधातुमक्षमः केवलं प्रणतिपुरस्सरशब्दप्रसूनाञ्जलिसमर्पणात्मकं कृतज्ञताज्ञापनमेव मदधीनमित्यवसाय सर्वप्रथमं व्याकरणपारावारपारङ्गतानां न्यायनदीष्णानां दर्शनशास्त्रनिपुणानां मीमांसामर्मज्ञानां साहित्यशास्त्ररसिकानां विविधविद्याविचारचतुराणामध्यापनलेखनप्रवचन-

पटूनां सम्पादितविरचितानेकग्रन्थानां काव्यकलाकुशलानां 'भास्करभावभानवः' इति स्तुतिकाव्यस्य 'राधाचरितमहाकाव्यम्' इति महाकाव्यस्य च निर्माणान्महाकविषु लब्धप्रतिष्ठानां कवितावनितालालाटिकायमानानां शास्त्रार्थप्रतिवादिभयङ्कराणां दिगन्तव्याप्तकीर्त्तीनामालोचकानां समाजे समादृतानामध्यापितानेकशिष्याणां समस्ते भारते प्रसृतैरध्यापनकुशलैः शिष्यैः समुद्भासितयशसां संस्कृत-अकादमीपुरस्कारेण साहित्य-अकादमीपुरस्कारेण च सभाजितानामधिकाशि विजित्य वादिवृन्दान् सम्पूर्णानन्दसंस्कृतविश्वविद्यालये प्राप्ताचार्यपदानां व्याकरणविभागाध्यक्षचराणामथ च वेदवेदाङ्गसङ्कायाध्यक्षचराणां संसारे दुर्लभैर्नरत्वविद्याकवित्वतच्छक्तीति चतुर्विधगुणैर्विभूषितानामृजुस्वभावानां शिष्यवत्सलानां भारतवर्षस्य सर्वोत्कृष्टतया ( उत्तरे=उत्कृष्टे ) उत्तरप्रदेशे देवार्याणां वासभूमौ देवार्यमण्डले शुक्लचरितानां शुक्लानां मठियाभिधेये ग्रामे प्राप्तोद्भवानां भगवत्याः कालिकाया मूर्त्तिमत्प्रसादानां **डॉ० कालिकाप्रसादशुक्लानामस्मद्गुरु**वराणां मार्गनिर्देशकानां चरणयोः सश्रद्धं साष्टाङ्गं प्रणतिततिं समर्प्य भूयो भूयः कृतज्ञतां ज्ञापयामि, येषामनुग्रहेण लब्धविद्याविन्दुरहमेतादृशे ग्रन्थग्रन्थिविमोचने सफलतामवापम्, समर्पयामि चेमं पद्यप्रसूनाञ्जलिम्—

**यः शब्दागमसिन्धुमन्दरगिरिः साहित्यसिन्धूद्भवो**
**दिव्यः कोऽपि सुधानिधिः स्रवति यत् पीयूषयूषोपमम् ।**
**काव्यं स्वादु सचेतसां रुचिकरं सोऽयं प्रसादान्वितो**
**वन्द्यः शुक्लचरित्रभूषितकुलः श्रीकालिकाख्यो गुरुः ॥ १ ॥**

**वादीन्द्रान् सहसाभिभूय वचसा युक्तेन गोष्ठ्यां बुधां**
**ग्रन्थग्रन्थिविभेदने प्रखरया बुद्ध्या विनेयेषु यः ।**
**प्रावीण्यं विदधत् तनोति विमलां वैदग्ध्यकीर्त्तिं परां**
**वन्दे तं शिरसा प्रसादलसितं श्रीकालिकाख्यं गुरुम् ॥ २ ॥**

तदनु शब्दशास्त्राम्बुधिपारदृश्वनां साहित्यसुधासुहितमानसानां काव्यकलालापचतुराणां कविताकामिनीलालाटिकायमानानां विहितानेकनिबन्धानामध्यापनकुशलानां प्रवचनपटूनां गुणनिकरगुम्फितयशसां दिगन्तव्याप्तकीर्त्तीनामवदातचरितानां शिष्यप्रशिष्यैः परिगीतगुणगणानां प्रतिभाप्रतिभासपवित्रान्तःकरणानामृषिकल्पानां भारतराष्ट्रपतिना पुरस्कृतानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये व्याकरणविभागीयाचार्यपदतो निवृत्तानां व्याकरणविभागाध्यक्षचराणामथ च वेदवेदाङ्गसङ्कायाध्यक्षचराणां न्यक्कृतसुधाद्राक्षेक्षुरसमाधुरीवाग्विलासानां वाग्मिनां वैदुष्यप्रचयचीयमानयशःकदम्बानां शिष्यवात्सल्यकरुणार्द्रहृदयानां परोपकारनिरतानां सारवावारीणब्राह्मणकुलप्रसूतानां तपोराशिविगलितकलिकल्मषाणां देवार्यमण्डले पिण्डीग्रामवास्तव्यानां वेदत्रयाध्ययनेनाध्यापनेन चान्वितार्थ-

त्रिपाठिशब्दानां विद्वद्वृन्दवृन्दारकाणामस्मद्गुरुचरणानां साम्प्रतं देवलोकालङ्कार-भूतानां प्रातःस्मरणीयानां पूज्यपादानां **श्रीमतां भूपेन्द्रपतित्रिपाठिमहाभागानां** चरणकमलचञ्चरीकोऽहं मुहुर्मुहुः प्रणतितर्तिं निवेद्य कृतज्ञतां ज्ञापयामि, यैः स्नेहादध्यापितो निर्दिष्टश्चाहमनुसन्धानकार्येऽस्मिन् सफलोऽभवम्। अतो निवेदयामि वाक्यसुमनोऽञ्जलिम्—

**शास्त्रक्षीरनिधेर्विमन्थनविधौ यो मन्दरो भूधरः**
**शेषाशेषगवीविचारचतुरः काव्याम्बुधेश्चन्द्रिरः।**
**शिष्याणाञ्च सहस्ररश्मिरिह यो जाड्यापहारे धियां**
**श्रीभूपेन्द्रपतिः सदा विजयते योऽस्मद्गुरुर्वत्सलः॥ १॥**

**वाणी यदीया तु सुधावधीरणी**
**वाक्चातुरी विज्ञजनावर्जिनी।**
**आचार्यभूपेन्द्रपतित्रिपाठिनं**
**तं पूज्यपादं मनसाभिवादये॥ २॥**

अतः परं प्राच्यप्रतीच्योभयविधविद्यावधूविशेषकाणां वेदवेदाङ्गपरिशीलनलब्धपाटवानां विविधभाषावारविलासिनीभुजङ्गमानां विदितसकलशास्त्रार्थानां विश्वविश्रुतयशसां भाषाविद्गोष्ठीगरिष्ठानां संस्कृतवाङ्मयाम्बुधेरालोडनावाप्तसुधासुहितमानसानामिदमित्थन्तया निर्णीताऽखिलतत्त्वानां देशदेशान्तरागताऽन्तेवासिविद्याकल्पतरूणां विश्ववन्द्यसिद्धान्तानां विदितवेदितव्यानामधिगतयाथातथ्यानां पदविद्याविचारचतुराणां काव्यकलाकलाधराणां साहित्यसारसरोजसौरभसुरभितसकलाशानां करुणावरुणालयानां विद्वद्वृन्दवन्द्यपादारविन्दानां परमोदारस्वभावानां रचितानेकप्रबन्धानां प्रशासनकलाकुशलानां राजनीतिनिपुणानां कारयित्रिभावयित्रीत्युभयविधप्रतिभाप्रतिभासितान्तःकरणानाम्—

**कश्चिद् वाचं रचयितुमलं श्रोतुमेवापरस्ताम्।**
**कल्याणी ते मतिरुभयथा विस्मयं नस्तनोति॥**

इति कालिदासीयोक्तेर्निदर्शनभूतानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये आधुनिकभाषा-भाषाविज्ञानविभागाध्यक्षचराणामथ चाचार्यचराणाम् 'क० मु० हिन्दी तथा भाषाविज्ञान विद्यापीठ आगरा' इत्यत्र निदेशकचराणां काशीहिन्दूविश्वविद्यालये सम्मानिताचार्यचराणां साम्प्रतं काशीविद्यापीठे कुलपतिपदं विभूषयतां सारवावारीणब्राह्मणवंशोद्भवमौक्तिकानां गोरक्षपुरमण्डलाऽलङ्कारभूतानां पङ्क्तिपावनानां सर्वविद्यानां निवासभूततयाऽन्वितार्थाभिधानां मान्यगुरूणां **श्रीमतां डॉ० विद्यानिवासमिश्रमहोदयानां** चरणारविन्दमधुलुब्धमधुकरोऽहं तेषामाधमर्ण्यं वहामि येषां निर्देशकौशलेन विषयोऽयं स्फीततां गतोऽतस्तान् प्रति श्रद्धासुमनोऽञ्जलिं समर्पयामि—

**भ्राता भाषावधूनामभिनवविधिना देववाणीविकासे**
**दक्षस्त्र्यक्षोऽथ साक्षाद् बुधगणगणितः सर्वविद्याश्रयत्वात् ।**
**नीतौ शुक्रोऽमरेज्यो विलसति हृदये कीर्त्तिचन्द्रांशुजालैः**
**श्रीमान् विद्यानिवासो जयति गुरुवरो दीपितानन्दिताशः ।। १ ।।**

तदनु व्याकरणसाहित्यन्यायदर्शनवेदान्ताद्यनेकविद्यामर्मज्ञानां व्याख्यान-पाटवपटहवधिरीकृतवादिवृन्दानां पाण्डित्यप्रतापपरितापितवावदूकानां पदवाक्य-प्रमाणपारावारीणानां शास्त्रार्थपञ्चाननवेदान्तभूषणोपाधिविभूषितानां सम्पू-र्णानन्दसंस्कृतविश्वविद्यालये कुलपतिचराणां सततविद्याध्ययनाध्यापनरतानां वेदान्तविभागे आचार्याणां सर्वतन्त्रस्वतन्त्राणां **श्रीमतां डॉ० देवस्वरूपमिश्रमहो-दयानां** चरणयोः सश्रद्धं प्रणतितर्तिं समर्प्य कृतज्ञतां ज्ञापयामि, येषामाशीर्वचसा कार्यमिदं यथाकालं पूर्णतामगात्; समर्पयामि चेम पद्यप्रसूनाञ्जलिम्—

**श्रीमानुदारचरितः करुणासमुद्रो**
**वाचा बृहस्पतिसमो यशसेन्द्रतुल्यः ।**
**यो राजते शिवपुरिश्रुतिसारवेत्ता**
**देवस्वरूपमिह तं गुरुमानतोऽस्मि ।। १ ।।**

**तरुणतरणितेजाः शास्त्रवादे विजेता**
**विबुधनिवहवन्द्यो ब्रह्मनिष्ठो दयालुः ।**
**विलसति मुखपद्मे शारदा यस्य सिद्धा**
**गुरुवरमिह वन्दे पूज्यदेवस्वरूपम् ।। २ ।।**

अतः परं प्राचीनाधुनिकोभयविधज्ञानविज्ञाननिपुणानां परिशीलितसकल-दर्शनसिद्धान्तानां साहित्यसिद्धान्तविद्वद्वरिष्ठानां व्याख्यानकुशलानां सम्पादिता-नेकग्रन्थानां वंशपरम्पराधिगतविद्यानां नयविनयादिगुणोपेतानां सम्पूर्णानन्द-संस्कृतविश्वविद्यालये शिक्षाशास्त्रविभागाचार्यचराणामथ च कुलपतिचराणामु-दारचरितानां संस्कृत-अकादम्या अध्यक्षाणां **श्रीमतां करुणापतित्रिपाठिमहाभागा-नामाधमर्ण्यं** वहामि, येषां कुलपतित्वे कार्यमिदं समाप्तिमगमत्—

**यः साहित्यपयोनिधेरुपगतो राकापतिः कीर्त्तिमान्**
**विख्यातः प्रतिभापतिर्जयति यः सौजन्यमूर्त्तिः कृती ।**
**शिक्षाशास्त्रविदां पतिः स महितो भाषापगानां पति-**
**र्वन्द्यः श्रीकरुणापतिर्मतिमतां व्याख्यानवाचस्पतिः ।। १ ।।**

अथ च पदवाक्यप्रमाणतत्त्वविदां साहितीसुधासुहितमानसानां बुधवृन्दमि-लिन्दसेवितपादारविन्दानां पदलक्षणाया वाचोऽन्वाख्यानभूतस्य शब्दशास्त्रस्या-र्थलक्षणायाश्चान्वाख्यानभूतानां मीमांसान्यायादिशास्त्राणां च समवायभूतस्य

साहित्यशास्त्रस्याध्यापनेऽधिकाशि लब्धप्रतिष्ठानां ग्रन्थग्रन्थिविमोचननिपुणानां गूढतत्त्वालोचकानां काव्यकलाकुशलानां रचितानेकनिबन्धानां शिष्यप्रशिष्य-परिगीतकीर्त्तीनां प्रथितयशसां गोरक्षपुरमण्डलान्तर्गतमल्लग्रामाभिजनानां वाराणस्यां निवसतां विद्यावारिधीनां व्याकरणसाहित्याद्यनेकशास्त्राचार्याणां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये साहित्यविभागे उपाचार्यपदं गौरवान्वितं कुर्वतां **श्रीमतां डॉ० वायुनन्दनपाण्डेयमहोदयानां** कृतज्ञतां प्रकाशयामि, येषां साहाय्येनाशीर्वचसा च कार्यमिदं पूर्णतामगात्, अतः समर्पयामि वाक्यसुमनोऽ-ञ्जलिम्—

**सर्वेऽपि साहित्यविदो यदीय-**
**पादाम्बुजोपासनलब्धविद्याः ।**
**देशे विदेशे परिवर्धयन्ति**
**गीर्वाणवाणीं सततं स वन्द्यः ॥ १ ॥**

**यः शब्दशास्त्रपरिमन्थनमन्दरश्रीः**
**साहित्यशास्त्रसुमनःसु सुधाकरश्रीः ।**
**रात्रिन्दिवं पठनपाठनवर्धितश्रीः**
**श्रीवायुनन्दनकृती कृतिनां जयश्रीः ॥ २ ॥**

प्रसङ्गेऽस्मिन् पदशास्त्रप्रवीणानां ज्योतिःशास्त्रतत्त्वज्ञानां काव्यकलाकुश-लानामध्यापनप्रवचनलेखननिपुणानामध्यापितानेकशिष्याणां विद्यातत्त्वविवेके हंसायमानानां विश्रुतयशसां विद्यावारिधीनां कविजनेषु 'जटिल' इत्युपनाम्ना सुप्रसिद्धानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये पुराणेतिहासविभागे उपाचार्यपदं विभूषयतां बुधैः कविभिश्च समादृतानां **डॉ० कपिलदेवत्रिपाठिनाम**प्युपकारं विस्मर्त्तुमक्षमोऽहं कृतज्ञतां ज्ञापयामि, येषां स्नेहेन समुत्साहितोऽहं कार्येऽस्मिन् प्रवृत्तोऽतः समर्पयामि चेमं पद्यप्रसूनाञ्जलिम्—

**अदूष्यवैदुष्ययुतस्य यस्य**
**बिभर्ति नैकोऽपि तुलां मनीषी ।**
**पुराणविद्याप्रथितप्रभाव-**
**श्चकास्ति काश्यां मृदुलस्वभावः ॥ १ ॥**

**यस्यास्ति हृद्या कविताथ कीर्त्ति-**
**र्बुधैः समाराधितपादपद्मः ।**
**शास्त्रेष्वभिज्ञो जटिलोपनामा**
**वन्द्यो गुरुः श्रीकपिलः सदेवः ॥ २ ॥**

अतः परं व्याकरणागमतत्त्वविदां शिष्यवृन्दसरोजविकासिभास्कराणां विविधविद्यावगाहनविशुद्धान्तःकरणानां शास्त्रपरिशीलनचतुराणामध्यापने

लब्धप्रतिष्ठानां व्याख्याने पटूनां लेखे कुशलानां विद्वन्मण्डले **समादृतानां** सम्पादितरचितानेकग्रन्थानां व्याकरणसाहित्यन्यायवेदान्तदर्शनाद्यनेकशास्त्रमर्मज्ञानां काशीहिन्दूविश्वविद्यालये कलासङ्काये उपाचार्यपदमलङ्कुर्वतां मैथिलवंशमौक्तिकानां **श्रीमतां डॉ० श्रीनारायणमिश्रमहाभागानां** कृतज्ञतां ज्ञापयामि, येषां सौजन्येनोत्साहितोऽहं सफलतामन्वभवमतो निवेदयामि वाक्यप्रसूनाञ्जलिम्–

**न्याये व्याकरणे च दर्शनविधौ पाश्चात्यशिक्षाविधौ**
**विख्यातः कृतिनां वरः स मतिमानालोचको भावकः।**
**येनाकारि सुधीवरेषु मिथिलालङ्कारभूतेन वै**
**श्रीनारायणपण्डितेन प्रतिभाशार्दूलविक्रीडितम् ॥ १ ॥**

तदनु व्याकरणागममर्मज्ञानां वेदविद्याविदां वेदार्थविचारचतुराणां साहित्यशास्त्ररसिकानां विविधविद्यावगाहनस्फीतमतीनां तदानीं सम्पूर्णानन्दसंस्कृतविश्वविद्यालये कुलसचिवपदं विभूषयतामिदानीं गोरक्षपुरविश्वविद्यालये आचार्यपदमलङ्कुर्वतां प्रशासनपटूनामध्यापनप्रवचनलेखननिपुणानामध्यापितानेकशिष्याणां सौजन्यसागराणां मृदुस्वभावानां **श्रीमतां डॉ० विश्वम्भरनाथत्रिपाठिमहोदयानां** चरणाब्जयोः प्रणतितर्तिं विनिवेद्य समर्पयामि चेमं पद्यप्रसूनाञ्जलिं येषामाशीर्वचसा दुरूहेऽस्मिन् सम्पादनकर्मणि मम प्रवृत्तिर्जाताऽथ च कार्यमिदं समाप्तिमगमत्––

**यो वेदविद्यार्थविदां वरिष्ठः**
**शास्त्रेषु विख्यातबुधो विशिष्टः।**
**साहित्यगोष्ठीगणितो गरिष्ठो**
**विश्वम्भरः कस्य जनस्य नेष्टः ॥ १ ॥**

अतः परं वाग्योगचेतनापीठसंस्थापकानामनेकशास्त्रमर्मज्ञानां संस्कृतसंस्कृतिप्रचारप्रसारतत्पराणां विदिताखिलसिद्धान्तानां रचितानेकनिबन्धानां देशे विदेशे सर्वत्र समादृतानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेऽनुसन्धानसञ्चालकानाम् 'वागीशशास्त्री' इत्युपनाम्ना विख्यातानां **श्रीमतां डॉ० भागीरथप्रसादत्रिपाठिमहाभागानां** कृतज्ञतां ख्यापयामि, येनानुसन्धानपथप्रदर्शनेनागृहीतोऽस्मि ।

**वाग्योगचेतनापीठाधीशा वागीशशास्त्रिणः।**
**अनुसन्धानसंस्थानसञ्चालकपदे रताः ॥ १ ॥**
**सम्पादनकलाभिज्ञा विश्वविख्यातकीर्त्तयः।**
**भूयो भूयः प्रणम्यन्ते सर्वशास्त्रविचक्षणाः ॥ २ ॥**

तदनु प्रौढवैयाकरणानां सौजन्यमूर्त्तीनां प्राचीनाधुनिकोभयविधज्ञानविज्ञाननिपुणानां नयविनयादिगुणयुक्तानां वाक्पटूनां मृदुस्वभावानां विद्यावारिधीनामनवरतप्रसन्नचित्तानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये प्रकाशनाधिकारिपदं

विभूषयतां मतिमतां **श्रीमतां डॉ० हरिश्चन्द्रमणित्रिपाठिमहोदयानाम**प्युपकारं हृदयेन स्वीकरोमि, यैर्ग्रन्थस्यास्य सौष्ठवाधाने प्रकाशने च महत्साहाय्यमकारि।

**प्रकाशनाधिकारी यो विदुषां प्रीतिभाजनम्।**
**सम्पादनेऽतिनिपुणो विद्यावारिधिरात्मवान्॥ १॥**
**प्रकाशनकलाभिज्ञः शब्दशास्त्रविदां वरः।**
**हरिश्चन्द्रमणिर्धीमान् साधुवादैः सभाज्यते॥ २॥**

अतः परं कार्येऽस्मिन् प्रत्यक्षाप्रत्यक्षरूपेण, ग्रन्थसाहाय्येन, ज्ञानगौरवेण वास्मद्धितचिन्तकैर्यैर्यैः सुहृद्वरैर्यथाकथञ्चिदपि मम साहाय्यं विहितं तान् सर्वान् प्रत्यपि कृतज्ञतां ख्यापयामि।

विजयप्रेसव्यवस्थापकाः **श्रीगिरीशचन्द्रशर्माणः** मुद्रकाश्च धन्यवादानर्हन्ति यैः कार्यान्तरं विहाय द्रुतमेवास्य ग्रन्थस्य मुद्रणं कृतम्।

यद्यप्यत्र सन्ति कियत्योऽशुद्धयो वर्णमात्रादिविषयिण्यः। उद्धरणचिह्नमपि क्वचित् स्खलितं क्वचिच्चास्थाने पतितम्। एकतकारस्थाने तकारद्वयं तद्विपर्ययः, नकारणकारयोर्विपर्यासः, वकारबकारयोर्व्यत्यासश्च जातस्तथापि—

**गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।**
**हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥**

इत्यभियुक्तोक्त्या सर्वाश्चैता अशुद्धीः कृपया स्वयं संशोध्य ग्रन्थोऽयं पठनीय इति सर्वान्ते—श्रीकाशीविश्वनाथचरणाब्जयोः प्रणामाञ्जलिंविनिवेद्य विरमामि।

वाराणस्याम्,
**गुरुपूर्णिमा,**
वै० सं० २०४४
दि०--११.७.८७ ई०

विदुषां वशंवदः
**गिरिजेशकुमारदीक्षितः**
प्राध्यापकः,
व्याकरणविभागे,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# विषयानुक्रमणी

सर्वमङ्गलासमलङ्कृतः

# परिभाषेन्दुशेखरः

। अनुबन्धचतुष्टयनिरूपणम् ।

**नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः ।**
**बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥ १ ॥**

---

॥ श्रीवेदव्यासाय नमः । हरिः ॐ ॥

॥ श्रीगणाधिपतये नमः ॥

**गुरुं विश्वेश्वरं नत्वा ध्यात्वा च हृदि भारतीम् ।**
**विवृणोमि यथामेधं परिभाषेन्दुशेखरम् ॥ १ ॥**

**प्रवृत्तिमेतां दृष्ट्वा मे हसत्यात्मापि लज्जया ।**
**तथापि दैशिकदया वाचालयति साम्प्रतम् ॥ २ ॥**

**दोषान्वितोऽपि तनुतां मत्प्रबन्धस्सतां मुदम् ।**
**स[1]द्युक्तिभिरनुश्लिष्टकलङ्कोऽपि विधुर्यथा ॥ ३ ॥**

**नमन्महीपमण्डली किरीटरत्नमञ्जरी**
**विराजिताङ्घ्रिकृष्णभूपतीन्द्रक्लृप्तसम्मतिः ।**
**तनोतु सर्वमङ्गला सदा परां मुदं सता-**
**महीनवाग्विभूषिता मनोषिशेषशर्मणः[2] ॥ ४ ॥**

प्रारिप्सितग्रन्थस्य निर्विघ्नेन परिसमाप्तये एतच्छास्त्रमूलभूतचतुर्दशसूत्रोपदेष्टृत्वेन प्राचार्यत्वात् साम्बशिवस्यैतद्ग्रन्थादौ समुचितं नत्यात्मकं मङ्गलं शिष्यशिक्षार्थं निबध्नन् चिकीर्षितं प्रतिजानीते। **नत्वेत्यादिना। कुरुत इति।** यशसश्शिष्याणामनायासज्ञानजन्यसुकृतस्य चात्मगामित्वादात्मनेपदम्। **बालानामिति।** बालत्वञ्चः—भाष्यादितः परिभाषार्थग्रहणासमर्थत्वे सति तद्व्युत्पित्सुत्वम्। **परिभाषेन्दुशेखरमिति।** ग्रन्थपक्षे-इन्दुरिव परिभाषा शेखरो भूषणं यस्य ग्रन्थस्येत्यर्थः[3]। शिवपक्षे तु परिभाषेवेन्दुरिति मयूरव्यंसकादित्वात्समासः,

---

१. 'सत्सतये विदुषि श्रेष्ठे साधौ भवति च त्रिषु ।' ( इति नामार्थरत्नमाला )

२. अयं श्लोकः क पुस्तके नास्ति । ३. 'ग्रन्थस्य' इति क पुस्तके नास्ति ।

**प्राचीनवैयाकरणतन्त्रे वाचनिकान्यत्र पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि**

---

परिभाषाः सदार्थं प्रकाशयन्ति, इन्दुस्तु रात्रावेवेत्युपमेयापेक्षयोपमानस्याधिक्यं वोध्यम् । ततः स शेखरो भूषणं यस्येति बहुव्रीहिः ।

सीरदेवादिभिः परिभाषात्वेनाभ्युपगतानां "पूर्वत्रासिद्धे न स्थानिवत्" इत्यादीनां परिभाषात्वाभावस्फोरणाय निषेधातिदेशरूपाणां[1] "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" (परि० २२) "एकदेशविकृतमनन्यवत्" (परि० ३८) इत्यादीनां परिभाषात्वस्फोरणाय सौत्रपरिभाषाणां व्युदासाय च पुनः प्रतिजानीते **प्राचीनेत्यादिना** । आपिशलादितन्त्रस्थपरिभाषाकाण्ड इत्यर्थः । **वाचनिकानि** । सूत्ररूपेण पठितानीत्यर्थः । **पाणिनीयतन्त्र इति** । सूत्रवार्तिकभाष्यैतत्त्रयात्मक इत्यर्थः । **ज्ञापकन्यायसिद्धानीति**[2] । प्रायेणेत्यादिः । **निबद्धानीति** । तन्मात्रावगतानीत्यर्थः । तेन सौत्राणां व्यावृत्तिः[3] ।

न च बहिरङ्गादिपरिभाषाणामप्यापिशलादितन्त्रावगतत्वेन तासामपि व्युदासापत्तिरिति वाच्यम्, भाष्यवार्तिकयोः पाणिनीयतन्त्रघटकत्वेन तदितरस्य मात्रपदेन व्यावर्त्यस्य तत्सजातीयपाणिनितन्त्रघटकसूत्रपाठरूपस्यैव ग्रहणेनादोषात् ।

तथा च सूत्रपाठानवगतप्रामाण्यकत्त्वे[4] सति भाष्यवार्तिकावगतत्वं भाष्यवार्तिकनिवद्धत्वम् । तेन नहि कार्यीत्यादेर्भाष्यानुक्तत्वेऽपि भाष्ये ध्वनितत्वेन नासङ्ग्रहः ।

अत्र वाचनिकानीत्यन्तं विशेषणं परिभाषाशव्दस्य रूढ्यर्थबोधनाय । परिभाषात्वञ्चः—सङ्केतसम्वन्धेन तत्पदवत्वम्, तच्च प्राचीनतन्त्रस्थसंज्ञादिकाण्डपञ्चकान्यकाण्डस्थानामेव, तेषामेव तथा शिष्टव्यवहारविषयत्वात् । तेन "पूर्वत्रासिद्धे न स्थानिवत्" इत्यादीनां व्यावृत्तिः,[5] निषेधातिदेशयोः पूर्वोक्तयोः सङ्ग्रहश्च सिद्धः ।

---

१. 'निषेधातिदेश' इत्यादितः 'स्फोरणाय' इत्येतत्पर्यन्तं क पुस्तके नास्ति । 'व्याख्येयपरिभाषास्वरूपनिर्धारणाय' 'इत्यधिकः' क पुस्तके पाठः ।

२. 'अभ्यर्हितत्वात्पूर्वनिपातः' इत्यधिकः क पु० पाठः ।

३. अत्र कोटिद्वयम् । ज्ञापकन्यायसिद्धानीत्येकम् । भाष्यवार्तिकयोर्निबद्धानीत्यपरम् । वाचनिकानीति तूभयत्र विशेषणम् । आद्यम्-अकृतेत्यादिसंग्रहाय । द्वितीयम्—यस्मिन्विधिरित्यादिसंग्रहाय । उभयविधानामप्यग्रे व्याख्येयत्वादिति बोध्यम् । इत्यधिकः क पु० पाठः ।

४. 'प्रामाण्यक' इति क पु० नास्ति ।

५. व्यावृत्तिरित्यादितः द्योतनायेत्येतत्पर्यन्तं क पु० नास्ति ।

**भाष्यवार्त्तिकयोरुपनिबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते ।**

भाष्यवार्तिकयोर्निबद्धानीति विशेषणं भाष्यासम्मतानां "संज्ञापूर्वको विधिरनित्यः" ( परि० ९४ ) इत्यादीनां व्युदासाय । पाणिनीयतन्त्रे ज्ञापकन्याय-सिद्धानीति विशेषणं तु तादृशीनामेवात्र प्राचुर्यद्योतनाय ।

एतेन[1] निषेधातिदेशरूपाणां कासाञ्चिदत्र व्याख्यास्यमानत्वेन तासां परिभाषात्वासम्भवादत्र तद्व्याख्यानमसङ्गतम् । सीरदेवादिभिः परिभाषात्वे-नाभ्युपगतानां "पूर्वत्रासिद्धे न स्थानिवत्" इत्यादीनामत्राव्याख्याने न्यूनतापत्ति-रिति शङ्का च निरस्ता । प्राचीनवैयाकरणतन्त्रपठितपरिभाषाकाण्डस्थत्व-रूपरूढचर्थतावच्छेदकाक्रान्तत्वानाक्रान्तत्वयोस्तत्र सत्त्वेनादोषात् ।

केचित्तु वाचनिकानीत्यन्तमेका कोटिः, ज्ञापकन्यायसिद्धानीत्यन्तमपरा-कोटिः, भाष्यवार्तिकयोर्निबद्धानीति तूभयत्र विशेषणम् । तेन सौत्राणां "संज्ञापूर्वको विधिरनित्यः" ( परि० ९४ ) इत्यादीनां च व्युदास इत्याहुः । तच्चिन्त्यम्ः— सीरदेवादिभिः परिभाषात्वेनाभ्युपगतानां "पूर्वत्रासिद्धे न स्थानिवत्" इत्यादीनां पाणिनीयतन्त्रस्थज्ञापकन्यायसिद्धत्वेन भाष्यसम्मतत्वेन तासाम-व्याख्यानेन न्यूनतापत्तेर्दुर्वारत्वात्, ज्ञापकन्यायसिद्धानामपि तन्त्रान्तरे वाच-निकत्वेन तेनैव सङ्ग्रहसम्भवेन द्वितीयकोटेः फलाभावाच्च ।

ज्ञापकपदेनैतच्छास्त्रीयं लिङ्गम्, न्यायपदेन लोकतन्त्रप्रसिद्धा युक्तिः । **परिभाषारूपाणीति**[2] । तेन स्वार्थे परिपूर्णं पदमवयवे चरितार्थं, लिङ्गमित्यादीनां व्यावृत्तिः[3] । एतेन "अनियमे नियमकारित्वम्" "पक्षप्राप्तार्थानुवादकत्वम्", "संज्ञाशास्त्रान्यत्वे सति विध्यपेक्षितार्थसमर्पकत्वम्", "लिङ्गवत्वे सति सन्दिग्धा-र्थनिर्णायकत्वम्" वा परिभाषात्वमित्यपास्तम् । "अनुदात्तं पदमेकवर्जम्" ( पा० सू० ६।१।१८ ) "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" ( परि० २१ ) इति विधिनिषेधरूपपरिभाषाणामसङ्ग्रहापत्तेः । तस्मात् प्रत्याहारपदवत्परिभाषापदं तथा शिष्टव्यवहारविषयेषु वचनेषु[4] योगरूढम् । तदुक्तम्—

एकदेशस्थिता शास्त्रभवने याति दीपताम् ।
परितो व्यापृतां भाषां परिभाषां प्रचक्षते ।। इति ।

परितस्सर्वतश्शास्त्रे सङ्केतितमर्थं भाषते बोधयतीति पचाद्यच्[5] । **व्याख्यायन्त इति** । अर्थोदाहरणज्ञापकादिप्रदर्शनेन विव्रियन्त इत्यर्थः ।

॥ इत्यनुबन्धचतुष्टयनिरूपणम् ॥

---

१. एतेनेत्यादितोऽदोषादित्येतत्पर्यन्तं क पु० नास्ति, मूलपुस्तके च कोष्ठे वर्तते ।

२. इदञ्च वाचनिकीत्यस्य विशेषणम्, तेन तत्रत्यपरिभाषाकाण्डस्थानामेव तेन ग्रहणमिति बोध्यमिति क पु० अधिकः पाठः ।

३. 'तेन स्वार्थे' इत्यादितो व्यावृत्तिरित्येतत्पर्यन्तं क पु० नास्ति ।

५. 'वचनेषु' इति क पु० नास्ति । १."नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" पा०सू० ३।१।१३४।

## । शास्त्रत्वसम्पादनोद्देशप्रकरणम् ।

**ननु लण्-अइउण्सूत्रयोर्णकारद्वयस्यैवोपादानेनाणिण्ग्रहणेषु सन्देहादनिर्णयोऽत आह—**

**व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ।। १ ।।**

**विशेषस्यान्यतराद्यर्थरूपस्य व्याख्यानाच्छिष्टकृतात् प्रतिपत्तिर्निश्चयो यतः**

---

तत्रैच्छास्त्रमूलभूतचतुर्दशसूत्रान्तर्गतज्ञापकसिद्धत्वात् "सिद्धे शब्दार्थ०" इत्यत्र भाष्यकृद्भिः प्रथममाश्रितत्वात् सर्वोपयोगित्वाच्चास्याः प्राथम्यं युक्तमित्याहः—**व्याख्यानत इति**। निर्णयरूपावगतिं प्रति व्याख्यानस्य हेतुत्वात्। "विभाषा गुणेऽस्त्रियाम् ( पा० सू० २।३।२५ ) इत्यत्र योगविभागात् पञ्चमी। तत आद्यादित्वात्तसिः,[1] न तु "पञ्चम्यास्तसिल्" ( पा० सू० ५।३।७ ), तत्र "किं सर्वनामबहुभ्योऽद्व्यादिभ्यः" ( पा० सू० ५।३।२ ) इत्यनुवृत्तेः।

**अन्यतराद्यर्थस्य इति**। अभिमतस्येति शेषः। आदिनान्यतमस्य सङ्ग्रहः। ननु विशेषप्रतिपत्तिः केषामित्याकाङ्क्षायां शिष्याणामिति कर्त्तुर्गम्यमानतया "उभयप्राप्तौ" ( पा० सू० २।३।६६ ) इति षष्ठीप्रवृत्त्या "कर्मणि च" ( पा० सू० २।२।१४ ) इति समासनिषेधस्स्यादिति चेत्, न; उभयोः प्रयोग एव तन्नियमाङ्गीकारात्।

यद्वा अकाकारव्यतिरिक्ते स्त्रीप्रत्यये "शेषे विभाषा" ( का० वा० २।३।६६ ) इति वचनेन नियमाभावपक्षे "कर्तृकर्मणोः" ( पा० सू० २।३।६५ ) इति षष्ठीप्रवृत्त्या कर्मणश्शेषत्वविवक्षया वा न दोषः।

ननु अस्मादादिकृतव्याख्यानस्यापि निर्णायकत्वापत्तिरत आहः—**शिष्टेति**। विशिष्टमाख्यानं व्याख्यानम्। आख्यानमुपदेशः। वैशिष्ट्यञ्च—आचार्यपरम्परावगतत्वम्। लोके व्याख्यानपदस्याभियुक्तकृतविवरण एव प्रसिद्धेः।

एवञ्च शिष्टकृतविवरणरूपाद् व्याख्यानादित्यर्थः। तच्च क्वचित्साक्षात्पदविभागादिप्रदर्शनरूपं यथा आ ओत् इति छेद इति तथा नुम् ग्रहणेन नुम एव ग्रहणे प्राप्ते नुम् ग्रहणमनुस्वरोपलक्षणार्थम्[2] इति विवरणरूपम्। क्वचिन्निर्देशज्ञापकलक्ष्यप्रदर्शनरूपम्। प्रतिपत्तिपदार्थमाहः—**निश्चय इति**। परिभाषास्थहिशब्दस्य लोकप्रसिद्धहेतुद्योतकत्वादाहः—**यत इति**। यस्माद्धेतोरित्यर्थः।

---

१. 'आद्यादिभ्य उपसंख्यानम्' का० वा० ५।४।४।

२. 'अनुस्वारोपलक्षणम्' इति कः पु० पाठः।

**सन्देहाच्छास्त्रमलक्षणमननुष्ठापकं लक्षणमलक्षणं तथा न, शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः। असन्दिग्धानुष्ठानसिद्ध्यर्थेऽत्र शास्त्रे सन्दिग्धोच्चारणरूपाचार्यव्यवहारेण सन्देहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत्।**

---

**सन्देहादिति।** अभिमतानभिमतार्थरूपकोटिद्वयावगाहिज्ञानादित्यर्थः। **शास्त्रमिति।** इदमध्याहारलभ्यं प्रकृतत्वात्।

ननु भगवत्पाणिनिप्रणीतेऽस्मिन् शास्त्रेऽर्थेऽस्मदादीनां सन्देहमात्रेणाप्तोक्ते 'सैन्धवमानय' इति वाक्ये इव प्रमाणत्वरूपलक्षणत्वस्य निषेधासम्भवादलक्षणपदार्थो दुर्वचोऽत आह—**अननुष्ठेति।** प्रमाणार्थकलक्षणशब्देनाप्रशस्तार्थकनञ्समासः।

अप्रशस्तत्वञ्चानुष्ठानप्रतिबन्धकीभूतसन्देहविषयार्थकबोधकत्वेनेति शास्त्रस्यानुष्ठापकत्वं फलतीति भावः। **तथा नेति।** अलक्षणं नेत्यर्थः। हि शब्दद्योत्यं हेतुमेव विवृणोति। शास्त्रस्येत्यादिना सूत्रात्मकस्येत्यर्थः।

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥

इत्यभियुक्तोक्तसूत्रलक्षणेऽसन्दिग्धत्वस्यापि प्रविष्टतयासन्दिग्धार्थकत्वे सूत्रत्वस्यैव भङ्गापत्त्या तस्य सन्दिग्धार्थप्रतिपादकत्वानौचित्यादिति भावः।

न्यायसिद्धेऽर्थे ज्ञापकमप्याह—**असन्दिग्धेति।** यद्वा-ननु लोकवत्सन्देहनिवर्तकसामग्रीसमवधाने तत एव तन्निवृत्त्या लक्षणत्वस्यापि व्यावृत्तेरियं व्यर्थेत्यत आह—असन्दिग्धेति। अनुष्ठानं शब्दप्रयोगरूपम्। सन्दिग्धोच्चारणेति सन्दिग्धार्थपरम्। सन्दिग्धपदे-अर्श आद्यच्, सन्दिग्धार्थकमित्यर्थः।

सन्दिग्धार्थकत्वञ्च णकारस्य सन्दिग्धार्थकाण्पदघटकत्वेन तथा चाणादिप्रदेशे सन्देहजनक- "लण्" (शि० सू० ६) सूत्रस्थणकारोच्चारणरूपाचार्यव्यवहारेणेत्यर्थः। **व्याख्यानातिरिक्तेति।** एतच्छास्त्रप्रवर्तकाचार्यपरम्परावगतोपदेशरूपव्याख्यानातिरिक्तेत्यर्थः। तच्च 'मुष्टामुष्टि' इत्यादि समर्थनाय "तत्र तेनेदम्" (पा० सू० २।२।२७) इति सूत्रेऽकारं प्रश्लिष्य पूर्वपदस्याकारो भवतीत्यपव्याख्यानरूपमित्यर्थः। **अनपेक्षत्वमिति।** तदपेक्षत्वञ्च--तदभावप्रयोज्याभावप्रतियोगित्वम्। तथा चात्र शास्त्रे सन्देहनिवृत्तिः पूर्वोक्तव्याख्यानातिरिक्ताधुनिकपरिकल्पितव्याख्यानाभासाभावप्रयोज्याभावप्रतियोगिनी नेति समुदितार्थः।

एवञ्चात्र शास्त्रे सन्देहनिवृत्तिरुक्तव्याख्यानातिरिक्तव्याख्यानेन न कार्येति व्रीहीन् वहन्तीतिवन्नियमार्थमियमावश्यकीति भावः। **बोध्यत इति।** उक्त नियम-

द्वाराऽनुमीयत इत्यर्थः। यथा यागे कालान्तरभाविस्वर्गसाधनत्वान्यथानुपपत्त्या तदुपपादकस्यापूर्वस्य कल्पनं, यथा वा मङ्गलस्य कालान्तरभाविसमाप्तिफलकत्वानुपपत्त्या तदुपपादकस्य दुरितध्वन्सस्य कल्पनं तथात्रापि।

सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्[1]।

इत्यादिभाष्येणाङ्गानां दृष्टद्वारादृष्टार्थकत्वे "वर्णेनाप्यनर्थकेन न भवितव्यम्" ( म० भा० पा० सू० १।१।१ ) इति भाष्येण सर्वत्र सफलत्वस्य गृहीततया ऊठ्ग्रहणस्य विश्वौहेत्यादिरूपसिद्ध्यन्याफलकत्वेन तत्फलकत्वोपपत्तये तदुपपादकस्य "असिद्धम्बहिरङ्गमन्तरङ्गे" ( परि० ५१ ) इति वचनस्य कल्पनमेवमिहापि "लण्" ( शिव० सू० ६ ) सूत्रे णकारस्याचार्यप्रणीतत्वेन सफलत्वेन गृहीतस्याणादिषु प्रदेशेषु लान्तसमुदायोपस्थित्यन्याफलकत्वेन तत्फलकत्वोपपत्तये तदुपपादकस्य व्याख्यानत इति वचनस्य कल्पनमिति भावः। एतेन ज्ञापितेऽपि णकारस्य स्वांशे चारितार्थ्यं दुर्वचमित्यपास्तम्, णकाराभावेऽण्पदेन लान्तसमुदायस्योपस्थित्यसम्भवात्।

एवञ्च "विश्वौहः" इत्यस्याऽन्यथासिद्ध्या तद्वैय्यर्थ्यमूलकं ज्ञापकत्वं ज्ञापिते च तस्मिन् तस्यान्यथासिद्ध्यसम्भवात् तत्सार्थक्यम्। इह तु कृतेऽपि णकारेऽणादिप्रदेशे सन्देहादभिमतस्य लान्तसमुदायस्योद्देश्यत्वासम्भवेन तद्वैय्यर्थ्याद् व्याख्यानत इत्यस्य कल्पनम्। कल्पितेऽत्र तस्मिन् तत्र सन्देहनिवृत्त्याभिमतार्थस्योद्देश्यत्वोपपत्तिरिति बोध्यम्।

अत्र शास्त्रं पक्षः, परिभाषा साध्या, ऊठ्ग्रहणं हेतुः, यन्नैवं तन्नैवमिति व्यतिरेकव्याप्तिरिति सुधीभिरुहनीयम्।

न चापूर्वस्य दुरितध्वन्सस्य वा व्यापारत्वात् कल्पनेऽपि परिभाषायां तज्जन्यत्वाभावेन तज्जन्यजनकत्वाभावेन चाव्यापारत्वात्तेन तत्कल्पनं न सम्भवतीति वाच्यम्, तुल्यन्यायेन तज्ज्ञाप्यत्वे तज्ज्ञाप्यज्ञापकस्यापि कल्पने बाधकाभावात्।

तथाहि:—असिद्धपरिभाषार्थे आचार्यतात्पर्यविषयत्वेनोठ्ग्रहणज्ञाप्यता 'विश्वौहः' इति रूपे ऊठ्ग्रहणज्ञाप्यत्वोपपादकतया तादृशरूपज्ञापकत्वञ्चेति तस्मिंस्तत्त्वोपपत्तिरिति दिक्।

---

१. जश्त्वं न सिद्धं यणमत्र पश्य यश्चापदान्तो हलचश्च पूर्वः।
दीर्घस्य यण्ह्रस्व इति प्रवृत्तं सम्बन्धवृत्त्या गुणवृद्धिबाध्यम्॥ १॥
नित्ये च यः शाकलभाक् समासे तदर्थमेतद्भगवांश्चकार।
सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्॥ २॥

तेन "अणुदित्०" ( पा० सू० १।१।६९ ) इत्यत्र च व्याख्यानम् "उऋृत्" ( पा० सू० ७।४।७ ) इति तपरकरणं तद्धि 'अचीकृतत्' इत्यादौ दीर्घस्य ह्रस्वाय। यदि पूर्वेणाण्ग्रहणं तथा दीर्घस्यानुद्देश्यत्वात्तद्वैय्यर्थ्यं स्पष्टमेव।

न च ह्रस्वोपधेऽनन्तरङ्गत्वात् प्राप्तगुणबाधनेन चारितार्थ्याद्दीर्घोपधेष्वन्तरङ्गत्वादित्वेनास्यैव बाधेन तत्राप्राप्त्या ह्रस्वोपधेऽनान्तर्याद्दीर्घाप्राप्त्या तद्व्यावृत्त्यसम्भव इति वाच्यम्, बाध्यसामान्यचिन्तया दीर्घोपधेष्वपीत्वबाधेनास्य प्रवृत्त्यान्तरतम्याद्दीर्घस्य दीर्घप्राप्त्या तद्वारणाय तस्य चारितार्थ्यात्।

न च ज्ञापितेऽपि तद्व्यर्थं, विधीयमानत्वेन सवर्णग्रहणाप्रसक्तेरिति वाच्यम्, उद्देश्यवाचकपदे इव विधेयवाचकपदेऽपि ह्रस्वदीर्घयोर्ग्रहणेनान्तरतम्याद्ध्रवस्य ह्रस्वे दीर्घस्य दीर्घे सत्यादेशान्तरनिवृत्त्यर्थतयास्य स्वरूपाभ्यनुज्ञानार्थत्वेनापूर्वबोध्यत्वाभावेनाविधेयत्वात्।

न च विधेयवाचकपदे "अणुदित्०" ( पा० सू० १।१।६९ ) सूत्रादिना सवर्णग्रहणोत्तरं तेन सवर्णानामुपस्थितावन्तरतमपरिभाषयास्य स्वरूपाभ्यनुज्ञानार्थत्वसम्भवेऽपि "प्रकल्प्य०" ( परि० ६४ ) इति न्यायेन विधेयवाचकपदे तदप्रवृत्त्या सवर्णग्रहणस्यैव दुर्लभत्वेन स्वरूपाभ्यनुज्ञानार्थत्वं दुरुपपादमिति वाच्यम्, भाव्यमानत्वज्ञानोत्तरम् "अणुदित्०" ( पा० सू० १।१।६९ ) सूत्राप्रवृत्तिः, अणुदित्सूत्राप्रवृत्तावपूर्वबोध्यत्वेन भाव्यमानतेत्यन्योन्याश्रयेण तत्र भाव्यमानत्वस्यैव दुर्ग्रहतया तेन निषेधेन दीर्घग्रहणवारणासम्भवात्। तपरकरणे कृते तु तेन दीर्घस्य व्यावृत्त्यास्य भाव्यमानत्वसम्पादकतया तेन निषेधेनापि तद्वारणमित्यन्यदेतत्।

ननु "अणुदित्०" (पा० सू० १।१।६९) सूत्रे परेण प्रत्याहारे पितॄणामृषभः 'पितॄषभः' पितॄणामृद्धिः' पितॄद्धिः' इत्यत्र "ऋति ऋ वा" (का० वा० ६।१।१०१) इति विहितस्येषत्स्पृष्टस्य ऋकारस्य रेफेण ग्रहणे यण्त्वेन "यणो मयो द्वे०" ( का० वा० ८।४।४७ ) इति द्वित्वापत्तिः, हल्त्वेन संयोगसंज्ञायां प्लुतस्य "झरो झरि०" ( पा० सू० ८।४।६५ ) इति लोपस्य चापत्तिः। न च "नाज्झलौ" ( पा० सू० १।१।१० ) इति निषेधः, तस्यानच्त्वात्।

न च "अइउण्" ( शिव० सू० १ ) सूत्रानन्तरं पाठादनयोरप्यच्त्वम्, अत एव तत्र प्लुतसिद्धिरिति वाच्यम्, प्रयत्नभेदमाश्रित्य तस्य[1] भाष्ये प्रत्याख्यातत्वेन तद्रीत्यात्र वारणासम्भवात्।

किञ्च ताभ्यां रेफलकारयोर्ग्रहणे 'भवित्री', गम्लेत्यादौ "अनचि च" ( पा० सू० ८।४।७७ ) इति द्वित्वनिषेधापत्तिः, किञ्चान्तरतम्यात् पितॄषभशब्दे

१. नाज्झलावित्यस्य इति पाठः क० पु०।

तेनाणुदित्सवर्णस्येत्येतत्परिहाराय पूर्वेणाण् ग्रहणम्, परेणेण् ग्रहणमिति

ईषत्स्पृष्टे प्लुते कृते "नाज्झलौ" ( पा० सू० १।१।१० ) इत्यस्याक्षरसमाम्नायिकेष्वेव प्रवृत्त्या रेफेण प्लुतऋकारग्रहणस्य दुर्वारत्वेन पितृषभशब्दे प्लुतस्यैकैकग्रहणेन वारणेऽपि पितृद्धिशब्दे लोपस्य दुर्वारत्वादिति चेत्, न; जातिपक्षे दोषाभावात् ।

एतेन "इको यणचि" ( पा० सू० ६।१।७७ ) इत्यादौ रेफलकाराभ्यामनयोर्ग्रहणेन 'धात्रंशः' इत्यादौ पक्षे ईषत्स्पृष्ट ऋकारोऽपि स्यादित्यपास्तम्, भाव्यमानत्वेनादोषाच्च ।

न चैवमपि "देवदत्त ऋवर्णमुच्चारय" इत्यादौ रोरुदित्वात्सवर्णग्रहणे "हशि च" ( पा० सू० ६।१।११४ ) इत्युत्वापत्तिरिति वाच्यम्, अन्तरङ्गत्वादाद्गुणेनाऽदोषात् । व्याकरणान्तरे[1] 'कु चु टु०' इत्यादीनामेवोदित्संज्ञकत्वेन तेषामेव सवर्णग्राहकत्वेनादोषाच्च । **पूर्वेणेति ।** "ढ्रलोपे०" (पा० सू० ६।३।१११) "उरण्रपरः" ( पा० सू० १।१।५१ ) "केऽणः" ( पा० सू० ७।४।१३ ) "अणोऽप्रगृह्य०" ( पा० सू० ८।४।५७ ) इत्येतेष्विति बोध्यम् । तत्र "ढ्रलोपे०" ( पा० सू० ६।३।१११ ) इत्यत्र व्याख्यानं तत्रत्याणग्रहणमेव । तथाहि:—अत्र परेणाण्ग्रहणे हल्षु दीर्घासम्भवेन अक्षु-अच्परिभाषयैव सिद्ध्या तत्र फलाभावात् तद्व्यर्थं सत् पूर्वेण प्रत्याहारबोधनद्वारा 'तृढः' इत्यत्र दीर्घव्यावर्तकतया चरितार्थम् ।

ननु अच्परिभाषाबाधनेन हलामपि सङ्ग्रहार्थमेव तदस्तु तत्फलं तु वृहू उद्यमन इत्यतस्तृचि-ऊदित्वादिडभावे वढ्र्र्त्यादौ रेफस्य दीर्घऋकारप्रवृत्तिः, न च तत्प्रवृत्तावपि पश्चादाद्गुणे रपरत्वे वर्ढेत्येव रूपमिति नेदं फलमिति वाच्यम्, "वार्णादाङ्गम्" ( परि० ५६ ) इति न्यायेन गुणात्पूर्वं ढलोपादेरसिद्धत्वेन "उपधायाश्च" ( पा० सू० ७।१।१०१ ) इतीत्वापत्त्याऽनिष्टापत्तेः ।

न चोक्तार्थकत्वे प्रतिपत्तिलाघवाय "दीर्घोटः" इत्येव वक्तव्येऽण्ग्रहणं व्यर्थमिति वाच्यम्, गल्ह ( भ्वा० ६७७ ) धातोः, बल्ह ( भ्वा० ६७९ ) धातोश्च यङ्लुकि 'जागल्ढि' 'बाबल्ढि' इत्यत्र लकारस्थाने "लृति लृ वा" ( का० वा० ६।१।१०१ ) इति विहितस्याच्त्वं वक्ष्यामीति[2] भाष्येणान्तरतमस्य दीर्घस्य सम्भवेन तादृशदीर्घार्थं तस्यावश्यकत्वात् ।

न च "तुल्यास्य०" ( पा० सू० १।१।९ ) सूत्रे 'यदेतदृतीति तदेतदृत इति वक्ष्यामि' इत्यादिभाष्येणाद्यस्य ह्रस्व-ऋद्वयस्थानिकैकादेश एवोत्तरस्य ह्रस्व-ऋकार-लृकारद्वयस्थानिकैकादेश एव च साधुत्वमिति वाच्यम्, उक्त भाष्येणैका-

---

१. 'व्याकरणान्तरे' इत्यादितः 'अदोषाच्च' इत्येतत्पर्यन्तं नास्ति क० पु० ।

२. पा० सू० १।१।९ म० भा० ।

**लण् सूत्रे भाष्ये स्पष्टम् ॥ १ ॥**

---

देशविषये ईदृशस्थल एव तत्प्रवृत्तावपि शास्त्रान्तरेणान्यत्र[1] तदप्रवृत्तौ मानाभावात् ।

किञ्च होतृकारादिसिद्धये सिद्धान्तिना सावर्ण्यविधिवचने उपन्यस्ते ततः पूर्वपक्षिणा नैतदस्ति प्रयोजनमित्युपक्रम्यात्रैवेषत्स्पृष्ट[2]सिद्धये षाष्ठवचनस्यावश्यकत्वेन तेनैव होतृकारस्यापि सिद्ध्यास्य व्यापकत्वं प्रदर्शयितुम् 'ऋत' इति न्यासे प्रदर्शिते, ततः सिद्धान्तिना सवर्णदीर्घेणैवसिद्ध्या षाष्ठवचनद्वयं न कर्तव्यमित्युक्ते तदाशयानभिज्ञेन पूर्वपक्षिणा तयोरनच्त्वात् दीर्घत्वाभावेन सवर्णदीर्घेण तदसिद्धिरित्युक्ते[3] पुनः सिद्धान्तिना तयोः प्लुतार्थमक्षरसमाम्नाये पाठस्यावश्यकतयाच्त्वाद्दीर्घेणैव सर्वेष्टसिद्ध्या सावर्ण्यविधेरेव तत्साध्यप्रयोजननिर्वाहशालित्वे प्रदर्शिते, ततः किं पुनरत्र ज्यायस्सवर्णसंज्ञावचनमेव ज्यायः, दीर्घत्वञ्च सिद्धं भवति, ऋकारग्रहणे ऌकारग्रहणञ्च सन्निहितं भवति, ऋत्यक इतीत्युपसंहृतम् । एवञ्चास्य पूर्वपक्ष्युक्तित्वं स्पष्टमेव । एतद्भाष्यबलाद्बहूनां प्रयोगाणामनभिधानकल्पनमयुक्तमेव ।

किञ्चेषत्स्पृष्टस्यान्यत्राप्रवृत्तौ गमल्लकार इत्यत्र विवृत[4]ॡकाराभावेन पर्यायेण लपराणां दीर्घाकारादीनाम् "अकः सवर्णे०" ( पा० सू० ६।१।१०१ ) इत्यनेन[5] प्रवृत्त्यापत्तिरिति दिक् । किञ्चाभ्यां क्तिनि "ति तुत्र०" ( पा० सू० ७।२।९ ) इतीण्निषेधे 'गल्ढिः' 'बल्ढिः' इत्यत्र दीर्घसम्पादनेन चारितार्थ्यादिति चेत्, न; तत्राप्याद्गुणेनादेषात् । एवञ्च परेण प्रत्याहाराश्रयणे फलाभावेन "दीर्घोटः" इत्येव सिद्धेऽण्ग्रहणसामर्थ्यात्पूर्वेणैवेति सिद्धम् ।

न च "उरण् रपरः" ( पा० सू० १।१।५१ ) इत्यत्रासावर्ण्यादस्याग्रहणेन कथं लपरत्वमिति वाच्यम् "ऋॡवर्णयोः०" ( वा० ) इत्यत्र वाक्यापरिसमाप्तिन्यायेन "अणुदित्०" ( पा० सू० १।१।६९ ) सूत्राप्राप्त्या ऋग्रहणेषु त्रिंशद्ग्रहणाय जातिनिर्देशस्यावश्यकतयेषत्स्पृष्टॡकारेणापि सवर्णसंज्ञाङ्गीकारेणादोषात् । अत एव 'गमॄन्' इत्यादौ पूर्वसवर्णदीर्घसिद्धिरन्यथा ह्रस्वॡकारस्य दीर्घॠकारस्य च सावर्ण्याभावात्तदसङ्गतिः ।

ननु "न च[6] ॠकारः ॡकारो वाजस्ति ॠकारस्य ॡकारस्य वाच्त्वं

---

१. 'अन्यतरेण' इत्यधिकः पाठः क० पु० ।　　२. 'ॠकार' इत्यधिकः पाठः क० पु० ।
३. 'न सिद्ध्यति' इति पाठः क०पु० ।　　४. 'दीर्घं' इत्यधिकः पाठः क०पु० ।
५. 'अकः सवर्णे इत्यनेन' इति नास्ति क०पु० ।　　६. पा० सू० १।१।९ म० भा० ।

वक्ष्यामि, तच्चावश्यं वक्तव्यम्, प्लुतो यथा स्यात्'' इति भाष्येण विवृतेषत्स्पृष्टयोर्भिन्नजातीयत्वबोधनेन ऋलृवर्णयोरित्यत्र जातिर्निर्देशेऽपि तयोस्ताभ्यां ग्रहणं दुर्वचमिति चेत्, न; तयोर्भिन्नप्रयत्नत्वेन तुल्यास्यमित्यस्य भिन्नजातीयत्वेन ऋलृवर्णयोरित्यस्य चाप्राप्त्या तयोस्ताभ्यां सावर्ण्यासम्भवेनाच्त्वाभावे शङ्किते विवृतसंवृताकारयोरिव प्रयत्नभेदेऽप्युभयसाधारणैकजात्याश्रयणरूपव्याख्यानतात्पर्येण व्याख्यास्यामीत्यर्थकेनाच्त्वं वक्ष्यामीति भाष्येणोभयसारधारणैकजात्याश्रयणस्यैव बोधितत्वेनादोषात् ।

अत एव ''स्युर्मूर्धन्या[1] ऋटुरषाः'' इति शिक्षायामृग्रहणेनेषत्स्पृष्टविवृतयोश्च ग्रहणम्, गमृनित्यत्र लृकारापादनपरः शेखरश्च सङ्गच्छते ।

अत एव कृष्णर्द्धिरित्यत्रेवेषत्स्पृष्ट ऋवर्ण इत्यत्रापि रपरगुणसिद्धिरन्यथा त्रयाणामपि पर्यायेण प्रवृत्त्यापत्त्या तदसिद्धिः ।

न च विवृतेषत्स्पृष्टयोर्मूर्धन्ययोरसावर्ण्यात् ''उरण् रपरः'' ( पा० सू० १।१।५१ ) इत्यत्रोद्देश्यवाचकपदेनास्य ग्रहणात् कथं रपरत्वमिति वाच्यम्, जाति पक्षेणादोषात्[2] । ऋग्रहणं तु[3] ऋलृवर्णयोरित्यत्र साजात्यातिदेशात् सिद्धम् । ''अइउण्'' ( शि० सू० १ ) सूत्रानन्तरं पाठाभिप्रायेण तद्भाष्ययोजनं कैयटाद्युक्तं[4] तु न युक्तम्, तत्फलस्य अन्यथासिद्धत्वेन जातिद्वयस्य पाठस्य च स्वीकारे गौरवात् । ''इको यणचि'' ( पा० सू० ६।१।७७ ) इत्यादौ यथासङ्ख्येन[5] निर्वाह इति भाष्यासङ्गतेश्च । अत एव ''लण्'' ( शि० सू० ६ ) सूत्रस्थं ''सामर्थ्यात् पूर्वेण, यदिह परेण स्यादण्ग्रहणमनर्थकं स्यात्'' ''अच् परिभाषयैव सिद्धेः'' इति भाष्यश्च सङ्गच्छत इति दिक् ।

वस्तुतस्तु ''ऋति ऋ वा'' ( का० वा० ६।१।१०१ ) इति वार्तिकविधेयस्य षाष्ठकैय्यटोक्तरीत्या संवृतत्वमेव युक्तम् । अत एव ''रेफोष्मणां[6] सवर्णा न सन्ति'' इति भाष्यं सङ्गच्छते । एवमन्यत्राप्यूह्यम् ॥ १ ॥

---

१. 'स्युर्मूर्धन्या ऋटुरषाः' ( पा० शि० १७ ) इति नास्ति क० पु० ।
२. 'पक्षे दोषाभावात्' इति पाठः क० पु० ।
३. 'ऌ ग्रहणम्' इति पाठः क० पु० ।
४. 'कैयटाद्युक्तम्' इति नास्ति क० पु० ।
५. 'नैतदस्ति संख्यातानुदेशेनाप्येतत्सिद्धम्' इत्यर्थकभाष्यासङ्गतेश्चेत्यर्थः । पा० सू० १।१।५०
६. 'शिवसूत्र' ५ ।

**तत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह—**

**यथोद्देशं संज्ञापरिभाषम् ।। २ ।।**

**कार्यकालं संज्ञापरिभाषम् ।। ३ ।।**

**उद्देशमनतिक्रम्य यथोद्देशम् । उद्दश उपदेशदेशः । अधिकरणसाधनश्चायम् । यत्र देशे उपदिश्यते तद्देश एव वाक्यार्थबोधेन गृहीतशक्त्या गृहीतपरिभाषार्थेन**

---

संज्ञापरिभाषयोर्विध्यङ्गभूतयोः कदाचिदेकवाक्यतया विधिसंस्कारकत्वम्, कदाचित्तं विनैव तत्त्वमित्येवं सर्वसंज्ञापरिभाषासाधारण्येन पक्षद्वयबोधकं परिभाषाद्वयं वक्तुं पूर्वमुपक्रमते। **तत्रेति**। शास्त्रे इत्यर्थः। **अनतिक्रम्येति**। अविहायेत्यर्थः। स्वस्वार्थं[1] बोधयतीति शेषः। तथा च स्वदेशसम्बन्धध्वंसप्राग-भावकालिकस्वार्थबोध इति यावत्। "परावरयोगे च" ( पा० सू० ३।४।२० ) इति क्त्वाप्रत्ययः, अपूर्वकालिकत्वेन "समानकर्तृकयोः०" (पा० सू० ३।४।२१) इत्यस्याप्राप्तेः। उत्पूर्वस्योपपूर्वस्य च दिशेः क्वचिदर्थभेदेऽपि प्रकृते नेत्याह— **उद्देश इति। अधिकरणेति**। बाहुलकाद् घञ् इति भावः। उद्देशशब्देनौपदेशिकक्रम-विशिष्टस्वस्वगमकान्यतरोच्चारणदेशोऽभिधीयते तदाहः—**यत्रेति**। अत्र यच्छब्दस्य कालत्वेन कालार्थकत्वाभावान्न दा-प्रत्ययः।

अत एव कालबोधनाय देश इत्युक्तम्। अत एव "यत्र काले त्वनावृष्टिम्"[2] इत्यादि सङ्गच्छते। **तद्देशेति**। पठितानां पाठदेशे, ज्ञापितानां ज्ञापकदेशे चेत्यर्थः।

न च संज्ञापरिभाषस्याचेतनत्वेन स्वदेशातिक्रमासम्भवात् व्युत्पन्नं प्रति स्वार्थबोधजनकस्वभावस्य शास्त्रस्य स्वदेश एव स्वार्थबोधोपपत्तेरनेन तन्निषेध-द्वारा स्वदेशस्थत्वबोधनं व्यर्थमिति वाच्यम्, प्राचीनमते वक्ष्यमाणरीत्या विधिदेशीयत्वग्राहकमहावाक्यार्थबोधमन्तरा स्वदेशे स्वार्थबोधनद्वारा वाक्येभेदे-नाऽपि संज्ञापरिभाषस्य विधिसंस्कारकत्वमित्यर्थे तात्पर्यग्राहकत्वेनादोषात्।

नव्यमतेऽपि यथा सार्थक्यं तथाग्रे वक्ष्यामः। तदेतदाह—**एवेति**। **एवेन** विधिदेशीयत्वग्राहकमहावाक्यार्थो व्यवच्छिद्यते। **गृहीतशक्त्येति**।

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत्सुखं स्वः पदास्पदम्।।

इत्यादि वचनेन स्वर्गादिपदशक्तिग्रहोत्तरं "स्वर्गकामो यजेत" इति वाक्यस्य स्वर्गादिपदेनैव स्वदेशे बृद्ध्यादिपदशक्तिग्रहोत्तरं प्रदेशवाक्यस्थबृद्ध्यादिपदेनार्थो-

---

१. **'अस्य' इति क पु० पाठः।**

२. **'यत्र काले त्वनावृत्तिम्' इति क० पु० पाठः।**

**च सर्वत्र शास्त्रे व्यवहारः। देशश्चोच्चारणकाल एवात्र शास्त्रे व्यवह्रियते।**

पस्थित्या वाक्यार्थप्रतिपत्तिः, यथा 'यद् यज्जुहोति तत्सर्वमाहवनीये जुहोति' इति वाक्येन नियमग्रहोत्तरं सर्वस्याऽपि होमस्थाहवनीयाधिकरणत्वप्रतिपत्तिस्तथा सप्तम्यन्तार्थे नैरन्तर्येणानैरन्तर्येण[1] वोच्चारिते पूर्वस्य परस्य वा यत्कार्यं प्राप्तं तत्कार्यं सप्तम्यन्तार्थे नैरन्तर्येणोच्चारित एव पूर्वस्यैव तद्विशेष्यस्य निमित्तित्वं कार्यित्वं वा बोध्यमित्येवं परिभाषार्थग्रहे सति "णौ चङि०" ( पा० सू० ७।४।१ ) "सिचि वृद्धिः०" ( पा० सू० ६।२।१ ) "इको यणचि" ( पा० सू० ६।१।७७ ) इत्यादि प्रदेशवाक्ये सप्तम्यन्तरूपलिङ्गश्रवणेन परिभाषार्थस्योद्बोधेन विधिनियमयोरिव तयोरेकवाक्यतामन्तरा तदनुरोधेनैव चङ्परे णौ निमित्तत्वस्याच्परकेकः कार्यित्वस्य चावगतिरिति न क्वाप्यनुपपतिः[2]।

अत एव "महावाक्यार्थपर्यालोचनप्रवृत्तप्रतिपत्त्रपेक्षस्तु कार्यकालपक्ष" इति कैय्यटेनोक्तं[3] सङ्गच्छते। ननु लोकप्रसिद्धदेशस्य शास्त्रेऽसम्भवादाह:—**देशश्चेति। उच्चारणकाल एवेति।** औपदेशिक[4]क्रमविशिष्टस्वोच्चारणकाल इत्यर्थः। न तु युगान्तरीयपाणिन्युपदेशकालः, आकस्मिकास्मदाद्युच्चारणकालो वा।

ननु संज्ञापरिभाषं स्वदेशे स्वार्थं ग्राह्यत् तत्संस्कारद्वारा विधिदेशीयत्वग्राहकमहावाक्यार्थबोधमन्तरैव वाक्यभेदेन सर्वशास्त्रोपकारकमित्येवं रूपो यथोद्देशपक्षश्शास्त्रे न युक्तः। स्वदेशे स्वार्थबोधोत्तरमस्याः[5] परिभाषायाः अत्र शास्त्रे किं फलमिति फलाकाङ्क्षाया अनिवार्यत्वेन फलविशेषजिज्ञासया प्रदेशवाक्यपर्यालोचनायां प्रदेशवाक्योपस्थित्त्या महावाक्यार्थबोधस्य दुर्वारत्वेन पूर्वोक्तवाक्यभेदात्मकयथोद्देशपक्षस्य शास्त्रेऽसम्भव इत्यत आह—**तत्तदिति।** शास्त्रस्य सर्वाधिकारिकत्वेन मन्दप्रतिपत्तुस्संज्ञापरिभाषस्य स्वदेशे स्वार्थबोधे जाते प्रेक्षावत्प्रवृत्तेर्नैरर्थक्यादर्शनेनाऽऽचार्यप्रणीतत्वादेवास्य शास्त्रे[6] "भविष्यति किञ्चित्प्रयोजनम्" इति सामान्यज्ञानमात्रेण फलाकाङ्क्षाया निवृत्त्या प्रदेशविशेषजिज्ञासाया अनुदयेन तदनुपस्थित्त्या महावाक्यार्थबोधाभावेनास्य पक्षस्य सूपपादत्वात्।

एतत्फलं तु 'दत' इत्यादौ प्रतिपदोक्तफलाभावेऽपि भसंज्ञाप्रवृत्त्या जश्त्वाभावः 'पार्श्वम्' इत्यत्र "सिति च" ( पा० सू० १।४।१६ ) इति पदत्वात्

१. 'अनैरन्तर्येण' इति नास्ति क० पु०। २. 'काप्यनुपपत्तिः' इति पाठः क० पु०।
३. 'ईदूदेद्द्विवचनं प्रगृह्यम्' पा० सू० १।१।११ इति सूत्रे इत्यर्थः।
४. 'पाणिनिपरिकल्पितसन्निवेशापेक्ष' इत्यधिकः पाठः क० पु०।
५. स्वार्थबोधानन्तरमस्याः' इति पाठः क० पु०।
६. 'शास्त्रे' इति नास्ति क० पु०।

**तत्तद्वाक्यार्थबोधे जाते 'भविष्यति किञ्चिदनेन प्रयोजनम्' इति ज्ञानमात्रेण सन्तुष्यद् यथाश्रुतग्राहिप्रतिपत्त्रपेक्षोऽयं पक्ष ईदूत्सूत्रे कैयटः।**

**केचित्तु—परिभाषाविषये तस्मिन्नित्यादिवाक्यार्थबोधे सप्तमीनिर्देशादि क्वेति पर्य्यालोचनायां सकलतत्तद्विध्युपस्थितौ सकलतत्तत्संस्काराय गुणभेदं**

ओर्गुणाभावः, देवदत्तेत्यादौ प्लुतस्यासिद्धत्वात्पूर्वं षाष्ठे आमन्त्रिताद्युदात्तत्वे ततः प्लुते तस्यासिद्धत्वात्—"अनुदात्तं पदम्" ( पा० सू० ६।१।१५८) इत्यस्याप्रवृत्त्या तदेकवाक्यतापन्नशेषनिघाताभावेनोदात्तद्वयसमावेशः।

एवं षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धत्वादित्यादि मूलोक्तं बोध्यम्। तदेतदाह—**भविष्यतीत्यादिना**। एवञ्चाङ्गाङ्गिनोर्युगपदुपस्थित्त्या महावाक्यार्थबोधाभावेऽपि प्रदेशवाक्योपस्थितिकाले संज्ञापरिभाषार्थस्य बुद्धिस्थत्वेन तदनुरोधेनैव विधिवाक्यार्थप्रतिपत्त्या लक्ष्यसंस्कारसम्भवेन शास्त्रे मन्दमत्यनुरोधेनोक्तरीत्या वाक्यभेदात्मकयथोद्देशपक्षस्सम्भवतीति कैय्यटाद्याशयः।

अत एव "कथं पुनरयं पक्षो यावता कार्यार्थत्वात् संज्ञापरिभाषस्य कार्यकालतैव न्याय्या" इत्याशङ्क्य नैष दोषः, यदानुद्दिश्य प्रयोजनविशेषं प्रयोजनमात्रमनुसन्धाय भविष्यति किञ्चिदनेन प्रयोजनमिति संज्ञापरिभाषं प्रणीयते, तदा सम्भवत्येवायं पक्षो मन्दमध्यमप्रतिपत्त्रपेक्ष इति कैय्यटेनोक्तम्[1]।

ननु स्वदेशमनुल्लङ्घ्य स्वार्थबोधनद्वारा संज्ञापरिभाषाणां विध्युपकारकत्वस्य यथोद्देशमिति परिभाषया बोधनेऽपि तस्य वाक्यभेदप्रयोज्यत्वे मानाभावेन मध्यमाधिकारिपरत्वं शास्त्रस्याभ्युपगम्य तथा तत्पक्षोपपादनं प्राचामयुक्तम्। शास्त्रस्य मुख्याधिकारिपरत्वेऽपि स्वदेशे स्वार्थबोधे जाते फलाकाङ्क्षया प्रदेशविशेषजिज्ञासया तत्रैव प्रदेशवाक्योपस्थित्त्या लक्ष्यसंस्कारकमहावाक्यार्थबोधेऽपि संज्ञापरिभाषस्य स्वदेशानुल्लङ्घनेनैकदेशस्थत्वेन तत्पक्षस्य सूपपादत्वात्।

त्वदुक्तरीत्याश्रयणे तत्पक्षस्य गौणत्वापत्तेरित्यरुचेराह—**केचित्तु इति**। न चैतन्मतेऽस्या विधिदेशीयत्वग्राहकमहावाक्यार्थबोधे व्यावृत्तिरूप[2]पूर्वोक्तफलासम्भवादियं व्यर्थेति वाच्यम्, परिभाषादेश एवाकाङ्क्षया विधीनामुपस्थित्त्या त्रैपादिकस्यासिद्धत्वेनाकाङ्क्षाया अनुदयान्न तैरेकवाक्यतया लक्ष्यसंस्कार इत्यर्थे तात्पर्यग्राहकत्वेनापूर्वत्वाभावेनादोषात्।

एवं 'कार्यकालं संज्ञापरिभाषम्' इत्यपि नाऽपूर्वम्, विधिदेश एवाकाङ्क्षया परिभाषाणामुपस्थित्या तैरेकवाक्यतया लक्ष्यसंस्कार इत्यर्थे तात्पर्यग्राहकत्वात्। **परिभाषाविषय इति**। यद्यपि संज्ञायाः प्राथम्यात् तुल्यन्यायेन क्व वृद्धिपदादिक-

१ 'ईदूदेद्द्विवचनं प्रगृह्यम्' पा० सू० १।१।११ इति सूत्रे।
२. 'बाधव्यावृत्तिः' इति पाठ क० पु०।

**परिकल्प्यैकवाक्यतयैव नियमः। कार्य्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः। एतदेवाभिप्रेत्य 'अधिकारो नाम त्रिप्रकारः, कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा—'प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति' इति 'षष्ठी स्थाने०' इति सूत्रे भाष्य उक्तम्। अधिकारशब्देन पारार्थ्यात्परिभाषाऽप्युच्यते। कश्चित्परिभाषारूप इति कैयटः। दीपो यथा—प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम्। एतच्च पक्षद्वयसाधारणं भाष्यम्, पक्षद्वयेऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः।**

---

मित्याकाङ्क्षायास्सुवचत्वात् तदप्युपन्यसितुमुचितम्[१], तथापि 'दतः' इत्यादौ जश्त्वादिप्रतिबन्धरूपाशास्त्रीयेऽपि कार्ये भत्वादिसिद्धये विध्येकवाक्यतया संज्ञाप्रवृत्तेराश्रयितुमशक्यत्वेन कैय्यटाद्युक्तयथोद्देशपक्षस्य संज्ञाविषये क्वचिदावश्यकत्वेन सर्वत्रैकरूप्याय संज्ञाविषये तदुक्तरीतेराश्रयणेऽपि परिभाषाविषये तथाश्रयणे मानाभावात् परिभाषामात्रस्योपन्यास इति बोध्यम्। अत एवाकडारस्थभपदसंज्ञासु यथोद्देशपक्ष इति वक्ष्यमाणग्रन्थस्सङ्गच्छते। अन्यथा दत इत्यत्र तदप्राप्त्या तदसङ्गतिः स्पष्टैव। **एकवाक्यतयैवेति**। एवेनात्र पक्षे प्राचीनोक्तवाक्यभेदव्यावृत्तिः।

ननु—अत्र पक्षेऽप्येकवाक्यताङ्गीकारे पक्षयोर्भेदो दुर्वचः, न चैकत्र स्वदेशेऽपरत्र विधिदेशे एकवाक्यतेति तयोर्भेदः सुवचः, फलभेदाभावे तस्याकिञ्चित्करत्वादित्यत आह—**कार्यकालपक्ष इति। विशेष इति**। यथोद्देशपक्षे त्रिपाद्या असिद्धत्वेन तद्विषयकाकाङ्क्षाया अनुदयेन तदनुपस्थित्या तत्संस्कारासम्भवेन कार्यकालपक्षाश्रयणं तद्विषये आवश्यकमिति भावः। एवञ्चाकाङ्क्षाभेदमूलकं पक्षद्वयमिति नव्यमते व्यवस्था बोध्या। उक्तरीत्या यथोद्देशपक्षोपपादने मानमाह—**एतदेवेति**। परिभाषादेश एव विध्येकवाक्यत्वमित्यर्थः। **नामेति**-प्रसिद्धौ। **त्रिप्रकार इति**। परिभाषारूप एकः, स्वरितत्वप्रतिज्ञया चकारेण च काष्ठवदनुकृष्यमाणौ द्वाविति तस्य त्रैविध्यं बोध्यम्।

ननु परिभाषाप्रसङ्गेऽधिकार इत्युक्तिरयुक्तेत्यत आह—**अधिकारशब्देनेति**। **स्वबुद्धिजननद्वारेति**। स्वबुद्धिजन्याकाङ्क्षामूलकोपस्थितिविषयकविध्येकवाक्यताद्वारेति भावः। तेन यथोद्देशपक्षेऽप्येकवाक्यताप्रतिपादकपूर्वोत्तरग्रन्थेन न विरोधः। यथा श्रुते तु स्वदेशगृहीतवाक्यार्थस्मरणेनेत्यर्थापत्त्या प्राचीनोक्तयथोद्देशपक्षप्रवेशापत्तिः।

एतावता प्रकृते किमायातमत आह—**एतच्चेति। साधारणमिति**। अस्य भाष्यस्य परिभाषारूपाधिकारलक्षणत्वेन प्रवृत्ततया तस्य लक्षणस्य पक्षद्वयेऽपि लक्ष्यभूतासु परिभाषासु समन्वयस्यावश्यकतयोभयपक्षसाधारणत्वमेव युक्तम्, सङ्कोचे मानाभावादिति भावः। **इतः प्रतीतेरिति**। अस्य भाष्यस्य पक्षद्वयसाधारण-

---

१. 'तदेवोपन्यसितुम्' इति पाठः क० पु०।

**तत्रैतावान्विशेषः—यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम्। तदुक्तम्—'क्ङिति च' इति सूत्रे कैयटे। 'यथोद्देशे प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जत' इति। कार्यकाले तु तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यतेति। अत्रैकदेशस्थ इत्यनेन तत्र तत्र बुद्धावपि तद्देशस्थत्वं वारयति, यथा—व्यवहर्तॄणां कार्यार्थमनेकदेशगमनेऽपि न तत्तद्देशीयत्वव्यवहारः, किन्त्वभिजनदेशीयत्वव्यवहार एव, तद्वन्निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्यतयैवान्वय इति परिभाषासादृश्यात्परिभाषात्वेन व्यवहारः 'क्ङिति च' इत्यत्र भाष्ये। तत्रैकवाक्यता**

---

त्वेन कार्यकालपक्षे पदैकवाक्यतया महावाक्यार्थबोधेन सर्वशास्त्राभिज्वालकत्वस्य निर्विवादतया तत्पक्षेणैकरूप्यसिद्धये तद्रीत्या यथोद्देशपक्षेऽपि सर्वशास्त्राभिज्वालकत्वस्य वक्तव्यतया तत्राप्येकवाक्यताया आवश्यकत्वादिति भावः।

ननु एवं यथोद्देशपक्षेऽप्येकवाक्यतायां पक्षयोः स्वरूपे विशेषो दुर्वचोऽत आह—**तत्रेति**। प्राचीनोक्तरीत्याऽनयोर्वाक्यभेदतदभावरूपविशेषस्य दुर्वचत्वेऽप्याकाङ्क्षाभेदेन स्वरूपे विशेषस्सुवच इत्याह—**यथोद्देश इति। आत्मभेदमिति।** 'प्रतिप्रधानं गुणावृत्तिः' इति न्यायेन स्वरूपभेदमित्यर्थः। **परिभाषाणाम्**-इत्यस्य स्थितानामित्यादिः। **एकवाक्यतेति**। अस्य विशेषपदार्थेऽभेदेनाऽन्वयः। **तैरिति**-विधिभिरित्यर्थः। परिभाषाणामेवोभयत्र कर्तृत्वमिति न ल्यवनुपपत्तिः।

उक्तार्थे कैय्यटमपि प्रमाणयति—**"क्ङिति च"** ( पा० सू० १।१।५ ) इति। **आत्मसंस्कारायेति**। निषेधे—नहि विधीनां विषयो विविच्य ज्ञाप्यत इति, तेन तानि संस्क्रियन्त इति भावः। यथोद्देशपक्षाद्भेदमाह—**कार्यकाले त्विति। एकवाक्यतेति**। अस्य विशेष इत्यनेन सम्बन्धः।

ननु उक्तभाष्यस्य पक्षद्वयसाधारणत्वं न युक्तं, कार्यकालपक्षे परिभाषाणां विधिदेशस्थत्वेनैकदेशस्थत्वस्य दुरुपपादत्वादित्यत आह—**अत्रेति**। उक्तभाष्य इत्यर्थः। **वारयतीति**। यथोद्देशपक्षे एकदेशस्थत्वस्य स्वत एव सत्त्वेनोक्तविशेषणे फलाभावेन कार्यकालेऽपि स्वदेशस्थत्वमेवेति सूचयितुं विशेषणमिति भावः। तत्र दृष्टान्तमाह—**यथेत्यादिवदित्यन्तेन**।

एवञ्च व्याख्यातॄणां परिभाषाशास्त्रस्य नानादेश आकस्मिकोपस्थितिविषयत्वेऽपि यथा यथोद्देशे एकदेशस्थत्वप्रतिपत्तिस्तद्वत्कार्यकालपक्षेऽप्येकदेशस्थत्वप्रतिपत्तिरिति भावः।

ननु निषेधस्य कथं परिभाषात्वम्—अत आह—**सादृश्यादिति। भाष्य इति।**

**पर्युदासन्यायेन, प्रसज्य प्रतिषेधेऽपि तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहारः।**

**संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः, किन्तु प्रदेशवाक्येन सहैव। अत एवाणोऽप्रगृह्यस्येत्येतदेकवाक्यतापन्नादसोमादित्येतत्प्रति न मुत्वाद्यसिद्धम्, असिद्धत्वस्य कार्यार्थितया कार्यज्ञानोत्तरमेव तत्प्रवृत्तिः, कार्यज्ञानं**

---

तत्र हि "तन्निमित्तग्रहणं कर्तव्यम्" इति वार्तिकप्रत्याख्यानावसरे 'इकः क्ङिति परे गुणवृद्धी न भवतः' इति सूत्रार्थे विज्ञायमाने 'रोरवीति' इत्यत्र प्रत्ययलक्षणेन यङमाश्रित्य प्राप्तं निषेधं 'न लुमता' इति परिहृत्य "न लुमताङ्गस्य" ( पा० सू० १।१।६३ ) इत्युच्यते।

न चैतदङ्गाधिकारस्थमित्याशङ्क्य कार्यकालपक्षाश्रयणेन 'क्ङिति च' ( पा० सू० १।१।५ ) इत्यस्याप्याङ्गत्वमभ्युपगम्य परिहृतम्। निषेधस्य परिभाषात्वानङ्गीकारे एतद्भाष्यासङ्गतिः।

ननु तयोर्विरोधात् कथमेकवाक्यतेत्यत आह—**तत्रेति।** विधिनिषेधविषय इत्यर्थः। **न्यायेनेति।** लक्षणया क्ङिद्भिन्नसार्वधातुकादिपरत्वाश्रयणेनेत्यर्थः। **तेन सहेति।** साहित्यश्चाव्यवहितोत्तरकालिकत्वरूपम्, तथा च वाक्यैकवाक्यतेति भावः।

ननु व्यवहर्तृदृष्टान्ताङ्गीकारे संज्ञाविषयेऽपि तथात्त्वापत्त्या वक्ष्यमाणभाष्यासङ्गतिरत आह—**संज्ञाशास्त्रस्य त्विति।** तु शब्दो भिन्नक्रमः, कार्यकालपक्षे त्वित्यन्वयः। **न पृथग्वाक्यार्थ इति।** विध्येकवाक्यतामन्तरेति भावः। एतेन कार्यकालपक्षे परिभाषाणां स्वदेशे पृथग्बोध इत्यपास्तम्। तथा स्वीकारे तत्रैवाकाङ्क्षायाः दुर्वारत्वेन विधीनामुपस्थित्या स्वोक्तयथोद्देशपक्षप्रवेशापत्त्या 'कार्यकाल' इत्युक्तेरसङ्गतत्वापत्तेः[1]। **अत एवेति।** उक्तार्थाङ्गीकारादेवेत्यर्थः। **एकवाक्यतेति।** वाक्यैकवाक्यतेत्यर्थः। संज्ञाविषये पदैकवाक्यताया नव्यमतेऽनभ्युपगमस्य "न सम्प्रसारण०" ( पा० सू० ६।१।३७ ) इत्यत्र शेखरे स्पष्टत्वात्।

ननु कार्यकालपक्षे परिभाषास्विव संज्ञास्वपि पाठकृतपौर्वापर्यस्यानपगमेन तदादायासिद्धत्वस्य दुर्वारत्वेन भाष्यासङ्गतिस्तदवस्थैवेत्यतोऽसिद्धत्वाभावे प्रयोजकान्तरमाह—**असिद्धत्वस्येति। कार्यार्थितयेति।** कार्यस्य प्रवृत्त्यर्थतया निवृत्यर्थतया वेत्यर्थः। **कार्यज्ञानोत्तरमेवेति।** "पूर्वत्रासिद्धम्" ( पा० सू० ८।२।१ ) इत्यत्र पूर्वत्रेति विषयनिर्देशात् पूर्वशास्त्रप्रसक्तिमुपजीव्यैव मुत्वासिद्धत्वस्य विधानेनोपजीव्यभूतपूर्वशास्त्रप्रसक्तेः। पूर्वशास्त्रवाक्यार्थज्ञानोत्तरकालिकत्वात् वाक्यार्थस्य च प्रदेशवाक्यैकवाक्यताधीनत्वादिति भावः।

---

१. 'विप्रतिषेधसूत्रस्थशेखरस्तु चिन्त्य एव' इत्यधिकः पाठः क० पु०।

**च प्रदेशदेश एवेति तद्देशस्थस्यासिद्धत्वात्पूर्वग्रहणेनाग्रहणात् । एवं तद्बोधोत्तरमेव**

ननु प्रदेशे कार्यज्ञानेऽपि पाठकृतपूर्वत्वस्य तस्मिन्ननपगमेन प्रगृह्यसंज्ञां प्रति मुत्वासिद्धत्वं दुर्वारमत आहः—**तद्देशस्थस्येति** । तद्देश उपस्थितस्येत्यर्थः । **असिद्धत्वादिति** । विधेयं प्रत्यसिद्धत्वं तदेकवाक्यतापन्नशास्त्रस्य तद्देशस्थत्वाभावेऽपि तद्वाक्यमध्यपतितत्वेन तं प्रत्यसिद्धत्वं तस्यापि स्वीक्रियते, उक्तभाष्य—प्रामाण्यादिति भावः । **अग्रहणादिति** । मुत्वविध्येकवाक्यतापन्न "पूर्वत्रासिद्धम्" ( पा० सू० ८।२।१ ) इति सूत्रस्थपूर्वग्रहणेनेति भावः ।

न च 'अदौ' 'अदे' इत्यत्र मुत्वमीत्वयोः प्रवृत्तिकालेऽणोऽभावेन "अणोऽप्र०" ( पा० सू० ८।४।५७ ) इत्यस्य न प्राप्तिस्तयोः प्रवृत्त्यनन्तरम् "अणोऽप्र०" ( पा० सू९ ८।४।४७ ) इत्यस्य प्राप्तावपि न मुत्वस्य प्रसक्तिरिति पूर्वशास्त्रस्य विषयाभावान्मुत्वं प्रत्यनुनासिकविधेरेवासिद्धत्वाप्राप्त्या कथं तदेकवाक्यतापन्नसंज्ञाया असिद्धत्वं सम्भवतीति वाच्यम् ? 'नमुने' ( पा० सू० ८।२।३ ) इत्यत्रेव पूर्वशास्त्रेण संस्कृतेऽपि लक्ष्ये पूर्वशास्त्रविषयतायास्स्वीकारेण तदपेक्षयानुनासिकविधेरसिद्धत्वस्य सूपपादत्वमित्यभिमानात् ।

न च कार्यज्ञानसहकृतपूर्वत्वज्ञानस्यासिद्धत्वं प्रति हेतुत्वेन "अणोऽप्र०" ( पा० सू० ८।४।५७ ) इत्येतद्बोधात् पूर्वं नियमेन मुत्वविधेर्बोधे मानाभावेन तं प्रति संज्ञाया असिद्धत्वं दुर्वचम्, मुत्वविधेर्बोधात्पूर्वं संज्ञिन एवासिद्धत्वेन प्रदेशविध्येकवाक्यतयाऽपि तद्बोधस्याशक्यतया पूर्वं मुत्वविधेर्बोधे ततः प्रदेशैकवाक्यतापन्नस्य "अदसो मात्" ( पा० सू० १।१।१२ ) इत्यस्य बोधे तदेकवाक्यतापन्न "पूर्वत्रासिद्धम्" ( पा० सू० ८।२।१ ) इत्यनेन संज्ञाया एवासिद्धत्वमित्याशयात् ।

नन्वेवमपि "अयादिभ्यः परैव प्रगृह्यसंज्ञा" इति "अदसो मात्" ( पा० सू० १।१।१२ ) इति सूत्रस्थभाष्यासङ्गतिः, व्यवहर्तृदृष्टान्तेन तस्मिन् परत्वस्य दुरुपपादत्वात्, इत्यत आहः—**एवमिति** । संज्ञायाः कार्यकालपक्षे तत्तद्विध्याकाङ्क्षया तत्र तत्रोपस्थितौ विध्येकवाक्यतयैव संज्ञया विधानेन कार्यद्वारैव संज्ञाया विरोधस्य वक्तव्यता प्रधानभूतकार्यगतं परात्वमादायैव[1] निर्वाह इत्याशयः ।

---

१. 'परत्वम्' इति पाठः क पु० । अत्र परात्वमित्येव पाठः साधीयान् । ननु 'त्वे च' ( पा० सू० ६।३।६४ ) इत्यनेन ह्रस्वः स्यात् इति चेत्, न, तस्य छन्दस्येव प्रवृत्तेः, तदाहः—काशिकाकारः 'संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्ति' इति । अत्र न्यासकारः—एवकारेण संज्ञायाः व्यवच्छेदः क्रियते । न हि त्वप्रत्यये ङ्यापो ह्रस्वत्वे कृते कस्यचित् संज्ञा गम्यते । 'तेन संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्ति' इति । यदि 'परत्वम्' इत्यस्य साधुत्वाग्रहस्तदा कुक्कुटाण्डवत् समाधानं कर्तव्यम् ।

**विरोधप्रतिसन्धानं चेति तत्रत्यपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजम् । अत एव कार्यकालपक्षे "अयादिभ्यः परैव प्रगृह्यसंज्ञा" इति 'अदसो मात्' इति सूत्रे भाष्य उक्तम् ।**

**आकडाराधिकारस्थभपदसंज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्रत्य-**

---

ननु नलोपैकवाक्यतापन्नपदसंज्ञाया अल्लोपैकवाक्यतापन्नभसंज्ञां प्रति पूर्वोक्तरीत्यासिद्धत्वेन तया तद्बाधासम्भवात् पूर्वमल्लोपे ततो नलोपापत्तिरत आहः—**यथोद्देशपक्ष एवेति ।** अत्र मानं तु "नस्तद्धिते" ( पा० सू० ६।४।१४४ ) इति सूत्रम् । तद्धि 'उपराजम्' इत्यादौ टिलोपाय यदि पूर्वोक्तरीत्या संज्ञयोस्समावेशस्तदा नलोपाल्लोपाभ्यां तत्सिद्धेस्तद्व्यर्थं स्यात् । न चाध्यात्ममित्यत्र "न संयोगात्०" ( पा० सू० ६।४।१३७ ) इति निषेधात् करिणोऽपत्यं 'कारः' इत्यत्र च टिलोपाय तदितिवाच्यम्, पूर्वं पदसंज्ञायां नलोपे ततो भसंज्ञायां "यस्येति च" ( पा० सू० ६।४।१४८ ) इति लोपेन तत्सिद्धेः ।

न च भसंज्ञायां नलोपस्यासिद्धत्वेनाकारान्ते इकारान्ते च भत्वाभावात् "यस्य०" ( पा० सू० ६।४।१४८ ) इति लोपाप्राप्तिरितिवाच्यम्, 'पञ्च' इत्यत्र इव इकारान्त एव नान्तबुद्ध्या भसंज्ञायां "यस्य०" ( पा० सू० ६।४।१४८ ) इति लोपप्रवृत्त्याऽदोषात् ।

न च[1] वेतस्वानित्यत्राल्लोपस्य स्थानिवद्भावेन सान्ते भत्वप्रतिबन्धवदत्रापि नलोपस्यासिद्धत्वेनाकारान्ते इकारान्ते च भत्वं दुर्लभमिति वाच्यम्, स्वविधौ स्थानिवत्वाभावेन सर्वथा तत्र भत्वस्य दुरुपपादत्वेऽप्यत्र नान्तबुद्ध्या भसंज्ञाप्रवृत्तौ प्रतिबन्धकाभावात् । किञ्च "नलोपः सुप्०" ( पा० सू० ८।२।२ ) इति सूत्रे संज्ञाग्रहणस्य भाष्ये प्रत्याख्याततत्वेनाकाराद्यन्ते[2] भत्वस्य सूपपादत्वात् ।

यदि तु स्रु गतावित्यस्मात् क्विपि ततो णि तत्र टिलोपार्थं तत् सूत्रमित्याग्रहस्तर्हि[3] "अह्नष्टखोरेव[4]" ( पा० सू० ६।४।१४५ ) इति ज्ञापकमिति बोध्यम् । तद्धि 'आह्निकम्' इत्यत्र टिलोपाभावाय यदि "यस्येति च" (पा० सू० ६।४।१४८) "नलोपः प्रातिपदिक०" ( पा० सू० ८।२।७ ) इत्याभ्यामल्लोपनलोपौ स्तस्तदा तद्वैय्यर्थ्यं स्पष्टमेव ।

अत एव 'दतः' इत्यत्र पदत्वप्रतिवन्धरूपाशास्त्रीयेऽपि कार्ये भत्वसिद्धिरि-

---

१. 'न च' इत्यादितः 'प्रतिबन्धकाभावात्' इत्येतत्पर्यन्तं क०पु० नास्ति ।

२. 'अकारान्ते इकारान्ते च' इति पाठः क० पु० ।

३. 'लक्ष्यानुरोधिव्याख्यानमेवात्र मानं बोध्यम्' इत्यधिकः पाठः क० पु० ।

४. 'अह्नष्टखोः' इत्यादितः 'स्पष्टमेव' इत्येतत्पर्यन्तं नास्ति क० पु० ।

**परत्वेनैव बाध्यबाधकभावः। पदादिसंज्ञानां तत्र जातशक्तिग्रहेणैव त्रिपाद्यामपि व्यवहारः। अत एव पूर्वत्रासिद्धमिति सूत्रे परिभाषाणामेव त्रिपाद्यामप्रवृत्तिमा-**

---

त्युक्तं—**परत्वेनैवेति।** एवकारेण विधिदेशीयपरत्वव्यवच्छेदः। इदमुपलक्षणं, तेनानवकाशत्वेन बाधस्यापि सङ्ग्रहः। परोदाहरणं 'धनुषा विध्यति' इत्यत्रापादानसंज्ञां बाधित्वा परत्वात्करणसंज्ञेति भाष्ये[1] स्पष्टम्। भपदसंज्ञाविषयेऽनवकाशत्वं बोध्यम्।

ननु परिभाषावत् संज्ञाविषयेऽपि त्रिपाद्या असिद्धत्वेन तत्रत्यपदादिपदानामनेन शक्तिग्रहासम्भव इत्यत आह—**जातशक्तिग्रहणैवेति।** एवकारेण तत्तत्प्रदेशवाक्ये शक्तिग्राहकशास्त्रोपस्थितिर्व्यवच्छिद्यते, तथा च भविष्यति किञ्चिदित्यनेन स्वदेशे सामान्यतश्शक्तिग्रहेण सपादसप्ताध्याय्यामिव त्रिपाद्यामपि पदादिपदेन स्वर्गादिपदेनेव गृहीतशक्तिस्मरणेनैव तदर्थबोधसम्भवेन त्रिपादीस्थसंज्ञाविषये न कार्यकालपक्षस्यावश्यकता।

किञ्च "हलोऽनन्तरा०" ( पा० सू० १।१।७ ) इत्यनेन 'गोमन्त्' इत्यत्र लक्ष्यगतहलोस्संयोगसंज्ञायां ततस्संयोगान्तलोपे कर्त्तव्ये संज्ञायास्संज्ञिनश्च सिद्धत्वेन लोपस्य सुलभतया संज्ञाविषये कार्यकालपक्षाश्रयणे फलाभावः। किञ्च वाक्यार्थज्ञाने पदार्थज्ञानस्य हेतुत्वेन तन्निर्णायिकसंज्ञाशास्त्रं प्रति विधिवाक्यार्थबोधोत्तरमसिद्धत्वेऽपि विधिवाक्यार्थबोधात्प्राक् तस्य नासिद्धत्वसम्भवः, तदुत्तरमसिद्धत्वेऽपि न किञ्चिदनिष्टमिति ध्येयम्। **एवेति।** इतरथा संज्ञाविषयेऽपि शङ्कासमाधानयोस्तुल्यत्वेन प्रथमोपस्थितसंज्ञात्यागे बीजालाभेन भाष्ये न्यूनतापत्तिः। **आशङ्क्येति।** यथोद्देश इति शेषः। अत्र पक्षे परिभाषाणां विध्याकाङ्क्षासत्त्वेऽपि "झलो झलि" ( पा० सू० ८।२।२६ ) इत्यादीनां नोपस्थितिः, तेषामसिद्धत्वेनाकाङ्क्षायास्तद्विषयकत्वासम्भवात्[2]।

न च असिद्धत्वस्य विधिवाक्यार्थबोधोत्तरकालिकत्वेन ततः पूर्वमेव तत्रोपस्थितौ न बाधकमिति वाच्यम्, "अलोऽन्त्यस्य" ( पा० सू० १।१।५२ ) इत्यादीनां स्थानषष्ठीत्वरूपलिङ्गज्ञानाय प्रथमं सामान्यतो विधिवाक्यार्थबोधवदौपश्लेषिकसप्तम्यन्तत्वरूपलिङ्गज्ञानाय प्रथमं विधिवाक्यस्य सामान्यतो बोधे तद्[3] उत्तरमेवासिद्धत्वप्रवृत्त्या तद्विषयकाकाङ्क्षाया निवृत्त्या[4] तदुपस्थितेरसम्भव इत्याशयात्। कार्यकाले तु तत्तद्विधिभिरेव परिभाषाणामाक्षेपेण तत्रैव बोधेऽन्यतराकाङ्क्षयाप्येकवाक्यतया सर्वेष्टसिद्धिः।

---

१. 'साधकतमं करणम्' ( पा०सू० १।४।४२ ) इति सूत्रे भाष्ये इत्यर्थः।
२. 'विषयत्वासम्भवात्' इति पाठः क० पु०।
३. 'अस्यावश्यकता तदव्यवहित' इति पाठः क० पु०।
४. 'अनुदयेन' इति पाठः क० पु०।

**शङ्क्य, कार्यकालपक्षाश्रयेण समाहितमित्याहुः। यथोद्देशपक्षः प्रगृह्यसंज्ञाप्रकरणे भाष्ये ॥ २ ॥**

**कार्यकालमित्यस्य च कार्येण काल्यते = स्वसन्निधिं प्राप्यत इत्यर्थः। कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिह्नितपरिभाषाणामाक्षेप इति यावत्।**

---

न च नव्यमते विधिदेशे उपस्थितस्यापि व्यवहर्तृदृष्टान्तेन तद्देशस्थत्वानङ्गीकारेण पौर्वापर्यहानेरसिद्धत्वस्य दुर्वारत्वेन सिद्धासिद्धयोः कथमेकवाक्यतेति वाच्यम्, परशास्त्रविषयकज्ञानस्य पूर्वत्रासम्भवेऽपि पूर्वशास्त्रविषयकज्ञानस्य परस्मिन्सम्भवेन तदाकाङ्क्षया तत्रोपस्थितस्य पृथग्वाक्यार्थबोधानङ्गीकारेण तयोः पदैकवाक्यतयैवान्वयेन तदुत्तरमसिद्धत्वेऽपि वाक्यार्थस्य जातत्वेनादोषात्।

**यथोद्देशपक्ष इति।** वाक्यैकदेशन्यायेन 'यथोद्देशं संज्ञापरिभाषम्' इति वचनप्रतिपाद्यः पक्ष इत्यर्थः। अन्यथा यथोद्देशपदार्थस्य क्रियाविशेषणत्वेन पक्षपदेन सामानाधिकरण्यासम्भवेन समासानापत्तिः। **भाष्य इति।** तत्र हि "ईदूत्०" ( पा० सू० १।१।११ ) सूत्रे तपरकरणादग्नी३ इत्यादौ प्लुतस्य प्रगृह्यत्वाभावमाशङ्क्य प्लुतस्यासिद्धत्वेन समाधाय "प्लुतप्रगृह्या०" ( पा० सू० ६।१।१२५ ) इत्यनेन 'सिद्धः प्लुतः स्वरसन्धिषु' इति ज्ञापनात्। कार्यकालपक्षेऽस्यापि स्वरसन्धिप्रकरणमध्यपतितत्वादसिद्धत्वाभावे शङ्किते "किमतो यत्सिद्धः प्लुतस्स्वरसन्धिष्विति, संज्ञाविधावसिद्धः, तस्यासिद्धत्वात्तत्काला भवन्ति इति भाष्यमुपादाय[1] यथोद्देशे प्रगृह्यसंज्ञा स्वरसन्धिप्रकरणमध्यपतिता न भवति इति तदाशयं कैय्यटः[2]। एतदग्रे च "किन्न एतेन यत्नेन 'कार्यकालं संज्ञापरिभाषम्' इति 'यथोद्देशमेव संज्ञापरिभाषम्' तस्यासिद्धत्वात्तत्काला एव भविष्यन्ति" इत्युक्तम्। एवञ्चोक्तभाष्येण यथोद्देशपक्षो बोधित इति बोध्यम् ॥ २ ॥

द्वितीयपरिभाषार्थमाह—**काल्यत इति**। कल क्षेप इति चौरादिकस्येदं रूपम्। क्षेपश्च प्रेरणा। क्षिप प्रेरणे ( दिवा० ११९६, तुदा० १३६९ ) इत्यनुशासनात्। सा च प्रवृत्त्यनुकूलो व्यापारः संज्ञापरिभाषयोर्विधिसंस्काराय। प्रवृत्तिश्च तत्रोपस्थितिरूपा, तदनूलव्यापारश्चाकाङ्क्षारूपः।

एवञ्च 'कार्यकालं संज्ञापरिभाषम्' इत्यस्य विधिशास्त्रजन्याकाङ्क्षाप्रयोज्योपस्थितिविषयीभूतं संज्ञापरिभाषमिति बोधः। तदेतत् फलितमाह—**स्वसन्निधिं प्राप्यत इति**। णिजन्तात् परिभाषारूपे कर्मणि लट्। ननु अचेतनत्वादुभयोः कथं प्रेष्यप्रेषकभाव इत्यत आह—**आक्षेप इति**। आकाङ्क्षामूलकोपस्थितिरिति भावः। उक्तार्थे मानमाह—**अत एवेति**। ननु पूर्वं प्रति परस्यासिद्धत्वेऽपि परं प्रति पूर्वस्य सिद्धत्वेनान्यतराकाङ्क्षया परिभाषाणामुपस्थित्यैक-

---

१. पा० सू० १।१।११ म० भा०।

२. 'आह' इति शेषः।

**अत एव 'पूर्वत्रासिद्धम्' इति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताध्यायीस्थपरिभाषाणामप्रवृत्तिमाशङ्क्य यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धमित्युक्त्वा, तावताऽप्यसिद्धिरित्यभिप्रायके कथमिति प्रश्ने—'कार्यकालं संज्ञापरिभाषम्' यत्र कार्यं तत्रोपस्थितं द्रष्टव्यमित्युक्तम् ।**

**न च कार्यकालपक्षे 'ङमो ह्रस्वात्०' इत्यादौ 'तस्मादित्युत्तरस्य' 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषाद्वयोपस्थितौ परत्वात् 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति तस्मिन्निति सूत्रस्थभाष्यासङ्गतिः, उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासङ्गत्यापत्तेः, स्पष्टं चेदम् 'इको गुण' इत्यत्र कैयट इति वाच्यम्; विप्रतिषेधसूत्रेऽष्टाध्यायीपाठकृतपरत्वस्याऽऽश्रयणेनादोषात् । नहि कार्यकालपक्ष इत्येतावता तदपैति । पक्षद्वयेऽपि प्रदेशेषु स्वबुद्धिजननेनाविशेषात् । नहि**

---

वाक्यतया न दोष इति गूढाभिसन्धिना समाधत्ते—**यद्यपीति** । तदाशयानभिज्ञस्तावतापि संस्कारकपरिभाषादृष्ट्या संस्कार्यविधेरभावेन तत्रोभयाकाङ्क्षाया असम्भवादेकवाक्यता दुर्वचेत्याशयेनाह—**तावतापीति** । विधिशास्त्रदृष्ट्या परिभाषायास्सिद्धत्वेऽपीत्यर्थः । सिद्धान्ती स्वाशयं प्रकटयति—**कार्यकालमिति** । **इत्युक्तमिति** । अन्यतराकाङ्क्षयाप्येकवाक्यता सिद्ध्यतीति भावः ।

न च[1] व्यवहर्तृदृष्टान्तेन परिभाषाणां स्वदेशस्थत्वाभ्युपगमात् परिभाषां प्रति त्रिपाद्या असिद्धत्वेन 'अदाग्धाम्' इत्यादौ सलोपस्यासिद्धत्वात् "झषस्तथोः०" ( पा० सू० ८।२।४० ) इति धत्वानापत्तिरिति वाच्यम्, परिभाषां प्रत्यसिद्धत्वेऽपि विधिं प्रत्यसिद्धत्वाभावेनादोषात् ।

कार्यकालपक्षे 'विधिदेशस्थत्वं संज्ञापरिभाषस्य' इति प्राचीनमते भाष्यविरोधं सूचयितुं तद्रीत्यैव शङ्कते—**न चेति** । भाष्यविरोधमुद्भावयति—**उभयोरित्यादिना** । स्वरीत्या समाधत्ते—**पाठकृतेति** । भाष्यविरोधमुक्त्वा तन्मते युक्तभावञ्च दर्शयति—**नहीति** । **एतावतेति** । विध्येकवाक्यतामात्रेणेति भावः । **तदपैतीति** । पाणिनिपरिकल्पितसन्निवेशापेक्षपौर्वापर्यं नापैतीत्यर्थः । केवलमेकवाक्यतायास्तद्धेतुत्वासम्भवादिति भावः । विपक्षे बाधकमप्याह—**पक्षद्वयेऽपीति** । प्रदेशेष्विति विषयसप्तमी । **अविशेषादिति** । "क्ङिति च" ( पा० सू० १।१।५ ) इति सूत्रस्थकैय्यटरीत्या यथोद्देशेऽपि प्रधानविध्येकवाक्यतायास्तुल्यत्वादिति भावः ॥

ननु प्राचीनमते कार्यकालपक्षे तासां विधिदेश एव बोधाङ्गीकारेण तत्रैवैकवाक्यता, यथोद्देशपक्षे तु तां विनैव स्वदेशे गृहीतपरिभाषार्थोपस्थित्या विधिवाक्यार्थनिर्णय इति न यथोद्देशपक्षे स्वदेशत्याग इत्यत आह—**नहीति** । एकवाक्यताङ्गीकारेऽपि शास्त्रस्याचेतनत्वेन चेतनवदन्यदेशगमनासम्भवादेकवाक्यतामात्रेण विधिदेशस्थत्वं वक्तुमशक्यमिति भावः ।

---

१. 'न च' इत्यादितः 'अदोषात्' इत्येतत्पर्यन्तं नास्ति क० पु० ।

**तत्पक्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं सम्भवति। नाप्यस्मदादिबुद्धिजननेन स्वदेशत्यागो भवति। अत एव भाष्ये एकदेशस्थस्यैव सर्वशास्त्राभिज्वालकत्वमुक्तम्। अत एव तस्मिन्निति सूत्रे कैयटः—सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वमिति। इकोगुणेति सूत्रस्थकैयटस्तु चिन्त्य एव; अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्थत्वेन क्वापि परत्वं न स्यात्। किञ्च क्ङिति चेति सूत्रस्थकैयटरीत्या विधिसूत्राणां यथोद्देशपक्षे परिभाषादेशे सन्निधानेन तेषां परत्वं व्याहन्येत। एवञ्च वृक्षेभ्य इत्यत्र सुपि चेत्यतः परत्वाद् 'बहुवचने झल्येत्' इत्येत्त्वमित्याद्युच्छिद्येत, इत्यलम्॥ ३॥**

---

ननु—अचेतनस्य दार्वादेश्चेतनव्यापारेण स्वदेशत्यागवदत्रापि तत्सम्भवत्येवेत्यत आह—**नापीति। भवतीति।** यथान्यदेशस्थघटादेरन्यत्र स्मरणमात्रेण तद्देशत्यागसम्भवस्तद्वदिति भावः। ननु शब्दरूपस्य शास्त्रस्योच्चारणाधीनसत्ताकत्वेन कार्यकालपक्षे तदेकवाक्यतायास्तत्रोच्चारणप्रयोज्यत्वेन तद्देशस्थत्वग्रहसुलभ एवेति चेत्, न; अस्मादाद्युच्चारणस्य तत्तद्देशस्थत्वग्राहकत्वेऽतिप्रसङ्गापत्तेः।

तस्मात्तत्तदधिकरणत्वेनाचार्यतात्पर्यविषयस्यैव कालस्य तद्देशत्वकल्पनं युक्तम्। तात्पर्यग्राहकञ्च सूत्रपाठज्ञापकन्यायौपन्यसनादिकमिति नयेन न कुत्रचिदुच्चरितस्य तत्तद्देशस्थत्वमिति ध्येयम्। उक्तार्थे मानमाह—अत **एवेति। अभिज्वालकत्वमिति।** अभिज्वलकत्वमिति पाठः। ज्वलेर्ण्यन्ताण्वुलि वृद्धौ ह्रस्वप्रवृत्तेः। अभिज्वालकत्वमिति पाठे तु अन्तर्भावितण्यर्थाज्ज्वलेर्ण्वुल्। नन्वस्य भाष्यस्य प्राचीनैर्यथोद्देशपक्षाभिप्रायेण व्याख्यातत्वान्नेदमसाधारणं गमकमत आह—**अत एवेति। कैय्यट इति।** इदं तत्रत्यभाष्यस्याप्युपलक्षणम्।

ननु एवम् "इको गुण०" ( पा० सू० १।१।३ ) इति सूत्रे यथोद्देश एव पौर्वापर्यं न कार्यकालतायामिति कैय्यटोक्तिर्विरुद्ध्येतेत्यत आह **"इको गुण०"** ( पा० सू० १।१।३ ) **इति।** वैपरीत्ये बाधकमाह—**अन्यथेति। प्रयोगार्थत्वेनेति।** प्रयोगसाधनफलकत्वेनेत्यर्थः। **देशस्थत्वेनेति।** तत्र सन्निहितत्वादिति भावः।

ननु एवं "विप्रतिषेध०" ( पा० सू० १।४।२ ) सूत्रवैय्यर्थ्यापत्त्या प्रयोगातिरिक्तदेशसम्बन्धकृतपौर्वापर्यस्यैवैतत्प्रवृत्तौ नियामकत्वाभ्युपगमान्न दोष इति चेत्, न; लाघवात्सूत्रपाठापेक्षयैव तत्प्रवृत्तेर्ज्ञापयितुं युक्तत्वमित्याशयात्। कैय्यटमते यथोद्देशेऽपि पौर्वापर्यं दुर्वचमित्याह—**किञ्चेति। एवञ्चेति।** तत्परत्वव्याघाते चेत्यर्थः। **अलमिति।** अलमित्यनेनारुचिस्सूचिता। तथाहि—यथोद्देशे परिभाषादेश एव विधीनामाकाङ्क्षयोपस्थितिरित्ययुक्तम् संज्ञाविषये किमस्य प्रयोजनमित्याकाङ्क्षायाः पूर्वोक्तरीत्या भविष्यति शास्त्रे क्वचित्प्रयोजनमिति सामान्यज्ञानमात्रेण शान्तिकल्पनवद् भविष्यति क्वचित्सप्तमीनिर्देश इति

सामान्यज्ञानमात्रेण शान्तिसम्भवे गुणभूतपरिभाषादेशे प्रधानविधीनामुपस्थिति-कल्पनमन्याय्यम्। लोके हि भृत्याः सेवार्थं राजदेशमेव गच्छन्ति न तु भृत्यदेशं राजा।

किञ्चानेकपरिभाषालिङ्गकस्य "सार्वधातुकार्धधातुकयोः" (पा० सू० ७।३।८४) इत्यादेरनेकपरिभाषाकाङ्क्षयाऽनेकदेशे उपस्थित्या तत्तत्परिभाषैक-वाक्यतया लक्ष्यासंस्कारकनिष्प्रयोजनानेकवाक्यार्थबोधकल्पनापत्तेः। परिभाषा-देशे विधीनामुपस्थितिकल्पने तदनुरोधेन परिभाषाणां चावृत्तिकल्पनेऽतिगौरवा-पत्तेश्च। किञ्च विधिभेदेन परिभाषाणामावृत्तिवद् गुणभूतानेकपरिभाषानुरोधेन प्रधानविधीनामावृत्तिकल्पने 'गर्गाश्शतं दण्डचन्ताम्' इति वृद्धिसूत्रस्थभाष्यविरोधः।

किञ्च "अलोऽन्त्यस्य" (पा० सू० १।१।५२) इत्यस्योपस्थितिकाले "आदेः परस्य" (पा० सू० १।१।५४) इत्यस्योपस्थितिकाले नियमेन 'अलोऽन्त्यस्य' (पा० सू० १।१।५२) उपस्थित्यसम्भवेनोत्सर्गापवादयोरसमकालप्राप्त्यापवा-देनोत्सर्गबाधानापत्तिः।

किञ्च सर्वपरिभाषासंस्कृतस्यैकस्य महावाक्यार्थस्य क्वाप्यसम्भवेन कस्यापि लक्ष्यसंस्कारत्वानापत्तिः। न चाविरुद्धपरिभाषाविषये आकाङ्क्षाक्रमेण विधेरुपस्थित्या चरमोपस्थितपरिभाषैकवाक्यतापन्नस्य लक्ष्यसंस्कारकत्वमिति वाच्यम्, पूर्वपूर्वपरिभाषैकवाक्यतापन्नविशिष्टविषयिकाकाङ्क्षाया अनुदयेन पूर्व-पूर्वपरिभाषैककाक्यतापन्नस्योत्तरत्रोत्तरत्रोपस्थितौ मानाभावात्।

न च नव्यमते कार्यकालपक्षवद् यथोद्देशपक्षस्यापि मुख्यप्रतिपत्त्यनुरोधित्वेन यथोद्देशपक्षे प्रथमोपस्थितपरिभाषादेशे आकाङ्क्षया विधेरुपस्थित्या वाक्यार्थ-बोधकाले तत्रोपस्थितविध्याकाङ्क्षयान्यासां परिभाषणामपि तत्रोपस्थित्या सर्वपरिभाषैकवाक्यतया महावाक्यार्थबोधस्य सम्भवेन न दोष इति वाच्यम्, जातिव्यक्तिपक्षवदनयोर्व्यवस्थितत्वेन 'यथोद्देशं संज्ञापरिभाषम्' इत्यनेन सर्वपरि-भाषासाधारण्येन बोधितं यथोद्देशपक्षं प्रथममुपक्रम्य तत्रैव लक्ष्यसंस्कारमहावाक्या-र्थप्रतिपत्तये विधेरुपस्थितौ तत्रैव परिभाषान्तरविषये उपक्रान्तपक्षप्रतिद्वन्द्विभूत-कार्यकालपक्षस्वीकारे[1] यवपक्षमुपक्रम्य व्रीह्यनुष्ठान इव 'एकस्या आकृतेः' इति न्यायविरोधापत्तिः।

अत एव 'सुध्युपास्यः' इत्यत्र धकारस्य द्वित्वे व्यक्त्यन्तरे तदभावोऽनुचित इत्याशङ्क्य द्वित्वे[2] तदभावे वार्थभेदाभावान्नास्याः प्रवृत्तिरिति शेखरोक्तं[3] सङ्गच्छते। किञ्च "आमि सर्वनाम्नः०" (पा० सू० ७।१।५२) इत्यादेरुभयत्रो-

१. 'ण विधेरुस्थितौ' इत्यधिकः पाठः क० पु०।
२. 'द्वित्वे' इति नास्ति क० पु०।
३. एतदर्थकं शेखरोक्तं सङ्गच्छते इत्यर्थः। मूलोक्ताया आनुपूर्व्या शेखरे अभावात्।

पस्थित्योभाभ्यामपि पूर्वपरयोः कार्यप्रसङ्गः, उभयोर्विरोधेन चरमपरिभाषैक-वाक्यतापन्नस्यैकस्य महावाक्यार्थस्य पूर्वत्व[1]वदत्रासम्भवात्। न च परपरिभाषैक-वाक्यतापन्नस्य परत्वात्तेनैव व्यवस्थेति वाच्यम्, तत्रोपप्लुतस्य तद्देशीयत्वाभावेन विधौ परत्वस्य दुर्वचत्वात्। 'सर्वेषाम्' इत्यादौ प्रकृतिप्रत्यययोरुभयोरपि पर्यायेण सुडागमापत्तेः। किञ्च मन्दप्रतिपत्तुः पूर्वोक्तरीत्याकाङ्क्षानुदयेन त्वन्मते पक्षद्वय-स्यापि विशेषाकाङ्क्षामूलकत्वात्, कार्यकालवद् यथोद्देशपक्षस्याप्यसम्भवेन तद्विषये प्राचीनोक्तयथोद्देशपक्षापरपर्यायवाक्यभेदात्मकस्तृतीयः पक्षः परिकल्पनीय इति महद्गौरवम्।

किञ्च नव्यमते पक्षयोः फलभेदो दुर्वचस्तयोराकाङ्क्षाभेदमूलकत्वेन प्रथमं परिभाषोपस्थितौ तत्रैवाकाङ्क्षया सिद्धविधिवत् त्रिपाद्या अप्युपस्थितेर्दुर्वारत्वात्। न च तस्यासिद्धत्वं, ततः पूर्वं विधेरुपस्थितेरभावेन तद्वाक्यार्थबोधाभावेन तस्मिन्नसिद्धत्वग्रहस्य दुर्वचत्वात्।

न चौपश्लेषिकसप्तम्यन्तत्वादिरूपलिङ्गज्ञानाय[2] प्रथमं सामान्यतो विधि-वाक्यार्थज्ञानस्यावश्यकतया तद्बोधोत्तरमेवासिद्धत्वप्रवृत्त्या तस्मिन्नाकाङ्क्षैव नोदेतीति वाच्यम्, तथा सति प्रथमं विधेरेवोपस्थितत्वेन मुख्यप्रतिपत्तुस्तत्रैव परिभाषाकाङ्क्षाया दुर्वारत्वेन कार्यकालपक्षप्रवेशापत्त्या यथोद्देशपक्षस्यैव शास्त्रेऽसम्भवापत्तेः।

---

१. 'त्व' इति नास्ति क० पु०।

२ औपश्लेषिकम् = उपगतः श्लेष उपश्लेषः = संयोग इति यावत्। अत्र 'उप' इत्यविव-क्षितम्। यद्वा—उप = समीपे श्लेषः = संयोग उपश्लेषस्तत आगतमौपश्लेषिकम्। 'तत आगतः' इत्यर्थेऽध्यात्मादित्वाट्ठञ्। यद्यप्युपश्लेषादागतमधिकरणत्वं नत्वधिकरणं तथापि धर्मधर्मिणोरभेदमादायाधिकरणेऽपि तथात्वम्। उपश्लेषः = संयोग इति मते 'वटे गावः शेरते' 'गुरौ वसति' इति न स्यात्, संयोगाभावादिति चेन्न, गोसंयुक्तदेश-संयोगस्य संयोगरूपतया तस्य च वटादौ सत्त्वेननादोषत्। समीपे श्लेष इति पक्षेऽपि सामीप्यस्य संयोगरूपतया तदवच्छेदेन संयोगस्य सत्त्वाद् गुर्वादावधिकरणत्वोपपत्तिः। "इको यणचि" इत्यादावपि इङ्निरूपितकालिकसामीप्यावच्छेदेन संयोगस्यापि सत्त्वादौ-पश्लेषिकाधिकरणत्वम्। शब्दस्य गुणत्वपक्षे तु श्लेषपदेन सम्बन्धमात्रस्य ग्रहणात् 'स्वाव्यवहितोत्तरत्व' सम्बन्धेनौपश्लेषिकाधिकरणत्वं बोध्यम्। एकदेशावच्छेदेन श्लेषेऽ-प्यौपश्लेषिकम्। तत्र श्लेषस्य समीपमुपश्लेषम्। आरोपितश्लेष इत्यर्थः। तत आगत-मौपश्लेषिकम्। एकदेशावच्छेदेन सम्बन्धस्यावयविनि आरोपः। यथा 'कटे शेते' इत्यत्रावयववृत्तिसंयोगस्य-अवयविनि कटे आरोपः। तत्कृतं कटात्मकमौपश्लेषिकम-धिकरणम्। वै० भू० सा०-सुब०-नि० प्र ।

किञ्च 'यथोद्देशं संज्ञापरिभाषम्' इति वचनेन संज्ञापरिभाषासाधारण्येन बोधितयथोद्देशपक्षस्य संज्ञाविषये मन्दप्रतिपत्त्रधिकारिकत्वं शास्त्रस्याभ्युपगम्य प्राचीनोक्तरीत्या सामान्यज्ञानमात्रेणाकाङ्क्षाशक्तिकल्पनेन तत्पक्षोपपादनम्। परिभाषाविषये तु मुख्यप्रतिपत्त्रधिकारिकत्वं परिकल्प्याकाङ्क्षोत्थापनमिति वैरूप्यापत्तेरिति दिक्।

अपि च "षष्ठी स्थाने०" (पा० सू० १।१।४९) इति सूत्रस्थभाष्यमपि न त्वदुक्तौ साधकं प्रत्युत बाधकमेव। तथा हि—तत्र ह्यनुवृत्तिप्रस्तावे "शास इदङ्०" (पा० सू० ६।४।३४) इत्यत्रावयवषष्ठ्यन्तस्य प्रकृतस्योत्तरत्र स्थानषष्ठ्यन्तवत्सम्पत्तयेऽर्थाधिकारवच्छास्त्रे शब्दाधिकारोऽप्यावश्यक इति प्रतिपादनाय 'अधिकारो नाम त्रिप्रकारः' इत्युपक्रम्य कस्यचिद्दीपदृष्टान्तेनैकदेशस्थत्वमुक्त्वा "अपरोऽधिकारो यथा रज्ज्वायसा वा बद्धं काष्ठमनुकृष्यते तद्वदनुकृष्यतेऽपरश्चकारेणाधिकारः। प्रतियोगं तस्यानिर्देशार्थं इति योगेयोगे उपतिष्ठते"—इति ग्रन्थेन तस्य त्रैविध्यमुक्तम्। तत्र स्वरितत्वेन चकारेण वानुकृष्यमाणस्य योगे योगे उपतिष्ठत इति भाष्येण विध्येकवाक्यतयार्थनिर्णायकत्वं[1] प्रतीयते। परिभाषारूपस्य तु तद्वदेकवाक्यतयैव विध्युपकारकत्वनियमो न, किन्त्वेकदेशस्थस्यापि दीपस्य प्रभाद्वारा सर्वगृहप्रकाशकत्ववदेकदेशस्थस्यापि लिङ्गेन गृहीतपरिभाषार्थ[2] स्मृतिद्वारा सर्वशास्त्रोपकारकत्वमेव। पूर्ववाक्येऽन्यार्थकमप्युत्तरत्र तदर्थाविवक्षया शब्दमात्रस्यानुकर्षणेन यथोपयोगमर्थान्तरप्रतिपादकं भविष्यतीत्युपसंहृतम्।

तच्च प्राचीनोक्तयथोद्देशपक्षाश्रयण एव समञ्जसं न त्वदुक्तयथोद्देशपक्षाश्रयणे। तथाहि किमिदं भाष्यं यथोद्देशपक्षाभिप्रायकमुत कार्यकालपक्षाभिप्रायकम्। नाद्यः, तथा सति 'प्रतियोगं[3] तस्यानिर्देशार्थं इति पक्षे योगे योगे उपतिष्ठते' इतिवदेकदेशस्थ इति पक्षेऽपि योगो योग उपतिष्ठत इति ब्रूयात्। न द्वितीयः, तत्र पक्षेऽधिकारद्वयवत्परिभाषाणामपि विधिदेशसम्बन्धेन 'कश्चिदेकदेशस्थः' इति ग्रन्थेन परिभाषामात्रस्य स्वरितत्वप्रतिज्ञया चकारेण वाधिक्रियमाणस्योत्तरत्र विनियोगेऽपि त्वदुक्तव्यवहर्तृदृष्टान्तेन परिभाषावदेकदेशस्थत्वस्याऽहानेः। दीपदृष्टान्तेनैकदेशस्थत्वप्रतिपादनस्येतरयोस्तु काष्ठदृष्टान्तेनानेकदेशसम्बन्धस्य च वैषम्येण प्रतिपादनपरस्य भाष्यस्यासङ्गतिः[4]। त्वन्मते वैषम्ये

१. 'बोधकत्वम्' इति क० पु० पाठः।　　२. 'स्वार्थं' इति क० पु० पाठः।

३. 'प्रतियोगम्' इति क० पु० नास्ति।

४. 'भाष्यस्य सङ्गतिः' इत्यपपाठः क० पु०। 'षष्ठी स्थाने योगा' (पा० सू० १।१।४९) इति भाष्यासङ्गतिरित्यर्थः।

बीजाभावः, मम तु द्वयोस्स्वदेशादपकर्षणद्वाराऽनेकदेशस्थविधिसम्बन्धेनैकवाक्यतया विध्युपकारकत्वम्। परिभाषारूपस्य तु यथोद्देशपक्षे स्वदेशादनपकर्षणेनानेकदेशस्थविधिसम्बन्धमन्तरेण भिन्नवाक्यतया[1] पुरुषसंस्कारद्वारैव विध्युपकारकत्वमिति तयोर्वैलक्षण्यं बोधयितुं दृष्टान्तद्वयोपन्यास इति युक्तम्।

किञ्च शास्त्रे[2] व्यवहर्तृदृष्टान्ताश्रयणमयुक्तम्[3]। कार्यकालपक्षे संज्ञापरिभाषस्य कार्यदेशस्थताया एव युक्तत्वात्। न च तत्र मानाभावः, कार्यकालपदेन-ऊकाल इत्यत्रेव कार्यस्य[4] कालो यस्य, कार्यं कालो यस्येति व्युत्पत्त्या वा तस्य कार्यदेशस्थताया बोधनात्।

अत एव "अयादिभ्यः परैव प्रगृह्यसंज्ञा[5]" इति प्रगृह्यसंज्ञायाः परत्वे प्रतिज्ञाय पूर्वत्र पठितायास्तस्याः परत्र पाठं विना कथं परत्वं सम्भवतीत्याशयेन कथमिति प्रश्ने "कार्यकालं संज्ञापरिभाषम्' यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्। प्रगृह्यः प्रकृत्येत्युपस्थितं भवति इति—'अदसो मात्' (पा० सू० १।१।१२) इति ग्रन्थेन प्रगृह्यसंज्ञायास्तत्र पाठं विनाऽपि कार्यकालपक्षाश्रयणमात्रेण प्रतिज्ञातपरत्वोपपादनपरं भाष्यं सङ्गच्छते।

एवं तत्रैव "अणोऽप्रगृह्यस्य०" (पा० सू० ८।४।५७) इत्येतदेकवाक्यतापन्न—"अदसो मात्" (पा० सू० १।१।१२) इत्येतत्प्रति न मुत्वाद्यसिद्धमिति भाष्योक्तमपि सङ्गच्छते। अन्यथा कार्यकालपक्षे तद्देशे उपस्थितावपि तस्मिन् कार्यकालपदेन तद्देशस्थत्वाप्रतिपादनात् परत्वस्य त्वदुक्तव्यवहर्तृदृष्टान्ताश्रयणे दुर्वचत्वेन "अणोऽप्रगृह्यस्य०" (पा० सू० ८।४।५७) इत्येतदेकवाक्यतापन्नस्य तद्देशस्थत्वाभावेन संज्ञा प्रति मुत्वासिद्धत्वाभावस्य भाष्योक्तस्य निरालम्बनतापत्तिः।

न च व्यवहर्तृदृष्टान्तेन तद्देस्थत्वाभावेऽप्युक्तभाष्यप्रमाण्येनासिद्धविध्येकवाक्यतापन्नस्याप्यसिद्धत्वं स्वीक्रियत इति वाच्यम्, भाष्यानुक्तव्यवहर्तृदृष्टान्तमभ्युपगम्यापूर्वार्थकल्पनापेक्षयोक्तभाष्यप्रामाण्येन कार्यकालपदे मदुक्तार्थकल्पनस्यैवौचित्यात्। किञ्च पूर्वशास्त्रे कर्तव्येऽसिद्धत्वेऽपि कृतेऽसिद्धत्वासम्भवेन तद्भाष्यविरोधः पूर्वोक्तरीत्या दुर्वारः।

न चोक्तभाष्यप्रामाण्येन संज्ञाविषये तद्देशस्थत्वस्य तेन प्रतिपादनेऽपि परिभाषाविषये विधिदेशीयत्वं न स्वीक्रियते "षष्ठी स्थाने" (पा० सू० १।१।४९)

---

१. 'संज्ञाशास्त्रवत्' इत्यधिकः पाठः क० पु०। २. 'शास्त्रे' इति नास्ति क० पु०।
३. 'दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्, व्यवहर्तॄणां तद्देशभवत्वरूपतद्देशीयत्वाभावेऽपि तद्देशस्थत्वव्यवहारस्याक्षतत्वात् किञ्च' इत्यधिकः पाठः क० पु०।
४. 'काल एव' इत्यधिकः पाठः क० पु०। ५. पा० सू० १।१।१२ म० भा०।

इति सूत्रस्थभाष्यादिति वाच्यम्, तस्य संज्ञास्विव स्वदेशमविहाय विधिसम्बन्धमन्तराभिन्नवाक्यतयापि पुरुषसंस्कारद्वारा लाघवेन विधिसंस्कारकत्वमिति प्राचीनोक्तयथोद्देशपक्षे परिभाषाविषयेऽप्याश्रयणीय इत्यस्मिन्नेवार्थे गमकत्वसम्भवेन त्वदुक्तौ साधकत्वासम्भवात् । संज्ञापरिभाषासाधारण्येन प्रतिपादिते कार्यकालपक्षे कार्यं कालो यस्येति व्युत्पत्त्या कालपदस्य देशपरत्वमङ्गीकृत्य संज्ञाविषये तद्देशस्थत्वम्, परिभाषाविषये तु नेति वैषम्ये बीजाभावादर्धजरतीयत्वापत्तेः ।

किञ्च परिभाषाविषये कार्यकालपदेन तद्देशस्थत्वाप्रतिपादने "क्ङिति च" ( पा० सू० १।१।५ ) इति सूत्रस्थभाष्यविरोधः । तथाहि तन्निमित्तग्रहणाभावे 'रोरवीति' इत्यत्र निषेधमाशङ्क्य 'न लुमताङ्गस्य' ( पा० सू० १।१।६३ ) इति परिहृत्य तत्राङ्गपदे स्वरितत्वप्रतिज्ञयाङ्गाधिकारस्थानामेव निषेध इति पक्षे "क्ङिति च" ( पा० सू० १।१।५ ) इत्यस्य अनाङ्गत्वेन निषेधाभावमाशङ्क्य कार्यकालपक्षाश्रयणेन तस्याप्यङ्गाधिकारस्थत्वमाश्रित्य 'न लुमता०' ( पा० सू० १।१।६३ ) इति निषेधेन प्रत्ययलक्षणेन प्राप्तनिषेधः परिहृतः[1] ।

त्वन्मते तत्पक्षे तद्देशे उपस्थितावपि व्यवहर्तृदृष्टान्तेन तस्याङ्गाधिकारस्थत्वासम्भवात्तेन निषेधाप्राप्त्या भाष्यासङ्गतिः । 'न लुमता०' ( पा० सू० १।१।६३ ) इत्यत्राङ्गपदे स्वरितत्वप्रतिज्ञायास्तस्याधिकारपरत्वसिद्धये आवश्यकतया तेनैव स्वरितेनाधिकं कार्यं भवतीत्यर्थमाश्रित्याङ्गाधिकारस्थत्वाभावेऽपि तत्रेव तदैकवाक्यतापन्नेऽपि "न लुमता०" ( पा० सू० १।१।६३ ) इत्यस्य प्रवृत्तिरिति तदाशय इति तत्रत्यविवरणो[2]क्तभाष्यसमर्थनमपि न युक्तम् ।

यथोद्देशेऽपि 'क्ङिति च' ( पा० सू० १।१।५ ) इत्येतद्देशे त्वन्मतेऽङ्गाधिकारस्थविधेरुपस्थित्या तदेकवाक्यतापन्नत्वेन तस्मिन् विवरणोक्तरीत्या 'न लुमता०'

---

१. रोरवीत्यर्थेनापि नार्थः । 'क्ङिति' इत्युच्यते, न चात्र क्ङितं पश्यामः, प्रत्ययलक्षणेन प्राप्नोति । न लुमता तस्मिन्निति प्रत्ययलक्षणप्रतिषेधः । अथापि 'न लुमताङ्गस्य' इत्युच्यते एवमपि न दोषः । कथम् ? न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते । किं तर्हि ? योऽसो लुमता लुप्यते तस्मिन्यदङ्गं तस्य यत्कार्यं तन्न भवति-इति । अथाप्यङ्गाधिकारः प्रतिनिर्दिश्यते एवमपि न दोषः । कथम् ? कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्र द्रष्टव्यम् । व्या०म०भा०पा०सू० १।१।५ । तत्र कैयट आह अङ्गाधिकार इति । स्वरितलिङ्गासङ्गेनेति भावः । कार्यकालमिति । तथा च तत्रोपस्थितत्वादिमप्याङ्गम्, अङ्गाधिकारस्थैकवाक्यतापन्नत्वादिति भावः । स्वरितत्वासङ्गवशात्तदधिकारपठितमिव तदधिकारस्थैकवाक्यतापन्नमपि गृह्यते इति तात्पर्यम् । निषेधेऽपि परिभाषासादृश्यात्परिभाषात्वमुक्तम् । सादृश्यञ्च निषेध्याकांक्षया तदेकवाक्यतामात्रेणेति बोध्यम् । ( इति भाष्यकैयटानुपूर्वी ) ।

२. पा० सू० १।१।५ कैयटोक्तभाष्यसमर्थनमित्यर्थः ।

( पा० सू० १।१।६३ ) इत्यस्य प्रवृत्तिसम्भवेन कार्यकालपक्षपर्यन्तानुधावनपरभाष्यासङ्गत्यापत्तेः। अत एव 'पूर्वत्रा०' ( पा० सू० ८।२।१ ) इति सूत्रेऽसिद्धत्वेन त्रिपाद्यां परिभाषाणामप्रवृत्तिमाशङ्क्य प्रासादस्थराजदारन्यायेन पिशाचवद्वा तदर्थग्रहणेन तदनुरोधेन विधिवाक्यार्थप्रतिपत्त्या दोषस्सुपरिहर[1] इत्याशयेन 'यद्यपीदं तत्रासिद्धं[2] तत्त्विह सिद्धम्' इति ग्रन्थेन समाधाय, एवमपि उपेद्ध इत्यत्र निषेधं प्रति गुणस्यासिद्धत्वेन निषेध्यगुणस्यैवासत्त्वप्रतिपत्त्या तत्सत्तामुपजीव्य प्रवर्तमानस्य निषेधस्याप्रवृत्तिवदत्रापि परशास्त्रस्यासिद्धत्वेन तस्मिन्नसत्वप्रतिपत्तिद्वारा पूर्वशास्त्रप्रवृत्तिप्रयोजकत्वप्रतिबन्धकत्वयोरभावबोधनेनान्यतराकाङ्क्षयापि तत्रोपस्थित्यैकवाक्यतया तत्संस्कारो दुर्वच एव इत्याशयेन 'कथम्' इति प्रश्ने 'कार्यकालं संज्ञापरिभाषम्' यत्र कार्यं तत्रैवावस्थितं द्रष्टव्यमित्यवधारणपूर्वकं तद्देशस्थत्वप्रतिज्ञानेन तदर्थोपसंहारपरं भाष्यं सङ्गच्छते। तत्रैव कार्यकालपक्षे संज्ञापरिभाषाणामत्यन्तं पारार्थ्यान्न स्वातन्त्र्येण कार्यावगमहेतुत्वं, केवलमाचार्येण लाघवेनानेकप्रधानाङ्गभावप्रतिपत्तये पृथगुपदेशः कृतः। ततश्च "तस्मिन्०" ( पा० सू० १।१।६६ ) इत्यनेन केवलेन न किञ्चित् क्रियते नापि "झलो झलि" ( पा० सू० ८।२।२६ ) इत्यनेन किन्तर्हि संहत्य क्रियते, ततो झलि समनन्तरे पूर्वस्य सकारस्य झलः परस्य लोप इति वाक्यार्थ इत्येकवाक्यतायां पौर्वापर्याभावादसिद्धत्वाभाव इति तदाशयं कैय्यटः[3]।

अन्यथा वाक्यार्थबोधकाले आकाङ्क्षावशादुपस्थितिरिति स्वीकारे यदा कार्यं तदोपस्थितं द्रष्टव्यमित्येव ब्रूयात्। भाष्ये तत्रैवावस्थितमित्ययं पाठ इति विवरणोक्तिस्तु[4] कैय्यटादिविरोधाच्चिन्त्यैव।

किञ्च व्यवहर्तृदृष्टान्ताश्रयणे 'यथोद्देशं संज्ञापरिभाषम्' इत्यनेन तयोः स्वदेशस्थत्वबोधनं व्यर्थं, न च तेन तत्पक्षे तयोर्न स्वदेशस्थत्वं बोध्यते किन्तु स्वदेश एव स्वार्थबोधकत्वं तेन बोध्यत इति वाच्यम्, व्युत्पन्नस्य पुरुषस्य स्वदेशे पदार्थोपस्थितौ वाक्यार्थबोधे प्रतिबन्धाभावेन तत्सिद्ध्या तस्य तत्फलत्वासम्भवात्।

न च परिभाषादेश एवाकाङ्क्षया सर्वविधीनामुपस्थित्या तैरेकवाक्यतया लक्ष्यसंस्कार इत्यर्थे तात्पर्यग्राहकं तदिति वाच्यम्, तथा सति कार्याकाङ्क्षया परिभाषाणां कार्यदेशे उपस्थित्या लक्ष्यसंस्कार इत्येवं त्वदुक्तार्थककार्यकालं संज्ञापरिभाषमित्येतत्प्रतिद्वन्द्वितया संज्ञापरिभाषेण काल्यते आक्षिप्यते इत्यर्थकं

१. 'सुपरिहारः' इति पाठः क० पु०।
२. 'तन्त्रासिद्धम्' इति पाठः क० पु०। वस्तुतस्तु मूलोक्तपाठ एव समीचीनः।
३. 'पूर्वत्रासिद्धम्' इति सूत्रभाष्ये कैयट आह इति शेषः।
४. यत्र कार्यं तत्रैवावस्थितमिति। कार्येणाक्षेपादित्यर्थः। प्रायस्तत्रैवोपस्थितमिति पाठः। पा० सू० ८।२।१ म० भा० उद्योतः।

संज्ञापरिभाषाकालं कार्यमित्येव पठितुं युक्तत्वेन यथोद्देशं संज्ञापरिभाषमिति पाठस्य त्वदुत्प्रेक्षितार्थाग्राहकत्वेन तथा वचनपाठस्यैवासङ्गत्यापत्तेः । पक्षद्वयस्यापि त्वन्मते आकाङ्क्षामूलकत्वेन न्यायस्य तुल्यतया पाठवैषम्ये बीजाभावात् ।

मम तु कार्यकालपदेन कार्यस्य[1] कालो यस्य, कार्यं कालो यस्येति वा व्युत्पत्त्या कार्यदेशीयत्वस्यैव बोधनात् तत्प्रतिद्वन्द्वितया तयोः पाठदेशीयत्वबोधनाय तथा पाठ इति तत्सार्थक्यम् । व्यवहर्तृदृष्टान्ताश्रयणे तु तदसङ्गतिस्स्पष्टैव[2] ।

ननु कार्यकाल इत्यत्र निरुक्तव्युत्पत्त्या तयोः कार्यदेशीयत्वं बोधयितुमशक्यं, तत्तत्कार्यदेशे संज्ञापरिभाषस्य पाठाभावेन तत्त्वस्य दुरुपपादत्वादिति चेत्, न, ज्ञापकन्यायसिद्धबहिरङ्गपरिभाषादेरष्टाध्याय्यां कुत्रापि पाठाभावेन यथोद्देशेऽपि तत्र षाष्ठत्वाद्यनापत्त्या तत्तद्देशपाठस्य सर्वत्र तत्तद्देशस्थत्वप्रयोजकत्वासम्भवेन संज्ञापरिभाषस्य कार्यार्थतया तत्तत्कार्यदेश एव तत्पाठस्योचितत्वेन तत्र तत्र पुनः पुनः पाठे गौरवापत्त्या सर्वप्रकरणशेषत्वेन सर्वप्रकरणदेशस्थत्वसम्पत्तयेऽनारभ्य प्रकरणविशेषमशोकवनिकान्यायेन यत्र कुत्रचिद्देशे पृथक् पाठेऽपि तद्देशस्य[3] तदुपदेशार्हत्वेनाचार्यतात्पर्याविषयत्वेन[4] 'अदसो मात्' ( पा० सू० १।१।१२ ) इति सूत्रस्थोक्तानेकभाष्यप्रामाण्येन तत्तदुपदेशार्हत्वेनाचार्येणानुसन्धीयमान-देशेनैव तासां देशत्वाङ्गीकारेण निरुक्ततद्देशीयत्वस्य तदन्यदेशपठिते शास्त्रेऽपि सम्भवेन कार्यकालपक्षे कार्यदेशस्थत्वस्य सूपपादत्वात् ।

आचार्यतात्पर्यग्राहकं किमिति चेत्, संज्ञापरिभायोर्विशिष्य तत्तच्छेषत्व—प्रतिपत्तये तत्तल्लिङ्गकरणमेव । तथा च कार्यकालपक्षे विधिदेश इव परिभाषादेशे मुख्यप्रतिपत्तुः सप्तमीनिर्देशादिकं क्वेत्याकाङ्क्षोदयेऽपि तत्पर्यालोचनया तत्त-त्प्रदेशज्ञानोत्तरराजभृत्यन्यायेन प्रदेशदेश एव सर्वविधिभिरेकवाक्यतया तत्तच्छेष-त्वप्रतिपत्त्या तत्तद्देशस्य तदुपदेशार्हत्वेनाचार्यतात्पर्यग्रहेण तत्तद्देशस्थत्वबुद्धिः ।

यथोद्देशे तु मन्दप्रतिपत्तुराकाङ्क्षाद्यनुदयेन तयोर्भिन्नवाक्यतया पुरुष-संस्कारद्वारैव निर्वाहेणैकवाक्यताया अभावात्[5], शेषशेषित्वाप्रतिपत्त्या तन्मूलका-चार्यतात्पर्योन्नयनाभावेन विधिशास्त्रवत्स्वदेशस्थत्वमेव, ज्ञापकसिद्धानां ज्ञापक-देशस्थत्वं, न्यायसिद्धानां तु न्यायोपन्यासदेशस्थत्वमेव यथोद्देशपक्षे ।

न च शेषत्वग्रहस्य तत्तद्देशेषु तत्तदुपदेशार्हग्राहकत्वं कथमिति वाच्यम्,

---

१. 'काल एव' इत्यधिकः पाठः क पु० ।

२. 'तस्मिन्निति सूत्रस्थभाष्यासङ्गतिपरिहारस्तु उभयनिर्देश इति परिभाषाव्याख्यानावसरे स्फुटीभविष्यति' इत्यधिकः पाठः क० पु० ।

३. वक्ष्यमाणभाष्येण तत्तत्प्रदेशदेशस्यैव' इति पाठः क० पु० ।

४. 'अनुसन्धानेन' इत्यधिकः पाठः क० पु० ।

५. 'साक्षात्' इत्यधिकः पाठः क० पु० ।

दर्शपूर्णमासप्रकरणस्थस्य 'वत्समालभेत' इत्यस्य वाजपेयाङ्गत्वाभाववद् भिन्न-प्रकरणस्थयोरङ्गाङ्गित्वासम्भवेन तेन तदनुमानात्[1]।

( न चैवं तत्प्रकरण एव स्पष्टतयाङ्गत्वप्रतिपत्त्यर्थं पाठः कुतो न कृत इति चेच्छृणुः—संज्ञापरिभाषस्य कस्मिंश्चित्प्रकरणे पाठसान्निध्यात् तच्छेषत्वमात्र-ग्रहेण सर्वशेषत्वग्रहानापत्तिः, सर्वशेषत्वसम्पत्तये सर्वत्र पाठे महागौरवमतो लाघवेनानेकप्रधानाङ्गत्वप्रतिपत्तये प्रकरणविशेषमनारभ्य पृथग्देशे पाठः[2]। )

न चैवं भिन्नदेशस्थयोरङ्गाङ्गित्वासम्भवेन कं प्रत्यपि शेषत्वमेव मास्त्विति वाच्यम्, शास्त्राणां वैय्यर्थ्यापत्तेः। अतः सामर्थ्यात् विनिगमनाविरहाच्च[3] भिन्नदेशस्थयोरयाकाङ्क्षायोग्यतादिवशात्ः—

यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः।
अर्थतो　　ह्यसमर्थानामानन्तर्यमकारणम् ॥

इति न्यायेन परस्परसम्बन्धेन पुरुषसंस्कारद्वारा वा सर्वप्रकरणशेषत्वग्रहोप-पत्तिः[4]। तदुक्तं "ङ्याप्०" ( पा० सू० ४।१।१ ) सूत्रे भाष्ये "द्व्येकयोः०" (पा०सू०१।४।२२) इत्यादेस्स्वादिविधेश्चैकवाक्यतामुक्त्वा "यद्येकं वाक्यं तच्चेदं च किमर्थम् ? नाना देशस्थं करोति। अन्यदपि किञ्चित्सङ्ग्रहीष्यामीति कौशल-मात्रमेतदाचार्यो दर्शयति। यदेकं वाक्यं नाना देशस्थं करोतीति[5] "प्रधानसन्निधा-वुपदेशार्हाणां प्रकरणोत्कर्षेणोपदेशस्सर्वप्रधानसम्बन्धार्थः[6]" इति कैय्यटः।

अत एव हरदत्तोऽपिः—

अनेकस्य प्रधानस्य शेषभूता भवन्त्विति।
एताः केवलमाचार्यः पृथग्देशे ह्युपादिशत्[7] ॥

इत्याह। एतेन नह्यचेतनस्य शास्त्रस्य स्वदेशं विहायान्यदेशगमनं सम्भवति, नाप्यस्मदादिबुद्धिजननेन स्वदेशत्यागो भवतीत्यपास्तम्। 'क्ङिति च' ( पा० सू० १।१।५ ) इति सूत्रस्थकैय्यटस्यायमाशयः। 'निषेधाश्च बलीयांसः' इति न्यायेन गुणभूतस्यापि तस्य बलवत्त्वात् विधिवाक्यार्थबोधं विना बोधासम्भवादीदृशे विषये भिन्नवाक्यताया यथोद्देशपक्षेऽप्यशक्यत्वेन गुणादेशेऽपि प्रधानस्योपस्थिति-रङ्गीकर्तव्येति सर्वमनाविलम् ॥ ३ ॥

---

१. 'अत एवाष्टमिकद्वित्वविषये नाभ्याससंज्ञा' इत्यधिकः पाठः क० पु०।
२. कोष्ठान्तर्गतः पाठः क० पु० नास्ति।
३. 'विनिगमनाविरहाच्च' इति नास्ति क० पु०।
४. 'ग्रहोपपत्तेः' इति पाठः क० पु०।
५. पा० सू० ४।१।१ म० भा०।　　६. पा० सू० ४।१।१ तत्रैव कैय्यट इत्यर्थः।
७. 'पूर्वत्रासिद्धम्' पा० सू० ८।२।१ इत्यस्य पदमञ्जर्यामाह इत्यर्थः।

**इत्संज्ञका अनुबन्धाः, तेष्ववयवानवयवत्वसन्देह आह—**

**अनेकान्ता अनुबन्धाः ॥ ४ ॥**

लण्सूत्रस्थणकारस्येत्संज्ञकत्वेनानुबन्धानां स्मृतिविषयत्वात् तद्विषयकं परिभाषात्रयं वक्तुं तदुपयोगितया तेष्ववयवत्वनिर्णयाय पूर्वं सङ्गतिमाह[1]— **इत्संज्ञका इति । सन्देहे इति ।** धात्वादिषु लाघवेनात्मनेपदादिरूपकार्यप्रवृत्तयेऽनुबध्यमानञकारङकारादीनां प्रयोगे क्वाप्यनुपलम्भेनावयवत्वाङ्गीकारे फलाभावेन वृक्षादावुपलभ्यमानकाकादिवदनवयवत्वमुत सानुबन्धाद्विभक्तिनिर्देशेन शित्किदित्यादिवहुव्रीह्यनुरोधेन चावयवत्वं वेति पक्षद्वयेऽपि हेतुदर्शनात् संशय[2] इति भावः ।

ननु सानुबन्धस्य सनादिशब्दस्य नकारादिरवयवो न वेति सन्देहः, उत तद्रहितसमुदायस्य । नाद्यः, घटशब्दानवयवत्वस्य घकार इव सन्शब्दानवयवत्वस्य नकारे वक्तुमशक्यत्वेन तथा सन्देहानुदयात् । न द्वितीयः, घटशब्दवृत्तिघकारावयवत्वस्य टकार इव सन्शब्दवृत्तिसकारावयवत्वस्य नकारे वक्तुमशक्यत्वेन[3] तथापि सन्देहासम्भवात् ।

न च सानुबन्धकसमुदास्योपस्थापकत्वोपस्थाप्यत्वे विवक्षिते, उत तद्रहितसमुदायस्य ते इति संशयसम्भव इति वाच्यम्, सनमुच्चारयेति[4] वाक्य इव सानुवन्धकस्य सानुवन्धकोपस्थापकत्वे निरनुबन्धकस्य च निरनुवन्धकोपस्थापकत्वे विवादाभावेन तथापि सन्देहासम्भव इति चेत्, न; प्रयोगसमवायिनिरनुबन्धकसमुदायनिरूपितवोधकता सानुबन्धकसमुदायस्य विवक्षिता उत तद्रहितस्येति[5] संशयसम्भवात् ।

न च 'स्वं रूपम्०' (पा० सू० १।१।६८) इति शास्त्रेण सूत्रोपात्तानुपूर्व्यवच्छिन्न एव शक्तिग्रहेण तस्यैव सनादिपदोपस्थाप्यत्वान्निरनुबन्धे तदुपस्थाप्यत्वस्यैवासम्भवेन तथा सन्देहासम्भव इति वाच्यम्, "गुप्तिज्०" ( पा० सू० ३।१।५ ) इति शास्त्रेण गुपादिभ्यस्सनुच्चारणीय इत्यर्थेन विशिष्टस्योच्चारणप्रसङ्गे लोपेन सर्वत्रोच्चारणकृतसत्ताया निषेधेनोत्सर्गापवादविषय इव तदंशे सङ्कोचेन निरनुबन्धस्यैव तदुपस्थाप्यत्वसम्भवात् ।

१. यद्यदनन्तरं निरूपणीयं तस्य तत्सङ्गतेन भवितव्यमिति व्याप्तिः, 'नासङ्गतं प्रयुञ्जीत' इत्यभियुक्तोक्तेः सङ्गतिनिरूपकज्ञानप्रयोज्यं यदनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानं तद विषयस्मरणानुकूलसम्बन्धः सङ्गतिः । वै० भू० सा० लका० प्र० ।

२. विरुद्धविरुद्धकोटिद्वयावगाहिज्ञानं संशयः ।

३. 'न' इत्यधिकः क० पु० पाठः । स चार्थसङ्गत्या चिन्त्य एव ।

४. 'सनमुच्चारयेति वाक्य इव' इति क० पु० नास्ति । तत्र 'स्वंरूपमिति परिभाषणात' इति वर्तते ।

५. 'स्वरूपभेदात' इत्यधिकः पाठः क० पु० ।

**अनेकान्ताः = अनवयवा इत्यर्थः । यो ह्यवयव स कदाचित्तत्रोपलभ्यत एव, अयं तु न तथा, तदर्थभूते विधेये कदाप्यदर्शनात् । शित्किदित्यादौ समीपेऽवयवत्वा-**

---

अतएव 'कृतायामित्संज्ञायां लोपे च कृते आदेशो भविष्यति' इति "तस्मिन्०" ( पा० सू० १।१।६६ ) इति सूत्रस्थं भाष्यम्, "इदम इश्" ( पा० सू० ५।३।३ ) 'इत्यादावण्वात्सवर्णग्रहणं प्राप्तमप्रत्यय इति निषिद्ध्यते' इति "अणुदित्०" ( पा० सू० १।१।६९ ) सूत्रस्थं भाष्यञ्च सङ्गच्छते ।

अत्रावयवत्वं न समवायेन द्रव्याधारत्वरूपं किन्तु तदेकदेशत्वेन, तत्सादृश्यादवयवत्वं घटकत्वरूपम् । घटकत्वञ्च स्वाविषयकप्रतीत्यविषयसमुदाय[1]-विशिष्टत्वे सति तदविषयकप्रतीतिविषयत्वम् । वैशिष्ट्यञ्चैकज्ञानविषयत्व-सम्बन्धेन । अवयविन्यतिव्याप्तिवारणाय विशेष्यदलम्, तत्र स्वपदमवयवत्वेनाभिमतव्यक्तिपरम् ।

सानुबन्धकस्यैव[2] बोधकताङ्गीकार्या, इत्यत्र व्यतिरेकव्याप्तिमाह—**योहीति । अवयव इति ।** यस्येति शेषः । **तत्र** = अवयविनि । **न तथा** = नावयवः । **तदर्थभूत इति ।** स चासौ अर्थभूतश्चेति विग्रहः । तज्जन्यप्रतीतिविषयीभूततच्छब्दे इत्यर्थः । **विधेय इति ।** बोध्ये इत्यर्थः । तेन धातोरविधेयत्वेऽपि न दोषः । **कदाप्यदर्शनादिति ।** न चैवं शीडाणलादौ[3] दोषः, प्राचीनमते तेषां सर्वादिशत्वात् प्रागनुबन्धत्वाभावेनादेषात् । नव्यमतेऽपीत्संज्ञाविधौ प्रत्ययपदस्य प्रत्ययत्वयोग्ये बोधके लक्षणाङ्गीकारेण सूत्र एवेत्संज्ञाप्रवृत्त्या शित्त्वादकारप्रश्लेषेण वा सर्वादेशसिद्ध्यादोषात् । एवञ्च निरनुबन्धविषयकप्रतीतिजनकत्वस्य सानुबन्धे निरनुबन्धे च सम्भवेन सानुबन्धकस्य तद्वाचकत्वं निरनुबन्धकस्य वेति सन्देहः । सानुबन्धकः "स्वं रूपम्०" ( पा० सू० १।१।६८ ) इति शास्त्रप्रयोज्यनिरनुबन्धनिरूपितवाचकत्वाभाववान् निरनुबन्धवृत्त्यानुपूर्व्यनवच्छिन्नत्वादिति न्याय-प्रयोगः[4] ।

अत्र सन्पदोपस्थाप्यसकारस्य शब्दशब्देनाप्युपस्थितया शब्दशब्दे निरनुबन्धनिरूपितवाचकत्वस्य सत्त्वेन तत्र व्यभिचारवारणाय साध्यकोटौ 'स्वं रूपम्०' ( पा० सू० ११।१।१८ ) इति शास्त्रप्रयोज्यनिरनुबन्धनिरूपितवाचकत्वाभावस्य सानुबन्धे उक्तानुमानेन स्वीकारेऽपि सानुबन्धकेन सानुबन्धकोपस्थितेरप्यसम्भवेन[5]

---

१. 'समुदाय' इत्यादितः 'व्यक्तिपरम्' इत्येतत्पर्यन्तं नास्ति क०पु० । तत्र 'तत्समुदायकत्वम्, तत्पदमवयवित्वेन विवक्षितव्यक्तिपरम्' इति पाठः वर्तते ।

२. 'निरनुबन्धकस्यैव' इति क० पु० पाठः । ३. 'न' इत्यधिकः पाठः क० पु० ।

४. 'अनुमानाकारः' इति पाठः क० पु० । ५. 'अक्षतत्वेन' इति पाठः क० पु० ।

**रोपेण समासो बोध्यः। 'वुञ्छण्कठ्' इत्यादौ णित्त्वप्रयुक्तं कार्यं पूर्वस्यैवेत्यादि तु**

---

इति पक्षे साध्याभावनिश्चयेन बोधवारणाय निरनुबन्धनिरूपितेति। घटशब्दादौ निरनुबन्धसन्शब्दनिष्ठानुपूर्व्यनवच्छिन्नत्वं "स्वं रूपम्०" (पा .सू. १।१।६८) इति शास्त्रप्रयोज्यनिरनुबन्धनिरूपितवाचकत्वाभावश्चेत्यन्वयव्याप्तिग्रहः। [१]भूशब्दादावुक्तवाचकत्वाभावाभावः, तत्र तद्वृत्त्यानुपूर्व्यनवच्छिन्नत्वाभावश्चेति व्यतिरेकव्याप्तिग्रहः। मूलं तु फलितार्थकथनपरम्।[२] मूलरीत्यानुमानाकारस्तुः—अनुबन्धाः, निरनुबन्धविषयकबोधजनकसमुदायाघटकाः[३], तज्जन्यप्रतीत्यविषयत्वात्, उदासीनवर्णवदिति बोध्यम्[४]। अत्र पक्षे 'धुट्' इत्यादौ सानुबन्धाद्विभक्त्युत्पत्तिर्निरनुबन्धाद्विभक्त्यनुत्पत्तिश्च "अतो भिस०" (पा० सू० ७।१।९) इत्यादावत्पद इव सौत्रत्वाद् बोध्या। लोपश्चेति द्विशकारको निर्देश इति भाष्यमप्यत्रैव पक्षे स्वरसतस्सङ्गच्छते।

अत एव ङ्मुडित्यादावपि न दोषः। अवयवत्वपक्षे तु ङ्मुडिति सानुबन्धस्यैवोपस्थापकत्वेन तस्याशब्दसंज्ञात्वेन "स्वं रूपम्०" (पा० सू० १।१।६८) इत्यस्य प्रवृत्त्या ङ्मुशब्दस्य विधेयत्वापत्तिः। न चात्र पक्षे ङ्मुपदोपस्थाप्यणकारादौ टित्त्वं दुर्वचम्, टित्किच्छब्दबोध्यस्याद्यवयवत्वादिति बोधनेनादोषात्। अत्र पक्षे "तित्स्वरितम्" (पा० सू० ६।१।१५) इत्यादौ तित्पदबोध्ये लक्षणा। **आरोपेणेति।** 'ग्रामकूपः' 'गङ्गातीरम्' इत्यादाविवेति भावः।

नन्वेवं केऽपि णित्त्वप्रयुक्तकार्यापत्तिः, सामीप्यस्य पूर्वतः परतश्च सम्भवेन णित्त्वस्योभयत्र सूपपादत्वादित्यत आह **"वुञ् छण्०"** (पा० सू० ४।२।८०) **इति। व्याख्यानत इति।** दघ्नचश्चकारेण यदुपदेशप्रयुक्ता यस्येत्संज्ञा तत्पूर्वोत्तरकालवृत्तित्वरूपसामीप्यं तदवयवत्वारोपे प्रयोजकमिति भावः। [५]अत्रान्त्यत्वप्रयुक्ता, अत्रादित्वप्रयुक्तेत्संज्ञेत्यत्र व्यवसितपाठरूपमेव व्याख्यानं बोध्यम्। एकान्तत्ववादिमतेऽपीदृशव्याख्यानस्यावश्यकत्वात्।

---

१. 'सनादिघटकस' इत्यधिकः पाठः क० पु०।

२. 'यद्वा' इत्यधिकः पाठः क० पु०।

३. 'स्वं रूपमिति शास्त्रसहकारेण' इत्यधिकः पाठः क० पु०।

४. 'न च पदार्थोपस्थितिकाले सानुबन्धकस्यैवोपस्थित्या पश्चाल्लोपेऽपि निरुक्तहेत्वसिद्धिरिति वाच्यम्, लोपेनानुत्पत्तेरेवान्वाख्यानेन निरनुबन्धकस्यैवोपस्थित्यादोषात्' इत्यधिकः पाठः क० पु०।

५. 'अत्रान्त्यत्व' इत्यादितः 'आवश्यकत्वात्' इत्येतत्पर्यन्तं क० पु० नास्ति।

**व्याख्यानतो निर्णयम् । 'हलन्त्यम्' इत्यत्रान्त्यशब्दः परसमीपबोधकः ।। ४ ।।**

नन्वेवं स्वसजातीयवर्णोत्पत्तिक्षणध्वंसासमानाधिकरणोत्पत्तिकत्वरूपादित्वस्य स्वसजातीयवर्णप्राग्भावासमानाधिकरणोत्पत्तिकत्वरूपान्त्यत्वस्य चानवयवीभूतेष्वनुबन्धेष्वसम्भवात्तदुपजीव्येत्संज्ञापि दुर्लभेत्यत आहः—**परसमीप इति।** कर्मधारयोऽयम् । परदेशस्थ इत्यर्थः । **बोधक इति।** लक्षणयेति भावः ।

ननूपदेशपदस्याज्ञातस्वस्वरूपज्ञापकोच्चारणपरत्वेन तादृशप्रत्यक्षात्मकज्ञानजनकोच्चारणविषयसमुदायान्त्यत्वस्यानुबन्धेष्वनवयवत्वपक्षेऽप्यनपगमाल्लक्षणाश्रयणं विफलमिति चेत्, न; अर्थबोधनतात्पर्येणैव सर्वत्र शब्दोच्चारणेनार्थस्यैव ज्ञाप्यतया तद्विषयकबोधजनकत्वरूपज्ञापकत्वस्यात्र पक्षे निरनुबन्धकसमुदाय एवाङ्गीकारेण तादृशसमुदायान्त्यत्वस्यानुबन्धेष्वसम्भवात् । करणघञन्तोपदेशवादिमतेऽप्युपदेशपदस्य धात्वादिसंज्ञायोग्यबोधकपरत्वेनात्र पक्षे निरनुबन्धकस्यैव तद्बोधकत्वेन लक्षणाया आवश्यकत्वमित्याशयात् । अत एव[1] स्थमोरुकारश्चरितार्थः । अन्यथा मकारस्य प्रत्ययान्तत्वेनेत्संज्ञाया दुर्वारत्वेन तद्वैय्यर्थ्यापत्तिः ।

न चैवम् 'दघ्नच्' 'मात्रच्' इत्यत्र पूर्वप्रत्ययाव्यवहितोत्तरकालवृत्तित्वेन[2] परप्रत्ययादिमकारस्यापि परसमीपवृत्तित्वप्रयुक्तेत्संज्ञा दुर्वारेति वाच्यम्, यदन्त्यत्वप्रयुक्ता यस्येत्संज्ञा चिकीर्षिता तदितरोपदेशाविषयस्यैव परसमीपवृत्तिनो वर्णस्य ग्रहणेनादोषात् । इयत्समुदायस्यैतदुपदेशविषयत्वम्, इयतो नेत्यत्र व्याख्यानन्तु भाष्योक्तव्यवसितपाठ एव[3] इति बोध्यम् ।

नन्वेवं "तस्य लोपः" (पा० सू० १।३।९) इति सूत्रं व्यर्थम्, तस्योपस्थापकेऽनन्तर्भाविण विशिष्टस्यानुपस्थाप्यत्वेन लक्ष्येऽनुबन्धानामप्रसङ्गात् । सूत्रेऽप्युच्चरितत्वेन प्रसक्तादर्शनरूपलोपस्य प्रवृत्त्यसम्भवाच्च । अत एवात्रपक्षे नानुबन्धेत्यादि परिभाषात्रयं नारम्भणीयमिति भाष्य उक्तम् ।

न च प्रत्याहारेऽनुबन्धानां ग्रहणाभावाय सूत्रमावश्यकमिति वाच्यम्, सूत्रस्थाद्यन्तपदयोराद्यन्तसदृशपरत्वेन शादृश्यप्रतियोगिभूताद्यन्तघटितसमुदायबोध्येषु शक्त्यङ्गीकारेणादोषादिति चेत्, न; लोपविधिप्रयोज्यलक्ष्यादर्शनरूपहेतोरेवानवयवत्वसाधकत्वेन लोपशास्त्रानारम्भे तादृशहेतोरेव शशविषाणतुल्यत्वापत्त्यास्यानवयवत्वे तात्पर्यग्राहकत्वेन वैय्यर्थ्यासम्भव इत्याशयात् ।। ४ ।।

---

१. 'अत एव' इत्यादितः 'वैयर्थ्यापत्तिः' इत्येतत्पर्यंतं क० पुस्तके कोष्टके वर्तते ।
२. 'प्रत्ययोत्तरकालवृत्तित्वेन' इति क० पु० पाठः ।
३. 'एकान्तपक्षेऽपीदृशं व्याख्यानमावश्यकमेव' इति पाठः क० पु० 'एव' इत्यस्य स्थाने ।

**वस्तुतस्तु—**

**एकान्ताः ॥ ५ ॥**

**इत्येव न्याय्यम्, शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च। अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषूपलभ्यते। नैवमयम्। एवं हि बहुव्रीहिरपि न्यायत एवोपपन्नः, अन्त्यादिशब्दे लक्षणा च न।**

---

**एकान्ता एवेति**[1]। वाचकघटका एवेत्यर्थः। तत्र हेतुमाह-**तत्रोपलम्भादिति**। तावन्मात्रस्यावयवत्वाव्याप्यत्वादाह—**अन्यत्रानुपलम्भाच्चेति**। चकारेण समुदितस्य हेतुत्वं बोध्यते। उक्तानुमाने व्यतिरेकव्याप्तिमाह—**अनवयवो हीति**। यो ह्यवयवो न भवति स एकजातीयसम्बन्धेन[2] अन्यत्रानुपलभ्यमानोऽपि न भवति। यथा काकादिरिति भावः। एकजातीयसम्बन्धश्च काकादौ संयोग इति[3]। **नैवमयमिति**। अयमनुबन्धः अवयविभिन्ने एक जातीयसम्बन्धेन नोपलभ्यत इति भावः। अत्रैकजातीयसम्बन्धश्च वाचकघटकवर्णाव्यवहितत्वरूपः। अव्यवहितत्वञ्च विजातीयवर्णव्यवधानशून्यत्वम्। अनुबन्धभिन्नत्वेन वैजात्यन्तेन मनिनादौ न दोषः।

एवं चानुबन्धा वाचकघटकाः, निरनुबन्धविषयकबोधजनकसमुदायघटकवर्णाव्यवहितोत्तर[4]त्वसम्बन्धेन तद्वृत्तित्वे सति तेन सम्बन्धेन तादृशवर्णाघटितपदावृत्तित्वात्सनादिघटकाकारवत्। उदासीनवर्णे केवलककारादौ व्यभिचारवारणाय सत्यन्तम्। सन्भवति[5] इत्यादौ नकारे[6] व्यभिचारवारणाय विशेष्यदलम्। वर्णानामैक्यपक्षे स्वभिन्ने निरादिपदेऽस्यैव नकारस्य वर्तमानत्वेन स्वरूपासिद्धिवारणाय

---

१. एवेति—अधुना समुपलभ्यमानेषु मुद्रितपुस्तकेषु 'इत्येव' इति पाठो लभ्यते।

२. 'तद्वृत्तित्वे सति' इत्यधिकः पाठः क० पु०।

३. भावः। साध्याभावहेत्वभावयोश्चेत्थं व्याप्तिः, यो यदवयवत्वाभाववान् स एकजातीयसम्बन्धेन तद्वृत्तित्वे सति तदन्यवृत्तित्वाभावाभाववान्। अत्रान्वयव्याप्तिरपि सूपपादा, यो यत्सम्बन्धेन यद्वृत्तित्वे सति तज्जातीयसम्बन्धेन तदन्यवृत्तित्वाभाववान् स तदवयवः। यथा शाखादिः। इत्यधिकः पाठः क० पु०।

४. 'त्वादि' इति पाठः क० पु०।

५. 'भवति, स्वस्यैकस्यैव नकारस्योक्तसम्बन्धेन सन्वृत्तित्ववद् निरनुबन्धाकारविषयकबोधजनकाणादिसमुदायघटकवर्णोत्तरत्वसम्बन्धेन सन्भिन्नाण् वृत्तित्वात्', इत्यधिकः पाठः क० पु०।

६. 'नकारे' इत्यादितः 'तन्निवेशः' इत्येतत्पर्यन्तं क० पु० नास्ति।

**किञ्च अनवयवत्वे णशकप्रत्ययादौ णादेरित्त्वानापत्तिः, प्रत्ययादित्वाभावात्, दध्नंचशचकास्य वैयर्थ्यापत्तिश्च । इदञ्च 'तस्य लोपः' इत्यत्र भाष्ये स्पष्टम् । तत्र ह्युक्तम्—"एकान्ता अनुबन्धाः" इत्येव न्याय्यमिति दिक् ॥ ५ ॥**

---

विशेष्ये सम्बन्धविशेषनिवेशः । विशेषणांशे सम्बन्धनिवेशस्तु तयोरेकजातीयत्वबोधनाय । न च 'सन्नष्टः' इत्यादौ उक्तसम्बन्धेन तादृशवर्णाघटितपदवृत्तित्वाद्दोषस्तदवस्थ इति वाच्यम्, नष्टशब्दघटकनकारनिष्ठवृत्तितायामस्य सम्बन्धस्यावच्छेदकत्वासम्भवात् । वर्णानां भेदपक्षे त्वस्यैव नकारस्य कालिकादिसम्बन्धेनान्यवृत्तित्वात्स्वरूपासिद्धिवारणाय तन्निवेशः । तथा च सानुबन्धः "स्वं रूपम्" (पा० सू० १।१।६८) इति शास्त्रप्रयोज्यनिरनुबन्धनिरूपितवाचकत्ववान्, वाचकान्तराघटकानुबन्धघटितत्वात्, इति वाक्यप्रयोगः । यत्रोक्तः वाचकत्वाभावस्तत्र वाचकान्तराघटिता[1]नुबन्धविशिष्टत्वाभाव इति व्यतिरेकव्याप्तिरत्र बोध्या ।

एतेनावयवत्वसाधकस्यैकजातीयसम्बन्धेनान्यत्रानुपलभ्यमानत्वरूपहेतोर्गगनवृत्तिशब्दादौ अवयववृत्त्यवयविनि च व्यभिचार इत्यपास्तम् । विपक्षे वाधकमाह-**किञ्चेति । अनापत्तिरिति** । न चान्त्यपद इवादिपदेऽपि लक्षणया निर्वाहः, वाक्यार्थबोधोत्तरमेव प्रत्ययत्वज्ञानेन सूत्रस्थककारे तदादित्वज्ञानाभावेन निरनुबन्धकस्यैवोपस्थित्या तत्र प्रत्ययत्वज्ञानेऽपि ककाराभावेन लक्षणाश्रयणेऽपि प्रत्ययादित्वप्रयुक्तेत्संज्ञा दुर्वचेत्याशयात् । नन्वेकान्तवादिमतेऽपि प्रत्ययपदस्य प्रत्ययत्वयोग्यबोधके लक्षणाया आवश्यकत्वेन तादृशसमुदायपूर्ववृत्तित्वस्य ककारेऽक्षतत्वेन न दोष इत्यरुचेराह किञ्चेति ।

ननु "तव्यत्तव्यानीयरः" (पा० सू० ३।१।९६) इत्यत्र तकारस्योभयसमीप[2]वृत्तित्वेनोभयोरित्त्वेनान्यतरस्य वैय्यर्थ्यापत्त्या यदुपदेशप्रयुक्ता यस्येत्संज्ञा तत्प्रयुक्तं कार्यं तस्यैवेति ज्ञापनान्नास्य वैय्यर्थ्यम् । अत एव के णित्वप्रयुक्ता वृद्धिरपि नेति चेत्तत्राह—**"तस्य लोपः" (पा० सू० १।३।९) इति । न्याय्यमिति ।** पक्षद्वयमप्युक्त्वा किमत्र न्याय्यमित्युपन्यस्यैकान्ता इत्येव न्याय्यम् । कुत एतत् यच्च नाम सहेतुकं तन्न्याय्यमित्युक्तम् । न चानेकान्तपक्षेऽपि हेतोरुक्तत्वेन तस्यापि सहेतुकत्वात् न्याय्यत्वापत्तिः, अनुपलम्भकयत्नं विनानुपलब्धेर्हेतुत्वसम्भवेऽपि लोपप्रयोज्यानुपलब्धेर्हेतुत्वासम्भवात् । अन्यथा शाखादीनामप्यनवयवत्वापत्तिरिति दिक् ।

---

१. 'घटका' इति पाठः क० पु० ।

२. 'समीप' इति क पु० नास्ति ।

ननु गुणानां लोके भेदकत्वेऽपि शास्त्रे ज्ञापकेनाभेदकत्ववदेकान्तपक्षस्य न्याय्यत्वेऽपि "उपदेशेऽज्०" ( पा० सू० १।३।२ ) इति सूत्रस्थोपदेशग्रहणरूपज्ञापकेन शिदादिग्रहणेन वानेकान्तत्वस्वीकार एवोचितः। अन्यथा नानुबन्धेत्यादिवचनत्रयारम्भे गौरवापत्तिरिति चेत्, न; "अनेकाल्०" ( पा० सू० १।१।५५ ) सूत्रे शिद्ग्रहणेनानुबन्धेष्वल्त्वव्यवहाराभावस्य शेखरे[1] उक्तत्वेन तस्य चाविद्यमानवद्भावपर्यायितया तेनैव सर्वत्र निर्वाहेणात्र पक्षेऽपि वचनत्रयाङ्गीकारे फलाभावात्।

वस्तुतः अत्र पक्षेऽपि यथा वचनत्रयं नावश्यकं तथाऽग्रे स्फुटीभविष्यति। एतेन 'पचतः' भेत्ता, 'प्रनिशेष्टा' इत्यादावदुपदेशप्रयुक्तस्वरस्यैकाच्त्वप्रयुक्तेण्निषेधस्य "शेषे विभाषा०" ( पा० सू० ८।४।१८ ) इति षान्तत्वप्रयुक्तणत्वव्यावृत्तेश्चासिद्ध्या एकान्तपक्षो न युक्त इत्यपास्तम्। आद्योच्चारणजन्योपस्थितिविषयस्यादन्तादेर्ग्रहणेनादोषाच्च। 'महि'—इति 'ङ्' इति च भिन्नं पदं, "तिङ-तिङः" ( पा० सू० ८।१।२८ ) इतिवत्सानुबन्धस्य कार्यार्थं क्वाप्यनुपादानेन तस्य तद्विशेषणत्वे तात्पर्याभावानुमानात्। तेन 'प्रक्षीमहि' 'दासीमहि' इत्यादौ सम्प्रसारणैत्वादिकं न।

न च "एर्लिङि" (पा० सू० ६।४।६७) इत्यत्र कितीत्यस्यैवानुवृत्तेर्न दोषः, सिद्धान्ते ङिदार्धधातुकस्यासम्भवेन तदननुवृत्तावपि 'महिङ्' इत्येकपदत्वे तत्सम्भवेन तदनुवृत्तेर्दुर्वारत्वात्। अत्र पक्षे लोपश्चेत्यत्रेव ङमुडित्यत्र पदद्वयं बोध्यम् ॥ ५ ॥

---

१. 'अनेकाल्शित् सर्वस्य' ( पा० सू० १।१।५५ ) शित उदाहरणम् 'इदम इश्' ( पा० सू० ५।३।३ )। ननु शकारोच्चारणसामर्थ्याद् भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वे सिद्धे शिदिति व्यर्थम्। किञ्च सानुबन्धकनिर्देशे यथा नालः स्थानिवत्त्वम् 'भोभगो०' (पा० सू० ८।३।१७) इति सूत्रे भाष्ये उक्तम्, तथाऽऽदेशत्वमपि सूत्रोपात्तस्यैवेति तद्व्यर्थम्। विधौ निर्दिष्टो योऽनेकाल् स सर्वस्येति सूत्रार्थः। उद्देश्यत्वविधेयत्वाख्यविषयतया बोधविषयता तु अनुबन्धविनिर्मुक्तस्येति न 'अणुदित्०' (पा० सू० १।१।६९) सूत्रभाष्यविरोधः। 'ध्वसोः' ( पा० सू० ६।४।११९ ) इति लोपस्य 'लोपोयि' ( पा० सू० ६।४।११८ ) इति प्रकृते पुनर्लोपग्रहणसामर्थ्यात् सर्वादेशत्वसिद्धिः। अनुबन्धानामेकान्तत्वमेव न्याय्यमित्युक्तमिति चेत्, न; 'नानुबन्धकृतमनेकाल्त्वम्' ( परि० ५ ) इति ज्ञापनेन चारितार्थ्यात्। तेन 'दिव औत्' ( पा० सू० ७।१।८४ ) इत्यादीनां न सर्वादेशत्वम्। इति शेखरानुपूर्वी।

**नन्वेकान्तत्वेऽनेकाल्त्वादेव औशादीनां सर्वादेशत्वसिद्धया 'अनेकाल्' सूत्रे शिद्ग्रहणं व्यर्थमत आह—**

**नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥**

---

**सिद्ध्येति।** शिद्ग्रहणाभावे शास्त्रे शित्त्वप्रयुक्तकार्याभावेन सामर्थ्यात् पूर्वमिशादेशस्येत्संज्ञालोपयोरसम्भवादनेकाल्त्वादेव सर्वादेशे ततस्सर्वादेशसम्पादनेन चरितार्थस्येत्संज्ञालोपाभ्यां प्रयोग एव निवृत्त्येष्टसिद्धिरिति भावः। यद्वा शकारोच्चारणसामर्थ्यात् सत्यपि लोपे भूतपूर्वाऽनेकाल्त्वमादाय सर्वादेशो भविष्यतीत्याशयः

वस्तुतोऽनेकाल्घटितसमुदायवृत्तिधर्मप्रकारकोपस्थितिजनकादेशस्य लिङ्गत्वेन तस्य 'इश्'[1] पदेऽक्षतत्वेन तत्र सर्वस्य[2] इत्यस्योपस्थित्या सर्वादेशसिद्धया न दोष इति बोध्यम्। अत एव विधौ निर्दिष्टो योऽनेकाल् स सर्वस्येति सूत्रार्थ इति शेखरोक्तं सङ्गच्छते। अन्यथा "तासस्त्योर्लोपः" ( पा० सू० ७।४।५० ) गुणः, वृद्धिरित्यादौ लोपादिपदस्यापि विधौ निर्दिष्टस्यानेकाल्त्वेन सर्वादेशत्वापत्त्या तदसङ्गतिः।

मम तु इटो दीर्घ इति दीर्घविधाविकारस्येट्त्वेनव स्थानित्ववदिकारस्येश्त्वेनैव विधेयत्वमिति न दोषः। अत एव "क्यस्य विभाषा" (पा. सू. ६।४।५०) इति यकि न भवति, अन्यथा ककारेत्संज्ञकस्य यस्येत्यर्थे यक्यपि तद्दुर्वारं स्यात्। अत एव डादेशेऽकारप्रश्लेषात् सर्वादेशत्वं ग्रन्थकृदुक्तं सङ्गच्छते। अन्यथा सूत्रे सवर्णदीर्घेणानेकाल्निर्देशासम्भवात्तदसङ्गतिः।

**व्यर्थमिति।** ननु सूत्रे शिद्ग्रहणाभावे शिदित्यनुवादरूपलिङ्गाभावात् "इदोऽय् पुंसि" ( पा० सू० ७।२।१११ ) इत्यत्र यकार इवात्र शकारेऽपि भ्रष्टावसरन्यायेन[3] फलाभावादित्संज्ञानापत्तिः। सौत्राक्षराणामित्संज्ञाप्रयोज्यकार्यप्रवर्तकतया प्रयोगे श्रवणार्थतया वा साफल्यस्य वक्तव्यत्वादिति चेत्, सत्यम्; सर्वादेशसम्पादनेन चरितार्थे यकारे इत्संज्ञालोपयोः प्रवृत्तौ 'अय्' इति रूपापत्त्या तस्य नानर्थक इति निषेधेनाकारमात्रविधानेनापि सिद्धया यकारोच्चारणसामर्थ्येन तत्र तदसम्भवेऽपि अत्र शकारे इत्संज्ञालोपयोर्बाधे मानाभावात्। न च सिद्धान्ते नानर्थक इत्यस्यानङ्गीकारादकारमात्रविधाने दकारस्य स्यात्तथा च 'यम्' इति

---

१. 'इ' इति पाठः क० पु०।

२. 'अनेकाल्शित्सर्वस्य' ( पा० सू० १।१।५५ ) इति सूत्रघटक सर्वस्येत्यर्थः।

३. 'भ्रष्टावसरन्यायेन' इति क० पु० नास्ति।

**शिद्ग्रहणमेवैतज्ज्ञापकम्, तेन 'अर्वणस्तृ' इत्यादेर्न सर्वादेशत्वम्। डादिविषये तु सर्वादेशत्वं विनाऽनुबन्धत्वस्यैवाभावेनाऽऽनुपूर्व्यात्सिद्धम् ॥ ६ ॥**

---

रूपापत्तिरिति वाच्यम् ? तथा सति "यः सौ" (पा० सू० ७।२।११०) इति सूत्रात् 'यः' इत्यनुवृत्त्येदः पुंस्यकारविशिष्टयकारविधानेनानेकाल्त्वात्सर्वादेशेन 'यम्' इति रूपसिद्ध्याकारविधानसामर्थ्यादेव सर्वादेशसिद्ध्या 'अम्' इति रूपसिद्धेः।

किञ्च "यः सौ" ( पा० सू० ७।२।११० ) इतिपूर्वसूत्रेणैवेयमितिरूपसिद्धौ, पुनरनेन यकारविधानसामर्थ्येन सर्वादेशत्वसिद्ध्या 'यम्' इति रूपे सिद्धे, पुनरप्येकमात्रिकाकारविधानसामर्थ्यात् सर्वादेशसिद्ध्या 'अम्' इति रूपं सूपपादम्, तस्मात्तत्र यकारोच्चारणसामर्थ्यात् तत्र लोपाप्रवृत्तावपि शकारस्य सर्वादेशसम्पादनेन चारितार्थ्येन तस्येत्संज्ञालोपयोर्बाधे मानाभावात्। भ्रष्टावसरन्यायस्त्वत्र[1] शास्त्रे नेत्यग्रे स्फुटीभविष्यति[2]। न चैवं "पूर्वोत्तराधराणाम्" (पा. सू. ५।३।३९) इति विहितादेशे इत्संज्ञापत्तिः, बहुज्विधायके[3] पुरस्तादिति निर्देशेन[4] शकन्ध्वादित्वात्पररूपेणाकारप्रश्लेषेणाकारान्तादेशस्यैव विधानेनादोषात्। 'पुरधवः' इत्यत्र ह्रस्वदीर्घप्लुत इत्यत्रेव सौत्रं पुंस्त्वम्।

ननु स्वांशे चारितार्थ्याभावान्नेदं ज्ञापकं युक्तम्, शकारोच्चारणसामर्थ्यात् नानुबन्धेति निषेधं बाधित्वाऽनेकाल्त्वात् सर्वादेशसिद्धेः। न च "जश्शसोश्शिः" (पा०सू०७।१।२०) इत्यत्र शकारस्य "शि सर्वनामस्थानम्" (पा०सू०१।१।४२) इत्यत्र विशेषणार्थतया चारितार्थ्यात्तत्र शित्त्वात्सर्वादेशसिद्धिः फलम्, सर्वादेशात्प्रागित्संज्ञाया एवाभावेन सर्वादेशसिद्धेः।

किञ्च शकारनिष्ठेत्संज्ञायोग्यतावत्त्वरूपमनुबन्धत्वमुपजीव्य प्रवृत्ताया अस्यास्सर्वादेशनिवृत्तिद्वारान्त्यादेशप्रापकत्वे प्रत्ययादित्वाभावेनेत्त्वाप्राप्त्योपजीव्यभूतानुबन्धस्यैव भङ्गापत्त्या परिभाषाया अप्रवृत्तौ सर्वादेशत्वसिद्धिरिति चेत्, न; एतत्परिभाषया सर्वादेशत्वाभावेऽपि "आदेः परस्य" (पा० सू० १।१।५४) इत्यस्य प्रवृत्त्याऽनिष्टापत्तेः। शिद्ग्रहणे तु न दोषः।

**न सर्वादेशत्वमिति।** नन्वत्र सर्वादेशे उगित्करणं व्यर्थम्, अन्त्यादचः परत्वाभावेन नुमोऽप्राप्तेः। न च पुंयोगेन स्त्रियां वृत्तौ "उगितश्च" (पा० सू० ४।१।६) इति ङीप् फलम्। अन्तरङ्गत्वान्नान्तत्वप्रयुक्तङीपि विभक्तौ लिङ्गविशिष्टाग्रह-

---

१. 'यस्यावसरो भ्रष्टः स भ्रष्ट एव' इति न्यायस्वरूपम्।
२. 'भ्रष्टावसरन्यायस्त्वत्र शास्त्रे नेत्यग्रे स्फुटीभविष्यति' इति क० पु० नास्ति।
३. 'बहुज्विधायके पुरस्तादिति निर्देशेन' इति क० पु० नास्ति।
४. 'विभाषा सुपो बहुच् पुरस्तात्' ( पा० सू० ५।३ ६८ ) इति निर्देशेनेत्यर्थः।

**नन्वेवमपि 'अवदातं मुखम्' इत्यत्र पलोपोत्तरमात्त्वे कृतेऽदाबिति घुसंज्ञा-प्रतिषेधो न स्यात्, दैपः पकारसत्त्वेऽनेजन्तत्वादात्त्वाप्राप्त्या पलोपोत्तरं पकारा-भावेनास्य दाप्त्वाभावादत आह—**

**नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥**

---

णेनादेशस्यैवाप्राप्तेः[1]। तस्मादत्र न सर्वादेश इतीयं परिभाषा व्यर्था, फलाभावात्। न च "दिव औत्" ( पा० सू० ७।१।८४ ) इत्यत्र सर्वादेशत्वाभावः फलमिति वाच्यम्, तत्राऽपि तपरसूत्रप्रवृत्त्यौकारस्य संज्ञित्वेन तस्यैव विधीयमानत्वेनानेका-ल्त्वासम्भवादिति चेत्, न; "ससजुषोः०" ( पा० सू० ८।२।६६ ) इत्यादौ सर्वादेशाभावार्थं तस्यावश्यकत्वात्।

वस्तुतोऽनेकाल्विशिष्टादेशस्यैव सर्वादेशत्वाङ्गीकारेणैकान्तपक्षेऽप्यस्याः फलं चिन्त्यमिति बोध्यम्। न च 'अन्योन्येभ्यः' इत्यादौ पूर्वपदस्य सुपस्सुर्वक्तव्य इत्यनेन विहितस्य सोस्सर्वादेशानापत्तिः, यदा न समासवत्प्रथमैकवचनं पूर्वपदस्ये-ति वार्तिकेन पूर्वपदस्य प्रथमान्तादेश इत्यर्थकेन सर्वादेशप्रवृत्त्येष्टसिद्धेः। मूले पूर्वपदस्थस्य सुरिति फलितार्थानुवादकम्, नत्वेतदेव विधायकमिति भ्रमित-व्यमिति दिक् ॥ ६ ॥

**पलोपोत्तरमात्त्व इति**। ननु हतो हथ इत्यत्रोपदेशेऽदन्तत्वाभावात् स्वराप्रवृ-त्तिवत् पलोपे कृतेऽप्यौपदेशिकैजन्तत्वाभावादात्त्वासम्भवात्संज्ञाया एवाप्राप्त्या अदाबिति निषेधप्रवृत्तेः फलाभावेन निषेधो न स्यादिति निषेधानापत्त्यापादनमस-ङ्गतमिति चेत्, न; उपदेशे य एच् तदन्तस्य धातोरित्यर्थाभ्युपगमेनादोषात्। **न स्यादिति**। अत्र दाप्त्वाभावादिति वक्ष्यमाणो हेतुर्बोध्यः। दाप्त्वाभावे हेतुद्वयं विवृणोति, **दैप इत्यादिना**। **अनेजन्तत्वादिति**। एजन्तस्य धातुत्वाभावादित्यर्थः।

यद्वा—उपदिश्यमानस्यैजन्तस्य ह्यात्त्वं विधीयते। तत्रोपदिश्यमानत्वं न केवलमाद्योच्चारणविषयत्वम्, 'ढौकते' इत्यत्राप्यात्त्वापत्तेः। किन्त्वाद्योच्चारण-प्रयोजकतात्पर्यविषयत्वम्। ( तथा च दैप्धातौ पकारसत्तादशायाम् 'दै' इत्येजन्तस्य निरुक्तोपदिश्यमानत्वाभावाद्दैबित्यस्योपदिश्यमानत्वेऽप्येजन्तत्वाभावा-दात्त्वाप्राप्तिरिति भावः[2] )। तच्चोपस्थापके-उपस्थाप्ये च सम्भवति। तत्रो-पस्थापकत्वेनाचार्यतात्पर्यविषयस्य ग्रहणमुतोपस्थाप्यत्वेनाचार्यतात्पर्यविषयस्यै-जन्तस्य ग्रहणम्। तत्र नाद्य इत्याहः—**पकारसत्त्वे इति**। न द्वितीय इत्याह :—**पलोपोत्तरमिति**। **दाप्त्वाभावादिति**। पलोपे सत्यसति वेति भावः।

---

१. 'वस्तुतः परमाव्वंनृशब्देऽव्वंनृशब्दस्य सर्वादेशेऽप्यन्त्यादचः परत्वसत्त्वान्नुम्प्रवृत्तिरुगि-त्करणस्य फलम्। तस्मादिदमपि परिभाषायाः फलम्'। इत्यधिकः पाठः क० पु०।

२. 'कोष्ठान्तर्गतः पाठः' क० पु० नास्ति।

नन्वत्र पलोपोत्तरमात्त्वे कृते इति व्यर्थमिति चेन्न, अनुबन्धलोपोत्तरमात्त्व-प्रवृत्तेरेतत्परिभाषासाध्यत्वाभावस्फोरणाय तत्सत्त्वात् । न च 'एकदेशविकृतन्यायेन, (परि० ३७) पलोपेऽपि दाप्त्वं सुलभमिति वाच्यम्, पकारसत्तादशायां दैप्त्वस्य तत्प्रकृतिधर्मत्वेऽपि दाप्त्वस्य तत्प्रकृतिधर्मत्वाभावेन तेन तदानयनासम्भवात् । न च पकारेत्संज्ञक 'दा' शब्द इत्यर्थान्न दोषः, अत एव दैपः पकारोच्चारणं च चरितार्थमिति वाच्यम्, सानुबन्धकनिर्देशेषु णादिष्वण्वन्तवादिप्रयुक्तकार्यव्यावृत्तयेऽण्त्वादिप्रकारकनिरनुबन्धविषयकोपस्थितेरेवाङ्गीकारेणात्रापि निषेधे दाप्त्वेनैव तस्योद्देश्यतया 'दाप् लवने' इत्येतद्बोध्ये 'दा' धाताविवात्र दाप्त्वस्य दुर्वचत्वेन परिभाषाभावे निषेधासम्भवात् ।

अत एव विधिनिषेधयोः समानविषयत्वोपपत्तिः । अत एव 'नदीतरा[1]' इत्यत्र 'घ' संज्ञामाशङ्क्य घसंज्ञायां तरप्त्वेनैव रूपेणोद्देश्यतया 'नदीतरा' इत्यत्र तदसम्भवान्नेति समाहितम् । न च पकारोच्चारणसामर्थ्यात् स्मृतमनुबन्धं श्रुतं दाशब्दं चादाय निषेधस्य प्रवृत्तिसम्भव इति वाच्यम्, 'ङित्वसामर्थ्यादभस्यापि टेर्लोपः' इतिवत् पित्त्वसामर्थ्यादप्रत्ययत्वेऽपि धातोरन्त उदात्त इति उदात्तबाधनेनानुदात्तप्रवृत्त्या तस्य चारितार्थ्यसम्भवात् ।

**अनेजन्तत्वमिति ।** ननु 'दैप्' इत्यत्रोपदिश्यमाने एजन्तत्वाभावः, 'दै' इत्यत्रैजन्ते-उपदिश्यमानत्वाभावश्चानुबन्धकृतः । तत्र दैबित्यत्रानुबन्धप्रयोज्यस्यानेजन्तत्वस्य निषेधः क्रियते, उत 'दै' इत्येजन्तेऽनुबन्धप्रयोज्यानुपदिश्यमानत्वं निषिद्ध्यते । नाद्यः, उपदिश्यमानसमुदाये पकारान्तेऽनेजन्तत्वस्य निषेधेऽभावाभावस्य प्रतियोगिरूपतयैजन्तत्वेन पकारस्यालोन्त्यरिभाषयात्त्वापत्तेः । न द्वितीयः, नानुबन्धकृतमनुपदिश्यमानत्वमिति पाठाभावेन तादृशार्थासम्भवात् ।

न च दैबित्युपदिश्यमाने-एजन्तत्वरूपविशेषणाभावप्रयुक्तैजन्तोपदिश्यमानत्वाभावः, 'दै' इत्यवयवे विशेष्याभावप्रयुक्तविशिष्टाभावः, उभयविधोऽप्यभावोऽनुबन्धकृत[2] एव । तथा चानुबन्धप्रयोज्यविशेषणविशेष्यान्यतराभावप्रयोज्यो यो विशिष्टाभावः स नाश्रीयत इत्यर्थान्न दोष इति वाच्यम्, अदाबित्यत्र पकारस्याप्यात्त्वापत्त्योक्तदोषतादवस्थ्यात् । न चैचोऽन्तत्वमेजन्तत्वं तस्य च नञ्समासोऽनुबन्धकृतः, एज्निष्टौपदेशिकसमुदायनिरूपितान्त्यत्वाभावो नाश्रीयत इत्यर्थान्न दोष इति वाच्यम्, नानुबन्धकृतमेचोऽनन्तत्वमिति पाठाभावेन नञस्समुदायेनैव योगेन केवलान्तशब्देनायोगात् । अघटरूपमिति वाक्यादभावप्रतियोगिनि रूपे घटवृत्तित्वप्रतीतावपि रूपप्रतियोगिकाभावे घटवृत्तित्वाप्रतीतिवदुक्ताभावस्यैज्निष्ठत्वाप्रतिपत्त्या तन्निषेधासम्भवात् ।

१. 'तॄ' धातोः "ॠदोरप्" ( पा० सू० ३।३।५७ ) इत्यनेन 'अप्' प्रत्यये 'नदीतरा' इति ।
२. 'अनुबन्धकृत एव तथा च' इति क पु० नास्ति।

**'उदीचां माङः' इति निर्देशोऽस्या ज्ञापकः । 'आदेच उपदेशे' इति सूत्रेणोपदिश्यमानस्यैजन्तस्यात्त्वं क्रियते, ङकारसत्त्वे त्वेजन्तत्वाभावादात्त्वाप्राप्तेस्तस्यासङ्गतिः ।**

**न चास्यामवस्थायां तस्य धातुत्वाभावात्कथमात्त्वम्, तत्र धातोरित्यस्य निवृत्तेरित्यन्यत्र विस्तरः । स्पष्टञ्चेदम् 'दाधाध्वदाप्' इति सूत्रे भाष्ये ॥ ७ ॥**

---

न च 'दो अवखण्डने' इत्येतद्घटकीभूतैज्निष्ठं यदुपदिश्यमानसमुदायान्त्यत्वं तदभावस्य दैशब्दनिष्ठैकारे वर्तमानस्य निषेधान्न दोष इति वाच्यम्, अस्याभावस्यानुबन्धप्रयोज्यत्वाभावेन तन्निषेधायोगात् । न च[1] दैबित्यत्रैकारनिष्ठस्य दैबिति समुदायान्त्यत्वाभावस्यानुबन्धकृतत्वात्तन्निषेधस्सम्भवतीति न दोष इति वाच्यम्, त्वदुक्तविग्रहे-एज्निष्ठं यदुपदिश्यमानसमुदायान्त्यत्वं तत्प्रतियोगिकाभावस्यैव निषेध्यत्वलाभेनास्याभावस्यातथात्वेन तन्निषेधासम्भवादिति चेत्, नः, "द्वन्द्वश्च प्राणि०" ( पा० सू० २।४।२ ) इत्यादि प्रकरणेनैकवद्भावमुखेन तत्प्रयोजकसमाहारस्यैवातिदेशवदत्राप्यनुबन्धकृतानेजन्तत्वस्य निषेधमुखेन तत्प्रयोजकीभूतानुबन्धस्यैवासत्त्वप्रतिपादनेनादोषात् ।

**ज्ञापक इति** । ननु मेङो ग्रहणे तस्य व्यतीहारार्थत्वाव्यभिचारेण व्यतीहार इति विशेषणं व्यर्थमिति चेत्, न; व्यतीहार इति विशेषणाभावे प्रसिद्धत्वान्माङ एव ग्रहणापत्तेः । सति तु तस्मिन्माङो व्यतीहारार्थत्वासम्भवेन मेङ एव ग्रहणं सेत्स्यति । न चोदीचामेङ इत्येव सूत्र्यतामिति वाच्यम्, तथा सति निर्देशस्य ज्ञापकत्वानापत्तेः । ( मम[2] तु परिभाषाज्ञापनार्थं कृतात्त्वनिर्देशस्यावश्यकत्वेन व्यतीहारग्रहणाभावे माङ एव प्रसिद्धत्वाद् ग्रहणं स्यात् । सति तु तस्मिन् तत्सामर्थ्यात्कृतात्त्वस्य मेङ एव ग्रहणं सिद्ध्यति । ) ।

ननु उपदेशे य एच् तदन्तस्य धातोरित्यर्थे ज्ञापितायामपि परिभाषायामनुबन्धलोपोत्तरमेव धातुसंज्ञाप्रवृत्त्या ङकारसत्तादशायामात्त्वाप्राप्त्या माङ इति निर्देशानुपपत्तिः, तथाऽदाबित्यत्र दैपो ग्रहणानापत्तिश्च, तदवयवस्यैवेत्यत आह— **निवृत्तेरिति** । ननु गणपठितस्य सानुबन्धकस्य मेङादेरनया परिभाषयोपदिश्यमानैजन्तत्वेनात्त्वसाधनेऽपि गणपठितशब्दबोध्यस्य निरनुबन्धकस्य व्यक्त्यन्तरस्यैजन्तत्वेऽप्यनुपदिश्यमानत्वादात्त्वानापत्तिरिति चेत्, न; अनुबन्धसत्तादशायामनया सानुबन्धकसमुदायघटक एजन्ते उपदिश्यमानैजन्तत्वस्य बोधनेन तद्बोध्ये एजन्तेऽपि सादृश्यमूलकतत्त्वप्रत्यभिज्ञया आत्त्वप्रवृत्तेस्सुकरत्वात् । एतदेवाभिप्रेत्य

---

२. 'न च' इत्यादितः 'तन्निषेधासम्भवात्' इत्येतत्पर्यन्तं क पु० नास्ति ।

१. 'मम तु' इत्यादितः 'सिद्ध्यति' इत्येतत्पर्यन्तं क० पु० नास्ति ।

**नन्वेवमपि 'वाऽसरूप' सूत्रेण कविषयेऽणोऽप्यापत्तिरित्यत आह—**

**नानुबन्धकृतमसारूप्यम् ॥ ८ ॥**

---

'धातुसंज्ञादिकार्यार्थं तावतोऽप्युपदेशे तात्पर्यात्' इति "आदेच उपदेशे०" (पा० सू० ६।१।४५)। इति सूत्रे शेखरे उक्तम्।

(सानुबन्धकस्य[1] बोधकत्वेनाद्योच्चारणप्रयोजकतात्पर्यविषयत्वरूपोपदिश्यमानत्ववन्निरनुबन्धके बोध्यत्वेन तादृशतात्पर्यविषयत्वाङ्गीकारेण तस्याप्युपदिश्यमानत्वेनादोष इत्याशयात्)।

नन्वेवमिरेप्रभृतिष्वात्वं दुर्वारम्, न चैकारोच्चारणं व्यर्थम्, तङादेशानां टेरेत्वं नेति ज्ञापनेन चारितार्थ्यादिति चेत्, न; संसर्गवद्[2] विप्रयोगस्यापि विशेषावगतिहेतुत्वेन शित्परत्वयोग्यस्यैव ग्रहणेनादोषात्। अत एव 'कखे हसने' इत्यादिष्वेदित्सु नात्त्वम्। नन्वेवमुपदेशे एच आत्त्वमित्येवास्तु, 'ढौकते' इत्यादौ शित्परत्वयोग्यताविरहादौकारोच्चारणसामर्थ्याच्च नात्त्वम्। एवञ्च दैप्शब्दघटकदैशब्दे शित्परत्वयोग्यतासम्भवादात्वं सुलभमिति परिभाषा व्यर्थैवेति चेत्, न; अत्रैवार्थे निर्देशस्य तात्पर्यस्वीकारेण परिभाषाया अर्थसिद्धत्वमित्याशयात्। तदेतदाह—**अन्यत्रेति** ॥ ७ ॥

**आपत्तिरिति।** ननु "वाऽसरूप०" (पा० सू० ३।१।९४) सूत्रे औपदेशिकसारूप्यग्रहणे उत्सर्गापवादानां सर्वेषां प्रत्ययानां मिथोऽसारूप्याव्यभिचारेणासरूपग्रहणव्यावृत्त्यलाभेन तत्सामर्थ्यात्प्रायोगिकासारूप्यस्यैव ग्रहीतुमौचित्येन काणोस्तदभावेन न समावेशप्रसङ्गः।

न च तत्पक्षेऽप्यसरूपग्रहणाभावे 'सतः पालकोऽवतरति' इत्यत्र "तुमुन्ण्वुलौ०" (पा० सू० ३।३।१०) इति ण्वुल्विषये "ण्वुल्तृचौ" (पा० सू० ३।१।१३३) इति ण्वुलपि स्यात्। तथा च "अकेनोर्भविष्यत्०" (पा० सू० २।३।७०) इति षष्ठीनिषेधाप्राप्त्या 'सतां पालक' इति षष्ठ्यपि स्यात्। अतस्तत्र तद्व्यावृत्त्यर्थमसरूपग्रहणमिति वाच्यम्, तत्र तृजभावसिद्धये 'तुमुन्ण्वुलौ०' पा० सू० ३।३।१०) इति सूत्रे पुनर्ण्वुल्ग्रहणेन क्रियार्थायां क्रियायामुपपदे वासरूपविधेरभावस्य मूल एव स्पष्टत्वेन तत्र रूपद्वयाप्राप्त्याऽसरूपग्रहणस्य तद्व्यावृत्त्यर्थत्वासम्भवात्। एतच्च "येन ना०" (परि० ५८) इति न्यायव्याख्यानावसरे स्फुटीभविष्यति। न च "इगुपध०" (पा० सू० ३।१।१३५)

---

१. कोष्ठान्तर्गतः पाठः क० पु० नास्ति।

२. संसर्गो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ (वा० प० का० २ श्लोक ३१५,३१६)

'ददातिदधात्योर्विभाषा' इति णबाधकशस्य विकल्पविधायकमस्यां

इति, "मूलविभुजादिभ्य०[१]" ( का० वा० ३।२।५ ) इति विहितयोः कप्रत्यययोः पचाद्यच्[२] "हरतेरनुद्यमनेऽच्" ( पा० सू० ३।२।९ ) इति विहिताचोश्च समावेशाभाव एव तत्फलम्, अन्यथा नित्याधिकारस्थोपपदसमास एवेति नियमा-भावात्, पक्षे 'मूलानां विभुजः' 'अंशस्य हरः' इति वाक्यमपि स्यादिति वाच्यम्, तथा सति "मूलविभुजा०" ( का० वा० ३।२।५ ) इति वार्तिकस्य "हरतेः०" ( पा० सू० ३।२।९ ) इति सूत्रस्य च वैय्यर्थ्यापत्त्या तत्सामर्थ्येनैव तद्विषये उत्सर्गभूताच्प्रत्यय-क-प्रत्यययोः समावेशाभावसिद्ध्या त्वदुक्तदोषस्य सूद्धरत्वात् ।

न च वार्तिकेन "हरतेः०" ( पा० सू० ३।२।९ ) इति सूत्रेण काचोः प्रवृत्तावुपपदसमासे "गतिकारक०" ( पा० सू० ६।२।१३९ ) इति स्वरः, षष्ठीसमासे तु अन्तोदात्तत्वमिति विशेष इति वाच्यम्, तत्रापि "थाथा०" ( पा० सू० ६।२।१४४ ) इति सूत्रेणान्तोदात्तस्यैव प्रवृत्त्या स्वरे विशेषस्य दुरुपपादत्वात् । न च कर्मण्यण्बाधनेन वार्तिकसूत्रयोश्चारितार्थ्यसम्भवेन सामर्थ्यविरहात् तद्विषये[३] उत्सर्गाप्रवृत्तिकल्पने न मानमिति तयोस्समावेशवा-रणेन वाक्यव्यावृत्त्यर्थमसरूपग्रहणं चरितार्थमिति वाच्यम्, असरूपग्रहणे कृतेऽपि 'गङ्गाधरः' इत्यत्रेव पूर्वमुपपदार्थान्वयाविवक्षायाम् "इगुपध०" ( पा० सू० ३।१।१३५ ) इति के पचादित्वादचि पश्चान्मूलशब्दांशशब्दयोरन्वयविवक्षायां षष्ठीसमासस्य दुर्वारत्वेन वाक्यव्यावृत्तेस्तत्फलत्वासम्भवात् ।

किञ्च त्वन्मते औपदेशिकासारूप्यग्रहणेन कृतेऽपि सूत्रे वार्तिके च वासरूप-विधिनाऽणो दुर्वारत्वेन सूत्रवार्तिकयोर्वैय्यर्थ्यस्य तादवस्थ्येन तत्सामर्थ्यात् स्वविषयेऽणोऽप्रवृत्तिवत् बाध्यसामान्यचिन्तयौत्सर्गिककाचोरप्यप्रवृत्त्याऽसरूप-ग्रहणवैय्यर्थ्यस्य सूपपादत्वादिति चेत्, न; प्रायोगिकासारूप्यविवक्षायां प्रत्यासत्त्या प्रायोगिकोत्सर्गप्रत्ययीयरूपापेक्षया प्रायोगिकविभिन्नरूपवतापवादप्रत्ययेनोत्सर्गस्य समावेशबोधनेन "इगुपध०" ( पा० सू० ३।१।१३५ ) इति कस्य क्विपश्च समावेशानापत्तेः ।

न चासारूप्यं किमपेक्षयेत्याकाङ्क्षायां स्वविषये नियमेनोपस्थितप्रत्ययस्य सम्भावितं यद् यद् रूपं प्रायोगिकमौपदेशिकं वा तत्तद्रूपापेक्षयेत्यर्थेनासरूपपदेन सारूप्याभाववतो विवक्षणेन वा प्रकृते न दोष इति वाच्यम्, तथा सति क्विन्क्विपोस्समावेशापत्त्या स्वरे भेदापत्तेरिति दिक् ।

---

१. 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' इति वार्तिकस्वरूपम् ।

२. 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' पा० सू० ३।१।१३४ ।

३. 'विरहादत्रविषये' इति पाठः क० पु० ।

**ज्ञापकम्, तेन 'गोदः' इत्यादौ नाणिति 'वाऽसरूप'सूत्रे भाष्ये स्पष्टम् ॥ ८ ॥**

**ननु संख्याग्रहणे बह्वादीनामेव ग्रहणं स्यात्, प्रकरणस्याभिधानियामकत्वसिद्धात् 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः' इति न्यायात् । अस्ति च प्रकृते बह्वादीनां सङ्ख्यासंज्ञा कृतेति ज्ञानरूपं प्रकरणम्, न तु लोकप्रसिद्धैकद्व्यादीनामित्यत आह—**

**उभयगतिरिह भवति ॥ ९ ॥**

---

**ज्ञापकमिति ।** ननु ज्ञापितेऽपि स्वस्मिन् चारितार्थ्यासम्भवः, शादेर्वाक्यार्थबोधोत्तरमेव प्रत्ययत्वज्ञानेन वाक्यार्थबोधरूपतत्प्रवृत्तिकाले इत्त्वाभावेनानुबन्धत्वाग्रहादेतत्परिभाषाया अप्राप्त्या विकल्पस्य दुर्वारत्वादिति चेत्, न; इत्संज्ञायोग्यतावत्त्वस्यैवानुबन्धत्वेनेत्संज्ञाविधौ प्रत्ययपदस्य प्रत्ययत्वयोग्यबोधके लक्षणया वैतत्परिभाषाप्रवृत्तेः सुकरत्वात् । अत एव विभाषा ग्रहणं चरितार्थम् । ननु क्विन्ण्वुलोस्समावेशानापत्तिः "वेरपृक्तस्य"[1] ( पा० सू० ६।१।६७ ) इति सूत्रे अपृक्तग्रहणेन "युवोरनाकौ" (पा० सू० ७।१।१) इति सूत्रे व्यञ्जनस्यैव निर्देशेन व्यञ्जनमात्रस्योभयत्रादेशप्रवृत्त्योभयोस्सारूप्यात् ।

न च व्यञ्जनमात्रनिर्देशे विजादावप्यकादेशापत्तिः, तत्र वेरपृक्तलोपेन बाधादिति चेत्, न; ण्वुल्युकारस्याननुबन्धत्वेनोकारविशिष्टस्यैव स्थानित्वाङ्गीकारात् । य्वोरिति[2] तु स्तोरितिवत् सौत्रं पुंस्त्वम् । नन्वेवमपि 'गोदः' इत्यत्राणापत्तिर्दुर्वारा, न च तयोरुक्तरीत्या नासारूप्यमिति वाच्यम्, ण्वुलपेक्षयाऽसारूप्यमादाय कविधौ वेत्यस्योपस्थित्या तदेकवाक्यतयानुपसर्गे सुप्युपपदे आदन्ताद्धातोः[3] क-प्रत्ययो वा भवतीत्येवं विकल्पनेनैव कप्रत्ययप्रवृत्त्या तदभावे ण्वुल इवाणोऽपि दुर्वारत्वादिति चेत्, मैवम्; असरूपग्रहणसामर्थ्येन प्रत्यासत्त्या यं प्रत्यसरूपता तस्मिन् चिकीर्षिते तद् वा भवतीत्यर्थेन तद्विषये विकल्पबोधनेऽप्यन्यविषये विकल्पायोगात् ॥ ८ ॥

**प्रकरणस्येति ।** यथा भोजनकाले सैन्धवमानयेत्युक्तौ भोजनलवणयोरुपकार्योपकारकत्वज्ञानमूलकवक्तृबुद्धिस्थत्वरूपप्रकरणज्ञानात्[4] वक्तृतात्पर्यनिश्चयस्तद्वत् संज्ञाकरणस्य प्रादेशिककार्यार्थित्वेन बह्वादीनां संज्ञाकरणं संज्ञाप्रदेशेषूपस्थित्यर्थमिति ज्ञानरूपप्रकरणस्येत्यर्थः । **अभिधानियामकत्वसिद्धादिति ।** अभिधायाश्शक्तेर्नियामकत्वं सङ्कोचकत्वम्, यद्यपि शक्तेर्निरवयवतया तदसम्भवः, तथापि तदितरस्मिन् तात्पर्यविरह एव तदिति बोध्यम् । तत्सिद्धान्तमूलकादिति यावत् ।

---

१. 'वेरपृक्तस्येतिसूत्रे' इति नास्ति क० पु० ।　　२. 'युवोरिति' इति पाठः क० पु० ।

३. 'आदन्तधातोः' इति क० पु० पाठः ।

४. 'बुद्धिस्थरूपप्रकरणज्ञानात्' इति क० पु० पाठः ।

**इह=शास्त्रे। 'सङ्ख्याया अतिशदन्तायाः' इति निषेधोऽस्या ज्ञापकः। न हि कृत्रिमा सङ्ख्या त्यन्ता शदन्ता वाऽस्ति, तेन 'कर्त्तरि कर्मव्यतिहारे' 'कण्वमेघेभ्यः करणे' 'विप्रतिषिद्धं चानधिकरणे' इत्यादौ लौकिकक्रियाद्रव्याद्यवगतिः। तत्र क्वोभयगतिः, क्वाकृत्रिमस्यैव, क्व कृत्रिमस्यैवेत्यत्र लक्ष्यानुसारिव्याख्यानमेव शरणम्। अत एव आम्रेडितशब्देन कृत्रिमस्यैव ग्रहणं न तु द्विस्त्रिर्धुष्टमात्रस्य। स्पष्टञ्चेदं सङ्ख्यासंज्ञासूत्रे भाष्ये।**

---

यथा लोके गोपालकमानयेत्युक्ते प्रकरणज्ञस्य कृत्रिम एव सम्प्रत्ययः, अप्रकरणज्ञस्य त्वकृत्रिमे, एवमिहापि शास्त्रीयसंज्ञायाः प्रदेशे तत्तदर्थोपस्थित्यर्थत्वेन तदुपकारकत्वज्ञानमूलकवक्तृबुद्धिस्थत्वरूपप्रकरणज्ञानवतः अन्यग्रहणशङ्का नास्तीति भावः। अत एव भाष्येऽर्थात्प्रकरणाद्वा 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः' इत्युक्तम्[१]। **उभयगतिरिति**। उभयोः कृत्रिमाकृत्रिमयोर्विषयभेदेनैकत्र विषये च गतिर्ग्रहणं क्वचित् कृत्रिमस्यैव, क्वचिदकृत्रिमस्यैव, क्वचिदुभयोश्चेति भावः।

**त्यन्तेति**। न च त्यन्तस्य कतिशब्दस्य सम्भवेन कथमिदं ज्ञापकम्, पर्युदासवाक्येऽर्थवत एव 'ति' शब्दस्य ग्रहणात्तत्र तदप्राप्तेः। न चास्यां दशायां सङ्ख्याप्रदेशे कृत्रिमस्यैव प्रकरणादिनोपस्थित्या तत्रार्थवत्तिशब्दान्ते[२] प्रतियोगिप्रसक्तेरसम्भवात् पर्युदासवाक्येऽर्थवद्ग्रहणपरिभाषा न प्रवर्तत इति वाच्यम्, कृत्रिमे कार्यसंप्रत्यय इति न्यायेन विधिवाक्ये कृत्रिमस्यैवोपस्थितिवत् पर्युदासवाक्येऽर्थवत्परिभाषयार्थवत एव 'ति' शब्दस्योपस्थित्या तदन्तस्य कृत्रिमस्यासम्भवेन तस्य तज्ज्ञापकत्वमित्याशयात्।

ननु पर्युदाससामर्थ्यादिकल्पनापेक्षयार्थवत्परिभाषाबाधकल्पनमेवोचितम्[३]। किञ्च विंशतिशब्दे[४] विंशादेशस्तिप्रत्यय इति पक्षे तत्सम्भवेऽपि विन्नादेशश्शतिप्रत्यय इति पक्षेऽर्थवदनर्थकयोरुभयोरसम्भवेन तत्परिभाषाया अप्राप्त्या कतिशब्दे तस्य चारितार्थ्यसम्भव इत्यरुचेराह-**शदन्ता वेति**। **लौकिकक्रियेति**। न तु पारिभाषिकस्येत्यर्थः। तेन देवदत्तस्य धान्यं व्यतिलुनन्तीत्यत्र नेत्याहुः। तत्र-शास्त्रे। **शरणमिति**। लक्ष्यार्थत्वाच्छास्त्रस्येति भावः :

---

१. 'बहुगणवतुडति संख्या' पा० सू० १।१।२३ इति भाष्ये इत्यर्थः।

२. 'शब्दान्त' इति क० पु० पाठः।

३. 'सामर्थ्येनासञ्जातविरोधिन्यायेन परिभाषाबाधकल्पनमेवोचितम्' इति क पु० पाठः।

४. 'शति' इत्यधिकः क० पु० पाठः।

**यत्तु—संज्ञाशास्त्राणां मच्छास्त्रेऽनेन शब्देनेत एवेति नियमार्थत्वं कृत्रिमाकृत्रिमन्यायबीजमिति। तन्न; तेषामगृहीतशक्तिग्राहकत्वेन विधित्वे सम्भवति, नियमत्वायोगात्। 'सर्वे सर्वार्थवाचकाः' इत्यभ्युपगमोऽपि योगिदृष्ट्या, नत्व-**

---

**नियमार्थत्वमिति**। ननु पदपदार्थयोस्सङ्गतिः सङ्केतः, स च द्विविधः, नित्यो जन्यश्च। तत्राद्य ऐश्वरः, द्वितीयः पुरुषप्रयत्नकृतः। तत्रेश्वरसङ्केतिताज्जात्यादिप्रवृत्तिनिमित्तकगवादिपदादिव पाणिनिपित्रादिसङ्केतिताद् गुणचैत्रादिपदाददेङाद्यर्थविशेषस्योपस्थितिः, नत्वसङ्केतिताद् वटादिपदात्पटाद्यर्थविशेषस्येति सङ्केतबोधनार्थं संज्ञाशास्त्रस्यावश्यकतया कथं तस्य नियमार्थत्वमिति चेदत्राहुः— "सिद्धे शब्दार्थसम्बन्धे" इति वार्तिकतद्भाष्यप्रामाण्येन—

> इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
> अनादिरर्थैश्शब्दानां सम्बन्धो योग्यता तथा[1] ॥ १ ॥

इत्यभियुक्तवचनेन सर्वेष्वपि शब्देषु बोधकारणत्वरूपशक्तेरनादित्वावगमेन शब्दनिष्ठशक्तेर्जन्यतानङ्गीकारात्। अत एव "औत्पत्तिकस्तु[2] शब्दस्यार्थेन सम्बन्धः" इति जैमिनीसूत्रं सङ्गच्छते। न च गुणचैत्रादिपदेष्वन्वयव्यतिरेकाभ्यामाधुनिकसङ्केतस्यैव बोधे कारणत्वावगमेनोक्तभाष्यादेर्लोकप्रसिद्धजात्यादिशब्दमात्रपरतयाप्युपपत्तिसम्भवेन संज्ञाशब्देष्वपि नित्यत्वकल्पने न मानमिति वाच्यम्, आदैच्छब्दे[3] कुत्वाद्यापादनपरभाष्यकैय्यटादिप्रामाण्येन—

> व्यवहाराय नियमस्संज्ञानां संज्ञिनि क्वचित्।
> नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥ १ ॥
>
> बृद्ध्यादीनां च शास्त्रेऽस्मिन् शक्त्यवच्छेदलक्षणः।
> अकृत्रिमोऽभिसम्बन्धो विशेषणविशेष्यवत्[4] ॥ २ ॥

इत्यभियुक्तोक्त्या च गवादिशब्दवच्चैत्रादिशब्दानां तन्निष्ठायाश्शक्तेश्चानादित्वाभ्युपगमात्। न चैवं गवादिशब्दवत् सङ्केतकरणानपेक्षयैव बोधे सिद्धे सङ्केतकरणं व्यर्थमिति वाच्यम्, स्वतात्पर्यविषयीभूतार्थविशेषग्राहकतया श्रोतृबुद्धिनियमार्थं तस्यावश्यकत्वात्। न च सङ्केतकरणात्प्रागपि ततस्तस्य बोधापत्ति-

---

१. वा० प० का० ३ सम्बन्धसमुद्देशः श्लो० २९।

२. 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात्' इति सूत्रं सङ्गच्छते इत्यर्थः। जै० मी० सू० पा० १।१।५।

३. "बृद्धिरादैच्" पा० सू० १।१।१ इति सूत्रे इत्यर्थः।

४. वा० प० का० २ श्लो० ३६४, ३६५।

**स्मद्दृष्ट्या, विशिष्य सर्वशब्दार्थज्ञानस्याशक्यत्वात् ।**

---

रिति वाच्यम्, शब्दनिष्ठायाश्शक्तेरनादित्वेऽपि बह्निनिष्ठदाहानुकूलशक्तिवत् स्वरूपशक्त्याः कारणत्वाभावेन ज्ञाताया एव तस्याः कारणत्वात् ।

न च तज्ज्ञानार्थमेव सूत्रमावश्यकमिति कथं तस्य नियमार्थत्वमिति वाच्यम्, सति सङ्केते सर्वस्मादपि पदात्सवार्थबोधदर्शनेन सर्वेष्वपि शब्देषु सर्वार्थबोधजननयोग्यतारूपाया अप्रसिद्धायाश्शक्तेरनुमानेन तज्ज्ञानसम्भवात् । अन्यथा सत्यपि सङ्केते स्वरूपायोग्यस्य सहकारशतेनापि कार्याजननात्फलोपधानासम्भवेन तदसङ्गतिः ।

न चैवं घटादिपदाद्घटादेरिव चैत्राद्यर्थविशेषस्याप्युपस्थित्या सैन्धवादिपदादिव सन्देहः स्यादिति पूर्वोक्तदोषस्तदवस्थ[1] इति वाच्यम्, अरण्यस्थदण्डस्य कारणातावच्छेदकधर्मवत्त्वरूपयोग्यताश्रयत्वेऽपि सहकार्यन्तरविरहेण कार्यानुत्पत्तिवदत्रापि तात्पर्यग्राहकसङ्केतादिरूपसहकार्यन्तरविरहेणैवाप्रसिद्धशक्तेरनुद्बोधेन घटादिपदाच्चैत्राद्यर्थविशेषबोधासम्भवेनादोषात् । तात्पर्यग्राहकसहकार्यन्तरसत्त्वे त्वन्यमते लक्षणया तेन तदुपस्थितिः, अस्मन्मते तु शक्त्येत्यन्यदेतत् । एवञ्चोक्तानुमानमूलकेन 'सर्वे सर्वार्थवाचकाः' इत्यभियुक्तोक्तेन वचनेन सर्वेष्वपि शब्देषु सर्वार्थविषयकशक्तिग्रहेण गुणचैत्रादिपदाददेङाद्यर्थविशेषोपस्थितिसम्भवेन संज्ञासूत्रं नियमार्थमेवेति भावः ।

न चैवं कोशादीनां वैय्यर्थ्यम्, तेषां प्रसिद्धयप्रसिद्धिविभागार्थत्वेन तदसम्भवात् । न च शक्तिग्रहोपस्थित्योस्समानप्रकारकत्वनियमेन शक्त्यावच्छेदकविशेषपुरस्कारेणार्थविशेषोपस्थितेर्दुर्लभत्वात्, तदर्थं संज्ञाप्रणयनमावश्यकमिति वाच्यम्, प्रकरणादिना ब्राह्मणपदेन सामान्यरूपेण विशेषव्यक्त्युपस्थितिवत्संज्ञाशास्त्रस्य प्रकरणग्राहकत्वेन गुणादिपदेनाप्यर्थवत्वेनैवादेङाद्यर्थविशेषोपस्थितावपीष्टसिद्धयाऽदोषात् ।

**अशक्यत्वादिति** । न च 'सर्वं प्रमेयं, सर्वं विष्णुमयं जगत्' इति वाक्येन पदार्थतावच्छेकावच्छेदेन प्रमेयत्वविष्णुमयत्वयोर्ग्रहवद् बुद्धिस्थानेकावयवारब्धसमुदायशक्तसर्वपदघटितेनोक्तानुमानमूलकेन ''सर्वे सर्वार्थवाचकाः'' इत्यभियुक्तोक्तवचनेन तत्तत्पुरुषबुद्धिविषयीकृतघटादिशब्दसमुदायस्येव गुणचैत्रादिपदस्यापि तत्तद्बुद्धिविषयीकृतघटत्वादिरूपधर्मावच्छिन्नार्थकसमुदाय इवादेङाद्यर्थविशेषेऽपि तदादिपदानामिव शक्तिग्रहसम्भवेन तेनैव गुणचैत्रादिपदाददेङाद्यर्थविशेषोपस्थित्या संज्ञाप्रणयनं व्यर्थमेवेति वाच्यम् । लोकप्रसिद्धेष्वपि शब्देषु-अर्थेषु च कतिपयानां शब्दानामर्थानामेव तत्तत्पुरुषबुद्धिगोचरतया टिघुभादिशब्दानां तत्तदुद्देश्यतावच्छेदकी-

---

१. 'पूर्वोक्तदोषस्तदवस्थ' इति नास्ति क० पु ।

**सामान्यज्ञानं तु न बोधोपयोगीत्यन्यत्र निरूपितम् ॥ ९ ॥**

**ननु 'अध्येता' 'शयिता' इत्यादाविङ्शोर्ङित्त्वाद् गुणनिषेधः स्यादत आह—**

**कार्यमनुभवन् हि कार्यो निमित्ततया नाश्रीयते ॥ १० ॥**

---

भूतधर्मविशेषपुरस्कारेण तत्तदर्थानां चाप्रसिद्धत्वेन संज्ञाशास्त्रार्थज्ञानात्पूर्वमुपस्थापकसामग्र्यभावेन बुद्ध्यगोचरतया बुद्धिगोचरीभूतशब्दार्थविषयकसङ्गतिग्राहकेण 'सर्वे सर्वार्थवाचकाः' इति वचनेन विशिष्याप्रसिद्धशब्दार्थविषयकशक्तिग्रहस्य दुरुपपादतयाऽप्रसिद्धटिघुभादिपदेभ्यः सैन्धवादिपदादिवद् द्वयोरर्थयोर्युगपदनुपस्थित्या नियमासम्भवेनाप्रसिद्धतत्तद्धर्मावच्छिन्ने शक्तिग्राहकतया टिघुभादिघटितप्रदेशेऽप्रसिद्धतत्तद्धर्मावच्छिन्नोद्देश्यत्वादिबोधनार्थं वचनस्य चारितार्थ्यसम्भवेन स्वार्थबोधे नैरर्थक्यशङ्काया अनुदयेन तन्मूलकस्य नियामकत्वस्याप्यसम्भवेन तद्विषये विधित्वमेव युक्तमिति भावः ।

**न बोधोपयोगीति ।** शब्दत्वेनार्थवत्त्वेन वाच्यवाचकभावज्ञानं[1] विशिष्य घटादिप्रवृत्त्यौपयिकबोधजनकघटमानयेति वाक्यवद्[2] बोधोपयोगी नेत्यर्थः । **निरूपितमिति ।** उभयगतिस्थले संज्ञाप्रणयनस्य नियमार्थत्वासम्भवात् । सर्वत्र संज्ञाशास्त्रे ऐकरूप्यायोगात्तत्तद्वैय्यर्थ्यस्य दुर्वारतया विधित्वमेव युक्तमिति भावः ॥ ९ ॥

**स्यादिति ।** "क्क्ङिति च" ( पा० सू० १।१।५ ) इत्यत्र नौपश्लेषिकी सप्तमी । अत्रेक इत्यस्यार्थाधिकाराच्छब्दपरत्वेन गुणवृद्ध्योर्निषेध्यत्वेन लक्ष्येऽनभिनिर्वृत्त्याऽभावस्यामूर्त्तत्वेन सूत्रघटकपदार्थेन क्ङितो रूपश्लेषासम्भवात् । ननु क्ङिदव्यवहितोपश्लिष्टस्य पूर्वस्य ये गुणवृद्धी प्राप्नुतस्ते न भवत इत्यर्थादौपश्लेषिकसप्तम्यपि युक्ता । न चैवम् 'भिन्नम्' इत्यत्र निषेधानापत्तिः, तत्रापि गुणस्य पूर्वोपश्लिष्टभिद्सम्बन्धितया निषेधोपपत्तेः ।

न च 'भवतः' इत्यादौ दोषापत्तिः, पूर्वोद्देश्यकगुणस्यैव निषेधेनादोषादिति चेत्, न; सूत्रघटकीभूतपदार्थेन केनाप्युपश्लेषासम्भवेनौपश्लेषिकसप्तमीत्वानिश्चयेन तन्निश्चयात्पूर्वं निर्दिष्टे पूर्वस्येत्यस्योपस्थित्यसम्भवेनोपस्थितस्यापि तस्योद्देश्यविशेषणतया स्वातन्त्र्येणोद्देश्यसमर्पकत्वाऽभावेन क्ङिदव्यवहितोपश्लिष्टस्य पूर्वस्य ये गुणवृद्धी इत्यर्थस्य दुर्वचत्वात् । तस्मात् क्ङितीति सत्सप्तमी । सा च ज्ञापकत्वार्थिका । क्ङितो ज्ञापकत्वञ्च गुणादिविधिवाक्यस्थौपश्लेषिकसप्तम्यन्तादिपदार्थतया । अन्यथा तयोस्सम्बन्धज्ञानाभावेन ज्ञापकत्वस्यैव भङ्गापत्तेः ।

---

१. 'घटत्वावच्छिन्ने घटपदवाच्यत्वज्ञानवत्' इत्यधिकः पाठः क० पु० ।

२. 'बोधजनकघटमानयेति वाक्यवत्' इति नास्ति क० पु० ।

तथा च क्ङिज्ज्ञाप्ये ये इग्लक्षणे गुणवृद्धी ते न भवत इत्यर्थः। उक्तज्ञापकत्वं सप्तम्यन्तार्थं इव तत्तद्विधिवाक्यस्थषष्ठयन्तपदबोध्येऽप्यक्षतमिति 'शयिता'[1] इत्यादौ दोषस्स्यादिति भावः। अत एव "सन्यङोः" (पा० सू० ६।१।९) इत्यस्य षष्ठ्यन्तत्वपक्षे यस्यापि द्विर्वचनं यस्मिन्नपि द्विर्वचनं स सर्वोऽपि द्विर्वचनस्य निमित्तमित्युक्तं भाष्ये।

केचित्तु क्ङितीत्यौपश्लेषिक[2] सप्तमी। क्ङिति[3] परे गुणवृद्धी न भवत इत्युक्ते कस्येत्याकाङ्क्षायां यस्य गुणवृद्धी प्राप्नुतस्तस्य न भवत इति गम्यते[4]। यद्वा[5] पूर्वसूत्रात्[6] धातुग्रहणमनुवर्तते[7]। न चैवम्[8] 'चिनुतः' इत्यादौ निषेधानापत्तिः, धातोर्विहिते क्ङिति परतो यस्य वृद्धिगुणौ प्राप्नुतस्तस्य नेत्यर्थेनादोषात्। यद्वा अवसानकार्याणामिवाभावेनापि बुद्धिकृतपौर्वापर्याश्रयणात् क्ङिदुपश्लिष्ट-स्तदव्यवहितपूर्वो गुणाभाव इति सूत्रार्थः।

नन्वेवम् 'भिन्नम्' इत्यादौ निषेधानापत्तिः, 'चितम्' इत्यादौ सूत्रस्य चारितार्थ्यात्। न च क्नोः कित्करणाज्ज्ञापकाद् व्यञ्जनव्यवधानेऽपि तत्प्रवृत्तिः, कित्कार्याभावेन काम्यचीव ककारस्य श्रवणार्थत्वसम्भवेन तस्य कित्त्वे मानाभावात्। किञ्च "नन्वोर्विभाषा" ( पा० सू० ३।२।१२१ ) इत्यत्र प्रत्ययाप्रत्यययो-रिति परिभाषया चादिपठितनुशब्दग्रहणानापत्तिः, अस्यैव ग्रहणापत्तिश्चेति तद्वारणाय निरनुबन्धकपरिभाषाप्रवृत्तये ककारानुबन्धस्य चारितार्थ्येन सामर्थ्या-सम्भवात्।

न चैवम् "हलन्ताच्च" (पा० सू० १।२।१०) इति कित्त्वविधानं ज्ञापकम्। तद्धि 'बिभित्सति' इत्यादौ गुणाभावाय। यदि व्यवहिते गुणो[9] न स्यात्तर्हि कित्त्व-विधानमनर्थकं स्यादिति वाच्यम् 'धिप्सति', 'सिसृक्षति' इत्यादौ नलोपस्यामभावस्य च सम्पादनेन तस्य चारितार्थ्यादिति चेत्, न; "ढ्रलोप०" ( पा० सू० ६।३।१११ ) सूत्रस्थाण्ग्रहणस्य ज्ञापकत्वसम्भवात्। तद्धि 'तृढः' इत्यादौ दीर्घाभावाय। यदि व्यवहिते गुणवृद्धिनिषेधो न स्यात्तर्हि गुणादेः प्रवृत्त्या ऋकारस्यैवाभावेनाण्ग्रहणं व्यर्थं स्यादिति व्यञ्जनव्यवधानेऽपि निषेधप्रवृत्तौ ज्ञापकम्।

---

१. 'शयितरीत्यादौ' इति पाठः क० पु०। २. 'औपश्लेषिकी' इति पाठः क० पु०।
३ 'क्ङिति परे' इत्यादितः 'गम्यते' इत्येतत्पर्यन्तं क० पु० नास्ति।
४. 'न घ्वावेत्शेते-इत्यत्र वाक्यसंस्कारपक्षे निषेधापत्तिः' इत्यधिकः पाठः क० पु०।
५. 'यद्वा' इति क पु० नास्ति।
६. 'न धातुलोप आर्धधातुके' ( पा० सू० १।१।४ ) इति सूत्रादित्यर्थः।
७. 'अनुवर्त्य' इति पाठः क० पु०।
८. 'न चैवम्' इत्यादितः 'यद्वा' इत्येतत्पर्यन्तं नास्ति क० पु०।
९. 'निषेधो' इति पाठः क० पु०।

**'स्थण्डिलाच्छयितरि' इति निर्देशश्चास्यां ज्ञापकः ।**

---

न चैवम् 'तन्निमित्तग्रहणं कर्तव्यम्' इति वार्तिकमते 'अगोषीत्' 'गोता' इत्यादौ कुटादित्वेन सिचस्तासेश्च ङित्त्वेऽपि गुणस्य तन्निमित्तत्वाभावान्निषेधो न प्रवर्तते । परसप्तमीपक्षे त्वत्रापि निषेधापत्तिरिति वाच्यम्[1], मूलकृता माधवादिभिश्च गुणरहितस्यैवोदाहृतत्वेन तत्र निषेधप्रवृत्तेरिष्टत्वात्[2] । 'विकरणेभ्यो नियमो बलीयान्' ( परि० ४२ ) इति पूर्वं तिपि ङित्त्वेनादोषाच्च । 'पिच्च ङिन्न' इत्यस्य तु नायं विषयः । तेन स्थानिवद्भावप्राप्तङित्त्वस्यैव बाधनात् । अत एव यासुटो ङित्त्वस्य पित्त्वेन न बाधः इत्याहुः[3] ।

वस्तुतस्तु—'अकार्ष्टाम्' इत्यादौ व्यञ्जनव्यवधानेऽपि "क्ङिति च" ( पा० सू० १।१।५ ) इत्यस्य प्रवृत्त्या सिचि वृद्धेरपि निषेधापत्त्या सत्सप्तमीपक्ष एव युक्तः । क्नोः कित्करणादिकमप्यत्रैव ज्ञापकमिति वक्तुं युक्तम् ।

ननु 'ऊर्णुनविषति' इत्यत्र तद्भावभाविताामात्रेणेसो द्वित्वनिमित्तत्ववत्[4] 'अकार्ष्टाम्' इत्यादावपि[5] तामो वृद्धिनिमित्तत्वापत्त्यात्रापि वृद्धेः[6] क्ङिन्निमित्तकत्वात् "क्ङिति च" ( पा० सू० १।१।५ ) इत्यत्र सत्सप्तमीपक्षे वृद्धिनिषेधो दुर्वार इति चेत्, न; "द्विर्वचनेऽचि[7]" (पा० सू० १।१।५९) सूत्रेऽगत्या तद्भावभाविता-मात्रेण निमित्तत्वस्वीकारेऽपि "क्ङिति च" ( पा० सू० १।१।५ ) इत्यत्रापि तादृशनिमित्तत्वग्रहणे[8] मानाभावात् । अन्ये तु यत्रेक इति गुणवृद्धी विधीयेते तत्र क्ङिति नेत्युपतिष्ठते इति परिभाषात्वावगमे परसप्तमीपक्षेऽपि न दोष इत्याहुः ।

**ज्ञापक इति ।** यद्यप्यङ्गान्त्यस्य गुणो भवतीत्युक्त्वोद्देश्यतासम्बन्धेन कार्यविशिष्टत्वरूपं कार्यित्वमीकारस्यैवेति समुदायस्य निमित्तत्वमक्षतम्, तथापि

---

१. 'रोरवीतीत्यत्रान्तरङ्गे क्ङिति चेति निषेधे बहिरङ्गस्य गुणस्यासिद्धत्वात् निषेधाप्रवृत्तिरिति भाष्योक्तरीत्यात्रापि गुणस्यासिद्धत्वात्-निषेधाप्रवृत्त्यादोषात् । वस्तुतस्तु' इत्यधिकः पाठः क० पु० ।

२. 'बहिरङ्गपरिभाषाऽनित्यत्वान्न प्रवर्तते' इत्यधिकः पाठः क० पु० ।

३. 'हलःश्नः शानज्झौ' ( पा० सू० ३।१।६३ ) इति सूत्रे भाष्ये इत्यर्थः ।

४. 'ननूर्णुनविषति' इत्यादितः 'निमित्तत्ववत्' इत्येतत्पर्यन्तं क० पु० नास्ति । 'ननु सिचिवृद्धिरित्यत्र परस्मैपदग्रहणात्' इति पाठः क० पु० वर्तते ।

५. 'अपि' इति क० पु० नास्ति ।

६. 'वृद्धः' इत्यादितः 'सप्तमीपक्षे' इत्येतत्पर्यन्तं क० पु० नास्ति ।

७. 'द्विर्वचनेऽचि' इत्यादितः 'निमित्तत्वग्रहणे' इत्येतत्पर्यन्तं क० पु० नास्ति ।

८. 'निमित्तविशेषणस्यापि निमित्तत्वस्वीकारे' इत्यधिकः पाठः क० पु ।

**'ऊर्णुनविषति' इत्यादिसिद्धये कार्यमनुभवन्निति । अत्र हि 'द्विर्वचनेऽचि'**

---

धर्मिग्राहकमानबलेनोद्देश्यतासम्बन्धेन कार्यविशिष्टस्येवोद्देश्यघटितत्वसम्बन्धेन कार्यविशिष्टस्यापि कार्यित्वस्वीकारान्न दोष इति भावः ।

ननु–एवम् 'ऊर्णुनविषति' इत्यत्र सन्नन्तस्यापि निरुक्तकार्यित्वात् सौत्रपदार्थत्वेन तत्र समुदाये प्राप्तप्रयोजकत्वरूपनिमित्तत्वस्यानया निषेधे समुदायेऽसामर्थ्य-प्रतिपादनेऽवयवे तदभाववत् तद्घटकेऽपि निमित्तत्वस्य वक्तुमशक्यत्वात्, "द्विर्वचनेऽचि" ( पा० सू० १।१।५९ ) इति निषेधानापत्तिरत आह—**'ऊर्णुनविषतीति**। न चोद्देश्यघटितसमुदायस्यानिमित्तत्वेऽपि तद्घटकेकारमात्रे निमित्तत्वम-क्षतमेवेति वाच्यम्, इकारस्य द्विर्वचनविधौ साक्षादनुपात्तत्वेन निमित्तघटकत्वेनैव निमित्तत्वस्य वक्तव्यतयेदृशे विषये समुदाये निमित्तत्वमन्तराऽवयवे निमित्तत्वस्य वक्तुमशक्यत्वात् ।

**सिद्धये इति**। कार्यानुभवत्वञ्च शब्दस्य कार्यसम्बन्ध एव, स च पूर्वोक्त एव । तथा च कार्योद्देश्यस्येव तद्घटितस्य च निमित्तत्वं न । तेनोद्देश्याघटितस्य प्रत्ययमात्रस्य सूत्रघटितपदार्थत्वेन प्राप्तं प्रयोजकत्वरूपं निमित्तत्वमक्षतमेवेति न दोषः[१] । 'अरिरिषति' इत्यत्र प्रत्ययावयवस्यैवोद्देश्यतया तद्घटितत्वेन प्रत्ययस्यैव कार्यित्वात्तस्य निमित्तत्वासम्भवात्, तद्द्वारावयव इकारेऽपि निमित्तत्वासम्भवात्, "द्विर्वचनेऽचि" ( पा० सू० १।१।५९ ) इत्यस्याप्रवृत्त्या न दोषः ।

न च "द्विर्वचनेऽचि" ( पा० सू० १।१।५९ ) इति सूत्रेऽचि किम् 'जेघ्रीयते' 'देध्मीयते' इति भाष्योक्तप्रत्युदाहरणासङ्गतिः । प्रत्ययावयवस्य कार्यित्वेन प्रत्ययस्य यङो द्वित्वनिमित्तत्वासम्भवादिति वाच्यम्, अत्र 'घ्राय्' इति समुदाय-स्यैवोद्देश्यतया तद्घटितस्य[२] प्रकृतिप्रत्ययसमुदायस्यैव[३] कार्यित्वेन तस्य निमित्तत्वासम्भवेऽपि केवलस्य यङो द्वित्वनिमित्तत्वस्वीकारे बाधकाभावात् ।

तथा च कार्यमनुभवन् इति विशेषणम्, यस्य साक्षादुद्देश्यता तस्य तद्घटितसमुदायस्य च प्राप्तप्रयोजकत्वरूपनिमित्तत्वस्यानया[४] निषेधवत् तद्घटके प्राप्तप्रयोजकत्वरूपनिमित्तत्वस्य निषेधाभावाय । एतेनेयं परिभाषा "द्विर्वचनेऽचि" ( पा० सू०१।१।५९ ) इति सूत्रभाष्यविरुद्धेति अपास्तम्[५] ।

---

१. 'वस्तुतः अर्थवत्यैव स्थान्यादेशभावेन समुदायस्यैव कार्यंतेति न दोषः' इत्यधिकः पाठः क० पु० ।

२. 'अर्थवतः' इत्यधिकः पाठः क० पु० । ३. 'समुदायस्य च' इति पाठः क० पु० ।

४. 'प्राप्तप्रयोजकत्वरूपनिमित्तत्वस्यानया' इति क० पु० नास्ति ।

५. 'वस्तुतस्तु स्वरान्तरे व्यञ्जनान्युत्तरस्य' इति भाष्यानुसारेण दत्तमिति न तदविरोध इति बोध्यम्' इत्यधिकः पाठः क० पु० ।

इति नु शब्दस्य द्वित्वम्, अन्यथा 'सन्यङोः' इत्यस्य षष्ठ्यन्तत्वात्सन्नन्तस्य

---

परिभाषार्थस्तु—यत्कार्यं प्रति यः निरुक्तकार्यी स तत्प्रति निमित्तं न भवतीति। ( कार्यी[1] किञ्चिन्निष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकावच्छिन्नः कार्यिघटितो वा स तत् प्रति निमित्तं न भवतीति )।

'ननु ऊवतुः'[2] इत्यादौ वेञ्धातोरतुसि[3]–आत्वे वा अतुसित्यत्र "वचिस्वपि०" (पा० सू० ६।१।१५) इति सम्प्रसारणे प्राप्तपूर्वरूपस्य निषेधाभावाय द्वित्वनिमित्तेऽचि तन्निमित्तकस्यैवाजादेशस्य तेन निषेध इति सिद्धान्तः[4]। एवञ्च 'पपौ' 'तस्थौ' इत्यादौ–औकारस्य कार्यित्वेनानया निमित्तत्वासम्भवादेकादेशस्य द्वित्वात्पूर्वं प्राप्तस्यानेन निषेधासम्भव इति चेत्, न; सूत्रे द्वन्द्वनिर्देशेन साहित्यावच्छिन्नपूर्वपरसमुदायस्यैव कार्यित्वप्रतीत्या कार्यिणस्तद्घटितस्य चानया निमित्तत्वाभावबोधनेऽपि कार्याधिकरणसमुदायावयवस्य सप्तम्यन्तपदार्थतया प्राप्तनिमित्तत्वस्य बाधासम्भवात्।

किञ्च 'पच्यते तण्डुलः'[5] इत्यादौ—एकनिष्ठैकक्रियाया एव कर्तृत्वकर्मत्वाद्युपाधिभेदेन भेदमारोप्य भेदघटिततुल्यत्वव्यवहारवदत्रापि पूर्वपरयोरिति द्विवचननिर्देशेन सूत्रे—एकग्रहणेन च प्रत्येकमुद्देश्यत्वप्रतीत्या तत्तन्निष्ठोद्देश्यताया भिन्नभिन्नत्वेन तत्तन्निष्ठोद्देश्यतानिरूपकत्वविशिष्टादेशं प्रति तस्य निमित्तत्वानङ्गीकारेऽप्यन्यतरस्थानिनिष्ठोद्देश्यतानिरूपकत्वविशिष्टादेशं प्रत्यन्यतरस्य निमित्तत्वे बाधकाभावात्।

---

१. कोष्ठकान्तर्गतो नास्ति। न च सति सप्तम्या कारणत्वमात्रमवगम्यते, अनया च विङ्द्रूपकार्यिणो निमित्त वव्युदासेऽपि कारणत्वसामान्यस्य निषेधात्, 'अध्येता' इत्यादौ गुणनिषेधः स्यादेवेति वाच्यम्, परिभाषायां निमित्तपदस्य कारणपर्यायतया कारणत्वस्यैव निषेधेनादोषात्। समवायिकारणनिमित्तेत्यादिमूलं तु 'तन्निमित्तग्रहणं कर्तव्यम्' इति वार्तिकानुसारेणात्र सति सप्तम्या निमित्तकारणत्वपरत्वाभिमानेनेति बोध्यम्। इति पाठः क० पु० वर्तते।

२. ननु 'शुशुवतुः' इति क० पु० पाठः।

३. 'वेञ्धातोरतुसि–आत्वे वा' इति नास्ति क० पु०। 'श्वि' धातोरतुसि 'श्वि' इति पाठो वर्तते।

४. 'अन्यथा वार्णपरिभाषया यणापत्तेः' इत्यधिकः पाठः क० पु०।

५. 'पच्यते' इत्यादितः 'अत्रापि' इत्येतत्पर्यन्तं क० पु० नास्ति।

**कार्यित्वेन इसो द्वित्वनिमित्तत्वाभावात्तत्प्रवृत्तिर्न स्यात् ।**

---

अत एव 'वव्रश्च' इत्याद्येकादेशविषये "अचः परस्मिन्०" ( पा० सू० १।१।५७ ) इति स्थानिवत्त्वं भाष्योक्तं सङ्गच्छते । अन्यथैकादेशस्योभयस्थानिकत्वेन परनिमित्तकत्वाभावात्तदसङ्गतिः । 'जुहुवतुः' इत्यत्र तु परस्थानिकादेशस्यैव स्थानिवद्भावेनोवङादेशाभावस्य कर्तव्यतया परस्थानिकादेशस्य तदपेक्षया परस्मिन् सत्येव प्रवृत्त्यभावेन परनिमित्तत्वासम्भव इत्याशय इति न तत्रत्यशेखरविरोधः ।

एतेन द्विर्वचनं प्रत्यजादेशं प्रति चाचीति सप्तम्याचो निमित्तत्वं प्रतीयते । तत्रादेशं प्रत्यचो यादृशं निमित्तत्वं कार्यानन्वयित्वेन दृष्टं तादृशमेव द्विर्वचनेऽपि निमित्तत्वं स्वीक्रियते, तत्साहचर्यात् । अत एव 'अरिरिषति' इत्यादौ परिभाषानाश्रयणेऽपि न दोषः इत्यपास्तम् । 'पपौ' 'तस्थौ' इत्यादौ द्विर्वचननिमित्तस्याच एकादेशकार्यभाक्त्वेन तथा साहचर्यासम्भवात् ।

यत्तु द्वित्वनिमित्तेऽचि परस्मिन् पूर्वस्याचो य आदेशः प्राप्तः स न द्वित्वे कर्तव्ये इत्युक्ते, कस्येत्याकाङ्क्षायामुपस्थितत्वादच इत्येव सम्बद्ध्यते । एवं च द्वित्वनिमित्तेऽचि परतः पूर्वस्याचो द्वित्वे कर्तव्ये तस्यैवाच्र आदेशो नेत्यर्थः । 'अरिरिषति' इत्यत्र तु न पूर्वस्याचो द्वित्वप्रसक्तिः, "अजादेर्द्वितीयस्य" ( पा० सू० ६।१।२ ) इत्यनेन बाधात् । 'अध्येता' इत्यादावपि न दोषः, क्ङितीत्यत्र परसप्तम्याश्रयणात् । तस्मात्[१] इयं परिभाषानाश्रयणीयेति तच्चिन्त्यम् । अत्र पक्षेऽचीत्यस्य परसप्तम्यन्तत्वेन सत्सप्तम्यभावाद् द्वित्वनिमित्ताज्निमित्तकादेश इत्यर्थालाभेन 'ऊवतुः'[२] इत्याद्यसिद्धिप्रसङ्गात्[३] ।

न च "सन्यतः" ( पा० सू० ७।४।७९ ) इत्यत्र सनीति सत्सप्तम्याश्रयणेन तस्याभ्यासविशेषणत्वात्सन्निमित्तको योऽभ्यास इत्यर्थात्, 'अधीषिषति' इत्यादौ नहि कार्यीति न्यायेन सन्निमित्ताभ्यासाभावेनेत्वानापत्तिरिति वाच्यम्, उत्तरखण्डस्य सनो द्विष्प्रयोगरूपत्वेनार्धधातुकत्वानपायेनेडागमे स्वोपदेशे स्वस्यादन्तत्वाक्षत्याऽतो लोपे तत्सिद्धेः । एतेन हन्साहचर्येणार्थवदजन्ताङ्गस्यैव ग्रहणादुत्तरखण्डस्यैवार्थवत्वेन प्रतीषिषतीत्यादौ सन्नतस्य धातोश्च न दीर्घ इत्यपास्तम् ।

---

१. 'तस्माद्' इति नास्ति क० पु० । २. 'शुश्रुवतुः' इति पाठः क० पु० ।

३. 'न च सत्सप्तमीपक्षे' अपि इयं व्यर्था, प्रत्यासत्त्या कस्य द्वित्वे इन्याकाङ्क्षायामादेशस्थानिभूताच एव ग्रहणादिति वाच्यम्, स्थान्यच इव निमित्तभूताचोऽप्यादेशविशेषणत्वेनोपस्थितेस्तुल्यत्वेन तस्याप्यचो द्विर्वचने कर्मत्वेनान्वयापत्त्या निरुक्तप्रत्यासत्त्याश्रयणस्य दुरुपपादत्वात्' इत्यधिकः पाठः क० पु० ।

**वस्तुतः—समवायिकारणनिमित्तकारणयोर्भेदस्य सकललोकतन्त्रप्रसिद्धतया तस्य तत्त्वेनाऽऽश्रयणाभावेन नैषा ज्ञापकसाध्या। अत एव हिः प्रयुक्तः। स हि तत्त्वेनाऽनाश्रयणे हेतोः प्रसिद्धत्वं द्योतयतीति तत्त्वम्। 'द्विर्वचनेऽचि' इत्यत्र भाष्ये ध्वनितैषा ।। १० ।।**

---

ननु ङिद्भ्यो धातुभ्य आतमनेपदप्रवृत्त्येग्लक्षणाया वृद्धेस्तत्राप्राप्त्या "क्ङिति०" (पा० सू० १।१।५) इत्यत्रेग्लक्षणवृद्धिप्रतिषेधः क्ङित्प्रत्ययनिमित्तक एव सम्भवति। तत्साहचर्याद् गुणप्रतिषेधोऽपि क्ङित्प्रत्यय-निमित्त एवाङ्गीक्रियते। अतः 'शयितरि' इत्यादौ निषेधाप्राप्त्या ज्ञापकत्वं न सम्भवतीत्यरुचेराह—**वस्तुतस्त्विति। भेदस्येति।** न च कालघटसंयोगं प्रति कालस्यैव निमित्तत्वेन समवायिकारणत्वेन च तयोरभेदोऽपि दृष्ट इति वाच्यम्, कालस्य साधारणकारणत्वेन[1] असाधारणकारणविषये भेदस्य नैय्यत्येनादोषात्। 'दध्यत्र' इत्यादौ 'इकार-विकार-यकार[2] इति वर्णपरिणामवादिनां सांख्यानां मतेनेदम्। वस्तुतो महदल्पावयवारब्धावयविनोर्महदल्पत्ववद्-ह्रस्वेकारारब्धयकारापेक्षया दीर्घेकारारब्धयकारस्य महत्त्वापत्तिः। किञ्च विकारः स्वस्वरूपस्य परित्यागेनापरित्यागेन वा रूपान्तरापत्तिः।

प्रकृते[3] च वर्णानां नित्यत्वपक्षे स्वस्वरूपपरित्यागेन रूपान्तरापत्तिरूपविकारासम्भवः। अनित्यत्वपक्षे द्वितीयक्षणे प्रत्यक्षानन्तरमेव तन्नाशेन तदुत्तरकालमपि विकारसम्भव इति[4] वर्णपरिणामवादो न युक्तः। तस्मात् 'अरिरिषति' इति भाष्योदाहरणादियं सिद्धेत्याहुः[5] ।। १० ।।

---

१. 'साधारणत्वेन' इति पाठः क० पु०।

२. 'यकार इकार एकार' इति पाठः क० पु०।

३. 'आद्ये' इति क० पु० पाठः।

४. 'इति' इति नास्ति। द्वितीये घटादौ मृद इवादेशे स्थान्यनुवृत्तेरदर्शनेन तदसम्भवात्' इत्यधिकः पाठः क० पु०।

५. केचित्तु प्राचीनग्रामादाम्रा इत्युक्त्या ग्रामात्प्राचीनेषु सर्वेषु वृक्षेषु आम्रत्वबुद्धौ प्रसक्ताय ये क्षीरिणोऽवरोहवन्तस्ते न्यग्रोधा इति उपदेशेनाम्रत्वबुद्धिनिवर्तनेन न्यग्रोधबुद्धिजननवदस्तेभूरित्यनेनाऽपि-अस्तिबुद्धिनिवर्तकभूबुद्ध्युदयेन क्षीरदध्योरिव स्वोत्पत्तिजन्यनाशप्रतियोगित्वस्वप्रतियोगिकध्वन्सजनकोत्पत्तिकत्वरूपोपादानोपादेयभावस्य स्थान्यादेशविषयकबुद्धौ सम्भवेन तद् वारकं तद् विषयेऽपि तत्त्वमित्याहुः। इत्यधिकः पाठः क० पु० कोष्ठके वर्तते।

**ननु 'प्रणिदापयति' इत्यादौ दारूपस्य विधीयमाना घुसंज्ञा दापेन स्यादत आह—**

**यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ११ ॥**

---

**न स्यादिति ।** कार्यकालपक्षेऽत्र सूत्रे प्रयोगस्थानामेवानुकरणेन तेन प्रयोगस्थानुकार्यस्वरूपबोधेऽप्यागमविशिष्टानुकार्यस्वरूपबोधने मानाभावेन पुग्विशिष्टे घुत्वाप्राप्त्या केवलस्य चानर्थकत्वेन कार्यकालपक्षे तदप्राप्त्या "नेर्गद०" ( पा० सू० ८।४।१७ ) इति णत्वानापत्तिरिति भावः । ननु अत्र "शेषे विभाषा०" ( पा० सू० ८।४।१८ ) इति णत्वं सिद्धम् । न च पर्युदासन्यायेन शेषे धातावेव तत्प्रवृत्त्याऽस्यामवस्थायां पुग्विशिष्टे धातुत्वाभावेन तदप्राप्तिः, ण्यन्तधातुमादाय तत्प्रवृत्तेः सूपपादत्वात् ।

न च तस्य वैकल्पिकत्वेन पक्षे णत्वानापत्तिः, ण्यर्थेनोपसर्गस्य योगविवक्षायां घुं प्रत्यनुपसर्गत्वेन नित्यस्याप्राप्त्या तवापि विकल्पस्य दुर्वारत्वादिति चेत्, न; औपदेशिकधातोरनेकार्थत्वेनोपसर्गद्योत्यार्थान्तर्भावेण वृत्तिसम्भवेऽपि णिचः प्रेरणामात्रवाचित्वेन तदसम्भवाण्ण्यन्तेनोपसर्गार्थस्य क्वाप्ययोगेन ण्यन्तनिरूपितोपसर्गत्वाभावस्य "उपसर्गात्सुनोति०" ( पा० सू० ८।३।६५ ) इत्यत्र शेखरे स्पष्टत्वेन तन्निरूपितोपसर्गत्वमादाय तत्प्रवृत्तेर्दुरुपपादत्वात् ।

यथोद्देशेऽपि पूर्वं त्रैपादिककार्यप्रवृत्त्या पुग्विशिष्टे घुपदवाच्यत्वाभावेन 'दा' शब्दस्यानर्थकत्वेन णत्वविधावर्थवद्घुसंज्ञके परे-इत्यर्थाण्णत्वाप्राप्त्येयमावश्यकी । ननु अस्यामवस्थायामागन्तुकावयवविशिष्टेऽवयविनिष्ठधर्मबोधिकाया[1] लोकन्यायमूलकैतत्परिभाषाया अज्ञातत्वादनाश्रयणाद्वागमविशिष्टे[2] घुपदवाच्यत्वबुद्धेरिवागमसन्निधाने तद्रहिते[3] घुपदवाच्यत्वदानरूपार्थवाचकत्व[4]-बुद्धेरप्यनुदयात् केवले घुपदवाच्यत्वार्थवत्वबुद्धेरनपायादवतरणग्रन्थासङ्गतिरिति चेत्[5], न; लोकन्यायमूलकैतत्परिभाषया तदर्थबोधनासम्भवेऽपि[6]—'अनागमकानां सागमका आदेशाः' इत्यनेनार्थबोधनाय तद्रहितस्योच्चारणप्रसङ्गे

---

१. 'केवले तदभावबोधिकायाः' इत्यधिकः पाठः क० पु० ।

२. 'अर्थवत्व' इत्यधिकः पाठः क० पु० ।

३. 'आगमसन्निधाने तद्रहिते घुपदवाच्यत्व' इत्यस्य स्थाने 'शक्तिग्राहकान्तराभावादागमविशिष्टे' इति पाठः क० पु० । ४. 'अभाव' इत्यधिकः पाठः क० पु० ।

५. 'आद्यन्तावित्यनेनागमेष्ववयविसादृश्यविधानस्यैतरावयवेष्विवान्वयव्यतिरेकाभ्यामर्थबोधकत्वपर्यवसायितयागमरहितेऽर्थवत्वस्यासम्भवेन तत्सङ्गतिः । 'एतेन' इत्यधिकः पाठः क० पु० 'चेन्न' इत्यस्य स्थाने ।

६. 'शब्दनित्यत्वार्थं कल्पितेन' इत्यधिकः पाठः क० पु० ।

**यमुद्दिश्याऽऽगमो विहितः, स तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते—बोध्यत इत्यर्थः। तत्र तद्गुणीभूता इत्यंशो बीजकथनम्। लोकेऽपि देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं दृश्यते।**

**यमुद्दिश्य विहित इत्युक्तेः 'प्रनिदारयति' इत्यादौ न दारित्यस्य घुत्वम्।**

---

तद्विशिष्ट उच्चारणीय इत्यर्थकेनागमविशिष्टस्यैवार्थवत्त्वबोधनेन केवलस्यानर्थकत्वेन तदप्राप्तेरित्याशयात्[1]।

न च तस्य घुसंज्ञायामदाबिति प्रतिषेधापत्तिः 'दैप्' शोधने (भ्वा० ९९०) 'दाप्' लवने ( अदा० ११३५ ) इत्यनयोर्बान्ततत्वाङ्गीकारेण सूत्रे चर्त्वेन पकारनिर्देशेऽपि बान्त एव तन्निषेधप्रवृत्तेरदोषात्। सति त्वस्मिनागमिग्राहकेणागमविशिष्टस्य ग्रहणमित्यर्थकेनानेन न्यायेनानुकरणस्यागमविशिष्टानुकार्यस्वरूपेऽपि शक्तिकल्पनेन तदुपस्थित्या घुत्वसिद्धिरिति भावः। **तद्गुणीभूत इति**। अस्य यत इत्यादिः। ननु[2] ग्रहणमुच्चारणं[3] ज्ञानं वा, नहि तेन तत्सम्भवतीत्याह—**तद्ग्राहकेणेति**। तस्य श्रोत्ररूपत्वे-इष्टार्थासिद्धिरत आह—**तद्बोधकेनेति**। **बोध्यत इति**। समुदाय इति शेषः। **तद्विशिष्टस्यैवेति**। एवेन केवलव्यवच्छेदः, तेन 'भूयास्ताम्'[4] इत्यादाविण्न।

न च "आडजादीनाम्" ( पा० सू० ६।४।७२ ) इति सूत्रे 'अस्वपो हसति' इत्यत्र वृद्धिवारणाय धातुग्रहणापकर्षेणाजादौ धातौ परतो वृद्धिरिति भाष्योक्तं विरुद्ध्येत, अटि केवलस्य धातुत्वाभावादिति वाच्यम्, तत्र धातुपदस्य सामर्थ्याद् भूतपूर्वधातुपरत्वेनादोषात्। ननु 'यदागमाः' इत्यत्रावयवावयविभावसम्बन्धस्य षष्ठ्यर्थत्वे 'अवयवावयवस्समुदायावयवः' इति न्यायेन 'प्रनिदारयति' इत्यादौ दोषः, अत आह—**यमुद्दिश्येति**। यत्पदेनागमविधौ कार्यित्वेन निर्दिष्टं गृह्यत इति भावः।

**घुत्वमिति**। न च लोकन्यायमूलकत्वादस्या उद्देश्यविधेयविषय एव प्रवृत्ति-

---

१. 'सार्वधातुकपरकधातूच्चारणप्रसङ्गे विकरणविशिष्टः धातुरुच्चारणीय इत्यर्थे धातोरनर्थकत्वाभाववत् णिचपरकधातूच्चारणप्रसङ्गे पुग्विशिष्टोच्चारणबोधनेऽपि तद्रहितेऽर्थवत्त्वानपायात्, घुसंज्ञासिद्धेऽपि न दोष इत्यपास्तम्। सार्वधातुकपरकधातूच्चारणप्रसङ्गे विकरणविशिष्टस्तादृशसमुदायार्थबोधकः स उच्चारणीय इति वाक्यकल्पनेन समुदायस्य समुदायार्थविधानेऽपि केवलधातोरर्थवत्त्वानपायात्' इत्यधिकः पाठः क० पु०।

२. 'तस्य' इत्यधिकः पाठः क० पु०। ३. 'उच्चारणरूपम्' ईदृशः पाठः क० पु०।

४. आगमविशिष्टस्य वलादित्वाभावादित्यर्थः।

रिति सङ्कोचकल्पने न मानमिति 'प्रनिदारयति' इत्यादौ दोष एवेति वाच्यम्, "दीधीवेवीटाम्" ( पा० सू० १।१।६ ) इति सूत्रस्थेड्ग्रहणज्ञापितस्यावयवावयव इति न्यायस्याक्षरस्वारस्येन देवदत्तावयवत्वेन गृहीतहस्तादेरवयवस्य[1] समुदायावयवत्वेऽपि अवयवत्वेन[2] अगृहीताकारावयवस्य रेफस्य समुदायावयवत्वे मानाभावेन यदागमा इत्यस्यैतादृशे विषयेऽप्राप्तिरित्याशयात् ।

एवञ्च यत्र साक्षादवयवद्वारा वातिदिश्यमानधर्मावच्छिन्नस्योद्देश्यता तत्रैवास्याः प्रवृत्तिरिति, यमुद्दिश्येति फलितार्थकथनमिति, 'एधिषीष्ट' 'शेरते' इत्यादौ न दोषः । अन्यथा 'एधिषीष्ट' इत्यत्र सुटस्तकारावयवत्वेऽपि प्रत्ययावयवत्वाभावेन षत्वानापत्तिः । 'शेरते' इत्यत्र झादेशस्यातो रुडागमे रुड्विशिष्टस्य सार्वधातुकग्रहणेनाग्रहणात्—"शीङ्स्सार्वधातुके०" ( पा० सू० ७।४।२१ ) इति गुणानापत्तिः[3] । 'गीः' इत्यादौ रेफान्ते धातुत्वं तु स्थानिवद्भावेनेति न दीर्घानुपपत्तिः । 'वव्रश्च' इत्यादौ हलादिशेषस्तु पुनरभ्याससंज्ञाप्रवृत्त्या सिद्ध्यतीति बोध्यम् ।

न च 'लविषीध्वम्' इत्यादौ "आद्युदात्तश्च" ( पा० सू० ३।१।३ ) इति सूत्रभाष्योक्तरीत्या परत्वात्, विशेषविहितत्वाच्च लिङः पूर्वं सीयुटि 'निर्दिश्यमान' ( परि० १३ ) इति न्यायेन तस्याद्युदात्तत्वप्रत्ययत्वविशिष्टे ध्वमि सीयुड्विशिष्टस्य ध्वम्-ग्रहणेन ग्रहणात् सीयुटो गुणापत्तिः, धातोर्गुणानापत्तिश्चेति वाच्यम्[4]; एषां[5] स्थानिवद्भावेन प्रत्ययत्वे सिद्धे देशांशे निराकाङ्क्षत्वेन "प्रत्ययः" (पा० सू० ३।१।१) "परश्च" (पा० सू० ३।१।२) इत्यस्यानुपस्थित्या ध्वमादीनां प्रत्ययत्वाभावेनादोषात् । 'प्रत्ययसंज्ञासन्नियुक्तमाद्युदात्तत्वम्' इति भाष्यं[6] तु प्रत्ययसंज्ञाविधायक शास्त्रेण सह पठितमित्यर्थकमिति न तद्विरोधः ।

---

१. 'अङ्गुल्यादेः' इत्यधिकः पाठः क० पु० ।

२. 'रेफस्य प्रवृत्तिकाले दाशब्दावयवत्वेन' इति पाठः क० पु० ।

३. 'न च रुडागमात्पूर्वं परत्वाद्गुणे न दोष इति वाच्यम्, सत्यपि सम्भव इति न्यायेन रुडागमेन बाधापत्तेः । केचित्तु तन्न्यायस्यानित्यत्वादिहाप्रवृत्त्या न दोषः । अन्यथा रुटः पश्चादपि गुणानापत्तेः । एवमेधिषीष्टेत्यत्रापि तन्मध्यपतितन्यायेन न दोषः । एतन्मूलं तु 'दधिच्छादयति' इत्यत्र ह्रस्वस्य तुकि समुदायग्रहणेन ग्रहणात् पदत्वेन निघातसिद्धिरित्याहुः' इत्यधिकः पाठ० क० पु० ।

४. 'ध्वमो धातोर्विहितत्वाभावेन सीयुड्विशिष्टस्य तदादित्वाभावेनाङ्गत्वासम्भवात् 'भविष्यामि' इत्यादौ स्थानिवद्भावेन लब्धप्रत्ययत्वमादायाङ्गत्वं सूपपादम्, एतेन' इत्यधिकः पाठः क० पु० ।

५. 'एषाम्' इति नास्ति क० पु० ।

६. 'भाष्यं तु' इत्यादितः 'तद्विरोधः' इत्येतत्पर्यन्तं खण्डयित्वा 'भाष्यविरोधात्' इति पाठः क० पु० ।

**'आने मुक्' इति मुग्विधानसामर्थ्यादिषाऽनित्या। अन्यथा 'पचमानः' इत्यादावकारस्य मुकि–अनया परिभाषया विशिष्टस्य सवर्णदीर्घे तद्वैयर्थ्यं**

---

"आद्युदात्तश्च" (पा० सू० ३।१।३) इति सूत्रविवरणोक्तरीत्यास्यैकदेश्युक्तित्वेनादोषाच्च।

केचित्तु-ये आगमा येषां ते यदागमास्ते गुणीभूता येषां ते तद्गुणीभूता इति बहुव्रीहिः। यत आगमिनः तदवयवका अतस्तद्ग्रहणेन गृह्यन्त इत्यर्थेऽध्याहारादिक्लेशो नेत्याहुः।

न चैवम् 'क्षीरपाणी' इत्यादौ अनयैव प्रातिपदिकान्तेति णत्वे सिद्धे "प्रातिपदिकान्तनुम्विभक्तिषु च" (पा० सू० ८।४।११) इति सूत्रे[1]नुम्ग्रहणं व्यर्थमिति वाच्यम्, 'प्रहिण्वनम्' इत्यादौ मध्यवर्तिनुमि णत्वार्थं तस्यावश्यकत्वात्। नन्वेवम् 'प्रेन्वनम्' इत्यत्रापि णत्वापत्तिः, न च तत्र णत्वमिष्टमेवेति वाच्यम्, "अट्कुप्वाङ्०" (पा० सू० ८।४।२) इति सूत्रे 'नुमा व्यवायेऽनुस्वाराभावे प्रतिषेधो वक्तव्यः, 'प्रेन्वनम्'' इति भाष्येण तत्र णत्वानिष्टत्वानुमानात्।

न च क्षुभ्नादित्वाण्णत्वं नेति वाच्यम्, "परेन्वनम्' इत्यादौ दोषापत्तेः। क्षुभ्नादिपाठेनैव सिद्धे नुमा व्यवाये प्रतिषेध इत्यस्य वैयर्थ्यापत्तेश्चेति चेत्, न; 'इन्व' इत्यस्य क्षुभ्नादिपाठेन 'निरिन्वनम्' इत्यादिसर्वलक्ष्यसङ्ग्रहेऽपि कृन्नकारस्य णत्वव्यावर्तये तद् वार्तिकस्यारम्भात्। वर्णग्रहणे इयं न प्रवर्तत इति प्राचोक्तमसङ्गतमिति ध्वनयन्नाह—**सामर्थ्यादिति**। ननु पच-आन-इत्यत्र मुकोऽभावेन सवर्णदीर्घं बाधित्वा "आतो ङितः" (पा० सू० ७।२।८१) इतीयादेशःस्यात् सति तु मुकि 'येन ना०' (परि० ५८) इति न्यायेनेयादेशस्य बाधाद्दीर्घः प्राप्नोतीति फलभेदः।

न च दीर्घस्यापि तेन न्यायेन बाधः, दीर्घे कृते मुकोऽप्राप्त्यानेन न्यायेन दीर्घबाधासम्भवादिति चेत्, न; तथात्वे "आतो ङितः" (पा० सू० ७।२।८१) इत्यस्यानन्तरम् 'नाने' इत्येव ब्रूयात्, "अकः सवर्णे०" (पा० सू० ६।१।१०१) इत्यस्यानन्तरमान इति ब्रूयात्। न च 'निर्दिश्यमान०' (परि० १३) परिभाषया मुग्विशिष्टस्य न दीर्घप्राप्तिरिति वाच्यम्, अक इत्यस्य पञ्चम्यन्तत्वेन तदप्राप्तेः। पूर्वपरयोरित्यस्य षष्ठ्यन्तत्वेऽपि मुग्विशिष्टे निर्दिश्यमानपूर्वत्वानपायात्[2]।

---

१. 'सूत्रे' इति क पु० नास्ति।

२. 'न च 'चिकीर्षमाणः' इत्यत्र चिकीर्ष-अ-आन-इत्यत्र पररूपदीर्घौ बाधित्वा वार्णपरिभाषया पूर्वं मुकि, ततः पररूपनिष्पन्नाकारस्यानागमित्वात्पररूपाप्रवृत्तिरिति वाच्यम्, शपः परत्वान्मुकि ततः शबकारेण शुद्धाकारस्यैव लाभात्। 'चिकीर्ष्यमाणः' इत्यत्र सार्वधातुके यगित्यत्र विषयसप्तम्याश्रयणान्न दोषः' इत्यधिकः पाठः क० पु०।

**स्पष्टमेव । तेन 'दिदीये' इत्यादौ यणादि न, 'जहार' इत्यादौ 'आत औ णलः' इति च न ।**

---

नंनुं मुग्विशिष्टस्यात्वेऽपि तस्य कण्ठस्थानिकत्वाभावे तत्सावर्ण्यं दुरुपपादम् । न चानया सावर्ण्यातिदेशान्नदोषः, एतन्निरूपितसावर्ण्यस्यान्यत्र दुर्ग्रहेण दीर्घाप्राप्तेरिति चेत्, न; आगमिनिष्ठस्थानप्रयत्नस्य मुग्विशिष्टेऽतिदेशेन सावर्ण्यस्य सूपपादत्वात् । न चोक्तरीत्या समुदायस्य कण्ठ्यत्वेऽपि कण्ठोष्ठस्थानिकत्वानपायात् यावत्स्थानैक्याभावेन सवर्णसंज्ञा दुर्वचेति वाच्यम्, कण्ठावच्छिन्नवायुसंयोगस्यौष्ठावच्छिन्नवायुसंयोगस्य वा समुदाये कारणत्वाभावेन कण्ठ्यस्थत्वासम्भवात्,[१] अकोकीति न्यासेनादोषाच्च । अनुनासिकौकारादिदीर्घप्रवृत्तिस्तु न फलम्, अनुनासिकौकारादेशविधानेनापि तत्सिद्धेरितिदिक्[२] ।

**दिदीये इति** । दी ए इत्यत्र युटि कृते "एरनेकाच०" ( पा० सू० ६।४।८२ ) इति अत्र यणि द्वित्वेऽपि लोपस्य वैकल्पिकत्वेन यत्र 'य' श्रवणेन युटश्चारितार्थ्यादनिष्टं स्यादिति भावः । ननु "वुग्युटौ०" ( का० वा० ६।४।२२ ) इति वार्तिकारम्भसामर्थ्यान्नात्र यण् भवतीत्यरुचेराह-**आदीति** । तेनेयङो ग्रहणम् । न च सिद्धान्तेऽप्यसिद्धत्वादियङ् दुर्वारः, वार्तिकं तु यण्निवृत्त्या चरितार्थमिति वाच्यम्, उवङ्यणोरित्यत्र "नमुने" ( पा० सू० ८।२।३ ) इत्यत्रेव विषयसप्तमीत्वेन वुग्युटोर्विषये यं प्रत्यसिद्धत्वं प्राप्तं तं तं प्रत्यसिद्धत्वं न इत्यर्थेनादोषात् ।

न चैवं वार्तिके-उवङ्यणोरिति व्यर्थम्; स्पष्टार्थत्वात् । नन्वेवम् "न षट्०" ( पा० सू० ४।१।१० ) इत्यत्रेव वीप्सागर्भितासिद्धत्वनिषेधसामर्थ्यादिवेयङ् न भविष्यतीत्यरुचेराह—**जहार इति** । यदि तु 'सन्निपात०[३]' ( परि० ८६ ) परिभाषयात्रापि न दोष इत्युच्येत तदा 'विच्छ' गतौ ( तुदा० १५१६ ) 'युच्छ' प्रमादे ( भ्वा० २२२ ) इत्यादिभ्यो णिचि ततः क्त्वो ल्यपि आयप्रत्ययाभावपक्षे 'प्रविच्छ्य' इत्यादौ सतुक्कस्य ह्रस्वस्य स्वतो लघुसंज्ञायाम् "ल्यपि लघुपूर्वात्" ( पा० सू० ६।४।५६ ) इति णेरयादेशापत्तिः । गुरुसंज्ञा तु भिन्नावधिकत्वात् ह्रस्वत्वाभावाच्च न लघुसंज्ञाया बाधिका । वर्णग्रहणातिरिक्तविषयेऽनित्यत्वफलं तु 'भवेयुः' इत्यत्र [४]युस्विशिष्टस्योस्त्वात् "उस्यपदान्तात्" ( पा० सू०

---

१. 'कण्ठ्योष्ठ्यत्वासम्भवात्' इति पाठः क० पु० ।

२. 'अनुनासिकौकारादेशविधानेनापि तत्सिद्धेरितिदिक्' इति क० पु० नास्ति, 'उकारस्यानुनासिकत्वप्रतिज्ञया उदात्त इति न्यासेनापि सिद्धेः । न च दीर्घपक्षे कदाचिदोकारः, कदाचिदौकार इति फलभेदः । विवृतस्य स्थाने विवृततमापेक्षया विवृततरस्यैवान्तरतमत्वेन दीर्घानुनासिकोकारस्य प्रवृत्त्यादोषात्' इत्यधिकः पाठः क० पु० वर्तते ।

३. 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषयेत्यर्थः ।

४. 'युषिति विशिष्टस्य' इति पाठः क० पु० ।

**न चाकारादेर्वर्णस्य वर्णान्तरमवयवः कथमिति वाच्यम्, वचनेनावयवत्वबोधनात्। तस्य चावयवत्वसादृश्ये पर्यवसानं बोध्यम्।**

**न चोक्तज्ञापकाद्वर्णग्रहणेऽस्या अप्रवृत्तिरिति वाच्यम्; 'आने मुक्' इति सूत्रभाष्येऽकारस्याङ्गावयवस्य मुगित्यर्थे 'पचमानः' इत्यत्र 'तास्यनुदात्तेत्' इति स्वरो न स्यादित्याशङ्क्याद्युपदेशभक्तस्तद्ग्रहणेन ग्राहिष्यत इत्युक्तेरसङ्गत्यापत्तेः।**

---

१।१।९६ ) इति पररूपाभावः[1]। **असङ्गत्यापत्तेरिति।** अकारान्तस्याङ्गस्य मुगिति पक्षे मुकस्समुदायभक्तत्वेनाद्युपदेशग्रहणेन ग्रहणासम्भवात् स्वराप्राप्तिमाशङ्क्याङ्गावयवस्याकारस्य मुगिति पक्षेऽनयाद्ग्रहणेन ग्रहणात् स्वरसिद्धिरित्युक्तम्। वर्णग्रहणेऽस्या अप्रवृत्तावेतद्भाष्यासङ्गतिः।

न च ह्रस्वादिशब्दवत्-अच्छब्दस्यापि मात्राकालिकत्वसमानाधिकरणावर्णत्वरूपजात्यवच्छिन्नबोधकतयाऽक्तपरिमाणार्थवाचकत्वेनाक्तपरिमाणवाचकस्य[2] न्यूनविषय इवाधिकविषयेऽप्यप्रवृत्त्याध्यर्धमात्रिकस्य कथमद्ग्रहणेन ग्रहणमिति वाच्यम्, उक्तभाष्यप्रामाण्येनोक्तपरिमाणार्थवाचकानामप्येतत्[3] परिभाषाविषयत्वाङ्गीकारात्। अत एव 'अरारौ गुणवृद्धी' इति भाष्यं सङ्गच्छते।

न च 'कर्तुम्' इत्यादौ नित्वादाद्युदात्तत्वेऽनुदात्तात्परत्वाभावेऽपि 'विभतसति' इत्यादौ द्वित्वे एकाच्त्वाभावेऽपि "एकाच०" ( पा० सू० ७।२।१० ) इत्यत्रोपदेशग्रहणादिण्निषेधवत् 'पचावः' इत्यादौ परत्वादाङ्गत्वाच्च दीर्घे कृते उपदेशे यो मात्राकालिकोऽकारो न ततः परत्वं तस्य, यत आदेशभूतदीर्घात्परत्वं न स उपदेशकाले मात्राकालिक इति तत्र स्वरानापत्त्या कैयटोक्तरीत्या-

---

१. **कथमिति।** आद्यन्तावित्यनेन पुगादावन्तत्व बोध्यते। तत्त्वं च चरमावयवत्वरूपं तच्च वर्णान्तरनिरूपितम्, तत्र च स्वोद्देश्यघटकवर्णनिरूतिमेव चरमत्वं वक्तव्यम्। एवमादित्वमपि। तच्च बाधितमिति भावः। **बोध्यमिति।** न च आद्यन्तावित्येकवाक्यतया स्वोद्देश्यचरमावयवसदृशः किद्भवतीत्यनेनागमे चरमावयवसादृश्यबोधनेऽपि चरमवर्णोत्तरकम्-तस्यालाभेनादौ मध्ये वा तत्प्रवृत्तिर्दुर्वारेति वाच्यम्, स्वोद्देश्यघटकवर्णप्रागभावानधिकरणत्वे सति स्वोद्देश्यघटकवर्णाधिकरणक्षणत्वावच्छिन्नप्रतियोगिताकध्वन्साधिकरणक्षणध्वंसानधिकरणो यः क्षणस्तद्वृत्तित्वेन रूपेण सादृश्यस्य विवक्षणेनादोषात्। यद्वा चरमः सन् अवयवसदृशो भवतीति चरमत्वस्यावयवसादृश्यस्य च विधानेनादोषः। इत्यधिकः पाठः क० पु०।

२. 'वाचकान्यून' इति पाठः क० पु०।

३. 'वाचकेनाप्येतत्' इति पाठः क० पु०।

**किञ्च ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडित्यर्थे 'कुर्वन्नास्ते' इत्यादौ ङमो ङमुडागमे णत्वप्राप्तिमाशङ्क्य 'यदागमाः' इति न्यायेनाद्यनस्यापि पदान्तग्रहणेन ग्रहणात् 'पदान्तस्य' इति निषेध इत्यनया परिभाषया 'आगमानामागमिधर्मवैशिष्ट्यमपि बोध्यते' इत्याशयक 'ङमुट्' सूत्रस्थभाष्यासङ्गतेः ।**

---

त्रापि उपदेशग्रहणादुपदेशे[1] योऽकारस्तस्मात्परमित्यर्थेन शप्प्रवृत्तिकालिकाकारात् परत्वमादाय स्वरसाधनस्यावश्यकतया तथैव मुक्यपि स्वरस्य सूपपादत्वेनैतत्परिभाषया तत्साधनं भाष्ये एकदेशिन एव । 'अत्तः[2]' 'जुहृतः' इत्यत्र तु[3] लुकानुत्पत्तेरेवान्वाख्यानेन न दोष इति वाच्यम्, उपदेशे योऽकार इति उपदेशेनाकारस्य विशेषणे 'हृतो हृथः, इत्यत्रापि स्वरापत्त्या तद्वारणायाकारान्तोपदिश्यमानादित्यर्थस्यावश्यकतया त्वदुक्तार्थस्यैव सिद्धान्तेऽभावेनोपदेशग्रहणेन तत्साधनासम्भवात् ।

न चैवम् 'वक्ष्यमाणः' इत्यत्र स्वरानापत्तिः, मुक उक्तरीत्याकारभक्तत्वेन स्यप्रत्ययभक्तत्वासम्भवादिति वाच्यम्, अवयवावयवस्समुदायावयव इति[4] न्यायेनाकारान्तोपदेशग्रहणेन मुग्विशिष्टस्य ग्रहणात्स्वरस्य सूपपादत्वात् । 'पचावः' इत्यादौ स्वरसिद्धिस्तु पञ्चमीसमासेन बोध्या । अत एव "तास्यनुदात्तेत्०" ( पा० सू० ६।१।८६ ) "आने मुक्" ( पा० सू० ७।२।८२ ) इत्यनयोर्मुकि दोषमाशङ्क्य मुकश्चोपसङ्ख्यानमिति वार्तिकस्यानेन न्यायेन प्रत्याख्यानं सङ्गच्छते । अन्यथा सौत्रोपदेशपदेनैव सिद्धे वार्तिकारम्भस्योक्तपरिभाषया प्रत्याख्यानस्य चासङ्गतिः ।

ननु 'वार्णादाङ्गम्' ( परि० ५६ ) इति न्यायस्य समानकार्यित्वरूपसमानाश्रय एव प्रवृत्त्याऽपरनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वं स्वरे न दोष इत्यरुचेराह— **किञ्चेति । ङमो ङमुडित्यर्थ इति ।** ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमुड्भवत्यजादौ पदे[5] इत्यर्थे ह्रस्वात्परश्चागमी पदान्तङमेव लभ्यत इति 'हनुमन्' इत्यादौ न दोष इति भावः ।

ननु अनयागममात्रे न तत्त्वमतिदिश्यते इत्यत आह—**अनयेति** । यदागमा इत्यत्रापीति शेषः । आगमाः यमुद्दिश्य विहितास्तद्ग्रहणेन तेऽपि गृह्यन्ते, अपिना तद्विशिष्टा अपीत्यर्थः । आगमविशिष्टसमुदाये तद्बोधनवदवयवे तद्बोधनमपि लोकन्यायसिद्धम् । अङ्गुल्यवयवे, पटावयवे चाङ्गुलीत्वपटत्वयोरारोपेणाङ्गुली दग्धेत्यादिव्यवहारात् क्वचित्समुदाये दृष्टस्यावयवेऽप्यारोप इतिभावः ।

अत एव आर्धधातुके इत्यस्येटो विशेषणात् 'गै' इत्यत्र "आतो लोप इटि च"

---

१. 'ग्रहणादुपलक्षणत्वेनोपदेशो योऽकारः' ईदृशः पाठः क० पु० ।
२. 'अतः' इति क० पु० पाठः । ३. 'श्लु' इत्यधिकः पाठः क० पु० ।
४. 'इति' इति नास्ति क० पु० । ५. 'परे' इति पाठः क० पु० ।

**किञ्च-गुणादे रपरत्वे रेफविशिष्टे गुणत्वाद्येष्टव्यम्। अन्यथा 'ऋकारस्य गुणवृद्धी अरारावेव' इति नियमो न स्यात्। तच्च 'वर्णग्रहणे' एतदप्रवृत्तौ न सङ्गच्छते। अत एव 'रदाभ्याम्' इति सूत्रे भाष्यम्—"गुणो भवति, वृद्धिर्भवति,**

---

( पा० सू० ६।४।६४ ) इत्याल्लोपो नेत्याकरोक्तं सङ्गच्छते। अन्यथा 'दधिथ' इत्यादावागमस्येटः आर्धधातुकत्वासम्भवात्तस्यासम्भवदुक्तिकत्वापत्तिः[1]।

न चैवं 'भूयासम्' इत्यादौ यासुट्यपि तिङ्त्वादिदेशे पदत्वाद् रुत्वापत्तिरिति वाच्यम्, अतिप्रसङ्गस्यानित्यत्वेन परिहर्तुं शक्यतयाऽदोषात्। ननु पदान्तावयवस्य नस्य णत्वं नेत्यर्थान्न दोषः, किञ्च 'कौ स्तः' इत्यत्रावादेशे पदान्तत्वस्यावश्यकतया तस्य वर्णमात्रवृत्तिधर्मत्वाभावात् सिद्धान्ते ङमो ङमुडित्यर्थस्यास्थितत्वाच्च न दोष इत्यरुचेराह—**किञ्चेति**।

**अरारावेति**। ननु गुणादिविधौ "उरण् रपरः" ( पा० सू० १।१।५१ ) इत्यस्योपस्थितौ किं लिङ्गम्? अनया च परिभाषया को वा अंश उपस्थाप्यते? उपस्थितस्य रपर इत्यादेर्विधिशास्त्रघटकेन केन पदेनान्वयः? कथं वा लक्ष्यसंस्कारकमहावाक्यार्थबोधः? कथञ्च रेफविशिष्टे गुणादिपदवाच्यता? इति चेदुच्यते, इयं च "इको गुण०" (पा० सू० १।१।३) इत्यादिवत् 'रपरः' इत्यादिपदोपस्थितिद्वारा नाणादिविधायकेन पदैकवाक्यतया कार्यव्यवस्थापिका किन्तु "अनुदात्तं पदम्०" ( पा० सू० ६।१।१५८ ) इत्यादिवत् स्वातन्त्र्येणैव लक्ष्ये प्रसज्यमानाणो रेफपरत्वविधायिका। तत्र यद्यपि वाच्यमर्यादया रेफावयवकाण एव विधानं प्रतीयते तथापि तत्रैकशेषस्थल इव प्राप्ताप्राप्तविवेकन्यायेन रेफमात्रविधाने वचनस्य तात्पर्यम्।

अत्र च 'उः' इति स्थानषष्ठी, 'रपरः' इति बहुव्रीहिरणो विशेषणम्, पूर्वसूत्रात् स्थानेग्रहणमनुवर्तते। तच्च प्रसङ्गावस्थायामित्यर्थद्वारा रेफप्रवृत्तिकालावधारणार्थम्। तथा च ऋकारस्य स्थाने प्रसङ्गावस्थायामण् रेफावयवको भवतीति सूत्रार्थः। एवञ्च तत्तद्विधिशास्त्रघटकीभूतेनाण्बोधकेन गुणादिपदेन त्रयाणामुपस्थितौ तत्कालसन्निहितेन "उरण्०" ( पा० सू० १।१।५१ ) इति शास्त्रेणाणो रपरत्वे सम्पादिते तत्कालोपस्थितया यदागमपरिभाषया रेफविशिष्टे गुणपदे वाच्यत्वग्रहे सति अन्तरतमपरिभाषयास्यैव प्रवृत्तिस्सिद्धयति। अन्यथा ऋकारस्यान्तरतमो[2] गुणो भवतीत्यर्थे प्रसज्यमानस्याणो रपरत्वेऽपि 'अर्' इत्यस्य गुणत्वाभावात् गुणस्यानन्तरतमत्वात्[3]—अव्यवस्थापत्तिरिति भावः।

---

१. 'अत एव कुर्वन् सन् इत्यत्र न पदान्तेति निषेधान्नुण्न। न च पूर्वत्रासिद्धमिति निषेधः शङ्क्यः, तत्र पदचरमावयवातिरिक्तस्यैव ग्रहणेनादोषात्' इत्यधिकः पाठः क० पु०।

२. 'स्थानेऽन्तरतमः' (पा० सू० १।१।५०) इति सूत्रनियमादित्यर्थः।

३. 'गुणसंज्ञस्यानन्तरतमत्वात्' इति पाठः क० पु०।

**रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते" इति। अत एव 'नेटि' 'णेरनिटि' इत्यादि चरितार्थम्।**

**'आनागमकानां सागमका आदेशाः' इत्यस्य त्वयमर्थः-आर्धधातुकस्येडागम इत्यर्थे ज्ञाते, नित्येषु शब्देष्वागमविधानानुपपत्त्या अर्थापत्तिमूलकवाक्यान्तरकल्पनेनेड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्त्तव्येति। एवञ्चादेशेष्विवात्रापि बुद्धिविपरिणाम इति न नित्यत्वहानिः।**

---

केचित्तु कार्यकालपक्षे यत्र गुणपदं तत्र "अदेङ्०" ( पा० सू० १।१।२ ) इत्युपस्थितेः प्राचीनैरङ्गीकारेण "उरण्०" ( पा० सू० १।१।५१ ) इत्यस्योपस्थित्या पदैकवाक्यतया ऋकारस्य स्थाने गुणाभिन्नोऽदेङ् च भवतीति बोधेन 'अर्' इत्यस्य गुणपदेन सामानाधिकरण्यादेङ इवास्यापि गुणत्वं सिद्धम्।

किञ्च "उरण्०" ( पा० सू० १।१।५१ ) इति सूत्रे स्थानेग्रहणस्यानुवृत्त्या प्रसङ्गावस्थायामेव रपरत्वविधानसामर्थ्येन तत्प्रसङ्गे नित्यसन्निहितेन तदवयवभूतेन रेफेण सिद्धान्ते इव गुणवृद्धचोरवयवद्वारकस्थानसाम्याश्रयणात्तस्य गुणत्वाभावेऽपि न दोषः। अत एव "एचोऽयवायावः" ( पा० सू० ६।१।७८ ) इत्यत्र 'संवृतावर्णस्य संवृतावर्णो विवृतावर्णस्य विवृतावर्णः' इत्यादि भाष्योक्तं सङ्गच्छत इत्याहुः।

न्यायसिद्धेऽर्थे लिङ्गमप्याह[1]—**अत एवेति**। परिभाषाङ्गीकारादेवेत्यर्थः। **चरितार्थमिति**। तद्धि परत्वात् नित्यत्वाच्च पूर्वमिटि 'मा भवानतीत्' 'कारयितव्यम्' इत्यादौ वृद्धिणिलोपाभावाय। एतदभावे तत्रेटा व्यवधानात्तयोरप्राप्त्या तदसङ्गतिः। इयं परिभाषा स्थानिवत्सूत्रेणैव गतार्था इति प्राचोक्तमसङ्गतमिति ध्वनयितुमाह—**अनागमकानामिति। कर्तव्येति**—इत्यस्य **अयमर्थ** इत्यनेनान्वयः। **अनुपपत्त्या**—इत्यत्राभेदे तृतीया। आर्धधातुकस्येडागमो भवतीत्यागमविधानप्रयोज्यशब्दनित्यत्वानुपपत्त्येत्यर्थः।

**अर्थापत्तिमूलकेति**। यथा 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादौ दिवा न भुङ्क्त इति वाक्यार्थज्ञानेन देवदत्ते पीनत्वानुपपत्तिज्ञानरूपार्थापत्तिप्रमाणेन तदुपपादकस्य रात्रिभोजनस्य कल्पनम्, एवमुक्तानुपपत्त्येड्रहितस्यार्धधातुकस्योच्चारणप्रसङ्गे इट्सहितमार्धधातुकमुच्चारणीयमित्यपूर्ववाक्यकल्पनयेत्यर्थः। अस्य वाक्यस्यास्मदादिपरिकल्पितत्वेऽपि पाणिनिपरिकल्पितवाक्येन समानफलत्वात् न प्रामाण्यहानिः। एतेन रात्रिभोजनेन पीनत्वोपपत्तिवन्नित्येषु शब्देष्वागमविधानानुपपत्त्या कल्प्यमानेनानेन वाक्येन तदुपपत्तेरसम्भवादिदमयुक्तमित्यपास्तम्।

---

१. 'लिङ्गमाह' इति पाठः क० पु०।

**स्थानिवत्सूत्रे च नेदृशादेशग्रहणम् । साक्षादष्टाध्यायीबोधितस्थान्यादेशभावे चारितार्थ्यात् । किञ्चैवं सति स्थानिबुद्ध्यैव कार्यप्रवृत्त्या 'निर्दिश्यमानस्य' इति परिभाषाया अप्राप्त्याऽडागमसहितस्य पिबाद्यादेशापत्त्या 'लावस्थायामडिति' भाष्योक्तसिद्धान्तासङ्गतिः । स्थानिवद्भावविषये 'निर्दिश्यमानस्य' इति परिभाषायाः प्रवृत्तौ 'तिसृणाम्' इत्यत्र परत्वात्तिस्रादेशे स्थानिवद्भावेन त्रयादेशमाशङ्क्य, 'सकृद्गति' न्यायेन समाधानपरभाष्यासङ्गतिः ।**

---

ननु तेस्तुरित्यादाविवात्राप्यानुमानिकादेशकल्पनस्यावश्यकतया स्थानिवद्भावेनैव निर्वाहादियं परिभाषा निरर्थिकेति तदुक्तमनूद्य दूषयति :— **स्थानिवत्सूत्रे चेति । ईदृशेति ।** शुद्धागमस्थलीयानुमानिकादेशस्येत्यर्थः । तेन "उरण्०" ( पा० सू० १।१।५१ ) इत्येतद्विषये 'तीः' इत्यादौ न दोषः । **चारितार्थ्यादिति ।** प्रतिपदोक्तत्वादिति भावः । ननु परिभाषानाश्रयणलाघवानुरोधेन तत्रत्यादेशग्रहणसामर्थ्येन च सर्वस्यापि ग्रहणमास्तां बुद्धिविपरिणामाविशेषादित्यरुचेराह—**किञ्चेति । सिद्धान्तासङ्गतिरिति ।**

न चातिदिश्यमानधर्ममुपजीव्य यद्व्यक्तावादेशश्चिकीर्षितस्तत्र वक्ष्यमाणभाष्यप्रामाण्येन "निर्दिश्यमान०" ( पारि०१३ ) परिभाषाया आदेशप्रवृत्तिप्रतिवन्धकत्वानङ्गीकारेऽपि यस्य कस्यचित्सागमकस्य वारणार्थमनागमकस्य स्थाने सागमकास्त एव भवन्तीति निर्दिश्यमानरूपाविरोधेन तद्बुद्धिपूर्वकमेवादेशप्रवृत्त्याऽतिदिदिक्षितधर्मवैकल्यप्रयुक्तोपदेशाप्रवृत्त्यसम्भवेन तदवयवे कार्यप्रवृत्ते स्थानिवद्भावानपेक्षत्वादीदृशे विषये निर्दिश्यमानपरिभाषाप्रवृत्तौ न वाधकम् । यद्यपि निर्दिश्यमानस्यार्थवत्त्वं न सम्भवति तथाप्यड्विशिष्टस्यार्थवत्पाशब्दत्वेन तदवयवस्य निर्दिश्यमानस्येति वैय्यधिकरण्येनान्वयान्न दोषः । अन्यथा सिद्धान्तेऽप्यर्थवत्त्वस्य दुरुपपादत्वादिति वाच्यम्, एकाच्द्विर्वचनन्यायेनाड्विशिष्ट एव पिबादेशापत्त्या दोषस्य दुर्वारत्वात् ।

न च अन्त्यसदेशानन्त्यसदेशयोरेकत्र युगपत्कार्यप्राप्तावन्त्यसदेश एवेति नियमवदुक्तभाष्यप्रामाण्येन निर्दिश्यमानानिर्दिश्यमानयोरेकस्मिँल्लक्ष्ये यत्र युगपत्प्राप्तिः, तत्र निर्दिश्यमानस्यैव कार्यप्रवृत्तिरिति नियमेनैव 'अपिबत्' इत्याद्युपपत्तेस्स्थानिवद्भावविषये निर्दिश्यमानपरिभाषा नेति कल्पने न मानमिति वाच्यम्, 'यस्यै' 'तस्यै' इत्यत्र निर्दिश्यमानस्यादन्तात्परत्वाभावेन निर्दिश्यमानानिर्दिश्यमानयोरेकस्मिँल्लक्ष्ये युगपदप्राप्त्याऽनया तत्परिहारपरभाष्यासङ्गतेः ।

ननु स्थानिवद्भावविषये निर्दिश्यमानपरिभाषाप्रवृत्तौ किं बाधकमत आह—**असङ्गतिरिति ।** न ह्युपायस्योपायान्तरादूषकत्वान्नेदं साधकमिति

**'एरुः' इत्यादौ स्थानषष्ठीनिर्देशात्तदन्तपरतया पठितवाक्यस्यैव समुदायादेशपरत्वेनाऽऽदेशग्रहणसामर्थ्यात्तस्य स्थानिवत्सूत्रे ग्रहणेन न दोषः। आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इति 'अचः परस्मिन्' इत्यादेर्नासङ्गतिः।**

**एतेन—'यदागमाः' इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम्। एतत्सर्वम् 'दाधाघ्वदाप्' इति सूत्रे भाष्ये स्पष्टम्॥ ११॥**

**नन्वेवम् उदस्थादित्यादौ 'उदःस्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णापत्तिरत आह—**

**निर्दिश्यमानस्याऽऽदेशा भवन्ति॥ १२॥**

**'षष्ठी स्थानेयोगा' इति सूत्रमावर्तते। तत्र द्वितीयस्यायमर्थः—षष्ठ्यन्तं**

---

वाच्यम्, तथा सति पुनः प्रसक्तेरेवाभावेन सकृद्गतिन्यायेन वारणपरभाष्याङ्गतेः[1]।

केचित्तु—'परिसोढा' इत्यादौ "परिनिविभ्यः०" ( पा० सू० ८।३।७० ) इति प्राप्तषत्वव्यावृत्तये कृतस्य "सोढः" ( पा० सू० ८।३।११५ ) इति निषेधस्य वैय्यर्थ्यापत्त्या स्थानिवद्भावविषये निर्दिश्यमानपरिभाषाऽप्रवृत्तिरित्याहुः।

एवञ्च स्थानिवत्त्वेन कार्यप्रवृत्तिविषये निर्दिश्मानबुद्ध्यैव कार्यप्रवृत्त्या तत्परिभाषाया अवाध एवेति बोध्यम्।

ननूक्तरीत्यानुमानिकादेशस्यादेशग्रहणेनाग्रहणे "एरुः" ( पा० सू० ३।४।८६ ) इत्यादौ दोषः, अत आह—**एरुरिति**। श्रौतस्थानषष्ठ्यन्तपदबोध्यशब्दघटितार्थवत्समुदायस्थानिकादेशस्य स्थानिवत्सूत्रे ग्रहणेन न दोषः इति भावः। **एतेनेति**। अस्या वर्णग्रहणेऽपि प्रवर्त्तनेनेत्यर्थः। **अपास्तमिति**। अल्विधौ तदप्रवृत्तेः॥ ११॥

**पूर्वसवर्णापत्तिरिति**। लावस्थायामडिति पक्षेऽटस्स्थाभक्तत्वेन तद्विशिष्टस्य सूत्रस्थस्थापदजन्यप्रतीतिविषयत्वादिति भावः। सत्यां त्वस्यामुदः परस्य निर्दिश्यमानस्यैव कार्यित्वबोधनेनाटा व्यवधानान्न तत्प्राप्तिरिति बोध्यम्। **आवर्तत इति**। बोद्धुरावृत्त्यैव बोध इति सिद्धान्तादिति भावः। पूर्वसूत्रेणैव षष्ठ्यास्स्थानरूपसम्बन्धप्रतिपादकत्वस्य स्थानपदार्थनिरूपितसम्बन्धप्रतिपादकत्वस्य वा सिद्धतया इदं नियमार्थम्।

अत्र सामर्थ्यान्निर्दिश्यमानस्येत्यध्याह्रियते। **षष्ठ्यन्तमिति**। सूत्रे षष्ठीपदं प्रत्ययग्रहणपरिभाषया तदन्तपरम्। 'पादः पत्' ( पा० सू० ६।४।१३० )

---

१. 'अत एव निर्जरसावित्यादौ जरसादेशसिद्धिः' इत्यधिकः पाठः क० पु०।

इत्यादौ "येन विधिः०" ( पा० सू० १।१।७२ ) इति शास्त्रेण "स्वं रूपम्०" ( पा० सू० १।१।६८ ) इति शास्त्रेण च सूत्रस्थपाच्छब्दस्य तदन्ते स्वरूपे च शक्तिग्रहेण निर्दिश्यमानानिर्दिश्यमानयोरुभयोरपि प्रकृतिवृत्त्युपस्थाप्यतयोभयोरपि पूर्ववाक्यबोधितनिरुक्तषष्ठीवाच्यसम्बन्धान्वयेनोभयोरपि स्थाननिवत्त्वे प्राप्ते, उच्चार्यमाणमेव षष्ठ्यन्तं निरुक्तसुबर्थभूतसम्बन्धेन युज्यते न त्वनुच्चार्यमाणमपीति नियम्यते ।

षष्ठ्यन्तपदेन च प्रकृतिप्रत्ययसमुदायस्योपस्थित्त्या तत्र समुदाये निरुक्तसम्बन्धार्थकत्वस्य निरुक्तसम्बन्धप्रतियोगित्वस्य च बोधनासम्भवेन सामर्थ्यात् तद्घटके प्रकृतिभूते शब्दे प्रत्यये च प्रत्येकं वाक्यस्य परिसमाप्तिः । तथा च शास्त्रे उच्चार्यमाणा षष्ठी प्रकृतिः । उच्चार्यमाणा षष्ठी च स्थानपदार्थनिरूपितसम्बन्धवती न त्वनुच्चार्यमाणेति फलति ।

तत्रोच्चार्यमाणषष्ठ्या निरुक्तसम्बन्धवत्त्वञ्च निरुक्तसम्बन्धार्थकत्वमेव । उच्चार्यमाणप्रकृतेर्निरुक्तसम्बन्धवत्त्वञ्च निरुक्तसम्बन्धप्रतियोगित्वरूपम् । तत्रोच्चार्यमाणषष्ठ्या निरुक्तसम्बन्धार्थकत्वस्योच्चार्यमाणप्रकृतेरपि प्रकृतिवृत्त्युपस्थाप्यत्वात्, षष्ठीवाच्यनिरुक्तसम्बन्धप्रतियोगित्वस्य च सिद्धतया इदं वाक्यं निषेधमुखेनानुच्चार्यमाणस्य षष्ठीप्रकृतिवृत्त्युपस्थाप्यस्य निरुक्तसम्बन्धप्रतियोगित्वाभावमनुच्चार्यमाणषष्ठ्या निरुक्तसम्बन्धार्थकत्वाभावञ्च बोधयति । तत्र प्रत्ययांशे निषेधस्तु प्राये[1]णानुवाद एव । तेन चोच्चार्यमाणस्यैव स्थानित्वान्निर्दिश्यमानपरिभाषा सिद्धा ।

यद्वा पूर्वोक्तरीत्या निर्दिश्यमानवदनिर्दिश्यमानस्यापि प्रकृतिवृत्त्युपस्थाप्यत्वेनोभयोरपि षष्ठीवाच्यनिरुक्तसम्बन्धान्वयेन स्थानित्वे प्राप्ते यत्र षष्ठ्यन्तं तत्र प्रकृतिवृत्त्युपस्थाप्यं निर्दिश्यमानमेव निरुक्तसम्बन्धप्रतियोगीत्यर्थेनेदं सिद्धम् ।

ननु "येन विधिः०" ( पा० सू० १।१।७२ ) इति सूत्रबलेन तदन्तस्यैव प्रकृतिवृत्त्युपस्थाप्यत्वात् केवले तदसम्भवात्तस्य प्रत्ययार्थेऽन्वयो दुर्वचः । न च प्रथमं "स्वं रूपम्०" (पा० सू० १।१।६८) इति शास्त्रेणोपस्थितस्य केवलप्रकृत्यर्थस्य विशेषणत्वमुपजीव्यैव तदन्ते शक्तिग्रहणे तस्यापि तद्वृत्त्युपस्थाप्यत्वमक्षतमेवेति वाच्यम्, "स्वं रूपम्०" ( पा० सू० १।१।६८ ) इति शास्त्रेण लौकिकशक्त्या वाऽऽपाततःप्रथमं प्रतीतस्यापि तदन्तविधिं प्रति निमित्तत्वेनोपक्षीणत्वात् तदन्तस्यैव प्रकृतिवृत्त्युपस्थाप्यत्वेन केवले तदसम्भवात् ।

---

१. प्रायेण' इति नास्ति क० पु० ।

व्यपदेशिवद्भावेन केवलस्य तद्बोध्यत्वेऽपि निर्जरशब्दघटकजरशब्दे आदेशो दुर्वचः, तत्र ससहाये व्यपदेशिद्भावाप्रवृत्त्योद्देश्यतावच्छेदकीभूतजराशब्दान्तत्वासम्भवात्। तत्तदादेशविधानं तु केवलस्यापि व्यपदेशिवद्भावेन तदन्तत्वात्तत्र चरितार्थमिति चेत्, न; पूर्वोक्तेन नियमेनानिर्दिश्यमानस्य प्रकृतिवृत्त्युपस्थाप्यस्य सुबर्थेनान्वयाभावस्य बोधितत्वेनेदृशे विषये तदन्ते शक्तिग्रहे फलाभावेन वैय्यधिकरण्येनैवान्वयाङ्गीकारात्। श्रूयमाणस्यैव प्रकृतिवृत्त्युपस्थाप्यत्वात्, तस्यैव वान्वय इत्याशयात्। एवञ्च[1] प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमेऽत्र शास्त्रे निरुक्तसम्बन्धबोधकषष्ठ्या उच्चार्यमाणप्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति फलितम्।

एतेन षष्ठ्यन्तं द्विविधम्। उच्चार्यमाणम्, प्रतीयमानञ्च। तत्राद्यं सूत्रस्थं जराया इति। अन्त्यं सूत्रस्थजराशब्दस्य तदन्तपरत्वात् जराशब्दान्तस्याङ्गस्य जरस् भवतीति तदन्तपरतयोपप्लूयमानवाक्यस्थम्। तत्र सर्वं वाक्यमिति न्यायेन निर्दिश्यमानमित्यस्य सामर्थ्यान्निर्दिश्यमानमेवेत्यर्थः।

तथा चायमर्थः। निर्दिश्यमानमेव षष्ठ्यन्तं पूर्वोक्तेन स्थानपदार्थनिरूपितसम्बन्धेन युज्यते, न तु 'येन विधिः०' ( पा० सू० १।१।७२ ) इति सूत्रसहकारेण षष्ठीप्रकृत्याप्रत्यापितजराशब्दान्ताङ्गस्य जरस् भवति-इति[2] वाक्यस्थषष्ठ्यन्तमिति। तस्य निरुक्तसम्बन्धार्थकत्वाभावबोधनेन तेन वाक्येन जराशब्दान्ताङ्गे प्राप्तस्थानितानिवृत्तिः क्रियत इति (सूत्रे[3] जराया इति निर्दिश्यमानषष्ठ्यन्तस्यैव तदर्थनिरूपितसम्बन्धार्थकत्वेन तत्र सुबर्थे षष्ठीप्रकृतिवृत्त्युपस्थाप्यस्यान्वयेन निर्दिश्यमान) जराशब्द एव स्थानिताया उपसंहारस्सिद्धयतीति निर्दिश्यमानस्येति परिभाषा सिद्धा।

यद्वा द्वितीयं सूत्रं नियमार्थम्। षष्ठ्येव स्थानपदार्थनिरूपितसम्बन्धप्रतिपादिनी। सामर्थ्यान्निर्दिश्यमानेत्यध्याह्रियते। एवञ्च निर्दिश्यमानैव षष्ठी स्थानपदार्थनिरूपितसम्बन्धप्रतिपादिनी न तु प्रतीयमानेति "जराया जरस्०" ( पा० सू० ७।२।१०१ ) इत्यादौ "पदाङ्गाधिकारे०" ( परि० २९ ) इति परिभाषया कल्पिते जराशब्दान्ताङ्गस्य जरसादेशो भवतीति वाक्ये श्रूयमाणा षष्ठी व्यावर्त्यते इति जराशब्दस्यैव स्थानित्वं न तदन्ताङ्गस्येतीयं सिद्धेत्यप्यपास्तम्। 'यस्यै' 'तस्यै' इत्यादौ सागमकस्य 'यदागमाः०' ( परि० १२ ) इति

१. 'एवञ्च' इत्यादितः 'फलितम्' इत्येतत्पर्यन्तं नास्ति क० पु०।

२. 'इति वाक्यस्थ' इति नास्ति क पुस्तके 'उपप्लुतस्थ' इति वर्तते।

३. 'सूत्रे' इत्यादितः 'निर्दिश्यमान' इत्येतत्पर्यन्तं मूलपुस्तके कोष्ठके वर्तते क० पु० च नास्ति।

**निर्दिश्यमानम्=उच्चार्यमाणमुच्चार्यमाणसजातीयमेव, निर्दिश्यमानावयवरूपमेव वा स्थानेन स्थाननिरूपितसम्बन्धेन युज्यते, न तु प्रतीयमानमित्यर्थः। तनेदं सिद्धम्**

---

परिभाषयागमिधर्मातिदेशेन सागमकस्यापि ङेत्वेनैवादेशविधावुद्देश्यतया तत्रादेशप्राप्तये श्रूयमाणवाक्यापेक्षया वाक्यान्तरस्य कल्पनाभावेन पूर्वोक्तनियमेन वारणासम्भवात् ।

ननु षष्ठीनिर्दिष्टस्य यत्रादेशा उच्यन्ते तत्रैवानेन नियमेनाधिकस्य व्यावृत्तेरङ्गीकारात् ''तृज्वत्क्रोष्टुः'' (पा० सू० ७।१।९५) इत्यादावस्या अप्रवृत्त्यापत्त्या परमकोष्टुशब्देऽपि तृज्वद्भावे 'क्रोष्टा' इत्याद्यापद्येतेति चेत्, न; सूत्रे तुन्नन्तस्य ङसि परतः तृज्वद्भावे कृते 'क्रोष्टुः' इति षष्ठ्यन्तस्यैव सम्भवेनैतत्परिभाषाप्रवृत्त्योक्तदोषानवतारात् ।

ननु अनुकार्यस्यादेशेन सम्बन्धेऽपि तस्य न निर्देशः, यस्य निर्देशो न तस्यादेशे न सम्वन्ध इति चेत्, न; अनुकार्यानुकरणयोरभेदपक्षे प्रयोगस्थस्यापि निर्दिश्यमानत्वसम्भवात् । तदाह—**निर्दिश्यमानमिति ।** भेदपक्षेऽप्याह—**निर्दिश्यमान (उच्चार्यमाण) सजातीयमिति ।**

ननु—एवम् 'अतिस्यः' इत्यत्रोपसर्गतकारस्यापि सत्वापत्तिः ''त्यदादीनामः'' ( पा० सू० ७।२।१०२) इत्यस्यावयवषष्ठीत्वात्, स्थानषष्ठीविषयेऽस्य नियमस्याप्राप्तेः । ''तदोः०'' ( पा० सू० ७।२।१०६ ) इत्यस्य स्थानषष्ठीत्वेऽप्युपसर्गतकारस्यापि तत्त्वावच्छिन्नतया व्यावृत्त्यसम्भवादत आह—**निर्दिश्यमानावयवेति ।** त्यदाद्यन्तं यदङ्गं तदवयवयोर्निर्दिश्यमानयोस्तदोरिति सामानाधिकरण्येनान्वये फलाभावेन सामर्थ्यान्निर्दिश्यमानस्येत्यस्य वैय्यधिकरण्येनान्वयेन त्यदाद्यन्तसम्बन्धिनो निर्दिश्यमानस्यावयवयोस्तदोरित्यर्थान्न दोष इति भावः, ।

एतेन ''तदोः०'' ( पा० सू० ७।२।१०६ ) इति सूत्रे तोरिति न्यासेऽपि 'अनेषः' इत्यत्र न दोषः । तत्र सूत्रे त्यदाद्यन्तं यदङ्गं तदवयवीभूतो यो निर्दिश्यमानस्तदवयवयोस्तदोरित्यर्थात् । निर्दिश्यमानावयवत्वञ्च-निर्दिश्यमानत्यदादिघटकत्वमेवेति 'अनेषः' इत्यत्र नुटोऽतथात्वान्न सत्वप्राप्तिरित्यपास्तम् । अत्र न्यासे नकारे निर्दिश्यमानत्वस्य, निर्दिश्यमानावयवत्वस्य चानपायात्सत्वापत्तेः । अत एव ''श्नसोरल्लोपः'' ( पा० सू० ६।४।१११ ) इत्यत्र तपरकरणमाभीयासिद्धत्वस्यानित्यत्वे ज्ञापकमिति भाष्योक्तं सङ्गच्छते ।

ननु 'अनन्त्यविकारे' ( परि० १०४ ) इति परिभाषया 'अतिस्यः' इत्यत्र न दोषः । न चान्त्यवर्णतद्वर्णयोरितराव्यवधाने एव तत्प्रवृत्तिः, इतरपदेन हल्भिन्नस्यैव ग्रहणादिति चेत्, न; 'अतियूयम्' इत्याद्यर्थमवयवषष्ठीविषयेऽप्येतत्प्रवृत्तेरावश्यकतया तयैव 'अतिस्यः' इत्यत्राप्यदोष इत्याशयात् ।

**न च 'अस्य च्वौ' इत्यादौ दीर्घाणामादेशानापत्तिः, तेषां निर्दिश्यमानत्वाभावादिति वाच्यम्, जातिपक्षे दोषाभावात् । किञ्च 'न भूसुधियोः' इति निषेधेन**

---

ननु "अस्य च्वौ" ( पा० सू० ७।४।३२ ) इतीत्वं 'मालीभवति' इत्यत्र न स्यात्, ग्रहणकशास्त्रेण गृहीतस्य दीर्घस्यानिर्दिश्यमानत्वादिति शङ्कते—**न चेति । दोषाभावादिति ।** ननु जातिपक्षे तेन तज्जात्याश्रयस्य सर्वस्य प्रतीयमानत्वेऽपि ह्रस्वव्यक्तिवद् दीर्घादिव्यक्तीनामनिर्दिश्यमानत्वेन तत्रेत्त्वं दुर्वचमिति चेत्, न; अनुकार्यानुकरणयोर्भेदपक्षे प्रयोगस्थव्यक्तेरप्यनिर्दिश्यमानत्वेन सूत्रवैयर्थ्यापत्त्या सामर्थ्यात् सर्वत्र जातिपक्षाश्रयणेन निर्दिश्यमानव्यक्तिवृत्तिजात्यवच्छिन्नस्य कार्यं भवतीत्यर्थस्यावश्यकतया तेनैव दीर्घादिष्वपीष्टसिद्ध्या न दोष इत्याशयात् ।

ननु 'उदस्थात्' इत्यादावागमविशिष्टेऽप्यागमिनिष्ठस्थात्वादिधर्मातिदेशेन निर्दिश्यमानव्यक्तिनिष्ठजात्यवच्छिन्नतयोदः परस्य निर्दिश्यमानव्यक्तिनिष्ठजात्यवच्छिन्नस्यादेरलः पूर्वसवर्णो भवतीत्यर्थे दोषापत्त्या तत्र सजातीयेत्यस्य सरूपेत्यर्थाद्दीर्घे ह्रस्वसारूप्याभावाद्दोषो दुर्वार एवेत्यत आह—**किञ्चेति ।**

ननु सुष्ठु ध्यायतीति 'सुधिकुलम्' प्रियं सुधियस्य 'प्रियसुधिः 'प्रियसुधियौ' इत्यादौ ह्रस्वस्य सम्भवान्नेदं ज्ञापकम् । न च गतिकारकपूर्वस्यैव यणिति भाष्ये पठ्यते, तच्च यण्विध्येकवाक्यतया न विधायकम्, एवकारस्यानन्वयापत्तेः, कुमार्यावित्याद्यसिद्ध्यापत्तेश्च । अतस्तन्नियामकमेव । तेन गतिकारकपूर्वभिन्नस्य नेत्यर्थः । "समासेऽनञ्पूर्वे०" ( पा० सू० ७।१।३७ ) इत्यत्रेवात्रापि गतिकारकपूर्वभिन्नं तत्सदृशं सपूर्वपदकमेव गृह्यते । तेन बहुच्पूर्वे 'निन्यतुः' इत्यादौ च न दोषः ।

एवं च 'प्रियसुधियौ' इत्यादौ चाङ्गस्य गतिकारकभिन्नपूर्वपदकत्वेन नात्र यणः प्राप्तिरिति वाच्यम्, "ल्यपि लघुपूर्वात्" ( पा० सू० ६।४।५६ ) 'यकपूर्वायाः' इत्यत्रेव पूर्वशब्दस्य दिग्वाचकत्वेन पञ्चम्यर्थबहुव्रीहिणा गतिकारकयोर्धातुनिरूपितत्वात्, धातोरन्यपदार्थत्वेन नियमवाक्यानां निषेधमुखेन प्रवृत्त्या गतिकारकपूर्वभिन्नस्य तत्सदृशस्य सपूर्वपदस्य धातोर्यण्[1] भवतीत्यर्थेन प्रकृते सुपूर्वत्वेन गतिपूर्वत्वानपायादिति चेत्, न,—"एरनेकाचः०" ( पा० सू० ६।४।८२ ) इति सूत्रे 'ब्राह्मणस्य नियः' इति वाक्येऽतिप्रसक्तिमाशङ्क्य तस्यानङ्गत्वेन समाधाय 'ब्राह्मणनियः' इति समस्ते पुनरतिप्रसङ्गमाशङ्क्य गतिकारकपूर्वस्यैव यण् इष्यत इति रीत्या समाहितम् ।

---

१. 'न' इत्यधिकः पाठः क० पु० ।

**ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनान्न दोषः। इयङुवङोर्ङित्त्वं तु इवर्णोवर्णान्तश्नुधातुभ्रुवामित्यर्थेन धात्वादिनामपि निर्दिष्टत्वादन्त्यादेशत्वाय। रीङ्रिङोर्ङित्त्वं तु स्पष्टार्थमेव।**

**एतेनेदं ङित्त्वं वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिज्ञापकमित्य-**

---

तेनावयववाचकपूर्वशब्देन षष्ठ्यर्थबहुव्रीहिणा प्राधान्यादङ्गविशेषणत्वमेव स्वरसतः प्रतीयत इति 'प्रियसुधियौ' इत्यादौ अङ्गस्य गतिकारकपूर्वत्वाभावेन यणोऽप्राप्तेः। अत एव 'परमप्रधी' शब्दे न यणित्याहुः। **न दोष इति।** अत एव 'गम्ऌ' शब्दादाचारक्विपि 'गम्रियात्' इत्यादौ रिङादेशसिद्धिः।

केचित्तु "इतोऽत्सर्वनामस्थाने" (पा० सू० ७।१।८६) इति सूत्रस्थं तपरकरणमिह ज्ञापकम्। तद् हि पथीयतेः क्विपि औजसादावित्ववारणाय, यद्यत्र 'निर्दिश्यमान०' (पारि० १२) इति स्यात्तदा तदप्रसङ्गात्तद्वैयर्थ्यं स्पष्टमेवेत्याहुः।

ननु—इयङुवङोर्ङित्त्वं व्यर्थम्, भूप्रभृतीनां धातुपदेन प्रतीयमानत्वेऽपि तेषां शास्त्रे उच्चारणाभावान्निर्दिश्यमानयोः य्वोरेव भविष्यति, इत्यत आह—**ङित्त्वं त्विति। निर्दिष्टत्वादिति।** एवञ्च भूप्रभृतीनां लोकप्रसिद्धधातुपदवृत्त्यैवोपस्थित्या "येन विधिः०' (पा० सू० १।१।७२) इत्यादेस्तत्राप्रयोजकत्वेनैतत्परिभाषाप्रवृत्तिस्सुकरेति भावः। निर्दिश्यमानत्वम् "स्वं रूपम्०" (पा. सू. १।१।६८) इति शास्त्रातिरिक्तलोकाप्रसिद्धशक्तिग्राहकशास्त्राननुसन्धानकालीनो-( कालिको ) च्चार्यमाणपदजन्योपस्थितिविषयत्वम्। अथवा स्वबोध्याघटितत्वे सति स्वबोध्यत्वम्। अत्र पक्षे "अस्य च्वौ" (पा० सू० ७।४।३२) इत्यादौ दीर्घादीनामपि निर्दिश्यमानत्वमक्षतमिति न ज्ञापकापेक्षेत्याहुः।

अन्ये तु येन रूपेण प्रयोगघटकता तेन रूपेण तत्पदोपस्थाप्यत्वं तदित्याहुः[1]। केचित्तु स्थानितानवच्छेदकानुपूर्व्यनवच्छिन्नत्वरूपं विवक्षितम्। "पादः पत्" (पा० सू० ६।४।१३०) इत्यादौ स्थानितावच्छेदकं पाच्छब्दत्वं तदन्तत्वं वा दनवच्छेदिका आनुपूर्वी सुपादित्यानुपूर्वी, तदनवच्छिन्नत्वस्य पाच्छब्दे सत्त्वात् तत्सङ्गतिः।

"विसर्जनीयस्य सः" (पा० सू० ८।३।३४) इत्यादौ स्थानितावच्छेदकं विसर्गत्वं तदनवच्छेदिकाऽऽनुपूर्वीघटादिशब्दनिष्ठा तदनवच्छिन्नत्वस्य विसर्गे

---

१. 'तदित्याहुः' इत्यस्य स्थाने। 'अन्यार्थोपस्थितिप्रयोजकोपस्थितिविषयत्वमन्योपस्थितिप्रयोज्योपस्थित्यविषयत्वं यतः षष्ठी उच्चारिता तत्पदजन्यप्रथमोपस्थितिविषयत्वं षष्ठीप्रकृत्यर्थसमभिव्याहृतवर्णाघटितत्वं वा तत्त्वमित्याहुः'। इत्येवं पाठः क० पु०।

**पास्तम् । 'हयवरट्' सूत्रस्थेन 'अयोगवाहानामुपदेशेऽलोऽन्त्यविधिः प्रयोजनम्, वृक्षस्तत्र। नैतदस्ति प्रयोजनम्, निर्दिश्यमानस्येत्येव सिद्धम्'—इति भाष्येण विरोधात् ।**

---

सत्त्वात् "हयवरट्" ( शि० सू० ५ ) इति सूत्रस्थं भाष्यमपि न प्रतिकूलम् । "णेरनिटि" ( पा० सू० ६।४।५१ ) इत्यादौ स्थानितावच्छेदकं णित्वं तदनवच्छेदिका घटादिनिष्ठानुपूर्वी तदनवच्छिन्नत्वस्येकारे सत्त्वेऽपि निर्दिश्यमानपदबोध्यत्वाभावात् 'आटिटत्' इत्यादौ न णिलोपाप्राप्तिरिति न तद्भाष्यविरोधः ।

निपातपदेनेव धातुपदेन भूत्ववात्वादीनां प्रातिस्विकरूपेणैवोपस्थित्या भूत्वादीनामेव स्थानितावच्छेदकत्वेन तदनवच्छेदकघटादिशब्दनिष्ठानुपूर्व्यनवच्छिन्नत्वादियङुवङोर्ङित्करणमपि चरितार्थम् ।

त्यदादिपदेनापि तदादीनां प्रातिस्विकरूपेणोपस्थित्या स्थानितावच्छेदकानुपूर्वी तदादिनिष्ठा तदनवच्छेदिका घटादिनिष्ठानुपूर्वी तदनवच्छिन्नत्वरूपं निर्दिश्यमानत्वमक्षतमिति ।

अत्र सूत्रे निर्दिश्यमानत्यदाद्यवयवयोस्तदोरित्यर्थात् 'अतिस्यः' इत्यादौ न दोषः । अङ्गपदेन तु तदादिभूतघटादिपदानां प्रातिपदिकपदेनेव प्रातिस्विकरूपेणानुपस्थित्याङ्गपदवत्त्वेनोपस्थित्या स्थानितावच्छेदकमङ्गपदं तदनवच्छेदकानुपूर्वी घटादिनिष्ठा तदवच्छिन्नत्वमेवेति नातिव्याप्तिरिति न दोष इत्याहुः । अन्ये तु धात्वादीत्यत्रातद्गुणसंविज्ञानबहुव्रीहिणादिपदेन श्नुभ्रुस्त्रीशब्दपरिग्रह इत्याहुः ।

ननु धाताविव श्नुभ्रुस्त्रीशब्दांशेऽपि य्वोरित्यनुवृत्त्या तदन्तविधिनैव स्थानिता वाच्या, अन्यथा 'प्राप्नवानि' भ्रूरिवाचरति 'भ्रवति' पञ्चभिस्स्त्रीभिः क्रीतः पञ्चस्त्रावित्यादौ[1]-अतिस्त्रिशब्दे च परत्वाद्गुणे उवङाद्यापत्तेः । न च 'सकृद्गति०' ( परि० ४० ) न्यायेन 'प्राप्नवानि' इत्यादौ न दोषः, य्वोरिति विशेषणाभावे उवङो नित्यत्वेन विप्रतिषेधाप्रवृत्तेः ।

एवञ्च "येन विधिः०" ( पा० सू० १।१।७२ ) इति सूत्रसहकारेणैव एषु समुदायस्य स्थानित्वप्रतीत्या तस्यानया वारणान्न समुदायस्यादेशप्राप्तिरिति ङित्करणं व्यर्थमिति चेत्, न; तदन्तविधिना प्रतीयमानस्यापि साक्षान्निर्देशेन भ्रूत्वादेरपि स्थानितावच्छेदकत्वेनानिर्दिश्यमानत्वकल्पने मानाभावात् । अत एवानङो ङित्करणं चरितार्थम् । अन्यथा "इकोऽचि०" (पा० सू० ७।१।७३ ) इति सूत्रादिग्ग्रहणानुवृत्त्येगन्तस्यास्थ्यादेरनङित्यर्थेनेष्टसिद्धया ङित्करणस्य वैयर्थ्यं स्पष्टमेव । **विरोधादिति ।** विसर्गस्य निर्दिश्यमानत्वं तूक्तरीत्यैव बोध्यम् । वस्तुतो वर्ण-

---

१. 'पञ्चस्त्रियौ' इति पाठः क० पु० ।

**अनया परिभाषया 'येन विधिः' इति सूत्रबोधिततदन्तस्य स्थानित्वाभाव-बोधनम्, यदागमा इति लब्धस्य च। तेन 'सुपदः' 'उदस्थात्' इत्यादिसिद्धिः।**

**अनया च स्वस्वनिमित्तसन्निधापितानाम् 'अलोऽन्त्यस्य' इत्यादीनां समावेश एव, न बाध्यबाधकभावः, विरोधाभावात्।**

---

ग्रहणेऽस्याः प्रवृत्तौ फलं चिन्त्यम्। वर्णग्रहणे इत्यस्यालग्रहणे इत्यर्थाद् भाष्य-विरोधोऽपि नेति केचित्[1]।

ननु 'महती प्रिया यस्य' इत्यादावात्त्वमाशङ्क्य लिङ्गविशिष्टपरिभाषाया अनित्यत्वेन समाधानपरभाष्यासङ्गतिः, निर्दिश्यमानस्योत्तरपदपरकत्वाभावेनोत्त-रपदपरकस्य महतीशब्दस्यानिर्दिश्यमानत्वेनात्त्वाप्राप्तेरित्यत आह—**अनयेति**। लिङ्गविशिष्टपरिभाषया महतीशब्दे महत्त्वस्यातिदिष्टत्वेन स्थानिवद्भावविषय इव तद्बुद्ध्यैव कार्यप्रवृत्त्या नानया तद्वारणं सम्भवतीत्येतत्फलेषु तदनुपन्यासः। ( यदागमपरिभाषा तु नापूर्वातिदेशिनीति[2] ) तदुभयविषयकोदाहरणमेवोपन्यस्त-मिति भावः। एतत्फलं तु 'आग्नायिवारुणं कर्म' इत्यादौ "इद् वृद्धौ" ( पा० सू० ६।३।२८ ) इतीत्त्व[3] सिद्धिरित्याहुः।

ननु "पादः पत्" (पा० सू० ६।४।१३०) इत्यादौ पाच्छब्दान्ते प्रसक्तकार्यस्य पाच्छब्देऽनयानुपसंहारवत् "त्यदादीनामः" ( पा० सू० ७।२।१०२ ) इत्यादौ त्यदाद्यन्ताङ्गे प्रसक्तकार्यस्य त्यदादावुपसंहारात्त्यदादेस्स्थाने भवत्युतालोऽन्त्य-परिभाषयान्त्येऽलि, स्थानिताया अनुपसंहारादन्त्येऽलि भवतीति विषये परस्पर-विरोधादुभयोरप्यप्रवृत्तौ सर्वादेशप्रसङ्गः। पर्यायेण प्रवृत्तौ पाक्षिको दोषो दुवारोऽत आह—**अनया चेति**। सहेति शेषः।

**विरोधाभावादिति**। अवयवषष्ठी विषये "ष्यङः सम्प्रसारणम्०" ( पा. सू. ६।१।१३ ) इत्यादौ 'निर्दिश्यमानस्येत्यस्य' "सार्वधातुकार्धधातुकयोः" ( पा. सू. ७।३।८४ ) इत्यादौ "अलोऽन्त्यस्य" ( पा० सू० १।१।५२ ) इत्यस्य चारितार्थ्या-त्तुल्यबलवत्त्वेऽपि निर्दिश्यमानस्यादेशो भवन्नन्त्यस्याल इत्युक्ते प्रत्यासत्त्या निर्दिश्य-मानसमुदायापेक्षयैवान्त्यत्वविवक्षणेन निर्दिश्यमानस्य त्यदादेः[4] अन्त्यस्येति वैय्यधि-करण्येन "णेरनिटि" ( पा० सू० ६।४।५१ ) इत्यादौ "एकाचः०" ( पा० सू० ७।२।१०) इति सूत्रस्थभाष्यरीत्या क्वचित्सामानाधिकरण्येन ण्यन्ताङ्गस्यान्त्याव-

---

१. 'तत्र लविषीयेत्यत्र प्रतिपदोक्तत्वात्पूर्वं सीयुटि ततोऽनया परिभाषया लमात्रस्येडादेश इति "आद्युदात्तश्च (पा० सू० ३।१।३) इति सूत्रस्थभाष्यासङ्गतेः' इत्यधिकः पाठः क० पु०।

२. कोष्ठकान्तरितः पाठः क० पु० नास्ति।

३. 'स्य भवतीत्यञ्चतीति 'भवध्र्यङ्' इत्यत्र ध्र्यादेशस्य च' इत्यधिकः पाठः क० पु०।

४. 'तदादेः' इति पाठः क० पु०।

**नाप्येतयोरङ्गाङ्गिभावः, उभयोरपि परार्थत्वेन तदयोगात्। 'अनेकाल्-शित्' इति सूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते।**

**यत्तु—'आदेः परस्य' 'अलोऽन्त्यस्य' इत्येतावेव तद्बाधकाविति, तन्न; 'उदःस्थात्' इति सूत्रविषयेऽस्याः 'पादः पत्' इति सूत्रे भाष्ये सञ्चारितत्वात्। नाप्येतयोरियं बाधिका, एतयोर्निर्विषयत्वप्रसङ्गादिति 'ति विंशतेः' इति सूत्रे कैयटः।**

---

यवीभूतो निर्दिश्यमानो यो णिरित्येवं रीत्योपस्थितयोरुभयोरप्यविरोधेनैवान्वय-सम्भवेन युगपदसम्भवरूपविरोधाभावान्न विप्रतिषेध इति भावः। नन्वेवं तच्छेष-पक्षवदङ्गाङ्गिभावापत्त्यान्यतराविषयेऽन्यतरस्य प्रवृत्त्यनापत्त्या 'अतिस्यः' इत्यादौ दोषोऽत आह—**नापीति। अयोगादिति।** 'गुणानाञ्च'[1] इति न्यायेनेति भावः।

ननु "अनेकाल्०" ( पा० सू० १।१।५५ ) इति सूत्रे सर्वपदेन निर्दिश्यमान-स्यैव ग्रहणमुत प्रतीयमानस्यापीति संशये परत्वान्निर्दिश्यमानपरिभाषाया[2] बाधे 'सुपदः' इत्याद्यसिद्धिरित्यत आह-**सर्वश्चेति।** उक्तरीत्या विरोधासम्भवादिति भावः। **बाधकाविति।** निर्दिश्यमानप्रतीयमानयोर्मध्ये निर्दिश्यमानस्यैव न प्रतीय मानस्येति नार्थः, किन्तु निर्दिश्यमानता पर्याप्त्यधिकरणस्यैव न न्यूनस्य नाप्य-धिकस्येति परिभाषार्थः, इति ताभ्यां सह विरोध इति भावः। **संचारितत्वादिति।** तथा च भवदुक्तार्थस्य भाष्यासम्मतत्वेन न विरोधसम्भव इति भावः।

केचित्तु एतद् बाधकस्याप्यत्रैतद्बाध्ययदागमन्यायोपजीवनेन प्रवृत्त्यैतदुप-जीव्यभूतयदागमन्यायस्यैवाप्रवृत्तौ तन्मूलकादेरित्यस्याप्रवृत्त्या 'उदस्थात्' इत्यस्यासिद्धिरिति प्राचामाशय इत्याहुः।

ननु 'यशांसि' इत्यादौ "अलोऽन्त्य०" ( पा० सू० १।१।५२ ) परिभाषायाः "मिदचोऽन्त्यात्०" ( पा० सू० १।१।४७ ) इत्यनेन सत्यपि सम्भव इत्यनेन न्यायेन बाधवदलोऽन्त्यादीनामनया परिभाषया बाधेन तयोस्समावेशोक्तिरयुक्तेत्यत आह-**नापीति।**

न च अवयवषष्ठीविषयेऽतितवमित्यादौ चारितार्थ्यम् तत्रापि "अनेकाल्०" ( पा० सू० १।१।५५ ) इत्यस्य प्राप्तेर्दुर्वारत्वात्। **कैयट इति।** तत्र हि तिग्रहणाभावे आरम्भसामर्थ्यात् सर्वादेशे प्राप्ते तद्वारणाय तिग्रहणे कृते निर्दिश्य-मानपरिभाषया नान्त्यस्य लोप इत्युक्तं भाष्ये। तत्र नानेन निर्दिश्यमानपरिभाषा-व्यापारः कथ्यते। नहि निर्दिश्यमानपरिभाषा तयोर्बाधिका, एतयोर्निर्विषयत्व-प्रसङ्गात। तस्मात्तिग्रहणसामर्थ्यात् "अलोऽन्त्यस्य" ( पा० सू० १।१।५२ ) इत्यस्यानुपस्थानेन सर्वस्य लोप इति तदाशयं कैयटः।

---

१. 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्' जै० मी० सू० पा० अ० ३ पा० १ सं० २२।

२. 'परिभाषया' इति पाठः क० पु०।

**अकज्विषये नायं न्यायः, स्थानिवद्भावेनेव तन्मध्यपतितन्यायेन तद्बुद्ध्यैव कार्यजननात् ।**

**इयञ्च अवयवषष्ठीविषयेऽपि । अत एव 'तदोः सः साविति' सत्वम्,**

---

न च "संयोगान्तस्य लोपः" ( पा० सू० ८।२।२३ ) इत्यादौ 'अलोऽन्त्यस्य' ( पा० सू० १।१।५२ ) इत्यस्य चारितार्थ्यम्, एतयोरित्यस्य निर्धारणषष्ठ्यन्तत्वे-नैतयोर्मध्ये आदेरित्यस्य निर्विषयत्वप्रसङ्ग इत्याशयात् ।

ननु साकच्कस्यानिर्दिश्यमानत्वेन तत्र कादेशानापत्तिरत[1] आह–**नायं न्याय इति ।** अत्र च[2] किमः कादेशविधानं ज्ञापकं तथाहि "किं सर्वनामबहुभ्यः०" (पा० सू० ५।३।२) इत्यत्र किंशब्दाकरणलाघवानुरोधेन द्वेः प्राक् किम्-शब्दपाठेन 'इमः' इति न्यासेन त्यदादीनामिमोऽकारः स्यादित्यर्थेन सामर्थ्यात्सर्वादेशे 'कः' इति रूपं सिद्धमिति पुनः कादेशविधानं तन्मध्यपतितन्यायेनाकज्विशिष्टस्यापि यथा स्यादित्येवमर्थमिति ।

न च किंशब्दस्य द्वेः प्राक् पाठे द्वन्द्वे यत्परं तच्छिष्यते इति किंशब्दस्य शेषानापत्तिः, 'क्वचित्पूर्वशेषोऽपि दृश्यते' इति भाष्येणेष्टसिद्धेः । 'उश्तिहोः' वातीति न्यासेन 'कुतः' क्वेत्यनयोः सिद्धेरुत्तरत्रेम इत्यनुवृत्तावपि न दोषः । न च 'इमः' इति न्यासे 'इमौ' इत्यत्राप्यत्वापत्तिरिति वाच्यम्, अनुवृत्तस्य विभक्ता-वित्यस्य-इम्विशेषणत्वेन "अचः परस्मिन्०" ( पा० सू० १।१।५७ ) इति स्थानिवद्भावेनेमो विभक्तिपरत्वाभावात्, अस्येमो लाक्षणिकत्वाच्च न दोषः ।

न च 'इमः' इति न्यासे किंशब्दस्य द्वेः प्राक् पाठे त्यदादित्वात्साकच्केऽ-प्यत्वप्रवृत्त्या 'ककः' इति रूपम् । यथा न्यासे तु पूर्वं किंशब्दस्य पाठाभावेन तस्य त्यदादित्वाभावादत्वाप्राप्त्या साकच्कस्यानिर्दिश्यमानत्वात्, तदवयवस्य निर्दिश्यमानत्वेऽपि तस्यानर्थकत्वात् कादेशस्याप्यप्राप्त्या 'ककिम्' इति रूपमिति फलभेद इति वाच्यम्, 'इमः[3]' इति न्यासेऽपि निर्दिश्यमानपरिभाषाया अवयवषष्ठी-विषयेऽपि प्रवृत्त्या निर्दिश्यमानत्यदाद्यवयवस्येमः अः स्यादित्यर्थेन साकच्कस्या-निर्दिश्यमानत्वेनावयवस्य किंशब्दस्य निर्दिश्यमानत्वेऽपि तस्यानर्थकत्वेन

---

१. 'तत्राकादेशानापत्तिः' इति पाठः क० पु० ।

२. "कोः कादेशविधानं ज्ञापकमन्यमथाकारमेव विदध्यात् । न च कुत्सितः उः कूः तस्मादाचारक्विबन्तात्कर्तरि क्विपि षत्वतुकोरित्यसिद्धत्वात्तुकि तस्य पथिशब्देन योगे फलभेदापत्तिरिति वाच्यम्, सिद्धान्त इव निर्दिश्यमानपरिभाषयात्वाप्रवृत्तेः । इषदर्थ इत्यादिसाहचर्येणाव्ययस्यैव ग्रहणाच्चाकच्" इत्यधिकः पाठः क० पु० ।

३. 'इमम्' इति पाठः क० पु० ।

**'अतिस्यः' इत्यत्रोपसर्गतकारस्य न। निर्दिश्यमानयुष्मदाद्यवयवमपर्यन्तस्यैव यूयादयः, न तु 'अतियूयम्' इत्यादौ सोपसर्गावयवमपर्यन्तस्येति बोध्यम्।**

**'पादः पत्' इति सूत्रे 'षष्ठी स्थाने' इति सूत्रे च भाष्ये स्पष्टैषा ॥१२॥**

---

त्यदादित्वाभावेनात्वाप्राप्त्या फलभेदासम्भवात्[1]। **अतिस्य इति**। अतिशयितश्चासौ स्यश्चेति विग्रहः।

न चैवम् 'अतिस्यकः' इत्यत्रोपसर्गतकारस्यापि सत्वापत्तिः, अकज्विषये उक्तन्यायाप्रवृत्तेरिति वाच्यम्, उक्तज्ञापकेन तन्मध्यपतितन्यायविषयेऽपि निर्दिश्यमानबुद्ध्यैव कार्यस्वीकारेण साकच्कलक्ष्योपप्लुतवाक्येऽपि निर्दिश्यमान-परिभाषाप्रवृत्त्योपसर्गतकारस्य वारणसम्भवात्।

केचित्तु-एतत्परिभाषाविषये ऽङ्गस्य-इत्यस्य[3] अवयवषष्ठीत्वेनाङ्गावयवस्य जराशब्दस्य जरसित्यर्थान्निर्जरशब्दादौ[4] न दोष इतीयं परिभाषानावश्यकी। विभक्ताविव्यस्य जराशब्दविशेषणत्वाज्जरायाः जरा 'जराजरा' इत्यादौ न दोषः। 'सर्वस्यै' इत्यादौ स्याड्विधानसामर्थ्यात्[5] न स्मैभावः। 'उदस्थात्' इत्यादौ सकारप्रश्लेषान्न दोषः। 'वाराहीपुत्रः' इत्यादावन्त्यबाधपरिभाषया न दोषः। "क्त्वो[6] ल्यप्" इत्यादौ[7]-उपस्थिततदादेरित्यस्य पञ्चम्यन्तत्वस्वीकारेण तदादेः परस्येत्यर्थान्न दोष इत्याहुः। तदसत्[8]-पचेतामित्यादौ यासुड्विशिष्टस्य तामादेश-वारणाय तस्यावश्यकत्वात् ॥ १२ ॥

---

१. 'नन्वेवं भिधकीत्यत्राकचि कृते धित्वं न प्राप्नोतीत्याशङ्क्य परत्वाद्धित्वेऽकच्। अथवा स्थान्यादेशयोरिकारस्योच्चारणार्थत्वेन व्यञ्जनस्यैव धकारे भिधकीति साधितम्। त्वन्मते तद्विरुध्येत। न चाकज्विशिष्टस्य धित्वेऽकचः श्रवणानापत्तिरिति तदाशय इति न भाष्यविरोध इति वाच्यम्, तथा सति भिधकीत्यत्रेवर्णतः पूर्वं परत्वादकचि, विशिष्टस्य हेर्धिः, ककारश्रवणानापत्तेर्दुर्वारत्वादिति चेन्न; तस्यैकदेशयुक्तित्वेनादोषात्। अन्यथा धेः पूर्वमेव परत्वादकचि तद्विशिष्टस्य त्वादेशे भिधकीति रूपसिद्धेर्दुर्वारत्वात्। सिद्धान्ते तु धिभावोत्तरमेव कुत्साविवक्षायामकजिति तत्सिद्धिः। ननु कादेशविधानेन निर्दिश्यमानेति न्यायं बाधित्वा साकच्के कार्यप्रवृत्तिवत्तदन्तेऽपि कार्यप्रवृत्तिर्दुर्वारेत्याह-**स्थानिवदभावेनेति**। **तदबुद्ध्यैवेति**। निर्दिश्यमानत्वबुद्ध्यैवेत्यर्थः। अत एव परिषिञ्चति, धनवन्तावित्यादौ षत्ववत्वादिसिद्धम्' इत्यधिकः पाठः क० पु०।

२. 'तदन्तविधिस्थले' इत्यधिकः पाठः क० पु०।

३. 'इत्यादेः' इति पाठः क० पु०।

४. 'शब्दे' इति पाठः क० पु०।

५. 'यदामा इत्यस्यानित्यत्वाद्वा' इत्यधिकः पाठः क० पु०।

६. 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' ( पा० सू० ७।१।३७ ) इत्यादौ इत्यर्थः।

७. 'रिच' 'न ल्यपीति' ज्ञापकात्' इत्यधिकः पाठः क० पु०।

८. 'तदसत्' इत्यादितः 'आवश्यकत्वात्' इत्येतत्पर्यन्तं नास्ति क० पु०।

**ननु 'चेता' इत्यादौ ह्रस्वस्येकारस्य प्रमाणत आन्तर्यादकारोऽपि स्यादत आह—**

**यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः । १३ ॥**

**अनेकविधम् = स्थानार्थगुणप्रमाणकृतम् । अत्र मानम् 'षष्ठी स्थाने' इत्यत एकदेशानुवृत्त्या स्थाने ग्रहणेऽनुवर्तमाने पुनः 'स्थानेऽन्तरतमः' इति सूत्रे स्थाने ग्रहणमेव । तद्धि तृतीयया विपरिणम्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानः सति सम्भवे स्थानत एवान्तरतम इत्यर्थकम् ।**

---

ननु स्थानिविषयकातिप्रसङ्गवारणेऽप्यादेशविषयकातिप्रसङ्गस्तदवस्थ एवेति शङ्कते-**ननु इति । अकारोऽपीति** । अपिना एकारसमुच्चयः । **स्यादिति** । अन्तरतमपरिभाषयेति भावः । **यत्रेति** । यस्मिँल्लक्ष्ये इत्यर्थः । **अनेकविधम**— स्थानतद्भिन्नकृतमान्तर्यं सादृश्यमन्तरतमपरिभाषासहकारेण विरुद्धादेशप्रसञ्जकमिति शेषः । **तत्र** = तस्मिँल्लक्ष्ये । तयोर्मध्य इति शेषः । **बलीय इति** ।

तत्त्वं च स्वेतरप्रमाणकृतसादृश्यप्रयोज्यकार्यप्रतिबन्धकीभूतसत्ताश्रयत्वम् । यद्वा स्वेतरसादृश्यसमवधानकालीन( कालिक )स्वप्रयोज्यकार्यप्रयोजकत्वम्[1] । न च निरुक्तबलवत्त्वाङ्गीकारे 'वाग्घरिः' इत्यादौ ककारादयोऽपि स्युः, तत्र गुणादेरसादृश्याप्रयोजकत्वादिति वाच्यम्, स्वेतरप्रमाणमात्रप्रयोज्यसादृश्यप्रतिबन्धकीभूतसत्ताश्रयत्वं बलवत्त्वमित्यङ्गीकारेण स्वस्वेतरोभयप्रयोज्यसादृश्यप्रतिबन्धकत्वानङ्गीकारेण 'वाग्घरिः' इत्यादावेतत्परिभाषाया अप्रवृत्त्या प्रथमवाक्येनैव निर्वाहात् ।

न च मात्रपदनिवेशे "ऌति ऌवा" (का० वा० ६।१।१०१) इति वार्तिकप्रत्याख्यातृनये 'होतृ ऌकारः' इत्यत्र विवृतेषत्स्पृष्टयोः पर्यायेण प्रवृत्त्यनापत्तिः, अन्यतरस्येतरप्रमाणमात्रप्रसञ्जितत्वाभावेन स्थानतदितरप्रमाणयोः कार्यव्यवस्थापकत्वप्रसङ्गे स्थानप्रमाणस्यैवान्तरतम्यपरीक्षोपयोगिता नेतरस्येत्यर्थकस्यास्य न्यायस्याप्राप्त्या विवृतत्वरूपगुणकृतसादृश्यस्यापि सत्त्वेनेषत्स्पृष्टऌकारापेक्षया विवृतऋकारस्यान्तरतमत्वात्स एव स्यादिति वाच्यम्, ऋकारे विवृतत्ववल्लकारे द्विहल्त्वरूपगुणस्य सत्त्वेनोभयोरपि समत्वेन पर्यायेण प्रवृत्तेस्सूपपादत्वात् ।

न चैवमत्र तुल्यन्यायेनात्रेषत्स्पृष्टऋकारस्याप्यापत्त्या रूपत्रयापत्तिः, यत्स्थानिनिष्ठस्थानादिनिरूपितसादृश्यमादाय येषां प्राप्तिः प्रत्यासत्त्या तेषां मध्ये तत्स्थानिष्ठिस्थानतदितरप्रमाणनिरूपितातिशयितसादृश्यवान् यः स भवतीत्यर्थेनादोषात् । **एकदेशानुवृत्त्येति** । एकदेशस्यानुवृत्तिर्यथा स्वरितत्वप्रतिज्ञयेत्यर्थः । **विपरिणम्येति** । सूचितेनेति शेषः । **वाक्यभेदेनेति** । सदृशविसदृशयोः

---

[1] 'प्रवर्त्तकत्वम्' इति पाठः क० पु० ।

**तमब्ग्रहणमेवानेकविधान्तर्यसत्तागमकम्। स्थानतः—स्थानेनेत्यर्थः। तत्र स्थानत आन्तर्यम् 'इको यणचि' इत्यादौ प्रसिद्धमेव। अर्थतः 'पदन्नो' इत्यादौ स्थान्यर्थाभिधानसमर्थस्यैवाऽऽदेशतेति सिद्धान्ताद् यदर्थाभिधानसमर्थो यः, स**

---

कार्ययोः प्रसङ्गे सदृशस्य पूर्ववाक्येनैव सिद्धतया द्वितीयवाक्यमनुवृत्तस्थानपदस्य ताल्वादिस्थानपरत्वसम्पत्तिद्वारा सदृशानामनेकेषां प्रसङ्गे सति सम्भवे स्थान-निरूपितसदृश एव न गुणादिनिरूपितसदृश इति नियमार्थम्। तेनेयं सिद्धा।

न च "इको यणचि" ( पा० सू० ६।१।७७ ) "अदसोऽसेः०" ( पा० सू० ८।२।८० ) इत्यादावप्युद्देश्यविधेययोर्यथाकथञ्चिद् गुणकृतसादृश्यस्य सूपपादतया विसदृशस्यैवाभावेन सदृशविसदृशयोः प्रसक्तौ सदृशानामेवेति नियमार्थं पूर्वं वाक्य-मित्युक्तमिति वाच्यम्, तथा सति सदृशसदृशतमयोः प्रसङ्गे सदृशतम एवेति नियमार्थं तदारम्भात्।

ननु स्थानपदानुवृत्तावपि प्रसङ्गे सति प्राप्तानां मध्ये ताल्वादिस्थानेन सदृशतमो भवतीत्येकवाक्यतयैवान्वयसम्भवे वाक्यभेदकल्पनस्यान्याय्यतया तेन परिभाषाज्ञापनं न सम्भवति। तथा च क्वचिदप्यर्थगुणप्रमाणकृतसादृश्यस्य कार्याप्रयोजकत्वात् 'वाग्घरिः' इत्यादौ दोषः स्यादत आह-**तमबग्रहणमिति। गमक-मिति।** "स्थानेऽन्तरतमः" ( पा० सू० १।१।५० ) इत्यत्र स्थानेग्रहणानुवृत्तावपि वाक्यभेदानङ्गीकारे स्थानकृतसादृश्यस्यैव सर्वत्र ग्रहणेन गुणादिकृतमान्तर्याणां कार्यव्यवस्थापकत्वस्य केनापि शास्त्रेणाबोधनात्। 'वाग्घरिः' इत्यादौ प्रथमाद्य-पेक्षया चतुर्थस्य स्थानकृतातिशयाभावात्, बाह्यप्रयत्नकृतातिशयसत्त्वेऽपि तत्-कृतसादृश्यस्य कार्याप्रयोजकत्वात् ककारादयोऽपि स्युरिति तद्व्यावृत्त्यर्थं कृतस्य तमब्ग्रहणस्य वैयर्थ्यापत्तिः। सति तु वाक्यभेदे गुणादिकृतसादृश्यस्यापि कार्य-व्यवस्थापकतायाः प्रथमवाक्येन बोधनात् तत्कृतातिशयमादाय प्रथमादेर्व्यावृत्ति-द्वारा चतुर्थं प्रापयितुं तच्चरितार्थम्।

ननु स्थानकृतसादृश्येऽन्यूनानतिरिक्तत्वरूपातिशयविवक्षार्थं तमब्ग्रहणम्, तत्फलं तु 'लाकृतिः' 'हरीणाम्' इत्यादौ वकार-ऐकाररूपयण्दीर्घव्यावृत्तिरिति वाक्यभेदेनेदं गमकमिति चेत्, न; लोके निमन्त्रणादिप्रकरणे 'देवदत्तसदृशमानय' इत्युक्ते तस्य सदृशसदृशतमयोः सम्भवे सदृशतमानयनस्यैव स्वरसतः प्रतीत्येहापि स्थानिसदृश इत्युक्त्यैव स्थानिसदृशतमस्य सिद्धतया तद्व्यर्थमिति भावः। **स्थानत इति।** आद्यादित्वात्तसिः, स्थानेनेत्यर्थः।

ननु पदादिषु प्रकरणादादेशत्वग्रहे 'पदङ्घ्रिः'[१] इत्यादिकोशादर्थविशेषा-वगतौ सत्यामपि तत्समानार्थस्थानिन एव ग्रहणमिति-अत्र मानाभावोऽत आह— **स्थान्यर्थेति। सिद्धान्तादिति।** अर्थप्रत्यायनायैव शब्दप्रयोगात्तादृशस्यैवाक्षेप

---

१. 'पदेङ्घ्रिः' इति पाठः क० पु०।

**तस्यादेश इति तत्समानार्थतत्समानवर्णपादादीनां ते, तृज्वत्क्रोष्टुरिति च । गुणतो 'वाग्घरिः' इत्यादौ । प्रमाणतः 'अदसोऽसेः' इत्यादौ । 'स्थानेऽन्तरतमः' सूत्रे भाष्ये स्पष्टैषा ।। १३ ।।**

**ननु 'प्रोढवान्' इत्यत्र 'प्रादूहोढेति' वृद्धिः स्यादत आह—**

**अर्थवद्ग्रहणे नानर्थकस्य ।। १४ ।।**

**विशिष्टरूपोपादाने । उपस्थितार्थस्य शब्दं प्रति विशेषणतयाऽन्वयसम्भवे त्यागे मानाभावोऽस्या मूलम् ।**

---

इति भावः । ननु चरणशब्देऽप्यतिप्रसङ्गोऽत आह—**वर्णेति** । इदं च सप्तम्यन्तपाठाभिप्रायेण । नन्विदं विशेषणं व्यर्थम्—अस्य वैकल्पिकत्वेन 'चरणान्' इत्यादिरूपस्यापि सिद्धेः । न च 'पदंघ्रिश्चरणोऽस्त्रियाम्' इति कोशान्नपुंसकचरणशब्दस्याप्यादेशे 'पदम्' इति रूपापत्तिः । 'पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु[१]' इति कोशोक्तपदशब्दमादाय तादृशरूपस्य सिद्धान्तेऽपि दुर्वारत्वात् । पुँल्लिङ्गस्यैव तत्समानार्थत्वेन लिङ्गभेदेनार्थभेदात्तदप्रवृत्त्यादोषात् ।

किञ्च "स्थानेऽन्तरतमः" (पा० सू० १।१५०) इति सप्तम्यन्तपाठस्य सिद्धान्तेऽभावादिदमसङ्गतमिति चेत्, न; अस्य प्राचामनुरोधित्वेनादोषात् । सिद्धान्तेऽस्योदाहरणमाह—**तृज्वदिति** । तस्यापि प्रयोगव्यवस्थार्थत्वे पूर्वोक्तरीत्या स्थानिनिर्देशाङ्गीकारे वा आह—**चेति** । तेन "लुटः प्रथमस्य०"(पा०सू० २।४।८५) इति सूत्रेणैकार्थस्यैकार्थक इत्याश्रयणात् षण्णामादेशसिद्धिः । **वाग्घरिरित्यादाविति** । आदिना 'गमॄणाम्' इत्यादौ हल्वत्त्वेन ऌकारस्य-ऋकारो दीर्घः । **प्रमाणत इति** । सादृश्यप्रयोजकधर्मश्चैकद्व्यादिमात्रिकत्वरूप इति बोध्यम् ।। १३ ।।

ननु—एवमपि प्रकारान्तरेणातिप्रसङ्गो दुर्वार इति शङ्कते—**नन्विति** । **मूलमिति** ।

न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।।
ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानामेते पृथगिव स्थिते ।।
विषयत्वमनादृत्य[२] शब्दैर्नार्थैः प्रकाश्यते[३] ।।

इत्यादिवचनेन शब्दाननुविद्धकेवलार्थविषयकोपस्थितेरननुभाविकत्वोक्त्या सर्वेषां पदानामर्थ इव शक्त्यैव स्वरूपमपि तत्तत्पदजन्यबोधे विषयतया भासते ।

---

१. अमरकोषः ३।३।९३ ।　　२. 'विषयत्वमनापन्नैः' इतिपाठान्तरम् ।
३. वा० प० ब्र० का० १२३, ५५, ५६ पूर्वा० ।

**अत्रार्थः कल्पितान्वयव्यतिरेककल्पितः शास्त्रीयोऽपि गृह्यते इति 'सङ्ख्यायाः' इति सूत्रे भाष्ये स्पष्टम् ।**

**इयं वर्णग्रहणेषु नेति 'लस्य' इत्यत्र भाष्ये स्पष्टम् । अत एवैषा विशिष्टरूपोपादानविषयेति—वृद्धाः । एतन्मूलकमेव 'येन विधिः' इत्यत्र भाष्ये**

---

न च-अर्थ इव स्वरूपे शक्तिग्राहकाभावात् कथं तज्जन्यबोधे तस्य तद्विषयतेति वाच्यम्, अर्थांशे तस्याः ज्ञातायाः कारणत्वेऽपि शब्दांशे स्वरूपसत्त्या एव कारणत्वेन स्वरूपांशोपस्थितौ शक्तिग्रहानपेक्षणात् । एवञ्च पृथक् शक्त्योपस्थितयोः शब्दार्थयोः फलव्यापारयोरिव व्युत्पत्तिवैचित्र्यात् परस्परमन्वयः । तत्र कर्तृ—प्रत्ययसमभिव्याहारे कर्मप्रत्ययसमभिव्याहारे च फलव्यापारयोर्विशेषणविशेष्यभावव्यत्यासवदाकाङ्क्षायोग्यतादिवशेन 'गामानय' इत्यादौ लोके शब्दप्रकारकार्थं[1]-विशेष्यकबोधः । "अग्नेर्ढक्" (पा० सू० ४।२।३३) इत्यादौ त्वर्थप्रकारक[2]-शब्दविशेष्यको बोध इत्यग्रे स्फुटीकरिष्यते ।

ननु पदस्य वाक्यस्य वा पारमार्थिकार्थवत्त्वेन केवलप्रकृतिप्रत्ययादीनामर्थस्यैवासम्भवादूढशब्देन तीयस्येत्यादौ तीय्यशब्देन चार्थोपस्थितिर्दुर्वचेति कथं 'प्रोढवान्' 'पटुजातीयाय' इत्यादावनया वारणमत आह—**अत्रेति** । यद्वा तीयप्रत्ययान्तेषु प्रत्ययस्यार्थोपस्थापकत्वेऽपि प्रकृत्यसमभिव्याहृतेन प्रत्ययेन क्वाप्यर्थस्यानुपस्थित्योपस्थितार्थत्यागे मानाभाव इति असङ्गतमित्यत आह—**अत्रेति** । **शास्त्रीय इति** । शास्त्रेणान्वाख्याते इत्यर्थः । अपिः कोशाद्यन्वाख्यातार्थसमुच्चायकः । कल्पित इत्यन्तं शास्त्रीयोऽपीत्यस्य विशेषणम् । एवञ्च कल्पितापारमार्थिकस्यैव ग्रहणमर्थपदेनेति बोध्यम् ।

एतेन शास्त्रीयपदेन यदि पारमार्थिकोऽर्थो विवक्ष्यते तदा वाक्यस्यैव तादृशार्थकत्वेन तद्ग्रहणे फलाभावः । अथ प्रकृत्यादिकल्पनया सह कल्पितस्तर्हि तस्य पृथग्ग्रहणवैयर्थ्यमेव । अन्वयव्यतिरेकाभ्यां कल्पितार्थवत्त्वेनैव सर्वत्र निर्वाहादित्यपास्तम् ।

ननु "अस्य च्वौ" (पा० सू० ७।४।३२) इत्यादौ अर्थवतामेव सजातीयानां ग्रहणे 'शुक्लीभवति' इत्यादौ दोषोऽत आह-**इयमिति । स्पष्टमिति** । 'मिश्रीकरणम्[3] इत्यादिनिर्देशेनास्या अनित्यत्वादिति भावः । नन्वेवमपि "टित आत्मनेपदानाम्०" ( पा० सू० ३।४।७९ ) इत्येत्वं 'पचे' इत्यत्रैव स्यान्न तु 'पचते' इत्यादौ, तत्र टेरनर्थकत्वादत आह—**अत एवेति** । अस्या अर्थोपस्थितिमूलकत्वादेवेत्यर्थः ।

---

१. 'प्रकारार्थ' इति पाठः क० पु० । २. 'एव' इत्यधिकः पाठः क० पु० ।

३. "भक्ष्येण मिश्रीकरणम्" ( पा० सू० २।१।३५ ) ।

**पठ्यते 'अलैवानर्थकेन तदन्तविधिः' इति ।**

**किञ्च 'स्वं रूपम्' इति शास्त्रे स्वशब्देनाऽऽत्मीयवाचिनाऽर्थो गृह्यते, रूपशब्देन स्वरूपम्, एवञ्च तदुभयं शब्दस्य संज्ञीति तदर्थः । तत्रार्थो न विशेष्यस्तत्र शास्त्रीयकार्यासम्भवात्, किन्तु शब्दविशेषणम् । एवञ्चार्थविशिष्टः शब्दः**

---

एवञ्च साक्षात्परम्परया वार्थवच्छब्दरूपोपादान एवैतत्परिभाषाप्रवृत्तिर्न तु टिपदोपादान इति 'पचते' 'वाग्मीयम्' इत्यादावेत्वटिलोपादिसिद्धिः । **पठ्यत इति ।** "इन्हन्०" (पा०सू० ६।४।१२) इत्यत्र पदाङ्गाधिकार इति तदन्तविधिना 'प्लीहन्' शब्दस्यापि ग्रहणेन 'प्लीहानौ' इत्यत्र दीर्घाप्राप्त्या तत्र दीर्घार्थं तथा "स्त्रियाः" ( पा० सू० ६।४।७९ ) इत्यत्र तदन्तविधिना 'शास्त्र्यौ' इत्यत्रेयङोऽप्रवृत्तये चेदं वार्तिकम् । यदि वर्णग्रहणेऽप्यस्याः प्रवृत्तिस्तर्हि—अलोऽनर्थकस्यासम्भवेनानर्थकेनालेति विशेषणविशिष्टस्य अस्य वार्तिकस्यासङ्गतिरिति भावः । एवञ्चाल्भिन्नग्रहणेन तदन्तविधिश्चेदर्थवतैवेति फलितमिति बोध्यम् ।

न च "इन्हन्०" ( पा० सू० ६।४।१२ ) इति सूत्रेऽर्थवत्परिभाषाप्रवृत्त्यार्थवत एव तत्र हनो ग्रहणेन 'प्लीहन्' शब्दे नियमस्याप्राप्त्या 'प्लीहानौ' इत्यादौ दीर्घादिसिद्ध्याऽलैवेति नियमो व्यर्थ इति वाच्यम्, अस्या अर्थोपस्थितिमूलकत्वेन विशिष्टरूपोपादानविषयकत्वसिद्ध्या[1] वर्णग्रहणे प्रवृत्त्यापत्त्यास्य वार्तिकस्य तत्राप्रवृत्तिद्वारा विशिष्टरूपोपादानविषयकत्वसिद्धये आवश्यकत्वात् ।

ननु "आने मुक्" ( पा० सू० ७।२।८२ ) इति सूत्रभाष्योक्तरीत्या तीयस्येत्यादावनुकरणत्वस्यैव लाभेन प्रकृत्यसमभिव्याहारेण[2] च तत्रार्थोपस्थितिरेव दुर्लभा । अत एव तीयस्य इति षष्ठीनिर्देशस्सङ्गच्छते । एवञ्चोपस्थितार्थस्येत्याद्ययुक्तमित्यरुचेराह—**किञ्चेति**[3] । ननूभयोस्समप्रधानतया प्रत्येकं संज्ञित्वेंऽशे आनर्थक्यम्, समुदितयोस्संज्ञित्वेऽप्यर्थे कार्यस्य बाध एवातो विशिष्टस्य संज्ञित्वमित्याह—**अर्थो नेति । विशिष्टस्संज्ञीति** । सामर्थ्यादर्शे आद्यजन्तस्य स्वपदस्यात्र ग्रहणमिति भावः ।

---

१. 'विषयकत्वासिद्ध्या' इति पाठः क० पु० ।

२. 'केवलप्रत्ययप्रयोगस्य निषेधेन' इत्यधिकः पाठ क० पु० ।

३. 'यद्वा ननु-दाधाघ्वित्यादावनेकेषामर्थानामुपस्थित्या विनिगमनाविरहेण यावदर्थवतो ग्रहणस्यावश्यकतया तादृशस्यैकस्य धातोरसंभवः, त्यागे विनिगमनाविरहेण सर्वस्यापि त्यागेनानर्थकस्यैव संज्ञापत्तिरत आहः—किञ्चेति' इत्यधिकः पाठः क० पु० ।

**संज्ञीति फलितम् । तेनैषा परिभाषा सिद्धेति भाष्ये स्पष्टम् ।। १४ ।।**

न चैवम् "अग्नेर्ढक्" (पा. सू. ४।२।३३) इत्यादौ "स्वं रूपम्०" (पा. सू. १।१।६८ ) इति शास्त्रेणार्थविशिष्टशब्दस्य संज्ञित्वेन सूत्रस्थाग्निपदेन प्रयोगस्थाग्निशब्दस्योपस्थितावपि तस्यापत्येन योगाभावेन तदर्थस्य तद्योगसम्भवेऽपि तस्य सौत्राग्न्यादिपदेन विशेष्यतयानुपस्थित्यापत्यपदार्थेनान्वयासम्भव इति चेत्, न; समर्थानां मध्ये प्रथमोच्चरितबोध्यशब्दार्थस्यैव तच्छब्देन ग्रहणेन तत्सम्बन्ध्यपत्यमित्यर्थे प्रथमोच्चरितशब्दबोध्यात् प्रत्ययो भवतीत्यर्थेनादोषात् ।

केचित्तु "व्रश्च०" ( पा० सू० ८।२।३६ ) इति सूत्रे राजेः पृथग्भ्राजिग्रहणं ज्ञापकम् । ननु फणादिराजिसाहचर्याद्भ्राजेः फणादेरेव ग्रहणार्थं तत् । न चार्थवत्परिभाषायाः प्राग् राजौ[1] फणादित्वस्यैवानिश्चयात्कथं तत्साहचर्येणान्यत्र तन्निर्णय इति वाच्यम्, परस्परसाहचर्येणोभयोः फणाद्योरेव ग्रहणार्थं तस्यावश्यकत्वात् ।

न च भ्राजेः फणादित्वनिश्चयोत्तरं राजेः फणादित्वनिश्चयः, तन्निश्चये सति तन्निश्चय इति अन्योन्याश्रय इति वाच्यम्, एवं सति "अन्तरान्तरेण०" ( पा० सू० २।३।४ ) "विपराभ्याम्०" ( पा० सू० १।३।१९ ) इत्यादावपि परस्परसाहचर्यान्निपातस्यैव ग्रहणमिति सिद्धान्तासङ्गत्यापत्तेः । यदि तु तत्र परस्परसाहचर्यादेककालिकी निपातप्रतीतिस्तर्हि प्रकृतेऽपि तथैव दीयतां दृष्टिः ।

न च तत्र निपातग्रहणेऽन्यतरस्य न वैयर्थ्यम् । प्रकृते तु फणादिराजिग्रहणे तेनैव तत्रापि षत्वसिद्ध्या भ्राजिग्रहणं व्यर्थमेवेति वाच्यम्, साहचर्येण फणादिराजिग्राहकत्वपुरस्कारेणाफणादिव्यावृत्तेरेव प्रयोजनत्वादिति चेत्, न; "भ्राजभास०" ( पा० सू० ७।४।३ ) इति सूत्रे भ्राजिग्रहणाकरणलाघवानुरोधेनाफणादेरनुबन्धान्तरकरणेन[2] "व्रश्च०" ( पा० सू० ८।२।३६ ) इति सूत्रे राजीतीका निर्देष्टव्ये 'राजृ' इति ऋकारान्तपाठेनोभयोर्ग्रहणे सिद्धे भ्राजिग्रहणवैयर्थ्यस्य सूपपादत्वात् ज्ञापकं सम्यगेवेत्याहुः ।

अन्ये तु ज्ञापितेऽपि भ्राजिग्रहणं व्यर्थम्, भ्राश्टृ-दीप्तौ ( भ्वा० ८८१) इति शान्तस्य 'विभ्राड्' इति रूपसिद्धेः,'राजृ' इति ऋकारान्तपाठसामर्थ्येनोभयोर्ग्रहणस्य दुर्वारत्वेन स्वांशे चारितार्थ्यासम्भवाच्च नैतज्ज्ञापकं सम्यक् । अतः "टिड्ढा०" ( पा० सू० ४।१।१५ ) इति सूत्रेऽञ्ग्रहणेनैव सिद्धे ठञ्ग्रहणं ज्ञापकमित्याहुः ।। १४ ।।

---

१. 'राजादौ' इति पाठः, क० पु० ।
२. 'अनुबन्धान्तकरणेन' इति पाठः क० पु० ।

**नन्वेवमपि 'महद्भूतश्चन्द्रमाः' इत्यत्र 'आन्महतः' इत्यात्त्वापत्तिरत आहः—**

**गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ।। १५ ।।**

---

ननु "स्वं रूपम्०" (पा० सू० १।१।६८) इति शास्त्रेणार्थवत एव शब्दस्य ग्रहणेऽप्यर्थस्य गौणमुख्यभेदेन द्वैविध्यात्तेनार्थेनार्थवच्छब्दस्य द्वैविध्यसम्भवेनोभयत्र कार्यप्रवृत्त्यापत्तिरिति शङ्कते-**नन्विति । महद्भूत इति ।** अत्र च्विप्रत्ययप्रकृतेरमहद्बोधकत्वेन गौणत्वेऽप्यर्थवत्त्वादात्त्वं दुर्वारमिति भावः ।

ननु महच्छब्दस्य किं प्रवृत्तिनिमित्तम्, न तावत्पूज्यत्वरूपं[1] महत्त्वं तस्याननुगत्वात् । न च नीलरूप[2]त्वेनानुगतीकृतनीलरूपादेर्नीलादिशब्दप्रवृत्तिनिमित्तत्ववन्महत्त्वत्वेनानुगतीकृतमहत्त्वस्यैव महच्छब्दप्रवृत्तिनिमित्तत्वमिति वाच्यम्, नीलघटे नीलान्यव्यवहाराभाववत्सर्वस्यापि किञ्चिन्निरूपितमहत्त्वविशिष्टत्वेन महानिति[3] प्रयोगस्यानापत्तेः ।

किञ्च चन्द्रे महत्त्वस्य स्वत एव सत्त्वेन तस्य तत्राभूतत्वासम्भवेन गुणहेतुकारोपाभावाद् गौणत्वाभावेन च्विप्रत्ययस्यैव दुर्वचत्वादिति चेत्, न; तदादिपदस्येव महत्पदस्यापि बुद्धिविषयत्वोपलक्षितमहत्त्वावच्छिन्ने शक्त्यङ्गीकारेण बुद्धिविषयीभूतविलक्षणमहत्त्वस्य चन्द्रादावभावेन तादृशमहत्त्वारोपेण प्रयोगकाले च्विप्रत्ययस्य प्रवृत्त्या महच्छब्दस्य गौणत्वानपाय इत्याशयात् ।

ननु च्विप्रकृतेस्सर्वत्र गौणार्थकत्वे न मानम्, न च गौणार्थतां विनाऽभूततद्भावायोगाच्च्विरेव दुर्लभ इति वाच्यम्, 'पटश्शुक्लीभवति' इत्यादौ शुक्लरूपविशिष्टवेषेण पूर्वमभूतस्य पटस्य पश्चाच्छुक्लरूपविशिष्टवेषेण मुख्यतयोत्पत्ति-सम्भवस्थलेऽभूततद्भावस्य सूपपादत्वेन वचनस्य चारितार्थ्यसम्भवात् ।

तथाहि-अभूततद्भाव इत्यत्रोभयत्र भूधातोरुत्पत्तिरर्थः, क्तप्रत्ययस्याश्रयो भूतकालश्चार्थः । तेन रूपेण भावस्तद्भाव इति करणतृतीयान्ततत्पदस्य भावशब्देन समासः । अभूतपदस्य कर्तृषष्ठ्यन्तस्य तद्भावशब्देन समासः । तत्पदस्य[4] च बुद्धिस्थपरामर्शित्वाच्च्विप्रत्यय[5]प्रकृत्यर्थतावच्छेदकधर्मपरत्वम् । एवञ्च अभूतस्यानुत्पन्नस्य धर्मिणः किञ्चिद्रूपकरणकोत्पत्तौ विवक्षितायामित्यर्थः पर्यवसन्नः ।

अत्र भवनक्रियाकर्तुरनिष्पन्नत्वरूपमभूतत्वं येन रूपेणोत्पत्तिर्विवक्षिता उत्पत्स्यमानतद्रूपापेक्षमेव न तु केनापि रूपेण सर्वथानिष्पन्नरूपमभूतत्वम् । तथा

---

१. 'पूज्यत्वम्' इति पाठः क० पु० ।　२. 'रूप' इति नास्ति क० पु० ।
३ 'अमहानिति' पाठः क० पु० ।　४. 'तत्पदञ्च' इति पाठः क० पु० ।
५. 'प्रत्यय' इति नास्ति क० पु० ।

सति 'घटः शुक्लीभवति' इत्यादौ यत्र धर्ममात्रोत्पत्तिस्तत्र धर्मोत्पत्तेरविद्यमान-तद्धर्मनिष्ठत्वाभावेन च्वेरनापत्तेः। यत्र 'काकः कृष्णो भवति' इत्यादौ धर्म-धर्मिणोरुभयोरप्युत्पत्तिस्तत्रापि धर्मिणस्स्वेन रूपेणोत्पत्तौ तन्निष्ठधर्मस्य करणतया-नपेक्षणात्तद्धर्मकरणकत्वाभावेन तत्रापि च्विप्रत्ययानापत्तेः[1]।

मम तु राजा चाररूपेण शत्रुशैन्यं प्रविशतीत्यादौ चाररूपस्य प्रवेशसाधन-त्वेन राज्ञः कर्तृत्वोपपादकतया करणत्ववद् 'घटश्शुक्लीभवति' इत्यादौ घटत्वेन रूपेण सिद्धस्य धर्मिणः पुनस्तेनैव रूपेणोत्पत्त्याश्रयत्वरूपकर्तृत्वासम्भवात्, तस्य रूपान्तरेणैव पुनरुत्पत्तेर्वाच्यतयोत्पत्स्यमानधर्मस्य घटनिष्ठकर्तृत्वोपपादकतया करणत्वस्य सूपपादत्वात् च्विस्सुलभः।

तथा चैकस्यैव सिद्धस्य धर्मिणः किञ्चद्रूपविशिष्टवेषेणानिष्पन्नत्वरूपम-भूतत्वं पूर्वं विवक्ष्य[2] पश्चात्तस्यैव धर्मिणस्तद्रूपविशिष्टवेषेण पुनरुत्पत्तिर्विवक्ष्यते, तदा च्विप्रत्यय इति वार्तिकार्थः। तदुक्तं कैयटेन[3] 'च्विप्रत्ययश्च यदा प्रकृतिः विकृतिरूपतामापद्यमाना विवक्ष्यते तदा भवति। यत्र तूत्तरावस्था पूर्वावस्था वा न विवक्ष्यते तदा च च्वेरभावः' इति।

एवञ्च तद्रूपाभाववत्कर्तृकतद्रूपकरणकभवनविवक्षायां सम्पद्यमानरूप-विशिष्टवाचकाच्च्विरित्यर्थः। तेन 'घटः शुक्लीभवति' इत्यादौ घटशब्दान्न च्विः। तस्य शुक्लपदवत्सम्पद्यमानशुक्लगुणविशिष्टवाचकत्वासम्भवात्। तथानुत्पत्ते-रुत्पत्तेश्च रूपांश एव पर्यवसानेन, तादृशरूपाभावसमानाधिकरणरूपोत्पत्तेरेव प्रतीत्या तद्रूपाभाववति तद्रूपवैशिष्ट्यस्य कालभेदेनैव सम्भवेन, तयोः कालभेदेन सामानाधिकरण्यसम्भवात्, च्विप्रत्ययान्तप्रकृतेर्महच्छब्दस्य गौणत्वं दुर्वचमिति चेत्, न; च्विप्रकृतेर्गौणत्वानङ्गीकारे 'त्वद्भवति, मद्भवति, वादे वदतः, मद्भवसि त्वम्' इत्यादावेकस्मिन्नेव धर्मिणि सम्बोध्यचेतनत्वतदभावादेः कालभेदेन सामानाधिकरण्यसम्भवेन निरुक्ताभूततद्भावस्य सूपापदतयेदृशे विषये युष्मत्पद-शक्यतावच्छेदकस्य मुख्यतया लान्तेन सामानाधिकरण्यसम्भवान्मध्यमोत्तमयोरा-पत्त्या प्रथमपुरुषानापत्तेः।

किञ्च प्रकृतिविकृतिभावविषये विकृतिरूपस्यैव मुख्यतया जायमानत्वेन कर्तृत्वात् 'सुवर्णपिण्डः कुण्डले भवतः' इत्यादाविव 'तन्तवः पटीभवन्ति' 'ब्राह्मणास्संघीभवन्ती' इत्यादौ विकृतिरूपस्यैव मुख्यतया भवनक्रियाकर्तृत्वेन तदाश्रय एकवनस्यैव प्रवृत्त्या वहुवचनस्य प्रवृत्त्यनापत्तेः।

---

१. 'प्रत्ययापत्तेः' इति पाठः क० पु०। २. 'विवक्षि'वात्' इति पाठः क० पु०।

३. 'यदा तु प्रकृतिरेव विकारात्मतामापद्यमाना विकारभेदेन भवनक्रियायां कर्त्री विवक्ष्यते तदा च्विप्रत्ययः' इति कैयटानुपूर्वी (पा० सू० ५।४।५०)।

**गुणादागतो गौणः ।**

---

किञ्च 'अगौः गौस्समभवत्, 'गोऽभवत्' 'तन्तवः पटीभवन्ति' इत्यादि-भाष्योदाहृतप्रयोगेषु गोत्वपटत्वादिजातेश्शुक्लादिरूपवदेकस्मिन् धर्मिणि काल-भेदेनापि सामानाधिकरण्यासम्भवान्निरुक्ताभूततद्भावाभावाच्चिवप्रत्ययानापत्तेः। तथा 'महद्भूतश्चन्द्रमाः' इत्यादौ कालभेदेन महत्त्वामहत्त्वयोः सामानाधिकरण्य-सम्भवेनामहति मुख्यतयैव महत्त्वोत्पत्त्यामहच्छब्दार्थे गौणत्वासम्भवेन "आन्महतः०" ( पा० सू० ६।३।४६ ) इत्यात्त्वापत्तेरनया परिभाषया वारण-परभाष्यासङ्गतेः ।

तस्मादुक्तभाष्यादिप्रामाण्येन सर्वत्रैकरूप्यसिद्धयेऽभूततद्भाव इत्यस्य तद्रूपा-भाववत्कर्तृकतद्रूपाभावसमानकालिकतद्रूपकरणकोत्पत्तौ गम्यमानायामित्ये-वार्थो युक्तः। तथा च तद्रूपाभावतद्रूपयोरेकस्मिन् धर्मिणि यौगपद्येन सामाना-धिकरण्यस्यारोपमन्तरासम्भवेन पूर्वोक्तपुरुषवचनव्यवस्थानुरोधेन विकृतिरूपस्यैव प्रकृतावपीषत्सादृश्यादारोपाङ्गीकारेण विकृतिवाचकेन प्रकृतेरेव बोधात्, च्विप्रकृतेस्सर्वत्र गौणत्वोपपत्तिरिति वोध्यम् ।

न चैवमपि 'संघीभवन्ति ब्राह्मणाः' इत्यादौ च्व्यन्तस्य गतित्वात् गतीनां क्रियाविशेषद्योतकत्वात् धातोश्च्विप्रत्ययप्रकृत्यर्थतावच्छेदकधर्मानुकूलव्यापार-वाचकत्वेन संघीभवनलक्षणायां विशिष्टायां क्रियायां ब्राह्मणानामेव कर्तृत्वम्[1]। अन्यत्र तु प्रकृतिविकृत्योः कर्तृत्वेऽनियमः। 'सुवर्णपिण्डः कुण्डले भवतः, अत्वं त्वं संपद्यते' इति भाष्यप्रयोगात् ।

एवञ्च च्व्यन्ते प्रकृतेरेव कर्तृत्वेन कर्तरि क्तान्ते भूतशब्दस्यामहच्छब्देनैव सामानाधिकरण्यान्महच्छब्दस्य गतित्वेन महद्भवनलक्षणक्रियाद्योतकत्वात् तस्य सामानाधिकरण्यनिबन्धनमात्त्वं न प्राप्नोतीति वाच्यम्, महच्छब्दस्य लक्षणयाऽ-महद्बोधकत्वेन लक्ष्यार्थमादाय सामानाधिकरण्यमित्याशयात् ।

एवञ्च च्विप्रत्ययान्ते सर्वत्र स्वप्रकृतिसमभिव्याहृतपदार्थनिष्ठभेदप्रति-योगितावच्छेदकं यत्स्वप्रकृत्यर्थतावच्छेदकं तदवच्छिन्ननिष्ठतादात्म्यसम्बन्धा-वच्छिन्नप्रकारतानिरूपितस्वप्रकृतिसमभिव्याहृत[2] विशेष्यताको बोध इत्याहुः ।

परिभाषाघटकीभूतगौणशब्दार्थमाह—**गुणादागत इति**। गुणशब्दश्चात्र शक्यतावच्छेदकसमानाधिकरणधर्मसजातीयधर्मपरः। पञ्चम्यर्थः प्रयोजकत्वम् ।

---

१. 'कर्तृत्वम्' इत्यादितः 'भाष्यप्रयोगात्' इत्येतत्पर्यन्तस्य स्थाने 'कर्तृत्वम्, एवं तदीयलौकिक-विग्रहवाक्येऽपि प्रकृतेरेव कर्तृत्वम्, अत्वं त्वं सम्पद्यत इति भाष्यादन्यत्र तु विकृतेरेव कर्तृत्वम्' इति पाठः क० पु० । २. 'पदार्थ' इत्यधिकः पाठः क० पु० ।

**यथा—गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः। अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुद्ध्यते।**

---

आगत इत्यस्य प्राप्त इत्यर्थः। तत्पदजन्यविषयतामिति शेषः। अस्य लोकन्यायमूलकत्वमुपपादयन् दृष्टान्तमुखेनोदाहरणमाह—**यथेति**। यथा 'गौरनुबन्ध्यः' 'अजोऽग्नीषोमीयः'[1] इत्यादौ वाहीके आलम्भनादिकं न, तथा तद्बोधकशब्देऽपि कार्यं नेति भावः। **अर्थ इति**। गोत्वसमानाधिकरणजात्यादिगुणसजातीयजाड्यादिगुणहेतुकारोपविषयगोत्वादिनिमित्तको वाहीकरूपोऽर्थ इत्यर्थः। **वाहीक इति**। शास्त्रीयाचाराद्बहिर्भूत इत्यर्थः। बहिषष्टिलोपे ईकक्, वबयोरभेदात् 'वाहीकः' इति रूपम्।

अभिव्यक्तेति[2] श्लोकसङ्ग्रहायाहः—**अप्रसिद्धश्चेति**। अस्य तथेत्यादिः। एतद्घटकप्रसिद्धत्वं शीघ्रोपस्थितिविषयत्वरूपम्, तद्भिन्नत्वमेवात्राप्रसिद्धत्वम्। **संज्ञादिरिति**। संज्ञाशब्देनार्शआद्यजन्तेनाधुनिकसङ्केतितार्थः[3] उच्यते। आदिपदेन तद्भिन्नो बिलम्बोपस्थितिविषयोऽर्थः। एवञ्च जाड्यादिनिमित्तकवाहीकार्थस्य सङ्केतिताग्न्यादिबोध्यमाणवकादेर्वातीति 'वायुः' इति व्युत्पत्त्या वायुपदबोध्याश्वादेः, उमया सहितः 'सोमः' इति व्युत्पत्त्या सोमपदबोध्यहिमवदादेश्चात्र गौणत्वं बोध्यम्।

यदि तु "वाय्वृतुपितुत्रुषसो यत्" ( पा० सू० ४।२।३१ ) "सोमाट्ट्यण्" ( पा० सू० ४।२।३० ) इत्यादौ 'अवयवप्रसिद्धेः' इति न्यायेन स्वस्रादिषु परिच्छेतृवाचकमातृशब्दस्येवानयोरग्रहणादादिपदप्रयोजनं मृग्यमिति चेत्, तर्हि पृथक् प्रयुक्तयोरग्निसोमपदयोरनुकरणभूतेऽग्निसोमावित्याहेत्यादावीत्वषत्वादिवारणमादिपदस्य प्रयोजनमित्याहुः।

ननु संज्ञाविषये पदेन मुख्यवृत्त्यैवार्थबोधात्कथं गौणत्वमत आह—**तद्गुणारोपादिति**। यद्वाचकशब्दप्रयोगस्तदीयगुणारोपादित्यर्थः। ननु यदृच्छाशब्दस्यार्थगतगुणक्रियादिरूपप्रवृत्तिनिमित्तानपेक्षया केवलं पुरुषेच्छावशेनैव प्रवर्तनात्तच्छब्दवाच्य इत्येव ततो बोधात्तादृशगुणवत्त्वेनाप्रतीतेरिदमसङ्गतमिति चेत्, न; "ऋॢक्" ( शि० सू० २ ) सूत्रे 'न सन्ति यदृच्छाशब्दाः'[4] इति

---

१. पा० सू० १।१।१५ व्या० म० भा०।

२. अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥ ( पा० सू० १।१।२७ ) पदमञ्जरी।

३. 'सङ्केतार्थः' इति पाठः क० पु०।

४. 'त्रयी च शब्दानां प्रवृत्तिः—जातिशब्दाः, गुणशब्दाः, क्रियाशब्दा इति। न सन्ति यदृच्छाशब्दाः'। इति भाष्यानुपूर्वी। शि० सू २ व्या० म० भा०।

**मुखमिव प्रधानत्वान्मुख्यः =प्रथम इत्यर्थः । गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण प्रवर्तते । एवं चाप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम् ।**

---

भाष्यप्रतीकमादाय[1] 'अद्यत्वेऽपि यदा नाम क्रियते, तदा प्रशस्यरूपा क्रिया गुणो वाध्यारोप्यते' इति कैय्यटोक्त्या गौणलाक्षणिकेष्विव संज्ञाविषयेऽपि तद्गुणारोपेणैव तच्छब्दप्रवृत्तेः सूचितत्वात्सोऽपि गौण एवेति भावः ।

**मुखमिवेति** । शाखादित्वाद्यः । उपमेयमाह—**प्रथम इति** । शक्तिजन्यप्रथमोपस्थितिविषय इत्यर्थः । शक्यस्य प्राथमिकत्वमुपपादयति—**गौणे हीति** । **आरोपेणेति** । प्रवृत्तिनिमित्तारोपेणेत्यर्थः । गोपदस्य समवायसम्बन्धेन गोत्ववत्येव प्रचुरप्रयोगेण तस्यैव प्रसिद्धत्वेन झडिति प्रतीत्या प्राथम्येन शक्यत्वं गोपदजन्यप्रतीतौ विशेष्यभूतव्यक्तेरारोपविषयगोत्वाश्रयत्वे गौणत्वम् । अत एवः—

गोत्वानुषङ्गो वाहीके निमित्तात् कैश्चिदिष्यते ।
अर्थमात्रं विपर्यस्तं शब्दस्स्वार्थे व्यवस्थितः[2] ॥

इति हर्य्युक्तिः सङ्गच्छते[3] । जाड्यादिरूपन्निमित्तात्[4], अनुषङ्ग आरोपः कैश्चिच्छब्दार्थसम्बन्धनित्यत्ववादिभिः, अर्थमात्रं विशेष्यभूतव्यक्तिमात्रम्, गोशब्दस्स्वार्थे[5]प्रवृत्तिनिमित्तभूतगोत्व एव वर्तत इत्येकार्थः, एवेति भावः । अत एव रज्जुं सर्पत्वेनाध्यवसायप्रयुज्यमानस्सर्पशब्दो न स्वार्थं जहाति । अर्थस्तु विपर्यस्त इति कैय्यटः[6] ।

एवञ्च लक्षणाविषये आरोपितशक्यतावच्छेदकस्यैव लक्ष्यतावच्छेदकत्वमिति न गोपीभार्या यस्येत्यत्र पुंवत्त्वानापत्तिः । उक्तरीत्या 'गङ्गाभार्ये' पुँवत्त्वापत्तिस्तु न भाषित्तः शक्त्या बोधित पुंस्त्वविशिष्टोऽर्थः यस्य प्रवृत्तिनिमित्तस्याश्रयस्तद्भाषितपुंस्कं तस्यारोपेण वस्तुतो वा स्त्रीत्वसामानाधिकरण्ये पुंवद्भाव इत्यर्थः ।

प्रकृते तु स्त्रीत्वसमानाधिकरणं प्रवृत्तिनिमित्तं शक्त्या बोधितमिति न दोषः । तदाह—**एवं चेति** । उभयोर्गुणनिमित्तकत्वे चेत्यर्थः । **अप्रसिद्धत्वमिति** । तत्त्वेन प्रसिद्धगतगुणक्रियादेरसतोऽप्यारोपपूर्वकप्रवृत्तिनिमित्तत्वारोपेण तत्पदजन्यप्रतीतिविशेष्यत्वमित्यर्थः ।

---

१. मुपादाय' इति पाठः क० पु० । २. वा० प० का० २ श्लो० २५५ ।
३. 'हर्य्युक्त सङ्गच्छते' इति पाठः क० पु० । ४. 'रूपानिमित्तात्' इति पाठः क० पु० ।
५. 'स्वार्थे' इति पाठः क० पु० ।
६. 'अत्यन्तासत्यपीत्यर्थे ज्ञानं शब्दः करोति हि'इत्यभ्युपगमश्च सङ्गच्छते' इत्यधिकः पाठः क० पु० ।

**तेन 'प्रियत्रयाणाम्' इत्यादौ त्रयादेशो भवत्येव, तत्र त्रिशब्दार्थस्येतर-विशेषणत्वेऽप्युक्तरूपगौणत्वाभावात् ।**

**किञ्चायं न्यायो न प्रातिपदिककार्ये, किन्तूपात्तं विशिष्यार्थोपस्थाकं विशिष्ट-रूपं यत्र तादृशपदकार्य एव ।**

---

तत्फलमाह—**तेनेति ।** एतन्न्यायस्य प्रवृत्तियोग्यविषयं वक्तुमुपक्रमते-**किञ्चेति । कार्ये इति ।** सर्वनामप्रकरणे संज्ञापर्युदासवैयर्थ्यापत्त्या केवलप्राति-पादिककार्येऽस्या अप्रवृत्तेरिति भावः । तर्हि कुत्र प्रवृत्तिरित्यत आह-**किन्त्विति । यत्रेति ।** अस्यार्थवत्परिभाषाविषय एव प्रवृत्त्यार्थोपस्थितेश्च रूपविशेषग्रहणा-पेक्षत्वाद् विशिष्टरूपोपादान एव अस्याः प्रवृत्तिर्युक्तेति भावः । विशिष्यार्थोप-स्थापकं विशिष्टरूपं यस्मिन् शास्त्रे उपात्तमित्यन्वयः । ननु-एवम् 'त्वद्भवति' इत्यत्रैतत्प्रवृत्त्यात्त्वादेशानापत्तिरत आह-**पदकार्य इति ।** पदप्रयोज्यकार्य इत्यर्थः । तेन "युष्मद्युपपदे०" ( पा० सू० १।४।१०५ ) इत्यस्य सङ्ग्रहः ।

ननु पदस्य प्रयोजकता पदत्वेन वा ? उत, सुबन्तत्वेन वा ? आद्ये "ओत्" ( पा० सू० १।१।१५ ) इत्यस्यासङ्ग्रहापत्तेः । न च वस्तुतः पदत्ववत एवोद्देश्यत्वेन न दोषः "राजश्वसुरा०" ( पा० सू० ४।१।१३७ ) इति यद्विषये "उपसञ्जनिष्येति०" ( परि० ६५ ) न्यायेन पूर्वं पदत्वस्याप्रवृत्त्या तस्य पदकार्यत्वानापत्तेः ।

द्वितीयेऽपि श्वसुरादिरूपात्प्रातिपदिकात् तत्सम्बन्ध्यपत्येऽर्थे प्रातिप-दिकात्परत्वेन जायमानस्य प्रत्ययस्य 'स्वार्थे परिपूर्णम्' इति न्यायेन सुपा व्यवधाने प्रवृत्तावपि सुबन्तत्वेन तस्य तत्प्रयोजकत्वासम्भवात् । न च "राजश्वशुरा०" ( पा० सू० ४।१।१३७ ) इत्यादेस्तत्प्रकृतिकसुबन्ते लक्षणा, तस्याः प्राचीनमता-नुरोधित्वेन सिद्धान्ते तदनङ्गीकारात् ।

न च लुग्विषये लुकानुत्पत्तेरेवान्वाख्यानेन प्रत्ययलक्षणेन प्रातिपदिके सुबन्तत्वस्याक्षतत्वेन वस्तुतस्तस्य सुबन्तप्रयोज्यत्वान्न दोषः । एवं सति 'त्वद्भवति' इत्यत्रापि एतत्परिभाषाप्रवृत्त्यापत्त्या तत्र त्वादेशानापत्तेरिति चेत्, न; वस्तुतस्सुबन्तत्ववत एव यत्र कार्यप्रयोजकता तादृशकार्यस्य पदकार्यत्वा-भ्युपगमात्, "प्रत्ययोत्तरपदयोश्च" ( पा० सू० ७।२।९८ ) इत्यस्याचारक्विब्णि-जादावपि प्राप्त्या तस्य सुबन्तमात्रप्रयोज्यत्वाभावात् ।

न चैवं भूशब्दादाचारक्विपि 'बुभावाभावीत्' इत्यादौ "भुवो वुक्०" (पा० सू० ६।४।८८) "भवेतरः" (पा० सू० ७।४।७३) "गातिस्था०" (पा० सू० २।४।७७ ) इति सिचो लुक्च स्यात्, एषां पदकार्यत्वाभावादिति वाच्यम्, "कास्प्रत्ययात्०" (पा० सू० ३।१।३५) इति सूत्रस्थ "कास्यनेकाच०" (का० वा०

**परिनिष्ठितस्य पदान्तरसम्बन्धे हि 'गौर्वाहीकः' इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधायोगः प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम् ।**

**श्वशुरसदृशस्यापत्यमित्यर्थके 'श्वाशुरिः' इत्यादावत इञः सिद्धये— उपात्तमित्यादि ।**

---

३।१।३५ ) इति वार्तिकेन फलभेदाभावाय एकाज्भ्यः प्रातिपदिकेभ्यः आचारक्विपोऽनभिधानात् ।

न चैवमप्यालस्यपटुत्वगुणलाक्षणिकयोश्शीतोष्णशब्दयोः "शीतोष्णाभ्यां कारिणि" ( पा० सू० ५।२।७२ ) इति वुन्न स्यात्, तस्य मुख्ये चारितार्थ्यादिति वाच्यम्, "ब्राह्मणकोष्णीके संज्ञायाम्" ( पा० सू० ५।२।७१) इत्यतस्संज्ञायामित्यस्यानुवृत्त्या लाक्षणिकयोरेव तत्प्रवृत्त्याऽदोषात् । पदकार्ये एवैतत्प्रवृत्तौ बीजमाहः— **परिनिष्ठितस्येति ।**

ननु तत्तत्कार्यविधौ गृहीतशब्दार्थे गौणत्वग्रहस्यैवैतत्परिभाषालिङ्गत्वेन प्रयोगस्थश्वशुरशब्दस्य गौणत्वेऽपि तस्येञ्विधावनुपादानादुपात्तादादिपदबोध्यादन्ततायास्तस्मिन्मुख्यत्वेनोपात्तस्य गौणार्थकत्वाभावादुपात्तमित्यादिविशेषणं व्यर्थमित्याशङ्क्याहः—**श्वशुरसदृशेति** । सूत्रगृहीतशब्दजन्यप्रतीतिविशेष्यभूतशब्दार्थे[1]गौणत्वप्रतीतिर्लिङ्गम्, नतु सूत्रस्थशब्दार्थे गौणत्वप्रतीतिर्लिङ्गम् । सूत्रस्थगवादिपदानां वाहीकाद्यर्थतात्पर्येणाप्रयुक्ततया तस्मिन् गौणत्वग्रहासम्भवात् । सूत्रे उच्चरितस्यानुकरणत्वेन भेदपक्षवदभेदपक्षेऽप्यनुकार्यस्वरूपमात्रबोधकत्वेऽप्यर्थबोधन[2] तात्पर्येणाप्रयुक्तत्वात्तथा-अत्पदजन्यप्रतीतिविशेष्यस्य श्वशुरशब्दस्य गौणार्थकत्वादत्रापि इञ् न स्यादतः—**उपात्तमिति** । सूत्रगृहीतशब्दजन्यप्रतीतिविशेष्यस्य सूत्रे उपात्तत्व एवैतत्परिभाषाप्रवृत्तिरितीञ्विधौ तस्य नोपात्तत्वमिति न दोषः ।

ननु कार्यप्रवृत्तिप्रयोजकं लक्ष्यस्थं पदं यद्रूपावच्छिन्नं तद्रूपावच्छिन्नत्वेन तत्तत्कार्यविधावुपादानं विवक्षितम् ? उत, तद्वृत्तियत्किचिद्धर्मवत्त्वेन ? आद्ये "ओत्" (पा० सू० १।१।१५) सूत्रे निपातपदे एतत्संचारपरभाष्यासङ्गतेः । द्वितीये लाक्षणिकश्वशुरादिशब्दस्येञ्विधायकसूत्रस्थादादिपदबोध्यत्वेन तस्मिन्नप्युपादानसम्भवादुपात्तमिति विशेषणवैय्यर्थ्यमत आह—**विशिष्यार्थोपस्थापकमिति** । प्रातिस्विक्रूपेण लोकेऽर्थोपस्थितिजनकमित्यर्थः । उपात्तं गृहीतं बोधितमिति यावत् ।

---

१. 'शब्दार्थ' इति क० पु० पाठः ।

२. 'बाधकत्वेनार्थबोधन' इति पाठः क० पु० ।

**न च प्रातिपदिकपदं तादृशमिति वाच्यम्, तेन हि प्रातिपदिकपदवत्त्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात् ।**

**निपातपदं तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्यविधायके 'ओत्' इत्यादावेतत्प्रवृत्त्या 'गोऽभवत्' इत्यादौ दोषो न ।**

---

रूपमिति विशेष्यम् । तथा च परिस्फुरद्गौणत्वमुख्यत्ववल्लौकिकार्थविशेषोपस्थापकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नत्वेन तद्बोधकमित्यर्थः । अत्पदेन प्रातिपादिकपदेन वाऽदन्तत्वादिरूपेणैवोपस्थितिः, न तु लौकिकार्थोपस्थापकतावच्छेदकतत्तदानुपूर्वीविशिष्टेन रूपेणेति नात्रेञ्विधावेतत्परिभाषायाः प्राप्तिः । निपातपदेन तूक्तलौकिकार्थोपस्थापकातावच्छेदकचत्वादिरूपेणैव चादीनामुपस्थितिरिति न "ओत्" ( पा० सू० १।१।१५ ) सूत्रभाष्यासङ्गतिः ।

नन्वेवमपि विष्णुसदृशार्थकादशब्दादिञनापत्तिः, तस्य परिस्फुरद्गौणत्वमुख्यत्ववल्लौकिकार्थविशेषोपस्थापकत्वावच्छेदकत्वेन[1] रूपेणात्पदेनोपस्थापनादत उक्तम्—**विशिष्टमिति** । आनुपूर्व्यवच्छिन्नं[2] रूपमित्यर्थः । तथा चायमर्थः । परिस्फुरद्गौणत्वमुख्यत्ववल्लौकिकार्थविशेषोपस्थापकतावच्छेदकानुपूर्वीप्रकारकतत्तत्पदविशेष्यकोपस्थितिजनकं यत्र तत्रैतत्परिभाषाप्रवृत्तिरिति । उक्ताशयानभिज्ञस्य शङ्कते:—**न चेति । पदवत्त्वेनेति** । संज्ञाशब्देष्वनेकसंज्ञ्यनुगतस्यैकस्य प्रवृत्तिनिमित्तस्यासम्भवात् तत्र तादात्म्येनासक्तं संज्ञास्वरूपमेव प्रवृत्तिनिमित्तीकृत्य 'यः पीतवासाः स देवदत्तः' इत्यादाविवार्थवत्त्वाद्युपाधीनुपलक्षणीकृत्य प्रातिपदिकपदादेश्शक्तिग्रह इति प्रातिपदिकादिपदेन तत्तत्पदवत्त्वेनैवोपस्थितिरित्यन्यत्र स्पष्टम् ।

नन्वेवं निपातपदेऽपि तथात्वापत्त्या "ओत्" ( पा० सू० १।१।१५ ) सूत्रस्थभाष्यासङ्गतिरत आह–**निपातपदं त्विति** । "चादयः०" (पा०सू० १।४।५७) इत्यत्रादिपदेन सर्वेषां प्रातिस्विकरूपेणोपस्थित्या प्रत्येकमेव शास्त्रव्यापारेणोपस्थितिरपि तथैवेति बोध्यम् । एतेन निपातपदेन चादिच्व्यन्तयोरुभयोरपि मुख्यवृत्त्यैवोपस्थित्या तयोर्गौणत्वासम्भवाद् गौणार्थत्वप्रतीत्यौपयिकेन रूपेण निपातपदादनुपस्थितेरेतत्परिभाषया तत्र वारणमसङ्गतमित्यपास्तम् । "आन्महतः०" ( पा० सू० ६।३।४६ ) इत्यादौ सूत्रस्थपदजन्यप्रतीतिविशेष्यभूतगौणमुख्ययोर्मध्ये मुख्यस्यैव ग्रहणवन्निपातपदोपस्थितचादिच्व्यन्तयोर्मध्ये 'गोशब्दे' गौणत्वप्रतीत्युत्तरकालमेव च्विरिति च्व्यन्तत्वग्रहेणैव तत्र[3] गौणत्वग्रहेणैतत्परिभाषाप्रवृत्तेस्सूपपादत्वेन भाष्यासङ्गतिर्नेत्याशयात् ।

---

१. 'उपस्थापकतावच्छेदकत्वेन' इति पाठः क० पु० ।

२. 'अनुपूर्व्यवच्छिन्नम्' इति पाठः क० पु० ।

३. 'च्व्यन्तत्वग्रहेणैव तत्र' इति नास्ति । 'च्व्यन्ते' इति वर्तते क० पु० ।

**'अग्नीषोमौ माणवकौ' इत्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वेऽप्यन्तरङ्गत्वादीत्वषत्वे भवत एव। सदृशलाक्षणिकाग्निसोमपदयोर्द्वन्द्वे तन्नामकावित्यर्थके च नेत्वषत्वे, आद्ये गौणलाक्षणिकत्वात्, अन्त्येऽप्रसिद्धत्वात्। अत एव 'अग्निसोमौ माणवकौ' इत्यत्र गौणमुख्यन्यायेन षत्ववारणपरम् "अग्नेः स्तुत्स्तोमसोमाः" इति सूत्रस्थं भाष्यं सङ्गच्छते।**

**'गां पाठय' इत्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वासम्भवेन विभक्त्युत्पत्ति-**

---

न चैवं च्व्यन्ते निपातसंज्ञाविधानं व्यर्थम्, अस्या अनित्यत्वेनाव्ययसंज्ञादावप्रवृत्त्या तत्सार्थक्यात्। एतेन पूर्वसूत्रेऽनाङिति[1] पर्युदासात्प्रतिपदं पठितानामेव ग्रहणेनेहाप्यर्थाधिकारानुरोधात्तादृशानामेव ग्रहणान्न दोषः। यद्वा पूर्वसूत्रादेकग्रहणानुवृत्त्या तस्यासहायार्थकत्वेन केवलः ओदन्तः निपातः प्रगृह्य इत्यर्थाच्च च्व्यन्तेषु कृभ्वादियोगेन ससहायत्वान्न दोषः इत्यपास्तम्। "ओत्" (पा० सू० १।१।१५) सूत्रे इव च्व्यन्तविषये पूर्वसूत्रे प्रतिषेधानारम्भेण अः विष्णुः ततश्च 'अवी अभवत्' इत्यत्र प्रगृह्यत्वस्येष्टत्वानुमानेन त्वदुक्तरीत्या तदनापत्तेः।

**नेत्वषत्व इति।** इदमुपलक्षणम् "आङो यि" (पा० सू० ७।१।६५) "देवताद्वन्द्वे च" (पा० सू० ६।२।१४१) इति सूत्रे देवतापदस्य त्यज्यमानद्रव्योद्देश्यकेन्द्रादिशब्दपरत्वेन[2] विशिष्यार्थोपस्थापकत्वादेतत्परिभाषाप्रवृत्तिरिति बोध्यम्।

ननु 'गां पाठय' इत्यादौ विभक्त्युत्पत्तेः प्रागेव गौणार्थत्वग्रहेण संज्ञाविषयेऽपि प्रयोक्तृप्रतिपत्तृभ्यामप्रसिद्धत्वरूपगौणार्थत्वग्रहेण त्वदुक्तहेतोरसम्भवात्प्रातिपदिककार्ये तदप्रवृत्तौ न मानमत आह—**गां पाठयेति। असम्भवेनेति।** कर्मसंज्ञाया अर्थसंज्ञात्वेन पाठनकर्मीभूतस्य वाहीकरूपस्य संज्ञिनः गोपदवाच्यत्वाभावेन लक्षणामन्तरा गोपदस्य वाहीकरूपे कर्मण्यवृत्तित्वात् प्रातिपदिकस्यैव लक्षणया तद्वृत्तित्वे प्रातिपदिकसंस्कारवेलायामेव गौणत्वग्रहेण पदस्यपदान्तरसमवधानकाल एव गौणत्वग्रह इति नियमासम्भवः।

तथा च यथा कथंचिद् गौणार्थप्रतीतिमात्रस्य परिभाषाप्रवृत्तिप्रयोजकत्वेन प्रातिपदिकस्येव "कर्मणि द्वितीया" (पा० सू० २।३।२) इत्यत्र सप्तम्यर्थरूपवृत्तित्वस्य मुख्यस्यैव ग्रहणापत्त्या वाहीकरूपे कर्मणि वर्तमाने गोपदे द्वितीया न स्यादिति भावः।

---

१. 'निपात एकाजनाङ्' पा० सू० १।१।१४ इति सूत्रे इत्यर्थः।

२. 'द्रव्योद्देश्य-वाचकेन्द्रादिशब्दपरत्वेन' इति पाठः क० पु०।

**वेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकत्वस्य ग्रहेण 'अत्वं त्वं सम्पद्यते, 'अमहान् महान्भूतः, 'त्वद्भवति' इत्यादिभाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यविषयत्वमेवोचितम् । अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः ।**

**किञ्च "शुक्लाम्' इत्युक्ते कर्म निर्दिष्टम् कर्त्ता क्रिया चानिर्दिष्टे" इत्याद्युक्त्वा 'इहेदानीं गामभ्याज कृष्णां देवदत्तेत्यादौ सर्वं निर्दिष्टम, गामेव कर्म, देवदत्त एव कर्त्ता, अभ्याजैव क्रिया' इत्यर्थकेनार्थवत्सूत्रस्थभाष्येण कारकादिमात्रप्रयोगे योग्यसर्वक्रियाऽध्याहारे प्रसक्ते नियमार्थः क्रियावाचकादिप्रयोग इत्येतत्तात्पर्यकेण सामान्यतः क्रियाजन्यफलाश्रयत्वमात्रविवक्षायां द्वितीयादीनां साधुत्वान्वाख्यानमित्यर्थलाभेन पाठनक्रियाऽन्वयकाले पदस्यैव गौणार्थत्वप्रतीतिः प्रयोक्तुरपि ।**

---

प्रयोक्तुर्गौणत्वग्रहस्य परिभाषाप्रवृत्तिप्रयोजकत्वे बाधकमाह—**अपदस्येति** । ननु प्रयोक्तुर्गौणार्थत्वग्रहस्य परिभाषाप्रवृत्तिप्रयोजकत्वानङ्गीकारे श्वशुरसदृशस्यापत्यमित्यर्थविवक्षायाम् 'श्वाशुर्यः' इति प्रयोगापत्तिरत आह—**त्वाद्यादेश इति** । तद्विग्रहवाक्ये वृत्तौ च प्रकृतेर्गौणार्थकत्वेनोभयत्र त्वादेशानापत्तिरिति भावः । ननु 'पदानि संस्कृत्य संस्कृत्य उत्सृज्यन्ते[1]' इति भाष्यरीत्या नायं दोषः, अत आह—**वाक्यसंस्कारेति** । पदसंस्कारपक्षेऽपि 'अत्वम्' 'अमहान्' 'त्वद्भवति' इत्यत्र तदनापत्तिर्बोध्या । एवञ्च भाष्यप्रामाण्यात् प्रयोक्तृगतगौणत्वग्रहस्य प्रातिपदिकसंस्कारप्रवृत्तिप्रतिबन्धकत्वं नेति फलितम् ।

वस्तुतः प्रातिपदिकसंस्कारवेलायां प्रयोक्तुरपि गौणत्वप्रतीतिर्दुर्वचेत्याहः—**किञ्चेति** । आदिना 'देवदत्त' इत्युक्ते सम्बोधनविषयमनियतक्रियं कर्तृनिर्दिष्टमित्याद्यूह्यम् । **गामेवेति** । गामिति शब्दवाच्यमेव कर्म नान्यदित्यर्थः । **कारकादीत्यादिनाः**—क्रियाया उत्तरत्रादिना कारकस्य सङ्ग्रहः । **प्रसक्ते—इति** । कर्तृत्वादेः क्रियानिरूपितत्वाद् योग्यस्याक्षेपे प्राप्ते इत्यर्थः । **पदस्यैवेति** । 'पदानि संस्कृत्य संस्कृत्योत्सृज्यन्ते, तेषां यथेष्टमभिसम्बन्धो भवत्याहर पात्रं पात्रमाहर[2]' इति भाष्येण प्रकृतभाष्येण च पदसंस्कारपक्षे योग्यां यां काञ्चन[3] क्रियामादायैव संस्कारस्यावगमेन प्रयोक्ष्यमाणक्रियामादायैव संस्कारः कर्त्तव्य इति नियमानभ्युपगमात् प्रातिपदिकसंस्कारवेलायां प्रयोक्तुरपि गौणत्वप्रतीतिर्न सम्भवतीति भावः । एवञ्च प्रातिपदिकसंस्कारविषये पदसंस्कारपक्ष एवाश्रयणीय इति फलितम् ।

---

१. 'वृद्धिरादैच्' ( पा० सू० १।१।१ ) व्या० म० भा० ।
२. 'वृद्धिरादैच्' ( पा० सू० १।१।१ ) व्या० म० भा० ।
३. 'काचन' इत्यपपाठः क० पु० ।

**एवमेतन्मूलकः "अभिव्यक्तपदार्था ये" इति श्लोकोऽपि पदकार्यविषयकः। ध्वनितं चेदम् "सर्वादीनि" इति सूत्रे संज्ञाभूतानां प्रतिषेधमारभता वार्त्तिककृता, "पूर्वपरा०" इति सूत्रे 'असंज्ञायाम्' इति वदता सूत्रकृता, अन्वर्थसंज्ञया तत्प्रत्याख्यानं कुर्वता भाष्यकृता च।**

**अर्थाश्रय एतदेवं भवति, शब्दाश्रये च वृद्ध्यात्त्वे—इति 'ओत्' सूत्रस्थभाष्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय एष न्यायः, तद्रहितशब्दाश्रये च ते इत्यर्थः। 'गोतः' इति यथाश्रुतसूत्रे विशिष्टरूपोपादनसत्त्वेनोक्तरीत्यैवैतस्य भाष्यस्य व्याख्येयत्वादित्यलम् ॥ १५ ॥**

---

**पदकार्यविषयक इति**। संज्ञाव्यावृत्तये 'अभिव्यक्त'[1] इति न्यायमूलकप्रसिद्धेति विशेषणमिति सर्वादिसूत्रस्थशेखरग्रन्थस्तु अभिव्यक्तेति न्याय इव मूले महासंज्ञाकरणरूपं यस्येत्यर्थक इति न तद्विरोधः। संज्ञाव्यावृत्तयेऽभिव्यक्तेति। गुणसहकारेणार्थबोधकात्स्वतन्त्रवारणाय स्वतन्त्रेति। अप्रयुक्तव्यावृत्तये लोकविश्रुता इति। तदुक्तिषु तद्वदुक्तिर्येषामिति विग्रहः। तदुक्तिषु तत्सदृशेऽप्यनुकरणेष्वित्यर्थः। एवञ्च संज्ञा गौणलाक्षणिकाप्रयुक्तानुकरणादिव्यावृत्तये क्रमेणाभिव्यक्तेत्यादि। न चैवमपि क्रियाविशेषसम्बन्धाभिप्रायेण कृत्रिमसंज्ञ्यभिप्रायेण च प्रयोगस्य शपथादिना निवारयितुमशक्यतया तत्र विभक्त्युत्पत्तेः पूर्वं प्रयोक्तुर्गौणत्वप्रतीतेरपह्नवासम्भावान्नेदमसाधारणं गमकमत आह—**ध्वनितमिति**। अस्याः पदकार्यविषयकत्वमित्यर्थः। **आरभमाणेनेति**। आरभतेत्यपपाठः।

ननु तत्सिद्धार्थानुवादकत्वेन हरदत्तादिभिर्व्याख्याततत्वान्न दोषः अत आह—**पूर्वेति**। ननु "अणुदित्०" ( पा० सू० १।१।६९ ) सूत्रेऽप्रत्ययग्रहणवदिदमप्येकदेशानुवादकमतो न दोषोऽत आह—**अन्वर्थेति**। यद्युपसर्जनव्यावृत्तये तादृशक्लेशस्यावश्यकतया तेनैव संज्ञाव्यावृत्तिरिति भाष्याशय इत्युच्यते तर्ह्यनुक्तसमुच्चयार्थेन चकारेण "शूद्रा चामहत्०" (पा० सू० ४।१।४) इत्यत्र जातिग्रहणरूपज्ञापकमूह्यम्।

ननु 'अर्थाश्रयेऽयं न्यायः शब्दाश्रये च वृद्ध्यात्त्वे' इति भाष्येण विशिष्टरूपोपादानविषयताया एव प्रतीतेः पदकार्यविषयत्वं भाष्यविरुद्धमत आह–**अर्थेति**। भाष्येऽर्थपदेन लौकिकोऽर्थो गृह्यत इत्याह—**लौकिकार्थेति**। **तद्रहितेति**। लौकिकार्थवत्त्वयोग्यपदत्वरहितशब्दाश्रये इत्यर्थः। ते=वृद्ध्यात्त्वे। यथाश्रुतार्थे भाष्यासङ्गतिमाहः—**गोत इति** ॥ १५ ॥

---

१. अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥ इति न्यायमूलक इत्यर्थः ॥
( पा० सू० १।१।२७ ) पदमञ्जरी।

**अर्थवद्ग्रहणे—इत्यस्यापवादमाहः—**

**अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ।।१६।।**

**'येन विधिः' इत्यत्र भाष्ये वचनरूपेण पठितैषा । तेन 'राज्ञा' 'साम्ना' इत्यादावल्लोपः, 'दण्डी' 'वाग्मी' इत्यादौ 'इन्हन्' इति नियमः, 'सुपयाः' 'सुस्रोताः' इत्यादौ 'अत्वसन्तस्य' इति दीर्घः, 'सुशर्म्मा' 'सुप्रथिमा' इत्यादौ 'मनः' इति ङीब्निषेधश्च सिद्धः ।**

**अन्ये तु 'परिवेविषीध्वम्' इत्यत्र ढत्वव्यावृत्तये क्रियमाणात् 'इणः षीध्वम्' इत्यत्राङ्गग्रहणादर्थवत्परिभाषाऽनित्या, तन्मूलकमिदमित्याहुः ।**

---

**नियम इति ।** अलैवानर्थकेन तदन्तविधिर्न तत्समुदायेनेति नियमेन हन्ग्रहणे प्लीहन्शब्दस्याग्रहणवदनर्थकानिनन्तस्याप्यनिन्ग्रहणेनाग्रहणादल्लोपस्य "इन्हन्०" ( पा० सू० ६।४।१२) इति नियमस्य चानापत्तिरिति भावः । **सुस्रोता इति ।** "ननु स्रुरीभ्यां तुट् च"[1] ( उणा० सू० ६४१ ) इत्यौणादिकेऽसि[2]प्रत्यये तुडागमे च कृते, आगमविशिष्टस्यासिग्रहणेन ग्रहणान्नायं दोष इति चेत्, न; तस्प्रत्ययान्तपक्षे एतद्ग्रन्थस्य सत्त्वेनादोषात् । वस्तुतः 'निर्गतो दक्षिणतो निर्दक्षिणता अमुना' इत्युदाहरणं बोध्यम् ।

न चातसुच्प्रत्ययान्तस्य प्रातिपदिकत्वेऽप्यव्ययत्वात्प्रथमैवेति कथं "निरादयः०" (का० वा० १।४।७९) इति समास इति वाच्यम्, दुराचारः पुरुषः 'दुष्पुरुषः' इत्यत्रेव "प्रादयो गताद्यर्थे०" ( का० वा० १।४।७९ ) इति समासाङ्गीकारात् । **सुशर्मेति ।** ननु सुष्ठु शर्मेति बहुव्रीहौ "अनो बहुव्रीहेः" (पा० सू० ४।१।१२ ) इत्येव ङीब्निषेधस्य सिद्धत्वात्कथम् "मनः" ( पा० सू० ४।१।११ ) इत्यस्योदाहरणमिति चेत्, न; 'निश्शर्मा' 'निष्प्रथिमा' इत्यस्योपलक्षणत्वेनादोषात् ।

**परिवेविषीध्वमिति ।** विषेर्जौहोत्यादिकस्येदं रूपमत्र षान्तमङ्गं न त्विणन्तमिति भावः । ननु व्यतिषीध्वमित्यत्र ढत्वव्यावृत्त्याङ्गग्रहणस्य चारितार्थ्यसम्भवात्कथं ज्ञापकत्वम् । न च[3] "तासस्त्योः०' (पा० सू० ७।४।५०) इति सलोपे "सात्पदाद्योः" ( पा० सू० ८।३।१११ ) इति निषेधात्षीध्वमेव तत्र न सम्भवतीति वाच्यम्, अपरनिमित्तकत्वेनान्तरङ्गत्वात् "लिङः सलोपः०" (पा० सू० ७।२।६९) इति सलोपे "उपसर्गप्रादुर्भ्याम्०" (पा० सू० ८।३।८७) इति षत्वे तत्सम्भवादिति चेत्, न; "इणष्षीध्वम्०" (पा.सू. ८।३।७८) इत्येतद्दृष्ट्या "उपसर्गप्रादुर्भ्याम्०"

---

१. 'श्रुवीभ्यां तुट् च' इत्यपपाठः क० पु० ।

२. 'असुन्' प्रत्यये इत्यर्थः । असुन्प्रत्ययस्यैव विधानात् ।

३. 'परत्वात्' इत्यधिकः पाठः क० पु० ।

**'विभाषेटः' इत्यत्रानर्थकस्यैव षीध्वमः सम्भवादत्रापि तस्यैव ग्रहणमिति भ्रमवारणाय 'अङ्गात्' इति परे ॥ १६ ॥**

**ननु 'उश्च' इत्यत्र 'लिङ्सिचौ' इत्यतः 'आत्मनेपदेषु' इत्येव सम्बध्येत, अनन्तरत्वादत आहः—**

**एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ॥ १७ ॥**

**वा-शब्द एवार्थे । परस्परान्वितार्थकपदानाम्—**

---

( पा० सू० ८।३।८७ ) इत्यस्यासिद्धत्वेन षीध्वमस्तद्दृष्टचाभावेनैव ढत्वाप्राप्तेः। सूत्रं तु "आदेशप्रत्यययोः" ( पा० सू० ८।३।५९ ) इत्येतद्विषये चरितार्थमिति न तद्वैय्यर्थ्यशङ्कापि ।

**सम्भवादिति**[१] । आगमसन्निधानेऽपि केवले तत्त्वबुद्धिरस्तीत्यभ्युपेत्येदम्[२] सिद्धान्ते तु प्राधान्यादिणः परो य इट् ततः परस्यैतत्सम्बन्धिधकारस्येत्यन्वयादिहापीणः परस्यैतत्सम्बन्धिधकारस्येत्यर्थः । षीकारव्यवधाने तु सामर्थ्यात् प्रवृत्तिरित्यङ्गग्रहणमावश्यकम्[३] इति भावः । न चैवमुत्तरसूत्रेऽनर्थकस्यैव ग्रहणाभावेन पूर्वत्रापि तादृशस्यैव ग्रहणमिति नियमाभावात् 'परिवेविषीध्वम्' इत्यादावर्थवत्परिभाषया ढत्वव्यावृत्त्याङ्गग्रहणस्य ज्ञापकत्वं सुस्थमिति वाच्यम्[४], इणः परस्यैतत्सम्बन्धिधकारस्येत्यर्थे 'एधिषीध्वम्' इत्यत्रापि ढत्वप्राप्त्या तद्व्यावृत्तयेऽङ्गग्रहणस्यावश्यकत्वात्[५] ॥ १६ ॥

**अनन्तरत्वादिति ।** आकाङ्क्षामूलकस्वरितत्वप्रतिज्ञायास्तावदंश एवाङ्गीकारेणाकाङ्क्षानिवृत्तेरिति भावः । अत्र वा शब्दस्य विकल्पार्थत्वेऽर्थासङ्गतिं ध्वनयन्नाहः—**एवार्थ इति ।** एकस्मिन् वाक्यार्थे योगस्सम्बन्धो येषां तानि एकयोगानि, तस्य निर्दिष्टपदेन कर्मधारयः । एकवाक्यार्थान्वय्यर्थकानां पदानामित्यर्थः, न तु एकसूत्रनिर्दिष्टानामित्यर्थ इत्याशयेनाह-**परस्परेति ।**

---

१. 'यद्यपि षीध्वमादीनामिटः परत्वं न सम्भवति, तद्भक्तत्वादिटस्तथापि श्रुतिकृतानन्तर्यमात्रेण सामर्थ्याच्छास्त्रप्रवृत्तिः । यद्वा ह्रस्वादङ्गादित्यत्रांगग्रहणात्' इत्यधिकः पाठः क० पु० ।

२. 'अत्र सूत्रेऽङ्गादिति न सम्बध्यते । अत एव 'उपदिदीयिध्वे' इत्यादौ विकल्पः सिद्धयति । अन्यथा युटः परादित्वात् तन्न स्यादिति बोध्यम्' इत्यधिकः पाठः क० पु० ।

३ 'इत्यङ्गग्रहणमावश्यकमिति भावः' इति नास्ति क पु० ।

४. 'उत्तरसूत्रसाहचर्यात्' इत्यधिकः पाठः क० पु० ।

५. 'यदि तु इण इति षीध्वमोर्विशेषणं तदाङ्गग्रहणं ज्ञापकमेव' इत्यधिकः पाठः क० पु० ।

**सहैवानुवृत्तिनिवृत्तो इत्यर्थः। एककार्यनियुक्तानां बहूनां लोके तथैव दर्शनादिति भावः।**

**यत्तु-अत्र ज्ञापकम् 'नेडवशि' इत्यत इडित्यनुवर्त्तमाने 'आर्धधातुकस्येड्' इत्यत्र पुनरिड्ग्रहणम्। तद्धि नेत्यस्यासम्बन्धार्थमिति। तन्न; 'दीधीवेवीटाम्' इति सूत्रे भाष्ये तत्रत्येड्ग्रहणप्रत्याख्यानायेड्ग्रहणेऽनुवर्तमाने पुनरिड्ग्रहणस्येटो गुणरूपविकाराभावार्थकत्वस्योक्तत्वेन तद्विरोधात्। नञो निवृत्तिस्तु 'क्वचिदेकदेशोऽप्यनुवर्तते' इति न्यायेन सिद्धा।**

**वस्तुतस्तु 'दीधीवेवीटाम्' इति सूत्रस्थभाष्यमेकदेशयुक्तिः, 'आर्धधातुकस्य' इति सूत्रस्थेड्ग्रहणस्य 'नेड्वशि' इति सूत्रे भाष्ये प्रत्याख्यानात्, तत्करणेन गुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात्॥ १७॥**

---

द्वितीयस्य सह-वा-शब्दस्यानावश्यकत्वं द्योतयितुमाह—**सहैवानुवृत्तिनिवृत्तो इति**। ननु सर्वत्र वृत्तिस्वभावाद् वृत्तिघटकानां परस्परान्वितार्थकानां मध्ये एकदेशस्यान्यत्रानुवृत्त्या एकयोगेत्यस्य समस्ताभिप्रायकत्वमेव युक्तमिति चेत्, न; 'अचिनवम्' इत्यत्र "औतोऽम्शसोः" (पा० सू० ६।१।९३) इत्यात्त्ववारणाय "वा सुपि" (पा. सू. ६।१।९२) इत्यतस्सुब्ग्रहणमनुवृत्त्योक्तन्यायेन तदसम्बन्धमाशङ्क्य "अलुगुत्तरपदे" (पा० सू० ६।३।१) इति दृष्टान्तेन 'क्वचिदेकदेशोऽपि०' (परि० १८) इति न्यायेन समाधानपरभाष्यासङ्गतेः। **एकदेशोऽपीति**। सूत्रारम्भसामर्थ्यादिति तु न युक्तम्, आर्धधातुकमात्रे तदनुमानेन तत्सार्थक्यसम्भवात्।

ननु "दीधीवेवीटाम्" (पा. सू. १।१।६) इति सूत्रस्थभाष्यस्य "नेड्वशि०" (पा० सू० ७।२।८) इति सूत्रस्थेड्ग्रहणप्रत्याख्यानभाष्यविरोधादेकदेशित्वकल्पनं न युक्तम्, अनुवृत्त्यैव सिद्धे इड्विधानार्थमिड्ग्रहणारम्भस्य[1] प्रत्याख्यानेऽपि नियमरूपफलसिद्ध्यर्थमपीड्ग्रहणं न कर्त्तव्यमिति तत्प्रत्याख्यानादर्शनात्। अन्यथा "दीधीवेवीटाम्" (पा० सू० १।१।६) इत्यस्य प्रत्याख्याततत्वेनेटो गुणप्रसङ्गेन "दीधीवेवीटाम्" (पा० सू० १।१।६) इति सूत्रस्थभाष्यविरोधापत्तेः। दीधीवेव्योश्छांदसत्वात्प्रत्याख्यानेऽपि तत्रेट इति न्यासस्तु कर्त्तव्य इति "नेड्०" (पा० सू० ७।२।८) इति सूत्रस्थभाष्याशय इत्युच्यते तर्ह्येत्रेड्ग्रहणप्रत्याख्यानार्थं दीधीत्यस्य स्थाने पृथग्योगकरणे योगविभागाश्रयणरूपं विपरीतमेव गौरवमित्याह—**तत्करणेनेति**। नियमार्थमिड्ग्रहणकरणेनेत्यर्थः[2]।

**गुरुतरयत्नमिति**। अत्र पक्षे 'अलावीत्' इत्यादौ सवर्णदीर्घानापत्तिः। न च "सिज्लोप०" (का० वा० ८।२।२८) इति ज्ञापकेन नियमस्यानित्यत्वान्न दोषः। समार्तेत्यादौ "उश्च" (पा० सू० १।२।१२) इति कित्त्वाद्गुणाप्राप्त्या "आटश्च" (पा० सू० ६।१।९०) इति वृद्धिं प्रति सिज्लोपस्यासिद्धत्वाभावबोधनेन

---

१. 'इड्ग्रहेणारम्भस्य' इति पाठः क० पु०। २. 'ग्रहणेनेत्यर्थः' इति पाठः क० पु०।

**ननु—अलुगधिकारः प्रागनङः, उत्तरपदाधिकारः प्रागङ्गाधिकारादित्यनुपपन्नम्, एकयोगनिर्दिष्टत्वात्। तथा दामहायनान्ताच्च' इत्यादौ 'सङ्ख्याऽव्ययादेः' इत्यतः सङ्ख्यादेरित्यनुवर्ततेऽव्ययादेरिति निवृत्तमिति चानुपपन्नमत आहः—**

**एकयोगनिर्दिष्टानामेकदेशोऽप्यनुवर्तते[1] ॥ १८ ॥**

**एकत्रार्थे योगः=सम्बन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थ इति 'पक्षात्तिः' इति सूत्रे कैयटः।**

**तावन्मात्रांशे स्वरितत्वप्रतिज्ञाबलाल्लभ्यमिदम्। स्पष्टा चेयम् 'दामहायनान्ताच्च' इति सूत्रे 'औतोऽम्शसोः' इति सूत्रे च भाष्ये पूर्वा च ॥ १८ ॥**

**ननु 'त्यदादीनामः' इत्यादिना 'इमम्' इत्यादावनुनासिकः स्यादत आहः—**

---

परत्वाद् "ह्रस्वादङ्गात्" ( पा० सू० ८।२।२७ ) इति सिज्लोपे वृद्ध्यर्थं तस्य चारितार्थ्यसम्भवात्।

न चैवम् 'अध्यैष्ट' इत्यादावपि सिज्लोपापत्तिः "उश्च" ( पा० सू० १।२।१२ ) इति कित्त्वस्य तत्राप्राप्त्या वार्णपरिभाषया पूर्वं गुणे "आटश्च" ( पा० सू० ६।१।९० ) इति वृद्धौ तत्सिद्धेः। किञ्च 'अगृहीत्' इत्यादौ "ग्रहोऽलिटि०" ( पा० सू० ७।२।३७ ) इति वचनप्रामाण्याद्दीर्घे तत्स्थानिकैकादेशस्य नियमाविषयतया तत्र सवर्णदीर्घप्रवृत्तये "सिज्लोपः०" (का० वा० ८।२।२८) इति वचनस्य चरितार्थ्यसम्भवात्। अत इड्विधौ "अङ्गस्य" ( पा० सू० ६।४।१ ) इत्यधिकारात्प्रत्यासत्त्याङ्गाधिकारविहितविकारस्यैव व्यावृत्तिरिति कैय्यटोक्तयत्न आश्रयणीयः। तत्र गुरुतरत्वं तु नियमेनाङ्गाधिकारविहितविकारमात्रव्यावृत्तेश्शब्दमर्यादया लाभेनाङ्गपदनिष्ठं स्वरितत्वमाश्रित्य स्वरितेनाधिकं कार्यं भवतीत्यर्थक—"स्वरितेनाधिकारः" ( पा० सू० १।३।११ ) इत्यनेनोक्तार्थकल्पनरूपम्, 'पिपठींषि' इत्यादौ दीर्घसिद्धये, नियमस्यानित्यत्वकल्पनरूपञ्चेति बोध्यम् ॥ १७ ॥

अस्याः परिभाषायाः समस्तविषय एव प्रवृत्तिरिति प्राचोक्तमसङ्गतमिति ध्वनयितुं शङ्कते—**नन्विति**। प्राचीनोक्तमनुवदति—**एकत्रेति**। अत्रास्वरसस्तु पूर्वोक्तभाष्यविरोध एव बोध्यः। अस्यालिङ्गमाह—**तावन्मात्रेति** ॥ १८ ॥

**स्यादिति।** व्यक्तिपक्षे "अणुदित्०" ( पा० सू० १।१।६९ ) सूत्रेण निरूढलक्षणया, जातिपक्षाश्रयणेन वात्वावच्छिन्नस्य सर्वस्याप्युपस्थित्त्या अन्तरतम्[2]-

---

१. अन्यत्र 'क्वचिदेशोऽप्यनुवर्तते' इति पाठः।

२. 'स्थानेऽन्तरतमः' पा० सू० १।१।५० इति परिभाषयेर्थः।

## भाव्यमानेन सवर्णानां ग्रहणं न ।। १९ ।।

परिभाषयानुनासिकाकारः स्यादिति भावः। **भाव्यमानेनेति ।** उत्पत्त्यर्थक-भूधातोर्णिजन्तात्कर्मणि शानचा, उत्पद्यमानेनेत्यर्थः। अस्य **'सवर्णानाम्'** इत्यत्रान्वयः। भाव्यमाननिरूपितसावर्ण्यवतां प्रत्यासत्त्या भाव्यमानेन तद्बोधकेन वा "अणुदित्०" ( पा० सू० १।१।६९ ) सूत्रादिना प्राप्तं ग्रहणं न। तेन "इदम इश्" ( पा० सू० ५।३।३ ) इत्यादौ "इको यणचि" ( पा० सू० ६।१।७७ ) इत्यादौ च न दोषः।

ननु जातिपक्षे यत्वादिजात्यवच्छिन्ने गृहीतशक्तिकेन यण्पदेन यत्वादि-जात्यवच्छिन्नानामुपस्थितिरनया वार्यते, उत तज्जात्यवच्छिन्ने शक्तिग्रह एव वा। नाद्यः, शक्तिग्रहोत्तरमुपस्थितेर्वचनसहस्रेणापि निषेद्धुमशक्यत्वाद्। न द्वितीयः, "हयवरट्" ( शिव० सू० ५ ) इत्यादिघटकयादिषु भविष्यति किञ्चिदिति न्यायेन यण्पदशक्तिग्रहकाले तत्र विधेयत्वाप्रवृत्त्या निषेधाप्रवृत्तेरिति चेत्, न; कार्यकालपक्षे "मृजेर्वृद्धिः" ( पा० सू० ७।२।११४ ) इत्यादौ वृद्ध्यभिन्ना आदैचो भवन्तीतिवद् यणभिन्ना यादयो भवन्तीति वाक्यार्थेन तेषु विधेयत्व-प्रतिपत्त्याऽत्रैव यण्पदस्य शक्तिग्रहेणात्रोपस्थितेष्वाक्षरसमाम्नायिकेषु विधेय-सवर्णानां विधेयगतजातौ शक्तिग्रहद्वारा तद्बोधकपदेन प्राप्तं ग्रहणं नेत्यर्थे-नादोषात्। किञ्च प्रथमान्तपदश्रुत्या यण्पदे विधेयत्वप्रतिपत्तेस्सुलभत्वात्।

एवं च[1] विधेयविषये यद्गुणविशिष्टस्योच्चारणं तद्गुणविशिष्टव्यक्तेरेव बोध्यत्वेन विधेयत्वम्, न तु "अणुदित्०" ( पा० सू० १।१।६९ ) सूत्रेण लक्षणया गुणाभेदकत्वेन वा जातिपक्षाश्रयणेन वा गुणान्तरविशिष्टव्यक्तेर्ग्रहणम्।

एतेन भाव्यमानेनेत्यस्य किं विधीयमानेनेत्यर्थ उत तद्बोधकेनेत्यर्थः। आद्ये "त्यदादीनामः" ( पा० सू० ७।२।१०२ ) "इको यण्०" ( पा० सू० ६।१।७७ ) इत्यादौ बोध्येऽणुदित्[2]—सूत्रप्रवृत्त्या तस्य सवर्णग्राहकत्ववारणेऽपि जातिपक्षेण निरूढलक्षणया वा बोधकेन सवर्णग्रहणं दुर्वारम्।

किञ्च जातिपक्षेऽत्वावच्छिन्नस्य सर्वस्यापि विधीयमानतया तद्विजातीयस्य निषेध्यस्य तत्सवर्णस्याप्रसिद्ध्या सजातीयसवर्णग्रहणनिषेधे[3] विनिगमनाविरहाद-नुनासिकस्येव केवलस्यापि निषेधेन वचनानर्थक्यम्। द्वितीये बोधकस्य सवर्ण-ग्राहकत्वनिषेधेऽपि बोध्ये प्रत्याहाराद्यवर्णस्य "इदम इश्" ( पा० सू० ५।३।३ ) इत्यादाविश्पदबोध्यस्य च सवर्णग्राहकत्वं दुर्वारमित्यपास्तम्।

---

१. 'च' इति नास्ति क० पु०।

२. 'बोध्ये' इत्यादितः 'वारणेऽपि' इत्येतत्पर्यन्तस्य स्थाने 'अणुदित्सूत्रप्रवृत्त्या बोध्ये प्राप्तस्य सवर्णग्राहकत्वस्य वारणेऽपि' इति पाठः क० पु०।

३. 'ग्रहणानिषेधे' इति पाठः क० पु०।

**अणुदित्सूत्रे 'अप्रत्ययः' इत्यनेन सामर्थ्यात्सूत्रप्राप्तम्, जातिपक्षेण प्राप्तम्,**

---

नन्वेवमपि 'इमम्' इत्यादौ गुणाभेदकत्वेनानुनासिकविधानं दुर्वारम्, न चानेन गुणाभेदकत्वेन प्राप्तस्यापि निषेधः, "बहुवचने झल्येत्" (पा० सू० ७।३।१०३) "एत ऐ" (पा० सू० ३।४।९३) इत्यादौ स्थान्यनुरूपस्यादेशस्य लाभानापत्तेः। अइुदात्त इत्यादावुदात्तोच्चारणेनैव सिद्धे उदात्तग्रहणस्य वैय्यर्थ्यापत्तेश्चेति चेत्, न; सिद्धान्ते "त्यदादीनामः" (पा० सू० ७।२।१०२) इत्यादावुच्चरितगुणविशिष्ट-व्यक्तेरपि स्वेन सवर्णत्वाच्छुद्धस्यापि निषेधेन सूत्रस्य मूकतापत्त्या तद्वारणायास्यां सवर्णपदेन "पथिमथि०" (पा० सू० ७।१।८५) इति सूत्रस्थशेखरोक्तरीत्या स्वस-जातीयस्वभिन्नधर्मवत एव ग्रहणस्यावश्यकतया तत्र धर्मपदेनास्यानन्तर्गतयत्न-जन्यानुनासिक्यह्रस्वत्वादीनामेव ग्रहणम्, न त्वास्यान्तर्गतयत्नजन्योदात्तत्वादी-नामपीत्यदोषात्। अत्र चाइुदात्त इत्यत्रत्यमुदात्तग्रहणमेव ज्ञापकम्।

न च 'अकरोत्' इत्यत्रोप्रत्ययनिमित्तकशेषनिघातबाधार्थं तच्चरितार्थमिति वाच्यम्, अट्पदे स्वरितत्वप्रतिज्ञया स्वरितेनाधिकं कार्यमित्यर्थकेन "स्वरितेना-धिकारः" (पा० सू० १।३।११) इत्यनेनैव शेषनिघातवारणसम्भवात्। ह्रस्वत्वा-दिधर्माणामास्यानन्तर्गतत्वं तु तज्जनकयत्नस्यास्यानन्तर्गतत्वादिति स्यानप्रयत्न-विवेकप्रकरणे शेखरे स्पष्टम्। यद्वा स्वरातिरिक्त एव भिन्नधर्मपदेन गृह्यते। एवञ्चानया भाव्यमानसजातीयानां स्वरातिरिक्तभिन्नधर्मवतां सवर्णानामेव ग्रहणं निषिद्ध्यते इति न दोषः।

एतेन प्रत्याख्यातशास्त्राबोधितधर्मस्यैव ग्रहणान्न दोष इत्यपास्तम्। "मुखनासिका०" (पा० सू० १।१।८) इति सूत्रस्यापि प्रत्याख्यातत्वेनानुनासिक्य-स्यासङ्ग्रहापत्तेः।

वस्तुतः 'गुणा अभेदकाः' इत्यत्र गुणपदेन स्वरा एव गृह्यन्ते, उपक्रमभाष्ये 'स्वरा अभेदकाः' इत्युपक्रमात्। अत एव "तद्वानासाम्०" (पा०सू०४।४।१२५) इति दिर्देशः सङ्गच्छते। अत एव "अणुदित्०" (पा० सू० १।१।६९) सूत्रमपि चरितार्थम्। अन्यथानुनासिक्यवद् ह्रस्वत्वादेरपि वर्णधर्मतया गुणत्वादनयैव दीर्घादीनां ग्रहणे सिद्धे तद्वैय्यर्थ्यं स्पष्टमेव।

एवञ्च गुणपदेनानुनासिक्यग्रहणे दृढतरफलाभावेनात्र सवर्णपदबोध्यधर्मे उक्तविशेषणं व्यर्थमेव। भाव्यमानेनेत्यनेन गुणाभेदकत्वेन प्राप्तस्यात्र पक्षे निषेध इत्याहुः।

**सामर्थ्यादिति।** 'न कलञ्जम्' इति निषेधेन रागप्राप्तभक्षणनिषेधवदत्रा-प्रत्यय इत्यनेन लौकिकजातिपक्षाश्रयणादिना प्राप्तस्य सवर्णग्रहणस्यापि निषेधः।

**गुणाभेदकत्वेन च प्राप्तं नेत्यर्थः। अत एवाणुदित्सूत्रे प्रत्ययाऽऽदेशाऽऽगमेषु सवर्ण-ग्रहणाभावं प्रकारान्तरेणोक्त्वा, 'एवं तर्हि सिद्धे यदप्रत्यय इति प्रतिषेधं शास्ति, तज्ज्ञापयति भवत्येषा परिभाषा 'भाव्यमानेन सवर्णानां ग्रहणं न' इति।**

---

अन्यथानन्तरत्वात्सूत्रप्राप्तस्य निषेधेऽपि लक्षणादिना सवर्णग्रहणस्य दुर्वारतया तद्वैय्यर्थ्यापत्तेः[1]।

परिभाषायां मानमाह—**अत एवेति। प्रकारान्तरेणेति।** असाम्प्रतिक इत्यादौ ग्रहणकशास्त्रगृहीतानामुच्चारणाभावेनार्थप्रत्यायकत्वासम्भवादर्थप्रत्याय-कत्वसमानाधिकरणप्रत्ययसंज्ञाया अप्रवृत्त्या तेषां ग्रहणे फलाभावेन ग्राहकशास्त्रा-प्रवृत्तेरप्रत्यय ग्रहणं व्यर्थमिति भावः।

न चात्यन्तस्वार्थिककनादीनामिव दीर्घादीनामपि यथाकथंचित्प्रकृत्यर्थेनैवा-र्थवत्त्वस्य सम्भवेनार्थप्रत्यायकत्वसमानाधिकरणप्रत्ययसंज्ञा तेषु दुर्वारैवेति वाच्यम्, कनादीनां प्रत्ययाधिकारे पाठसामर्थ्येन तत्र यथाकथंचिदर्थप्रत्यायकत्वमादाय प्रत्ययसंज्ञाप्रवृत्त्यङ्गीकारेऽप्यत्र तथा वैय्यर्थ्याभावेन तद्वत् प्रत्ययसंज्ञाया अप्रवृत्त्या फलाभावाद् ग्रहणकशास्त्रस्याप्यप्रवृत्तिकल्पनाया एव [2]युक्तत्वमित्याशयात्। एवमागमविषयेऽपि "वृतो वा" ( पा० सू० ७।२।३८ ) इति ज्ञापकात्सवर्णाग्रहण-मिति 'टित्किन्मित्सु' इति वार्तिकं प्रत्याख्यातम्।

ननु वृत एव परस्य ह्रस्वदीर्घौ नान्यस्मादुभयमिति नियमार्थं तत्, तद्भिन्ने-ऽन्यतरस्य प्रवृत्त्या 'भविता' इत्यादौ दीर्घः 'लविता' इत्यादौ 'ह्रस्वः' इत्यनिष्टमा-पद्येतेति चेत्, न; 'व्रीहीन् वहन्ति' इतिवद् "ग्रहोऽलिटि०" ( पा० सू० ७।२।३७ ) इति सूत्रस्य तत्रैव दीर्घो नान्यत्रेति नियमार्थत्वेनादोषात्।

न च ग्रहेः परस्यार्धधातुकस्य दीर्घ एव न ह्रस्व इति विपरीतनियमापत्तिः, "वृतो वा" ( पा० सू० ७।२।३८ ) इति ज्ञापकेनोभयोरेकत्र समावेशाभावस्य ज्ञापितत्वेनैकत्रोभयोरप्राप्त्या त्वदुक्तनियमे फलाभावात्। एवञ्चागमस्थले न दोषः। एवमादेशविषयेऽपि "ई हल्यघोः" ( पा० सू० ६।४।११३) इत्यत्र दीर्घो-च्चारणं ज्ञापकं बोध्यम्।

ननु एकेनैव यत्नेन सर्वत्र वारणसम्भवे उक्तरीत्या प्रत्ययागमादेशेषु प्रत्येकं यत्नाश्रयणमयुक्तं गौरवादतिक्लिष्टत्वादित्याशयेनाह—**एवं तर्हीति। ज्ञापयतीति।** तन्त्रान्तरसिद्धायाः प्राचीनसम्मतायाः परिभाषाया भाव्यमानप्रत्ययांशे स्वसम्मतत्व-द्योतनद्वारांशान्तरेऽपि स्वसम्मतत्वं बोधयतीत्यर्थः।

---

१. 'तद्वैयर्थ्यापत्त्या तदन्यर्थं स्यादिति भावः' इत्यधिकः पाठः क० पु०।

२. 'सूक्तत्वमित्याशयात्' इति पाठः क० पु०।

**किञ्च, 'ज्याद ईयसः' इत्येवान्तर्यतो दीर्घे सिद्धे 'ज्यादात्' इति दीर्घोच्चारणमस्या ज्ञापकम्। अणुदित्सूत्रे 'ज्यादात्' इति सूत्रे च भाष्ये स्पष्टैषा।**

**'चोः कुः' इत्यादौ भाव्यमानेनापि सवर्णग्रहणम्, विधेये उदिदुच्चारणसामर्थ्यात्। एतदेवाभिप्रेत्य 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' इति नव्याः पठन्ति ॥ १९ ॥**

**नन्वेवम् 'अदसोऽसेः' इत्यादिना 'अमू' इत्यादौ दीर्घविधानं न स्यादत आहः—**

**भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति ॥ २० ॥**

---

ननु गत्यन्तरसम्भवे एवं रीत्या परिभाषायां ज्ञापकवर्णनमनुचितम्, स्वांशे चारितार्थ्यासम्भवादित्यरुचेराहः—**किंचेति**। नन्वत्रापि ज्ञापनोत्तरमचारितार्थ्यं तुल्यम्, "बहोर्लोपः०" (पा० सू० ६।४।१५८) इत्यतो लोपग्रहणानुवृत्त्या लोपेनैवेकारनिवृत्तेस्सिद्धौ पुनरकारविधानसामर्थ्यात् पररूपं बाधित्वा दीर्घसिद्धेरिति चेत्, न; "अकृत्सार्व०" (पा० सू० ७।४।२५) इति दीर्घव्यावृत्त्या चरितार्थ्यसम्भवेन पररूपापत्तेः।

**सामर्थ्यादिति।** ननु परिभाषायां सवर्णपदेन पूर्वोक्तधर्मवत्सजातीयस्यैव ग्रहणेन कखादिसाधारणैकजातेरभावेन कथं निषेधप्राप्तिरिति चेत्, न; हल्त्वजातिमादाय तत्प्राप्तेस्सूपपादत्वात्। किञ्च पूर्वोक्तसवर्णलक्षणे साजात्यनिवेशे फलाभावेन तुल्यस्थानप्रयत्नकस्य भिन्नधर्मवत एव सवर्णपदेन ग्रहणमित्याशयेनैतद्ग्रन्थप्रवृत्तेरदोषात् ॥ १९ ॥

**न स्यादिति।** ननु मूलोक्तरीत्योभयोः प्रश्लेषेण निर्वाहे परिभाषाश्रयणं व्यर्थम्, किञ्च "ऊदुपधाया गोहः" (पा० सू० ६।४।८९) इति सूत्रे विकृतनिर्देशप्रत्याख्यानायोदित्यत्र ह्रस्वदीर्घयोः प्रश्लेषेण किद्विषये 'जुगुहतुः[1]' इत्यादौ ह्रस्वस्य स्थाने आन्तरतम्याद्ध्रस्वे तस्य द्वितीयवाक्यविहितदीर्घव्यावृत्त्या चारितार्थ्येन गूहयतीत्यादौ दीर्घस्यानन्तरतमत्वाद् गुणात्पूर्वमप्राप्त्या ह्रस्वविधायकवाक्यं बाधित्वा परत्वाद् गुणे तत आन्तरतम्यादूकारादेशे गुणविषये दीर्घसिद्धिरित्युक्तम्।

त्वन्मते ह्रस्वमात्रविधानेऽपि कित्सु पर्जन्यन्यायेन प्रवृत्त्या वचनस्य चारितार्थ्येनाकित्सु परत्वाद्गुणे पुनः प्रसङ्गन्यायेन दीर्घस्य स्थानेऽनया परिभाषयैव दीर्घसिद्ध्या प्रश्लेषपर्यन्तानुधावनस्य दीर्घनिर्देशस्य चासाङ्गत्यमिति चेत्, न; "अदसोऽसेः०" (पा० सू० ८।२।८०) इत्यत्र प्रश्लेषाश्रयणे मानाभावात्। किञ्च विकृतनिर्देशाभावपक्षे भाष्योक्तप्रश्लेषानङ्गीकारे परिभाषासत्त्वेऽपि अन्तरतमपरि-

---

१. 'जुगुहुवतुः' इति पाठः क० पु०।

भाषैकवाक्यतया शास्त्रस्य ह्रस्वमात्रविधायकत्वे कित्सु ह्रस्वस्य ह्रस्वविधाने फलाभावेन सामर्थ्यात्तक्रन्यायेनाकित्सु ह्रस्वेन गुणस्य बाधापत्त्या गूहयतीत्यादेर-सिद्धिप्रसङ्गात् । पर्जन्यन्यायेनान्यार्थमारब्धस्य क्वचित्फलाभावेऽपि प्रवृत्तिमात्रं बोध्यते । नतु तेन न्यायेन चारितार्थ्यमपि ।

न चैवं गुणनिषेधप्रकरणे "दीधीवेवीटाम्" ( पा० सू० १।१।६ ) इत्यत्रैव गुहग्रहणेन सिद्धेऽत्र पाठवैय्यर्थ्यं तदवस्थमेवेति वाच्यम्, तथा सति गुहधातो-र्ण्यन्त्यपि गुणनिषेधापत्तेः । सिद्धान्ते तु अजादावेव तत्प्रवृत्त्या न दोषः । विकृत-निर्देशाभावपक्षे दीर्घमात्रविधाने तु 'जुगुहतुः' इत्याद्यसिद्धिरिति प्रश्लेषेणोभय-विधानं दीर्घनिर्देशश्च युक्त एवेति बोध्यम् । किञ्च प्रश्लेषपक्षे ह्रस्वदीर्घयोस्स-माहारद्वन्द्वे ह्रस्वस्य घित्वात्पूर्वनिपाते सुलोपेऽन्तरङ्गत्वाद् ह्रस्वे ततो दीर्घे 'ऊखतुः' इत्यत्रेव पुनर्ह्रस्वाप्रवृत्त्या 'उ' इति निर्देशासङ्गतिः ।

न च "निपात एका०" (पा० सू० १।१।१४) इति सूत्रे आङः अशब्देनाव्य-यीभावे पूर्वं दीर्घे ततो ह्रस्वः इति ग्रन्थासङ्गतिः । तत्राङोऽव्ययत्वात् पूर्वं सुपो लुकि समाससंज्ञासमकालमेव दीर्घप्रवृत्तिसम्भवेन ततो ह्रस्वे तत्सिद्धेः । उश्च ऊश्चेति द्वन्द्वे तु सामासिकलुकः प्राक् दीर्घप्राप्त्या लुगुत्तरमन्तरङ्गत्वाद् ह्रस्वे तद्रूपासिद्धिः । एतेन प्रश्लेषपक्षे "ण्वुल्तृचौ" ( पा० सू० ३।१।१३३ ) इत्या-दाविव दात्परस्य स्थाने उभाभ्यां वाक्याभ्यां पर्यायेण द्वयोरप्यापत्तिः ।

न च सप्तम्यन्तपाठेऽन्तरतमपरिभाषयोपस्कृतं द्वितीयवाक्यं दीर्घे लब्धाव-काशं न ह्रस्वे व्याप्रियत इति वाच्यम्, तथा सति प्रथमवाक्यस्यापि ह्रस्वे चारितार्थ्येन व्यञ्जने प्रवृत्त्यनापत्तेः । अत इयमावश्यकीत्यपास्तम् । प्रथमान्त पाठे एतद्दोषानवकाशात् । न च वाक्यभेदेनादेशद्वयविषयेऽप्यन्तरतमपरिभाषाप्रवृत्तौ 'रामेभ्यः' इत्यत्रान्तरतमत्वाद्दीर्घ एव स्यात् नत्वेत्वमिति वाच्यम्, "अभ्यासे चर्च" ( पा० सू० ८।४।५४ ) इत्यत्र चकारेण जशोऽपि विधानेन वाक्यभेदेऽपि 'झलां जशः' 'खयां चरः' इति नियमार्थमन्तरतमपरिभाषाप्रवृत्तिवदत्रापि परिभाषाप्रवृत्त्या "एचोऽयवायावः" ( पा० सू० ६।१।७८ ) इत्यत्रेव वाक्यभेदानङ्गीकारेण वेष्ट-सिद्धेरिति दिक् । 'रामेभ्यः' इत्यत्र तु विप्रतिषेधसूत्रेण परत्वाद् विप्रतिषेधपरिभा-षयान्तरतमपरिभाषाया बाध इति न दोषः ।

ननु नपुंसकस्य 'उ' शब्दस्य दीर्घेण समाहारद्वन्द्वे 'उ' इति रूपसिद्ध्या परिभाषाश्रयणं व्यर्थमिति चेत्, न; प्रश्लेषाङ्गीकारे मानाभावात् । न च "अदसो मात्" ( पा० सू० १।१।१२ ) इत्यत्रोकारानुवृत्तिरेव मानम्, "अदसो मात्" ( पा० सू० १।१।१२ ) इत्यस्यैकारांशे चारितार्थ्येनासत्यामस्यां परिभाषायामू-कारानुवृत्तेरेव तत्रानापत्तेः । न च सोर्लुका निर्देश एव तत्र प्रमाणम्, "धिन्विकृण्व्यो-रच" (पा० सू० ३।१।८० ) इत्यत्रापि प्रश्लेषापत्तेः । न च "स्वमोः०" (पा० सू०

**'दिव उत्' 'ऋत उत्' इति तपरकरणमस्या ज्ञापकम्। 'तित्स्वरितम्' इति सूत्रे भाष्ये स्पष्टैषा ॥ २० ॥**

**ननु 'गवे हितं गोहितम्' इत्यादौ प्रत्ययलक्षणेनावाद्यादेशापत्तिरत आहः—**

**वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ २१ ॥**

**वर्णप्राधान्यविषयमेतत् ।**

---

७।१।२३ ) इति लुका निर्देश एव द्वन्द्वे प्रमाणम् "चजोः कु घिण्ण्यतोः" ( पा० सू० ७।३।५२ ) इत्यत्रापि द्वन्द्वापत्त्या ककारोकारयोरादेशत्वप्रसङ्गाच्चेति दिक् ।

**दिव उत् इति**[1] । **तपरकरणमिति** । तद्धि 'सुदिव्' शब्दादाचारक्विबन्तात् कर्तरि क्विपि "च्छ्वोः०" ( पा० सू० ६।४।१९ ) इत्यूठि 'सुद्यूभ्याम्' इत्यादौ "एकदेशविकृत०" ( परि० ३७ ) न्यायेन दिव्शब्दत्वात् तत्रान्तरतमपरिभाषया प्राप्तदीर्घव्यावृत्त्या ह्रस्वार्थमेतत्परिभाषाभावे भाव्यमानेनेति निषेधादन्तरतम-परिभाषया दीर्घप्राप्त्या तद्वैय्यर्थ्यं स्पष्टमेव ॥ २० ॥

**गवे हितमिति**[2] । ननु सिद्धान्ते प्रत्ययलक्षणसूत्रस्य नियमार्थत्वेनाल्विधौ विद्ध्यर्थत्वाभावादल्विधौ स्थानिवत्त्वस्याप्यप्राप्त्याऽवादेशाप्राप्तेस्तदापादनमयुक्तम् । न च लुग्विधौ सुप्त्वेन स्थानितया स्थानितावच्छेदकस्यालमात्रवृत्तित्वेन तन्निषेधा-प्रवृत्तेः स्थानिवत्त्वेन तदापादनं युक्तम् । एवमपि प्रत्ययलोपविषये तद्वत्त्यसाधा-रणधर्मनिमित्तककार्य एव स्थानिवत्त्वप्रवृत्तेरङ्गीकारेणात्त्वातिदेशस्य दुर्लभत्वात् ।

न च 'अतृणेट्' 'आशीः' इत्यादाविमित्वयोः प्रवृत्तये तस्याल्विधौ विध्यर्थतया नियमार्थत्वासम्भवात्तदापादनं युक्तम्, इम्विधौ "नाभ्यस्तस्य०" ( पा० सू० ७।३।८७ ) इत्यतो नाचीत्यनुवृत्त्या 'तृणहानि' इत्यत्रेत्वव्यावृत्त्या हलीत्यनुवृत्तेः फलाभावेन "आशासः क्वौ" (का० वा० ६।४।३४) इति वार्त्तिकेन द्वितीयस्यापि सिद्धेः । न च वार्तिकमपूर्वमभ्युपेत्य सूत्रवैय्यर्थ्यकल्पनमयुक्तम्, इत्वविधौ क्विग्रहणेनैव सिद्धेर्नह्येकमिति न्यायेन सामान्यसूत्रारम्भवैय्यर्थ्यस्य सूपपादत्वात् । वार्तिककृन्मतेऽपि 'आशास्ते' इत्यादावित्ववारणाय तस्य नियमार्थमावश्यकत्वाच्च ।

न चैवं त्वन्मते तस्य विद्ध्यर्थत्वापत्त्या 'आशास्ते' इत्यादौ नियमेनेत्वव्यावृ-त्त्यनापत्तिः । इत्वविधावङ्साहचर्याद्धलादिप्रत्ययस्यापि परस्मैपदयोग्यप्रकृतिकस्यैव

---

१. 'दिव उत् इति' इति नास्ति क० पु० ।

२. 'न च इत्संज्ञकालो लोपतः पूर्वमेवान्तरङ्गानपीति लुकि सत्यपि प्रत्ययलक्षणे न दोष इति वाच्यम्, "क्ङिति च" (पा० सू० १।१।५) इत्यत्र तन्निमित्तग्रहणं कर्तव्यम्, उपधारोरवी-त्यर्थमिति भाष्यप्रामाण्येन इत्संज्ञाविषये एतन्न्यायाप्रवृत्तेः' इत्यधिकः पाठः क० पु० ।

ग्रहणेनादोषात् । न चैवं 'मित्रशीः' इत्यादौ प्रत्ययलक्षणसूत्रस्य नियमार्थत्वे "शास इत्०" ( पा० सू० ६।४।३४ ) इत्यस्याप्राप्त्याङः परत्वाभावेन वार्त्तिकस्यापि अप्राप्त्या इत्वं दुर्लभमिति वाच्यम्, "शास इत्०" (पा० सू० ६।४।३४) इति योगं विभज्य क्ङिति सामान्यत इत्वं विधाय ततोऽजादौ चेदङ्येवेति नियमेन तत्र हल्ग्रहणस्य त्यागेन तत्सिद्धेः ।

किञ्च वार्त्तिके आङ्ग्रहणं त्यक्त्वा शासः क्वावित्येव पठित्वा तत्र शासिग्रहणानुवृत्त्या क्वावित्येतावतैव "मित्रशीः" इत्यादिसिद्ध्या पुनश्शासिग्रहण-सामर्थ्यादुभयपदिनोऽपि ग्रहणेनेष्टसिद्धेरिति चेन्मैवम्, पक्षद्वयेऽपि सूत्रस्यावश्य-कत्वेन नियमपक्षेऽनेकस्थलेष्वनेकक्लिष्टकल्पनाया गौरवेण च "विधिनियम०" ( परि० १०९ ) इति न्यायेन विधिपक्षस्यैवाभ्यर्हितत्वेन च तस्य वार्तिकोक्तरी-त्याऽल्विधिविषयकत्वे एव सम्भवेन तद्रीत्यैतदापादनेनादोषात् ।

एवञ्च त्वन्मते सूत्रं विध्यर्थम्, वार्तिकं नियमार्थम् । मन्मते सूत्रं नियमार्थम्, वार्तिकं विध्यर्थमिति न किञ्चिद्गौरवम् । नन्वस्य विध्यर्थत्वे "अनन्तरस्य०" ( परि० ६२ ) इति न्यायेन "न लुमता०" ( पा० सू० १।१।६३ ) इत्यनेनास्यैव निषेधस्स्यात् तथा च 'कति' इत्यादौ स्थानिवत्त्वेन "जसि च" ( पा० सू० ७।३। १०९ ) इति गुणः—स्यादिति वाच्यम्, बाध्यसामान्यचिन्तया स्थानिवद्भावस्यापि निषेधेनादोषात् ।

नन्वेवं नियमफलभूतस्य 'सुदृषत्प्रासादः' इत्यस्यात्र पक्षेऽसिद्धिः, "अत्वसन्त०" ( पा० सू० ६।४।१४ ) इति दीर्घापत्तेः । तथा "सोर्मनसी अलोमोषसी" ( पा० सू० ६।२।११७ ) इति सूत्रेण सुशब्दात्परस्य मन्नन्तस्यासन्तस्य चोत्तरपदस्याद्यु-दात्तत्वं विधीयमानं बहुव्रीहौ दुर्वारम् ।

न च नियमवादिमतेऽपि प्रत्ययाप्रत्ययसाधारणस्य लुप्तप्रत्ययपर्याप्त धर्मस्यानतिदेशेऽपि असन्तत्वस्य पदत्वादिवल्लुप्तप्रत्ययपर्याप्तत्वाभावेन नियमेन व्यावृत्त्यसम्भवात् दीर्घो दुर्वार एवेति वाच्यम्, तादृशधर्मस्य विशेष्यतया विशेषणतया वाश्रयणे स्थानिवद्भावाप्रवृत्तेरङ्गीकारादिति चेत्, न; "अत्वसन्त-स्य०" ( पा० सू० ६।४।१४ ) इत्यत्रान्तग्रहणसामर्थ्येनातुसाहचर्येण च 'अलो-मोषसी' इति पर्युदासेन मन्साहचर्येण च श्रूयमाणासन्तस्यैव ग्रहणेनादोषात् ।

वस्तुतः 'धीमान्' इत्यादौ "एकदेशविकृत०" (परि० ३७) न्यायेनैवात्वन्त-त्वस्य वक्तव्यतया श्रूयमाणात्वन्तत्वस्य[1]क्वाप्यसम्भवात्तत्साहचर्येण श्रूयमाणासन्त-त्वं वक्तुमशक्यम्, तथापि अनुबन्धांशे सर्वत्र भूतपूर्वगतेराश्रयणेनात्वंशे तथाश्रयणेऽपि

१. 'श्रूयमाणासन्तत्वस्य' इति पाठः क० पु० ।

**तत्त्वं च 'प्रत्ययलोपे' इति सूत्रे स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्येतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्त्यर्थमित्येतत्सिद्धम् ।**

**वर्णप्राधान्यं च वर्णस्येतराविशेषणत्वरूपं प्रत्ययनिरूपितविशेष्यतारूपं च । तेन 'गोहितम्' इत्यादौ अवादि न, 'चित्रायां जाता चित्रा' इत्यादावण्योऽकारस्त-**

---

तदन्तांशेऽनतिदिष्टमेव तत्त्वं गृह्यत इति न दोष इत्याहुः । भाष्यमते नियमस्य वार्तिकमते विधेश्च प्रयोजनान्तरं चिन्तनीयम् । वार्तिकमतानुसारेणैव परिभाषामवतारयति[1]—**सिद्धे इति ।** प्रत्ययलोपे सति लुप्तप्रत्ययसम्बन्ध्यलाश्रये कार्ये कर्त्तव्ये स्थानिवदित्येतावतैवाल्विधौ प्रवृत्त्या 'अतृणेट्' इत्यादीनां सिद्धावित्यर्थः । **ग्रहणमिति ।** पुनस्तद्ग्रहणमित्यर्थः । **यत्रेति ।** विधावित्यर्थः । **तत्रैवेति ।** कर्त्तव्ये इति शेषः । **प्रवृत्त्यर्थमिति ।** प्रत्ययलक्षणसूत्रस्येति भावः ।

नन्वेवमपि प्रत्ययलोपे तल्लक्षणमित्येतावतैव सामर्थ्यात् प्रत्ययस्येतराविशेषणत्वरूपं यत्र प्राधान्यमित्युक्तार्थसिद्धेः, प्रत्ययग्रहणं व्यर्थमिति चेत्, न; प्रत्ययत्वतद्व्याप्यधर्मपुरस्कारेण प्रत्ययस्य प्राधान्यं यत्रेत्यर्थलाभार्थं तस्यावश्यकत्वात् ।

**सिद्धमिति ।** तथा चायं सूत्रार्थः । प्रत्ययलोपे सति प्रत्यासत्त्या लुप्तप्रत्ययसम्बन्ध्यलमात्रवृत्तिधर्मावच्छिन्ननिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयप्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तकं कार्यं भवतीति । एवञ्च प्रत्ययसम्बन्ध्यलः प्राधान्येनाश्रयणे प्रत्ययस्य प्रत्ययत्वव्याप्यधर्मपुरस्कारेणानाश्रयणे च प्रत्ययलक्षणं नेति फलितम् । तेनेदं सिद्धमित्यर्थः । अत[2] एव 'बोभवीति' इत्यत्र प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वमिति मूलोक्तं सङ्गच्छते । अन्यथा वर्णाश्रयमात्रे-एतत्प्रवृत्तौ एकाचो द्वित्वविधानेन तस्यापि वर्णाश्रयत्वात् निषेधापत्तिः । मम तु प्रत्यासत्त्या लुप्तप्रत्ययसम्बन्धिवर्णस्य प्राधान्येनाश्रये एव निषेधप्रवृत्तेर्न दोषः ।

**अवादि नेति ।** प्रत्ययत्वतद्व्याप्यधर्मावच्छिन्नस्य तत्रानाश्रयणादिति भावः । **चित्रायामिति ।** "नक्षत्रेण युक्तः०" ( पा० सू० ४।२।३ ) इत्यणः "लुबविशेषे" ( पा० सू० ४।२।४ ) इति लुपि युक्तवद्भावात्स्त्रीत्वे ततो जातार्थे "सन्धिवेला०" ( पा० सू० ४।३।१६ ) इत्यणि "चित्रा०" ( का० वा० १।२।४९ ) इत्यादिवार्तिकेन लुकि "लुक्तद्धित०" ( पा० सू० १।२।४९ ) इति स्त्रीप्रत्ययस्य लुकि

---

१. 'वार्तिकमतानुसारेणैव परिभाषामवतारयति' इत्यस्य स्थाने 'तत्त्वञ्चेति वर्णप्राधान्यविषयकत्वञ्चेत्यर्थः, तदेव साधयति' ईदृशः पाठः क० पु० ।

२. 'अत एव' इत्यादितः' 'न दोषः' इत्येतत्पर्यन्तं मूलपुस्तके कोष्टके वर्तते । क० पुस्तके च च नास्ति । 'अत एव ङित्त्वप्रयुक्तमात्मनेपदं स्वरसतः' इत्यधिकश्च क० पु० वर्तते ।

**दन्तान् ङीप् च न।**

**इयमल्विधौ स्थानिवत्त्वाप्राप्तावपि प्राप्तप्रत्ययलक्षणविधेर्निषेधिकेति स्पष्टं भाष्ये ॥ २१ ॥**

**ननु 'अतः कृकमि' इत्यत्र कमिग्रहणेन सिद्धे, कंसग्रहणं व्यर्थम्, अत आह :—**

## उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ २२ ॥

---

पुनष्टाबिति भावः। **ङीप् च नेति।** न चाणो योऽकार इति व्याख्यानेनाण्सम्बन्ध्यकारस्य प्रत्ययत्वव्याप्यतया तस्य प्राधान्याच्च प्रत्ययलक्षणं दुर्वारमिति वाच्यम्, 'गोहितम्' इत्यादेः "प्रत्ययलोपे प्रत्ययवत्" इति न्यासेनैव सिद्ध्या लक्षणग्रहणसामर्थ्येन यत्र प्रत्ययस्येतराविशेषणत्वरूपं प्राधान्यमेव नत्वप्राधान्येनाप्याश्रयणमित्यर्थे नादोषात्। प्रकृतेऽणोऽलिनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वात्, न प्रत्ययलक्षणप्राप्तिरिति बोध्यम्।

न चैवं पञ्चभिः पट्वीभिः क्रीतः 'पञ्चपटुः' इत्यत्र प्रत्ययलक्षणेन हल्ङ्यादिलोपापत्तिः, ईकाररूपो यो ङीबिति वर्णस्य विशेषणत्वादिति वाच्यम्, ईकारस्यैव विशेष्यत्वाङ्गीकारेणादोषात्। एतेन प्रत्ययस्थानिककार्यव्यावृत्त्या लक्षणग्रहणस्य चारितार्थ्यात्सामर्थ्यं दुर्वचमित्यपास्तम्। लोपविषये उच्चारणप्रसङ्गरूपषष्ठ्यर्थाभावेनैव प्रत्ययस्थानिककार्यप्रवृत्तेरिति दिक्[1] ॥ २१ ॥

**व्यर्थमिति।** "विष्वग्देवयोः०" (पा० सू० ६।३।९२) इति सूत्रस्थवप्रत्ययग्रहणज्ञापितेनान्यत्र धातुग्रहणे तदादिविधिरित्यनेन कंसशब्देऽपि सिद्धेरिति भावः। नित्यपुँल्लिङ्गस्य प्रत्ययस्यान्यपदार्थत्वाद् उणादय इति पुँल्लिङ्गनिर्देशः। 'प्रत्ययग्रहण०' (परि० २३) परिभाषया तदन्तविधिः। उणादिप्रत्ययान्तानि यानि प्रातिपदिकानि तेषु शास्त्रकृत्कल्पितप्रकृतिप्रत्ययविभागशून्यत्वरूपाव्युत्पन्नत्वस्य बाधितत्वात् बोधयितुमशक्यतया तानि—अव्युत्पन्नवत् कार्यं लभन्त इत्यर्थः।

यद्वा शाकटायनादेरुणादिप्रत्ययान्तत्वेनाभिमतानि पाणिनेर्व्युत्पत्तिकार्याभाववन्त्यखण्डान्येवेति यावत्। अत एव भाष्ये 'शङ्खः' इत्यादावीनादीनाशङ्क्य प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेस्सिद्धमिति समाहितम्। न चैवं तेषां साधुत्वे मानाभावः, शास्त्रान्तरे कल्पितोणादिप्रत्ययानां तत्प्रकृतीनां तत्रत्यकार्याणां च सशेषत्वात्, तत्र बाहुलकत्वबोधनद्वारा तत्पूरणाय बहुलमिति वक्तव्यमित्यर्थकेन "उणादयो बहुलम्" (पा० सू० ३।३।१) इति शास्त्रेण साधुत्वेन बोधितानां कल्पितप्रकृतिप्रत्ययषत्वादिरूपकार्यविशिष्टानां शङ्कुला—ऋफिड-

---

१. 'कार्यप्रवृत्तिरिति दिक्' इति पाठः क० पु०।

**इदमेवास्या ज्ञापकमिति कैयटादयः। कंसेस्तु न, कंसोऽनभिधानात्। "प्रत्ययस्य लुक्" इत्यादौ भाष्ये स्पष्टा। "ण्वुल्तृचौ" इत्यादौ भाष्ये व्युत्पन्ना-**

---

त्रर्फिडः—षण्डम्—वर्त्समित्यादीनामिवोणाद्यंतानां कार्वादीनामप्युणादय इत्यनुवादबलेन कोशादिव्यवहारबलेन च साधुत्वस्य बोधनात्[1]।

न च कार्वादय इत्यनुक्त्वोणादय इत्यनुवादबलेन तेषु व्युत्पत्तिपक्ष एवाभिमत इति प्रतीयते, अत एव "अयामन्ता०" (पा० सू० ६।४।५५) इति सूत्रेऽन्तादिग्रहणम्, "नावञ्चेरुः" (उणा० सू० १७) इति सूत्रेण व्युत्पादितन्यङ्क्वादिशब्दे कुत्वायारब्धम् "न्यङ्क्वादीनाञ्च" (पा० सू० ७।३।५३) इति सूत्रम्, तृचश्चकाराभावे मात्रादिशब्दे "अप्तृन्०" (पा० सू० ६।४।११) इति दीर्घप्रतिपादनपरम्, अन्तरङ्गपरिभाषायाः'स्योनः' इत्याद्युदाहरणपरम्,"तपस्तपः०" (पा० सू० ३।१।८८) इति सूत्रे[2] 'तपेरयमौणादिकोऽस्कारो भावसाधनः' इति भाष्यञ्च सङ्गच्छत इति वाच्यम्, "अजेर्वी०" (पा० सू० २।४।५६) इति सूत्रे "वा लिटि" (पा० सू० २।४।५५) इत्यतो वाग्रहणमनुवर्त्य व्यवस्थितविभाषात्वमुक्त्वा 'न तर्हीदानीं 'वा यौ' इति वक्तव्यम्। किं प्रयोजनम्, वेत्ययमादेशो यथा स्यात्, वायुरिति' भाष्यमुपादाय "ढकि लोपः" (पा० सू० ४।१।१३३) इतिवत्। अत एव ज्ञापकाद्युप्रत्यय[3] इति तदाशय इति "कृवापाजिमि०" (उणा० सू० १) इति सूत्रसिद्धवायोः पुनर्व्युत्पत्तिप्रतिपादकाकरग्रन्थेनैतादृशे विषये एव पाणिनेर्व्युत्पत्तिपक्षोऽभिमतो नान्यत्रेत्याशयेनादोषात्।

अत एव शाकटायनप्रणीतत्वस्य सर्वत्र प्रत्ययेष्वविशिष्टत्वेऽपि कृत्तद्धितानामिवोणादीनां साक्षादवचनं सङ्गच्छते। उणादय इत्यनुवादस्तु तत्कल्पितप्रकृतिप्रत्ययविभागस्य स्वानभिमतत्वेऽपि कथञ्चित्तेषां साधुत्वाभ्यनुज्ञानाय। एवञ्च सूत्रभाष्यादौ तत्सिद्धानामपि केषाञ्चिद् व्युत्पादनं तदंशे व्युत्पत्तिपक्ष एवेति बोधनायेति दिक्।

**इदमेवेति।** "अर्थवत्०" (पा० सू० १।२।४५) सूत्रं त्वव्यक्तानुकरणेष्वनर्थकवाक्यानुकरणेषु 'परमगार्ग्यायणः' 'शिवभागवतः' इत्यादिषु प्रातिपदि-

---

१. 'न च सर्पिषेत्यादौ षत्वस्य तत्तत्प्रातिपदिकेष्वाद्युदात्तत्वान्तोदात्तत्वस्य 'प्रतिदीव्नः' इत्यादौ दीर्घादेश्चानापत्तिरिति वाच्यम्, बहुलग्रहणेन सर्वस्यापि सूपपादत्वात्' इत्यधिकः पाठः क० पु०।

२. (पा० सू० ३।१।८७) इति सूत्रे इत्यर्थः तत्रैव (पा० सू० ३।१।८८) इति सूत्रस्यापि व्याख्यातत्वात्।

३. 'ज्ञापकाद्युप्रत्यय:' इति पाठः क० पु०।

**नीत्यपि। इदं शाकटायनरीत्या। पाणिनेस्त्वव्युत्पत्तिपक्ष एवेति शब्देन्दुशेखरे निरूपितम्। "आयनेयी" इति सूत्रे भाष्ये स्फुटमेतत्॥ २२॥**

**ननु 'देवदत्तश्चिकीर्षति' इत्यादौ देवादेः सन्नन्तत्वप्रयुक्तधातुत्वाद्यापत्तिरत आह :—**

**प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्॥ २३॥**

**"यस्मात्प्रत्ययविधिः" इति सूत्रे यस्मात्प्रत्ययविधिस्तदादिप्रत्यय इति योगो विभज्यते। गृह्यमाण उपतिष्ठत इति शेषः। तेन तदाद्यन्तांशः सिद्धः।**

**तदन्तांशस्तु "येन विधिः" इत्यनेन सिद्धः। स च शब्दरूपं विशेष्यमादाय**

---

कत्वसिद्धये 'मूलकेनोपदंशम्' इत्यादौ समासग्रहणस्य नियमार्थत्वेन प्राप्तप्रातिपदिकत्वव्यावृत्तये चावश्यकमिति बोध्यम्।

ननु सूत्रभाष्यादिव्यवहारस्योभयथापि सत्त्वात्तन्निर्णयासम्भवोऽत आह—**इदमिति।**

व्याकरणे शकटस्य च तोकं धातुजमाह च नाम निरुक्ते।

इति भाष्योक्त्यान्येषां मते तदभाववोधनात्। **निरूपितमिति।** "तितुत्र०" (पा० सू० ७।२।९) इति सूत्रे केषाञ्चिद्ग्रहणं तदंशे व्युत्पत्तिपक्षाभिप्रायेणेति दिक्॥ २२॥

**आपत्तिरिति।** ननु देवदत्त—सु-कृ-स—इत्यत्रावयवस्येव समुदायस्य सन्नन्तत्वेन धातुत्वेऽपि देवदत्तस्य आख्यातार्थे कर्त्तर्येवान्वयेन सन्नन्तेन तस्यायोगात्समुदायस्यानर्थकत्वेन कालकारकाद्यन्वयासम्भवान्न ततो लकाराद्यापत्तिः। किन्त्ववयवस्य तद्योग्यत्वात्तस्मादेव स इति न दोषः। न च "सुपो धातु०" (पा० सू० २।४।७१) इति लुगापत्तिः, तत्रापि प्रातिपदिकसाहचर्येणार्थवत्परिभाषया वार्थवत एव धातोर्ग्रहणेनादोषात्, इति चेत्, न; "सन्यङोः" (पा० सू० ६।१।९) इत्यनेन देवशब्दस्य द्वित्वापत्तेः। यदि तु "लिटि धातोः०" (पा० सू० ६।१।८) इत्यतो धातोरित्यनुवर्त्यार्थवत एव सन्नन्तस्य धातोर्ग्रहणेन न दोष इत्युच्यते तर्हि समुदायस्य तिङन्तत्वान्निघातापत्तिरिति भावः।

परिभाषायां मूलमाहः—**यस्मादिति।** तावतापीष्टार्थासिद्धिरत आह—**शेष इति। तेनेति।** योगविभागाध्याहारेणेत्यर्थः। **तदाद्यन्तांश इति।** तदादिरित्यंशः अवयव इत्यर्थः। अवशिष्टलाभाय आह :—**तदन्तांश इति। सिद्ध इति।** ननु उपात्तविशेष्यस्थले तत्सिद्धावपि "सुप आत्मनः०" (पा० सू० ३।१।८) इत्यादौ तदसिद्धिरत आह :—**स चेति। आदायेति।** अध्याहृत्येर्थः।

न च तत्सर्वनामसंज्ञायामिव गमकसापेक्षमिति वाच्यम्, एतत्परिभाषोपस्थिततदादिबोध्यशब्दस्वरूपस्यैव विशेष्यत्वसम्भव इत्याशयात्। यद्वा ननु—

**विशेष्यान्तरासत्त्वे ।**

---

"ङ्याप्प्रातिपदिकात्०" (पा० सू० ४।१।१) "गोस्त्रियोः०" (पा० सू० १।२।४८) इत्यादौ "स्त्रीप्रत्यये चानुपसर्जने न" (परि० २६) इति तदादिनियमनिषेधात्तदादीत्यस्य तत्रानुपस्थानेन ङ्याबन्तमित्यर्थो दुर्लभः, अत आह—**विशेष्यान्तरासत्त्वे इति ।** एवञ्च लक्ष्यानुरोधाच्छब्दस्वरूपाध्याहारेण तदन्तविधिरिति यथाश्रुतमेव साधु ।

ननु "सुप आत्मनः०"(पा०सू० ३।१।८) इत्यादिप्रत्ययग्रहणेषु सौत्रपदजन्यप्राथमिकोपस्थितिविषयस्य प्रत्ययस्य तदादिशब्दस्वरूपेण सामानाधिकरण्यासम्भवात्, तस्मिन्नितरव्यावृत्तिरूपव्यापारवत्त्वरूपविशेषणत्वज्ञानासम्भवेन येनेत्यस्याप्राप्त्या कथं तदन्तविधिः । न च समानाधिकरणार्थप्रतिपादनयोग्यत्वमेव तदन्तविधौ प्रयोजकमिति वाच्यम्, शब्दे तादृशयोग्यत्वञ्च तादृशबोधकारणतावच्छेदकधर्माक्रान्तत्वमेव । तच्च[1] प्रकृते विशेषणत्वमेव । तथा च प्रकृते तदन्तबोधकतावच्छेदकीभूतविशेषणत्वज्ञानासम्भवेन तादृशयोग्यताया असम्भवादिति चेत्, न; प्रातिपदिकसंज्ञाया पूर्वं विभक्तिसमभिव्याहारासम्भवेनार्थविषयकबोधजनकत्वरूपपरिष्कृतार्थवत्त्वाभावेऽपि भावितादृशार्थबोधकत्वमुपलक्षणीकृत्य प्रातिपदिकसंज्ञाप्रवृत्तिवत् प्रत्ययवाचकपदेऽपि भाविविशेषणीभूतार्थबोधकत्वमुपलक्षणीकृत्य तदन्तबोधकत्वस्य सुवचत्वात् ।

न चैवमप्यप्रत्यय इत्यत्र नञा एकार्थीभावापन्नस्य प्रत्ययत्वावच्छिन्नोपस्थापकप्रत्ययपदस्य प्रत्ययग्रहणपरिभाषोपस्थिततदाद्यंशे निष्कृष्यान्वयासम्भवेन घिसंज्ञासूत्रस्थशब्दरत्नोक्तरीत्या तदन्तविधिदुर्लभः । न चाप्रत्ययादित्यादौ तदन्ते गृहीतशक्तिकस्य प्रत्ययपदस्यात्र निर्देश इति वाच्यम्, सामान्यरूपेण विशेष्यरूपेण वा प्रत्ययबोधकशब्दत्वं न तदन्तबोधकतावच्छेदकम्, सुपि प्रत्यये इत्यादौ सप्तम्यन्ते तदबोधकत्वात्, किन्तु विशेषणत्वमेव तदन्तबोधकतावच्छेदकम् । तथा च प्रकृते बोधकतावच्छेदकीभूतविशेषणत्वज्ञानासम्भवेन तदन्तपरत्वस्य दुर्वचत्वात् ।

किञ्च वाक्यार्थबोधकाले तदन्तांशोपस्थितावपि प्रत्ययपदार्थेऽन्वितस्य नञः पुनस्तदन्तार्थेऽन्वयस्याव्युत्पन्नत्वेन पर्युदासस्यासम्भवादिति[2] चेत्, न; प्रत्ययग्रहणपरिभाषोपस्थिततदाद्यंशस्य लक्ष्यार्थतात्पर्यग्राहकत्वेनोत्तरसूत्रे[3] तद्धितग्रहणेनात्र प्रत्ययपदस्य स्वप्रकृत्याद्यवयवकस्वचरमावयवकसमुदाये लक्षणया

---

१. 'तत्र' इति पाठः क० पु० ।
२. 'पर्युदासासम्भवादिति' इति पाठः क० पु० ।
३. "कृत्तद्धितसमासाश्च" पा० सू० १।२।४६ । इति सूत्रे इत्यर्थः ।

तत्रैव नञर्थस्यान्वयेन प्रत्ययान्तभिन्न इत्यर्थस्य सुलभत्वात्। "हल्ङ्याब्भ्यः०" (पा० सू० ६।१।६८) इत्यादौ[1] दीर्घपदस्य तात्पर्यग्राहकत्वाङ्गीकारेणैव दीर्घौ यौ ङ्यापौ तदन्तादित्यर्थवर्णनं ग्रन्थकृतां सङ्गच्छते।

वस्तुतस्तु—ईदृशे विषये प्रसज्यप्रतिषेध एव युक्तः। न चैवं परिभाषायां तदन्तांशानुवादो व्यर्थः, उपस्थितदाद्यंशस्य[2] विशेष्यत्वेनैव सर्वत्र प्रत्ययग्रहणेषु तदन्तविधेस्सिद्धत्वादिति वाच्यम्, 'कृत्तद्धितसमासाश्च" (पा० सू० १।२।४६) 'अप्रत्ययः' इत्यादिसमासनिर्देशेषूपस्थिततदाद्यंशस्य समासैकदेशभूतकृत्तद्धितांशे निष्कृष्य विशेष्यत्वेनान्वयासम्भवेन[3], तादृशे विषये प्रकारान्तरेणैव तदन्तग्रहणस्य वक्तव्यतया तत्र तदन्तशब्देन तदादिरूपस्यैव तदन्तस्य ग्रहणमिति बोधनाय तत्सार्थक्यात्। अत एव "सुप्तिङन्तं पदम्" (पा० सू० १।४।१४) "सनाद्यन्ताः०" (पा० सू० ३।१।३२) इत्यादौ न दोषः।

केचित्तु—परिभाषायाः फलद्वम्, प्रत्ययग्रहणेषु तदादिनियमवत्तदन्त-[4] नियमोऽपि[5]। अत एव "विभाषा सुपो०" (पा० सू० ५।३।६८) इत्यत्र तदन्तविधिः। अन्यथा "ङ्याप्प्रातिपदिकात्०" (पा० सू० ४।१।१) "परश्च" (पा० सू० ३।१।२) इत्यस्याबाधनाय प्रातिपदिकात्परः सुपः पुरस्ताद्बहुजित्यर्थापत्तिः। सुब्ग्रहणन्तु सर्वशब्दात् सुपि ततः पूर्वं बहुचि सुपः सर्वनामप्रकृतिकत्वेनाकच्सिद्ध्यर्थं चरितार्थमित्याहुः।

नन्वेम् "वनोरच" (पा० सू० ४।१।७) इत्यत्र वन्नन्तादित्यर्थो दुर्लभः, प्रत्ययग्रहणेषूपात्तविशेष्यस्थले शब्दस्वरूपाध्याहाराभावेन तदन्तविधिद्वयायोगात्। न चामहत्पूर्वग्रहणेन स्त्रीप्रत्ययेषु तदन्तविधिज्ञापनान्न दोषः, स्त्रीप्रत्ययेषु गृह्यमाणप्रातिपदिकविषये "ग्रहणवता०" (परि० ३१) इति निषेधात् तदन्तविधेरप्राप्त्या तादृशे विषये तदन्तविधिज्ञापनेऽपि प्रत्ययग्रहणेषूपात्तविशेष्यसत्त्वेऽपि शब्दस्वरूपाध्याहारेण द्वितीयतदन्तविधिस्वीकारे मानाभावात्।

न चोगित्त्वस्येव वन्त्वस्य प्रत्ययाप्रत्ययसाधारणतया प्रत्ययमात्रग्रहणाभावादस्या अप्राप्त्या 'अतिधीवरी' इत्यादिसिद्ध्या न दोष इति वाच्यम्, "प्रत्ययाप्रत्यययोः०" (परि० १११) इति परिभाषया "वनो न हशः" (का. वा.

---

१. 'तु' इत्यधिकः पाठः क० पु०। २. 'शब्दस्वरूपस्य वा' इत्यधिकः पाठः क० पु०।
३. 'संज्ञाविधाविति निषेधेन च' इत्यधिकः पाठः क० पु०।
४. 'विधि' इत्यधिकः पाठः क० पु०।
५. 'स चोपात्तविशेष्याभावेऽपि शब्दस्वरूपाध्याहारेणोपपादनीयः। अत एव द्वे ऐते परिभाषे इति कैय्यटोक्तं सङ्गच्छते' इत्यधिकः पाठः क० पु०।

४।१।७) इति ज्ञापकाद्विधेयङीप्साहचर्यात्प्रत्ययस्यैव ग्रहणेन प्रत्ययग्रहणपरिभाषा-प्रवृत्त्या द्वितीयतदन्तविधिं विना 'अतिधीवरी' इत्यस्यासिद्धेर्दुर्वारत्वात् ।

न च 'परमसर्पिः कुण्डिका' इत्यत्र षत्वव्यावृत्तये[1] "नित्यं समासे०" (पा० सू० ८।३।४५) इति सूत्रस्थानुत्तरपदग्रहणेन प्रत्ययग्रहणेषूपात्तविशेष्य-सत्त्वेऽपि तदादिरूपशब्दस्वरूपाध्याहारेण तदन्तविधिरित्यर्थस्य[2] शेखर एवोक्त-त्वान्न दोष इति वाच्यम, तत्रानुत्तरपदग्रहणस्य 'पूर्वसर्पिःप्रियः[3]' इति त्रिपद-बहुव्रीहौ मध्यमपदे "उत्तरपदत्वे०" (का. वा. १।१।६३) इत्यस्याप्राप्त्या इसन्तपदावयवत्वेन तत्र विसर्गस्य षत्वव्यावृत्त्या चारितार्थ्येन ज्ञापकत्वा-सम्भवात् ।

न च समासग्रहणेन पूर्वपदाक्षेपेणेसन्तपूर्वपदसम्बन्धिनो विसर्गस्य ग्रहणान्न तत्र प्राप्तिः । आक्षेपफलं तु 'परमसर्पिःप्रियः' इत्यादौ त्रिपदबहुव्रीहौ षत्वाप्रवृत्तिरिति तस्य ज्ञापकता सुस्थैवेति वाच्यम्, उणादिष्वव्युत्पत्तिपक्षस्यैव सिद्धान्तितत्वेनेस्त्वस्यास्त्ववत्प्रत्ययाप्रत्ययसाधारणत्वेन च तस्य ज्ञापकत्वासम्भवा-दिति चेत्, उच्यते—अनुपसर्जनाधिकारेण स्त्रीप्रत्ययेषु तदन्तविधेर्ज्ञापनात् "वनोरच" (पा० सू० ४।१।७) इत्यादौ न दोषः । तथाहि तद्धि "टिड्ढा०" (पा० सू० ४।१।१५) इति ङीप्, 'कुरुचरी' इत्यत्रेव बहुकुरुचरेत्यत्र माभूदित्ये-तदर्थं यदि टिदन्तमित्यर्थो न स्यात्तर्हि बहुकुरुचरेत्यत्राप्राप्त्या तद्वैय्यर्थ्यं स्पष्टमेव ।

ननु 'कुरुचरी' इत्यत्रैव[4] ङीब्दुर्लभः, "समासप्रत्यय०"(का०वा० १।१।७२) इति प्रतिषेधेन तदन्तविधेरसम्भवात्, टितः प्रातिपदिकस्यैव ग्रहणात् "चरेष्टः" (पा० सू० ३।२।१६) इति सूत्रेणाधिकरणे उपपदे चरेष्टप्रत्ययेऽपि प्रातिपदिके टित्त्वाभावात् । सूत्रं तु 'नदी' 'चोरी' इत्यादौ चरितार्थम् । न च 'जुगुप्सते' इत्यत्रात्मनेपदवत्, अवयवे चरितार्थमिति न्यायेन प्रातिपदिकावयवनिष्ठटित्त्वस्य प्रातिपदिकेऽप्यारोपात्, न दोषः । तथा सति बहुकुरुचरेत्यत्रापि तदापत्याधिकार-वैय्यर्थ्यापत्तेरिति चेत्, न; यं समुदायं योऽवयवो न व्यभिचरति तत्रैव अवयवनिष्ठ[5]-धर्मस्य सामर्थ्यात्समुदाये[6] आरोपो विज्ञायते न त्वन्यत्र । एवञ्च स्वाव्यभिचार्य-वयवनिष्ठस्याचरितार्थस्य धर्मस्य स्वस्मिन्नारोप इति फलितम् । स्वाव्यभिचारी-त्यनेन स्वव्याप्यस्य ग्रहणम् ।

---

१. 'क्रियमाणेन' इत्यधिकः पाठः क० पु० ।
२. 'विध्यन्तरमित्यर्थस्य' इति पाठः क० पु० ।
३. 'पूर्वसर्पिःप्रियः' इति पाठ० क० पु० ।
४. 'इत्यत्रेव' इति पाठः क० पु० ।
५. 'तत्रेव' इति पाठः क० पु० ।
६. 'अपि' इत्यधिकः पाठः क० पु० ।

स्वव्याप्यत्वञ्च—स्वासमवायिप्रयोगासमवायित्वे सति स्वसमवायिप्रयोग-समवायित्वम्, अस्ति च कुरुचरशब्दावयवीभूते टकारे कुरुचरशब्दाघटितो यः प्रयोगः 'घटः' इति तदसमवायित्वस्य तत्समवायी यः प्रयोगः बहुकुरुचरेति[1] तत्समवायित्वस्य च सत्त्वात् कुरुचरशब्दत्वव्याप्यत्वमिति तद्गतटित्त्वादेस्तत्रारोपः। बहुकुरुचरशब्दे तु तदसमवायिकेवलकुरुचरशब्दप्रयोगसमवायित्वस्य टप्रत्ययाकारे सत्त्वेन निरुक्ततद्व्याप्यत्वासम्भवान्न तत्रारोप इति बहुकुरुचरेत्यादौ तदन्तविधिं विना ङीपः प्राप्तिरेव नेति तद्व्यर्थं सज्ज्ञापकम् ।

न च "समासप्र०" ( का० वा० १।१।७२ ) इति वार्तिके[2] प्रत्ययांशे निषेधस्य "ग्रहणवता०" ( परि० ३१ ) इति परिभाषासिद्धार्थानुवादकत्वेन तस्या गृह्यमाणप्रातिपदिकविषयत्वेन टित्त्वस्य प्रातिपदिकत्वाव्याप्यतया तत्र निषेधा-प्राप्त्या तदन्तविधिस्सुकर इति वैय्यर्थ्याभावात्कथं तस्य तदन्तविधिज्ञापकत्वमिति वाच्यम्, "समासप्रत्यय०" ( का० वा० १।१।७२ ) इति निषेधस्य गृह्यमाण-प्रातिपदिकविषयत्वेन सङ्कोचकल्पने मानाभावात् ।

किञ्च "वृद्धाच्छः" ( पा० सू० ४।२।११४ ) "अनुदात्तादेरञ्" ( पा० सू० ४।२।४४ ) "नौ द्व्यचः०" ( पा० सू० ४।४।७ ) इत्यादौ वृद्धत्वद्व्यच्त्वादेः प्रातिपदिकत्वाव्याप्यतया तत्रैतन्निषेधानापत्तेः[3] । अत एवात्र सूत्रे भाष्ये "ग्रहणवता०" ( परि० ३१ ) इति तदन्तविधिप्रतिषेधमुक्त्वैतत्सामर्थ्यात् तदन्त-विधिज्ञापकत्वमुक्तम् । ज्ञापिते तु तदन्तविधौ "स्त्रियाम्" ( पा० सू० ४।१।३ ) इति ङीप्रकृतेरेव विशेषणम्, तेन 'अतिधीवरी' इत्यादि सिद्धमिति प्राञ्चः ।

नव्यमते तु "समासप्र०" ( का० वा० १।१।७२) इति वार्तिकस्थप्रत्ययांशः "ग्रहणवता०" ( परि० ३१ ) इति परिभाषासिद्धार्थानुवादक एव लाघवात् । न चैवम् "वृद्धाच्छः" ( पा० सू० ४।२।११४ ) इत्यादौ दोषः, धात्वादौ वृद्धसंज्ञायाः वृद्धपदघटितविधिस्पृष्टफलाभावेन कार्यकालपक्षे प्रातिपदिकेष्वेव वृद्धसंज्ञाप्रवृत्त्या पूर्वोत्तरसाहचर्येण वृद्धपदेन प्रातिपदिकस्यैवोपस्थित्या तत्राप्येतन्निषेधप्रवृत्तेस्सु-करत्वात् । "नौ द्व्यचः०" ( पा० सू० ४।४।७ ) इत्यादावपि नौशब्दसाहचर्यात् प्रातिपदिकस्यैव द्व्यचो ग्रहणान्न दोषः ।

एवञ्चैतन्मते "टिड्ढा०" ( पा० सू० ४।१।१५ ) इति सूत्रे टिदंशे तदन्तविधेर्न्यायप्राप्तत्वेन बहुकुरुचरेत्यत्र ङीब्व्यावृत्तयेऽनुपसर्जनाधिकारस्य चारितार्थ्येन कथं ज्ञापकत्वमिति चेत्, अत्राहुः—"स्त्रियाम्" (पा० सू० ४।१।३ ) इत्यस्य गृह्यमाणविशेषणत्वेनैव बहुकुरुचरेत्यस्य व्यावृत्त्याऽधिकारस्य वैय्यर्थ्येन

---

१. 'बहुचरेति' इति पाठः क० पु० । २. 'वार्तिक' इति पाठः, क० पु० ।
३. 'तत्रैवं तन्निषेधानापत्तेः' इति पाठः क० पु० ।

**यत्तु प्रत्ययेन स्वप्रकृत्यवयवकसमुदायाक्षेपात् तद्विशेषणत्वेन तदन्तविधिरिति। तत्, न; 'इयान्' इत्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासम्भवात्।**

---

तज्ज्ञापनसम्भवात्। न च "स्त्रियाम्०" (पा० सू० ४।१।३) इत्यस्य गृह्यमाणविशेषणत्वाभावकल्पनेनैव तच्चारितार्थ्यसम्भवे तस्य कथं तदन्तांशे ज्ञापकत्वमिति वाच्यम्, ज्ञापितेऽप्यस्मिन् बहुकुरुचरेत्यत्र टित उपसर्जनत्वेन ङीपोऽप्राप्त्या 'अतिधीवरी' इत्यत्र तदन्तविधिद्वयं विना "स्त्रियाम्" (पा० सू० ४।१।३) इत्यस्यात्र प्रकरणे ङीप्रकृतिविशेषणत्वेऽपि फलासम्भवेन ज्ञापनस्यैव शिथिलत्वापत्तेः।

न चातिभवतीति रूपसिद्धिः फलम्, तावन्मात्रफलकत्वे "उगितश्च" (पा० सू० ४।१।६) इत्यत्रैवान्तग्रहणेन "उगिद्वर्ण०" (का० वा० १।१।७२) इति वार्तिके उगिदंशानुवादसामर्थ्येन वा तत्सिद्ध्याऽधिकारवैय्यर्थ्यस्य तादवस्थ्यात्। तस्मात्तेन यावता विनेति न्यायेनात्र प्रकरणे उपात्तविशेष्यसत्त्वेपि शब्दस्वरूपं विशेष्यमादाय तदन्तविधिरपि ज्ञाप्यते। तत्फलं तु कौम्भकारेयादिसिद्धिरिति—अन्यत्र विस्तरः।

**स्वप्रकृत्यवयवक इति।** स्वं प्रत्ययः, स्वप्रकृतीति द्वन्द्वः। **आक्षेपादिति।** प्रत्ययोत्पत्तौ प्रकृतेर्निमित्तत्वेनाश्रयणात्प्रकृतिमन्तरेण प्रत्ययो नास्ति, प्रत्ययानपेक्षमङ्गं नास्ति, तेनान्यतरस्मिन्नुपादीयमानो व्यभिचरितत्वादितरस्याक्षेप इत्यर्थकेन "एङ्ह्रस्वात्०" (पा० स्० ६।१।६९) इति सूत्रस्थपरस्परं प्रत्यङ्गप्रत्ययसंज्ञाभावादिति वार्तिकभाष्योक्तप्रकारेण प्रत्ययग्रहणेषु सर्वत्र स्वप्रकृत्यवयवकसमुदायस्याक्षेपः सुवच इति भावः।

ननु स्वप्रकृत्यवयवकसमुदायत्वमतिप्रसक्तम्, देवदत्तश्चिकीर्षतीत्यत्रापि सत्त्वात्। स्वप्रकृत्याद्यवयवक इत्यपि न युक्तम्, श्नमकज्बहुच्प्रत्ययेषु व्यभिचारादिति चेत्, न; स्वव्यापकप्रकृत्यवयकसमुदायस्याक्षेप इत्यर्थेनादोषात्। उदासीनदेवदत्तादिपदघटितसमुदायस्य तु न स्वव्यापकत्वम्, इति न तदाक्षेप इति बोध्यम्।

एवञ्च परिभाषायां तदाद्यंशोऽप्याक्षेपेणैव सिद्ध इति तदर्थं पूर्वोक्तयोगविभागाश्रयणक्लेशो न कर्तव्य इति भावः। **तस्येति।** श्रूयमाणप्रत्ययस्येत्यर्थः। समुदायेन सहेति शेषः। **व्यभिचारेणेति।**

ननु परिनिष्ठिते तदसत्त्वेऽप्यलौकिके तत्सम्भवोऽस्त्येवेति न व्यभिचारः, व्यापकत्वलक्षणे प्रतियोगिव्यधिकरणाभावस्यैव निविष्टत्वात्। अत एव पूरादिहेतुकातीतदृष्ट्याद्यनुमितिः। अन्यथा देशतः कालतश्च सामान्याधिकरण्याभावेन

तदसङ्गतिरिति चेत्, न; लोपेन सर्वत्रात्र शास्त्रे प्रसक्तस्यैव निवृत्त्यङ्गीकारेण तल्लक्ष्यावच्छेदेन पूर्वमपि तस्या असत्त्वाभ्युपगमेन व्यभिचारस्य दुरुद्धरत्वात् ।

किञ्च-आक्षिप्तस्य शास्त्रे तदुपपादकत्वासम्भवात् न तत्सम्भवति । सूत्रस्थप्रत्ययबोधकेन पदेन प्रयोगस्थतत्तत्प्रत्ययानामुपस्थितौ तेन च स्वव्यापक-प्रयोगस्थतत्तत्प्रकृतिविषयकज्ञानेऽपि तस्य वृत्त्यानुपस्थितत्वेन शब्दोपस्थित-विशेषणस्य तादृश[1]विशेष्येणैवान्वय इति नियमेनाक्षिप्तस्य शब्देऽन्वयासम्भव इत्याशयात् ।

ननु उन्मनायत इत्यदौ समासार्थोपमानविवक्षायामुपसर्गसमानाकारस्योच्छब्दस्य पृथक्करणेन तस्य समासाघटकत्वबोधनेन केवलस्योत्तरखण्डस्यासुबन्त-त्वेन ततः क्यङनापत्तिः । न चान्तर्वर्तिसुपमादाय तदन्तत्वम्, एवमपि समासा-दुत्पन्नसुपः क्यङुत्तरं श्रवणापत्तेः । न च ज्ञापकेन ज्ञातस्य[2] समासस्याभावकल्पन-वत्तत्प्रयुक्ततत्प्रकृतिकसुबन्ताभावादेरपि[3] कल्पनान्न दोषः । प्रातिपदिकप्रकृतिक-णिजादिविषये 'सम्यचिचत्[4]' इत्यादावसमासवद्भावस्य न समास इत्यस्याप्रवर्तनेन चारितार्थ्येन समासप्रयुक्तसुपोऽपि निवृत्तिकल्पने मानाभावात् । किञ्च 'सुमनस्कीयति' इत्यादौ समासप्रकृतिकसुपो निवृत्तावपि कबन्तस्य सुबन्तत्वा-सम्भवात्ततः क्यङनापत्तिः । न च सुप इव कपोऽपि निवृत्तिकल्पनान्न दोषः, तथा सति 'सम्यचिचत्'—इत्यत्र सम्यादेशस्यापि निवृत्त्यापत्तेः ।

न चानया परिरभाषयाधिकस्यैव व्यावृत्तिर्न तु न्यूनस्येति तत्सूत्रस्थशेख-रोक्तिस्साध्वी, तदाद्यंशोपस्थित्या तस्यैव विशेष्यत्वेन विनिगमनाविरहेणाधि-कस्येव न्यूनस्यापि व्यावृत्तेर्दुर्वारत्वात् । अन्यथा परमगार्ग्यशब्दे इव 'सौदक्षि[5]' शब्देऽवयवस्यापीञन्तत्वात्फगापत्तेः ।

न च मनश्शब्दे 'एकदेशविकृत०' ( पारि० ३७ ) न्यायेन तदादित्वबुद्धिः सुवचा, पृथक्करणेन समुदायनिष्ठसमासत्वनिवृत्तावप्यवयवस्य विकाराभावेन तन्न्यायाप्रवृत्तेरिति चेत्, न; सुशब्दस्य पृथक्करणेऽवशिष्टस्य मनस् सु इत्यस्या-सुबन्तत्वेनाप्रत्ययान्तत्वात् प्रातिपदिकत्वेन तदवयवसुपो लुक्यन्तर्वर्तिविभक्त्या तस्य सुबन्तत्वेन क्यङादिप्रवृत्तेस्सुवचत्वात् । न च सुशब्दसमभिव्याहारापेक्षयैव तस्य तदर्थबोधकत्वात् प्रातिपदिकत्वं दुर्वचम्, 'अनुभूयते' इत्यत्र इव वृत्तिविषये मनश्शब्दस्यैवोक्तार्थान्तर्भाविण वृत्त्यादोषात् ।

---

१. 'तादृशम्' इति क० पु० पाठः ।
२. 'जातस्य' इति क० पु० पाठः ।
३. 'सुबभावादेरपि' इति क० पु० पाठः ।
४. 'सम्यचिरत्' इति क० पु० पाठः ।
५. 'सौदक्षिण'' इति क० पु० पाठः ।

**यत्र प्रत्ययो निमित्तत्वेनाश्रीयते, तत्र तदादीत्यन्तांशमात्रोपस्थितिरिति**

अत एव 'राजपुरुषः' इत्यत्र पुरुषावित्यस्येव समासप्रकृतिकसुबन्तमनश्शब्दस्य नानर्थकत्वम्। न च सुमनसमिच्छतीत्यर्थविवक्षायां सुबकर्मत्वस्य मनश्शब्दार्थेऽन्वयोनुपपन्नः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिभङ्गापत्तेरिति वाच्यम्, मनश्शब्दस्यैव प्रकृत्यर्थान्तिर्भावेण वृत्त्या प्रकृत्यर्थमनश्शब्दार्थयोरनतिरेकेण प्रकृत्यर्थे एव कर्मत्वादेरन्वयेनोक्तव्युत्पत्तिभङ्गाभावादिति दिक्।

'देहि' 'दत्तकः' इत्यादावभ्यासपूर्वपदयोर्लोपे दोषस्तु न, आनुमानिकस्थानिवद्भावेन निर्वाहात्[1]। "गर्गादिभ्यो यञ्" ( पा० सू० ४।१।१०५ ) इत्यादौ यञो विधानात्पूर्वं तस्याप्रत्ययत्वेन विधानोत्तरं तस्य प्रत्ययत्वज्ञानेऽपि पञ्चम्याः कृतार्थत्वेन पुनः प्रवृत्त्यसम्भवेनास्याविहितप्रत्ययविषयत्वमेवेति बोध्यम्।

ननु "सन्यङोः" ( पा० सू० ६।१।९ ) इत्यादाविव "सन्यतः" ( पा० सू० ७।४।७९ ) इत्यादावपि तदन्तविधिदुर्वारः, अत आह—**यत्रेति**। यत्र केवलं प्रत्ययो निमित्तत्वेनाश्रीयते तत्रानयोपस्थिततदादिशब्दस्वरूपस्योपात्तकार्यिण्येवान्वय इत्यर्थस्य "उत्तमैकाभ्याम्०" ( पा० सू० ५।४।९० ) इति निर्देशेन ज्ञापनात्। तत्र समानाधिकरणविशेष्याभावात्तदन्तविधेः प्रसक्तिरेव नेति भावः। अत एव पट्वी-मृद्वी-शब्दात् क्यङि न पुंवत्त्वम्। प्रकृतिभूतस्य द्वन्द्वस्य भाषितपुंस्कत्वाभावान्मृद्वीशब्दस्य तत्त्वेऽपि न तत्प्रकृतिकत्वमित्यन्यत्र स्पष्टम्।

अत एव परममहच्छब्दाज्जातीयरि—आत्वं न। अत्र केवलमिति विशेषणफलन्तु "तिङि चोदात्तवति०" ( पा० सू० ८।१।७१ ) अञ्चतौ वप्रत्यय इत्यादौ तदन्त इत्यर्थसिद्धिः। एतेन "सुपि च" ( पा० सू० ७।३।१०२ ) इत्यादौ तदन्तविधावपि स्वस्य च रूपस्येत्यनेन स्वरूपस्यापि ग्रहणात्, "उत्तमैकाभ्याम्०" ( पा० सू० ५।४।९० ) इति निर्देशोपपत्तिरिति, नैतज्ज्ञापकम्, तत्र तदन्तविध्यभावस्तु सुपि परे इत्यर्थे तस्य कस्मादित्यवध्याकाङ्क्षायामुपस्थिततदादेरित्यस्यैवावधित्वेनान्वयादपञ्चम्या[2] इति निषेधान्न तदन्तविधिरित्यपास्तम्।

"येन विधिः०" ( पा० सू० १।१।७२ ) इति सूत्रे स्वस्य चेत्यस्य व्यपदेशिवद्भावसिद्धार्थकत्वेन तस्यासहाय एव प्रवृत्त्या प्रकृते तदप्राप्तेः। तत्र सुबुपश्लिष्टस्य पूर्वस्य दीर्घ इत्यर्थस्यैव शाब्दत्वेन सुपि पर इत्यर्थस्य फलितत्वेन शब्दतोऽवध्याकाङ्क्षाया अनुदयेन तदनुरोधेन तदादेः पञ्चम्यन्तत्वपरिकल्पने

---

१. 'निर्वात्' इत्यपपाठः क० पु०।

२. "प्रत्ययग्रहणे चापञ्चम्याः" ( परि० २४ ) इति निषेधादित्यर्थः।

'अङ्गस्य' इति सूत्रे भाष्यकैयटयोः ।

---

मानाभावात् । अन्यथा "इको यणचि" ( पा० सू० ६।१।७७ ) इत्यादावपि तदाकाङ्क्षापूरणाय पञ्चम्यन्तपदाध्याहारापत्तेः[1] । अत एवाग्रे यत्रापि पञ्चम्यन्तात्परस्तत्र पञ्चम्यन्ततेत्यन्तेन पञ्चम्यन्तविषये पृथगुपन्यासस्सङ्गच्छते ।

**भाष्यकैय्यटयोरिति ।** तत्र ह्यङ्गस्येत्यस्य स्थाने प्रत्यये इति न्यासपक्षे 'प्राकरोत्' इत्यादावुपसर्गात्पूर्वमाडाद्याशङ्क्यानया तदाद्यंशोपस्थानेन वारणपरभाष्यव्याख्यानावसरे यत्र प्रत्ययो निमित्तत्वेनाश्रीयते तत्र पूर्वः कार्यित्वेन गृह्यमाणः तदादिरेव गृह्यते । यत्र प्रत्यय एव कार्यित्वेनाश्रीयते तत्र तदन्तग्रहणमिति, द्वे एते परिभाषे, इत्युक्त्वा लाघवाभावादयं न्यास उपेक्ष्य इति कैय्यटेनोक्तम् । एवं च द्वयोरंशयोः परिभाषया न समुच्चय इति तत्त्वम्[2] ।

न च षष्ठे 'यस्मात्प्रत्ययविधिस्तदादिप्रत्यये' इति न्यासेन परिभाषायास्सिद्ध्या प्रत्ययपदे स्वरितत्वप्रतिज्ञयाङ्गाधिकारफलस्य च सिद्ध्या भाष्योक्तरीत्याङ्गाधिकारं विनैव सर्वेष्टसिद्धेर्न क्वापि दोषः । "न लुमताङ्गस्य" ( पा० सू० १।१।६३ ) इत्यत्र तु अङ्गपदस्य स्थाने 'तस्मिन्' इति न्यासेन "ह्रस्वादङ्गात्" ( पा० सू० ८।२।२७ ) "इणः षीध्वम्०" ( पा० सू० ८।३।७८ ) इत्यादावङ्गग्रहणस्य दृढतरफलाभावेनाङ्गसंज्ञायाः प्रयोजनासम्भवादिति वाच्यम्, "कर्मठः" इत्यत्रादेशवारणाय "ठस्येकः" (पा० सू० ७।३।५०) इत्यादावङ्गसंज्ञानिमित्तस्य ठस्येत्यर्थस्यावश्यकतयाङ्गाधिकारस्यावश्यकत्वेनादोषात् ।

---

१. 'किञ्चेदृशे विषये पञ्चम्यन्तस्य प्रत्ययविशेषणत्वे उभयनिर्देश इति न्यायेन प्रत्ययस्यैव कार्यित्वापत्तिः' इत्यधिकः पाठः क० पु० ।

२. केचित्तु यत्र तदन्तांशोपस्थितिस्तत्रैव तत्रैव तदाद्यंशोपस्थितिः । अत एव "आने मुक्" ( पा० सू० ७।२।८२ ) इति सूत्रे भाष्येऽदन्ताङ्गस्य मुगिति पक्षेऽदुपदेशात्परत्वाभावेन स्वरानापत्तिमाशङ्क्याकारस्य मुग्विधानेन तत्साधितम्, अन्यथा "तास्यनुदात्तेत्०" ( पा० सू० ६।१।१८६ ) इत्यत्र तदाद्यंशोपस्थित्या "रदाभ्याम्०" (पा० सू० ८।२।४२) इत्यत्रेवादुपदेशादित्यस्य तद्विशेषणत्वेन तदन्तविधौ, अदुपदेशांतात्पदादेरित्यर्थेन "यदागमाः०" ( परि० ११ ) न्यायेनादुपदेशान्तग्रहणेन ग्रहणात्स्वरसिद्धया तदसङ्गतिः । किं च "अङ्गस्य" ( पा० सू० ६।४।१ ) इति सूत्राभावे प्राकरोदित्यत्र दोषोपन्यासपरभाष्यासङ्गतिः, लुङादिभिस्तदाद्यंशोपस्थित्योक्तदोषवारणसम्भवात् । न च प्रत्यय इति न्यासपक्षे प्राकरोदित्यत्र दोषवारणाय तदाद्यंशोपस्थित्याश्रयणपरभाष्यविरोध इति वाच्यम्, अनिनस्मिन्पक्षे निरुतमित्यादौ "हलः" ( पा० सू० ६।४।२ ) इति दीर्घापत्त्याङ्गाधिकारस्यावश्यकत्वेन तस्यैकदेशयुक्तिःवादित्याहुः । इत्यधिकः पाठः क० पु० ।

**एवं यत्रापि पञ्चम्यन्तात्परः प्रत्यय आश्रीयते, तत्रापि तदादीत्यन्तांशोपस्थितिः, परन्तु तत्र पञ्चम्यन्तता। अत एव "एङ्ह्रस्तात्" इति सूत्रे एङन्तादित्यर्थलाभः।**

**अस्याः परिभाषायाः प्रयोजनान्तरम् 'येन विधिः' इत्यत्र, भाष्य उक्तम्, 'परमगार्ग्यायणः' इति। परमगार्ग्यस्यापत्यमिति विग्रहेऽपि गार्ग्यशब्दादेव प्रत्ययः, न विशिष्टात्।**

**निष्कृष्य तावन्मात्रेणैकार्थीभावाभावेऽपि वृत्तिर्भवत्येव। अत्र चेदं भाष्यमेव मानमित्यन्यत्र विस्तरः।**

---

नन्वेवम् "ह्रस्वनुड्भ्याम्०" ( पा० सू० ६।१।१७६ ) इत्यादौ प्रत्ययस्य निमित्तत्वाभावात्तदन्तांशो दुर्वार इत्यत आह—**एवमिति। लाभ इति।** न च "एङ्ह्रस्वात्०" ( पा० सू० ६।१।६९ ) इति पञ्चम्याः नात्र प्रत्ययविशेषणत्वम्, किन्तु हल्विशेषणत्वमतः पञ्चम्या इति निषेधाप्राप्त्येदमसङ्गतमिति वाच्यम्, तदन्तविधावपि 'कृष्ण' इत्यादौ ह्रस्वात्परसम्बुध्यन्तावयवषकारादेः 'वाराहीपुत्रः' इत्यादौ वकारादेस्संप्रसारणस्येव निर्दिश्यमानपरिभाषया लोपस्य वारणसम्भवेन तदन्तविधौ फलाभावेन लक्ष्यानुरोधेनोपस्थिततदाद्यंशस्य "एङ्ह्रस्वात्०" ( पा० सू० ६।१।६९ ) इत्यत्रैवान्वयेन तदन्तलाभस्य सूपपादत्वात्।

नन्वेवम् 'हे कतरत्' इत्यत्र रेफान्तस्य प्रकृतित्वेन विकरणविशिष्टस्येवाकारान्तस्यापि तदादित्वात्—हलस्ततः परत्वेन लोपो दुर्वारः। न चार्थवत एव तदादेर्ग्रहणम्, विशिष्टरूपोपादानाभावेनार्थवत्परिभाषाया अप्राप्तेरिति चेत्, न; तत्र तदादीत्यंशस्य "एङ्ह्रस्वात्०" ( पा० सू० ६।१।६९ ) इति विशेषणसामर्थ्येनाङ्गसंज्ञायां तदादेर्निमित्तभूतप्रत्ययानवयवस्यैव सम्भवेनात्रापि सम्बुद्ध्यवयवाघटितस्यैव तदादेर्ग्रहणेनादोषात्[1]।

कैय्यटोक्तं दूषयितुमाहः—**अस्या इति।** ननु समुदायस्यापत्येन योगे वृक्षप्रचलनन्यायेनावयवेन तदयोगस्य वक्तुमशक्यतयानान्तरीयकतया तत्सभवेऽपि यञन्तमात्रस्यापत्येनायोगात्कथं वृत्तिरत आहः—**निष्कृष्येति।** समुदायात्प्राप्तस्येञोऽवयवात्प्राप्तफका बाध इति भावः। समासकृतनियमस्य तु न प्राप्तिः, तत्र साजात्येन परस्परासमानाधिकरणवृत्तिद्वयाश्रयाघटित एव तत्प्रवृत्तेः। न च षष्ठ्या यञन्तप्रकृतिकत्वाभावान्नात्र फकः प्राप्तिरिति वाच्यम्, "गर्गादिभ्यः०" ( पा० सू० ४।१।१०५ ) इत्यादौ तत्प्रकृतिकषष्ठ्यन्ते लक्षणाभावस्य "ङ्याप्०"

---

१. 'एतेन तदादिपदस्य प्रत्ययप्राग्वर्तिसमुदायपरत्वे सनाद्यन्ता इत्यादौ सामानाधिकरण्येनान्वयानापत्तिरित्यपास्तम्' इत्यधिकः पाठः क० पु०।

**प्रत्ययमात्रग्रहणे एषा, न तु प्रत्ययाप्रत्ययग्रहण इति "उगितश्च" इति सूत्रे भाष्ये ।**

---

( पा० सू० ४।१।१ ) सूत्रे शेखरे सिद्धान्तितत्वेन यञन्तप्रकृतिकषष्ठ्यन्तादित्यर्थानङ्गीकारेणादोषात् ।

न चैवम् "शिवभागवतः" इत्यत्राप्युत्तरपदादणीष्टसिद्धयागमकत्वाश्रयणेन तस्य साधुत्वोपपादनपरसमर्थसूत्रस्थशेखरग्रंथासङ्गतिः, शिवो भगवान्भक्तिरस्येति विग्रहेऽवयवादिव समुदायादप्यणः प्राप्तिसम्भवेनैकाच्द्विर्वचनन्यायेन तत एवाण् स्यादिति तत्र वृत्तिद्वयाश्रयणस्यावश्यकत्वात् । सिद्धान्ते तु समुदायस्याप्रातिपदिकत्वेनैकाच्द्विर्वचनन्यायेन समुदायादप्राप्त्याऽवयवादेवाणि न दोषः ।

वस्तुतः[१] 'गार्ग्यो व्याघ्र इव 'गार्ग्यव्याघ्रः' तस्यापत्यमित्यर्थे पूर्वपदादपि फगापत्तिः । किञ्च "येन विधिः०" ( पा० सू० १।१।७२ ) इति सूत्रे "समासप्रत्ययविधौ०" ( का० वा० १।१।७२ ) इत्यस्य 'सौत्रनाडिः' इत्युदाहरणं दत्तम् । त्वदुक्तरीत्या तत्रावयवात्फको दुर्वारत्वेन तदसङ्गतिः । मम तु निष्कृष्यैकार्थीभावस्यैव वृत्तिनिमित्तत्वान्न दोषः । किञ्च गार्ग्यस्यापत्यमित्यर्थे सुब्व्यवधाने फगनापत्तिः । पूर्वपदे सुब्व्यवधानासम्भवेन वचनस्य चारितार्थ्यात् । अतः सर्वत्र लक्षणया तत्प्रकृतिकसुबन्तादित्यर्थ एवोचितः । अत एव तदन्ते सर्वनामसंज्ञायां परमभवकानित्यत्राकच्च[२] सिद्धयतीति सिद्धान्तस्सङ्गच्छते । अन्यथा तत्राप्यवयवस्य सर्वनामत्वेनाकच्सिद्ध्या भाष्यासङ्गतिः ।

किञ्च "गर्गादिभ्यो यञ्" ( पा० सू० ४।१।१०५ ) इत्यादौ गर्गादिपदस्य तत्प्रकृतिकसुबन्ते लक्षणानङ्गीकारे "तस्यापत्यम्" ( पा० सू० ४।१।९२ ) इत्यत्र तत्पदस्य बुद्धिस्थव्यक्तिबोधकत्वेन बुद्धिस्थव्यक्तिसम्बन्ध्यपत्यमित्यर्थे समर्थानां मध्ये प्रथमोच्चरिततत्पदबोध्यव्यक्तिबोधकात्प्रातिपदिकादित्यर्थेन गर्गशब्दे प्रथमोच्चरिततत्पदबोध्यव्यक्तिबोधकत्वस्य प्रातिपदिकत्वस्य च सत्त्वेन यञस्तस्मादापत्तिः, प्रत्ययस्यैव सम्बन्धेऽपत्ये च खण्डशक्तिसम्भवात् । किञ्च प्रातिपदिकादित्यधिकारस्याबाधनाय सुबुत्पत्त्यनन्तरमपि सुपः पूर्वं प्रातिपदिकात्परत्वेन विधानेऽपि तस्मिन्सुबर्थान्वये बोधकाभावात्[३] । तस्मात्कैय्यटोक्तिरेव साध्वीत्याहुः ।

**प्रत्ययमात्रग्रहण इति**[४] । तेन सर्वनाम्नो भवच्छब्दान्ङीप्सिद्धिरन्यथोगिद्

---

१. 'केचित्तु' इति पाठः क० पु० ।

२. 'परमभवकानित्यकच्च' इति पाठः क० पु० ।

३. 'बाधकाभावात्' इति पाठः क० पु० ।

४. 'प्रत्ययमात्र=सर्वनामसंज्ञा यदि तरप्यादिपदग्राह्येऽन्तरतमप्रत्यये कथं तदन्तविधिरिति विभावनीयम्' इति क० पु० पाठः ।

**इयमङ्गसंज्ञासूत्रे भाष्ये स्पष्टा ॥ २३ ॥**

---

यस्माद्विहितस्तदादेरित्यर्थात्तत्र तदनापत्तिरिति भावः। न च "उगितश्च" ( पा० सू० ४।१।६ ) इत्यत्र प्रत्ययाप्रत्यययोरपि ग्रहणे प्रत्ययवाक्ये प्रत्ययग्रहण-परिभाषाप्रवृत्तावप्यप्रत्ययवाक्येन[1] तत्र ङीप्सिद्धया न दोष इति वाच्यम्, प्रत्ययाप्रत्ययग्रहणसाधारण्येन[2] एतत्परिभाषाप्रवृत्तौ फलाभावेन तदप्रवृत्ति-रित्याशयात्। अत एव "सुप्तिङन्तम्०" (पा० सू० १।४।१४) इति सूत्रेऽन्तग्रहणं चरितार्थम्। अन्यथा सुप्तिङोः पदसंज्ञायामपि पदप्रदेशेषु तदन्तविधिनैवेष्टसिद्ध्या तद्वैय्यर्थ्यं स्पष्टमेव।

न चैवं विप्रो गार्ग्य इत्यत्र विप्रशब्दे "ञ्नित्यादिः" (पा० सू० ६।१।१९७) इति स्वरापत्तिरिति वाच्यम्, अप्रत्ययविषयकवाक्येन अत्र[3] तदापत्तिवारणाय तत्र पदग्रहणानुवृत्तेरावश्यकतयाऽदोषात्। पदग्रहणं परिमाणार्थमिति तूत्तरत्रैव कर्तव्ये तत्र तत्करणं तदर्थमपीत्याशयः।

ननु 'प्रतिषिषति' इति प्रतीकस्थशेखरोक्तरीत्या सन्त्वस्य प्रत्ययाप्रत्यय-साधारणतया "सनाद्यन्ताः०" (पा० सू०३।१।३२) इत्यादावेतत्परिभाषोपस्थिति-र्दुर्वचा। न च "सन्यङोः" ( पा० सू० ६।१।९ ) इति सूत्रे "लिटि धातोः०" (पा० सू० ६।१।८) इत्यतो धातुग्रहणानुवृत्त्या पूर्वं धातुत्वे सत्येव द्वित्वप्रवृत्त्या क्र-स-इत्यवस्थायामेव "सनाद्यन्ताः०" ( पा० सू० ३।१।३२ ) इत्यस्य प्रवृत्त्या न तदा प्रत्ययाप्रत्ययग्रहणसम्भव इति वाच्यम्, एवं हि सति कृतद्विर्वचनस्य 'प्रतीषिषति' इत्यस्य धातुत्वाभावेन लक्ष्यभेदात् 'लक्ष्ये लक्षणस्य' इति न्यायस्याप्राप्त्या पुनर्धातुसंज्ञायाः प्राप्त्या धातुसंज्ञाप्रवृत्तिकालेऽप्यत्रैवाप्रत्ययग्रहणसम्भवादिति चेत्, न; 'प्रतीषिषति' इत्यत्र दीर्घव्यावृत्तेर्हन्नुसाहचर्येणादेशत्वानाक्रान्तस्याच एव दीर्घविधौ ग्रहणेन सिद्ध्योत्तरखण्डस्य प्रत्ययत्वेऽपि बाधकाभावात्।

वस्तुतः 'प्रतीषिषति' इत्यादिविषये सन्नन्तस्य धातुत्वेनोत्तरखण्डस्य प्रत्ययत्वेनार्धधातुकत्वादिडागमे अतो लोपेऽनजन्तत्वान्न दीर्घप्राप्तिः। तस्यैवार्ध-धातुकत्वेन स्वोपदेशे स्वस्यादन्तत्वाक्षतेः। अत एव गुणोऽपि न। अन्यथा "इको झल्" ( पा० सू० १।२।९ ) इत्यस्य भाष्योक्तप्रत्याख्यानपक्षेऽत्र दीर्घस्य साहचर्येण वारणेऽपि गुणस्य दुर्वारत्वापत्तिरित्याहुः ॥ २३ ॥

---

१. 'प्रवृत्तावप्रत्ययवाक्येन' इति पाठः क० पु०।
२. 'साधारण्येन' इति नास्ति क० पु०।
३. 'ईदृशे विषये' इति पाठः क० पु०।

**येन विधिरिति सूत्रे भाष्य एतद्घटकतदन्तांशस्यापवादः पठ्यतेः—**

**प्रत्ययग्रहणे चापञ्चम्याः ॥ २४ ॥**

**यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते, तत्र तदन्तविधिर्नेत्यर्थः। यथा "रदाभ्यां निष्ठातो नः" इत्यत्र। तेन दृषत्तीर्णेत्यादौ धातुतकारस्य न नत्वम्।**

---

[1]**पठ्यते इति।** भाष्ये तदन्तविधिं प्रयोजयतीत्युपक्रम्य 'प्रत्ययग्रहणं चापञ्चम्याः, इति पठ्यते। अपञ्चम्यन्तात्परं प्रत्ययग्रहणं तदन्तविधिं प्रयोजयति। तदन्तविधेः प्रयोजनमिति तदर्थः। अत्रापञ्चम्या इत्यस्यैवापूर्वत्वं न तु प्रत्ययग्रहणपरिभाषालभ्यस्य प्रत्ययग्रहणमित्यस्यापीति सूचयितुं मूले सप्तम्यन्तपाठ आदृतः। प्रत्ययविधावन्यथा वारणस्य प्रागुक्तत्वात्। अनुवादविषय एवास्याः प्रवृत्तिरिति सूचयन्नाहः—**कार्यान्तरेति** तच्चादेशादिरूपं परिगृह्यते-अनूद्यत इत्यर्थः। **धातुतकारस्येति।** इदमुपलक्षणं पूर्वदकारस्यापि। **न नत्वमिति।** भिन्नमित्यादौ[2] रेफदकाराभ्यां परीभूताया निष्ठातदन्तावयवयोस्तकारदकारयोर्नत्वं भवतीत्यर्थेनादोष[3] इति भावः।

न च अनन्त्यविकार इति पारिभाषया 'दृषत्तीर्णः' इत्यादौ न दोषः, 'दृषत्तीर्णवान्' इत्यादौ दोषापत्तेः। यद्यपि समासे गुणभूतस्य निष्ठापदार्थस्य विशेषणसम्बन्धायोगात् 'चरितम्' 'उदितम्' इत्यादौ 'तीर्णवन्तौ' इत्यादौ अन्त्यतकारे च निष्ठानत्वापत्त्या "रदाभ्याम्०" (पा० सू० ८।२।४२) इति प्राधान्यात्तकारस्यैव विशेषणम्। निष्ठेति[4] लुप्तषष्ठ्यन्तम्। तथा च पञ्चम्यन्तस्य प्रत्ययविशेषणत्वाभावान्नानया नत्ववारणं युक्तम्, तथापि निर्दिश्यमानपरिभाषयैव तद्वारणसम्भवात्[5]। "ह्रस्वनुड्भ्यां मतुप्" (पा० सू० ६।१।१७६)

---

१. 'एतद्घटक इति तदादिशब्दस्वरूपस्य विशेष्यत्वेन प्राप्त इत्यर्थः। तेन "षाद्यञश्चाप्" (का० वा० ४।१।७४) इत्यादौ न दोषः। तत्र प्रातिपदिकादित्यस्य विशेष्यत्वात्' इत्यधिकः पाठः क० पु०।

२. 'तु' इत्यधिकः पाठः क० पु०।

३. 'इत्यर्थेन न दोषः' इति पाठः क० पु०।

४. 'निष्ठेति लुप्तषष्ठ्यन्तम्' इति नास्ति क० पु०।

५. 'तथापि निर्दिश्यमानपरिभाषयैव तद्वारणसम्भवात्' इत्यस्य स्थाने 'तथापि संयोगादेरित्यतो धातोरित्यपकृष्य तस्य निष्ठाविशेषणत्वेनैतदुदाहरणत्वं युक्तमेव। यद्वा प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारस्य प्रत्ययलक्षणसूत्रे शेखरे उक्तत्वेन न दोषः। यदि तु निर्दिश्यमानपरिभाषयैव तद्वारणसम्भवान्नैतत्परिभाषोदाहरणमित्ययुक्तमिदमुच्यते तर्हि' इति पाठः क० पु०।

**तदन्तेत्यंशानुपस्थितावपि तदादीत्यंशस्योपस्थितौ रेफ-दान्तात्परस्य निष्ठातस्येत्यर्थ इति न दोषः, तदंशानुपस्थितौ मानाभावात् ।**

---

इत्याद्यर्थमियमावश्यकीति यथाश्रुतरीत्यात्रापि तत्प्राप्तिरस्तीति "रदाभ्याम्०" ( पा० सू० ८।२।४२ ) इत्यस्योपन्यास इति बोध्यम् ।

न च "ह्रस्वनुड्भ्यां मतुप्" (पा० सू० ६।१।१७६) इत्यत्र तदन्तविधावपि निर्दिश्यमानपरिभाषया न दोषः, षष्ठीनिर्देशाभावेन तस्या अप्राप्तेः । न च पञ्चम्याः परस्य विभक्त्यन्तरस्य षष्ठीप्रक्लृप्तिरिति पक्षे तत्सम्भवः, एवं सति ह्रस्वादित्यस्य मतुबन्तविशेषणत्वेऽपि मतुब्विशेषणत्वाभावेन मतुपो ह्रस्वात्परत्वाभावेऽपि 'परमविद्युत्वान्' इत्यादौ स्वरापत्तेः[1] इति दिक् ।

नन्वेम् "तिङतिङः" ( पा० सू० ८।१।२८ ) इत्यत्र तदन्तविधिर्दुर्लभः । न च सामर्थ्यात्परिभाषाबाधः, 'व्यतिसे' इत्यादौ तत्सम्भवात् । न च[2] प्रत्ययग्रहणपरिभाषोपस्थिततदाद्यंशस्य विशेष्यत्वात्प्राप्ततदन्तविधेरनेन वारणेऽपि पदस्य विशेष्यत्वात्प्राप्ततदन्तविधिस्सुलभ[3] इति वाच्यम्[4], उपात्तविशेष्यासम्भवे तदादेर्विशेष्यत्वेन तदन्तविध्यङ्गीकारेऽपि प्रकृते उपात्तस्य पदस्य विशेष्यत्वसम्भवेन तद्विशेषणत्वेनैव तदन्तविधेः प्रकृते वक्तव्यतया तन्निषेधे प्रकारान्तरेण तदन्तविधेरुपादानस्यावश्यकत्वादिति चेत्, न; 'अतिङः' इति पर्युदासेनैवातिङन्तपदादित्यर्थसिद्धेः, पुनः पदाधिकारे तत्पाठसामर्थ्येन तन्निषेधाप्रवृत्त्यातिङन्तं पदमिति तदन्तविधिस्वीकारेणादोषात् । एवमेव "गतिकारकोपपदात्०" ( पा० सू० ६।२।१३९ ) इत्यादावपि बोध्यम् ।

ननु तदन्तांशनिषेधे तदाद्यंशोपस्थितौ फलाभावः, तदन्तस्यैवाग्रहणेन तदाद्युपस्थितेर्व्यावृत्त्यसम्भवादित्यत आह :—**तदादीति**[5] । **मानाभावादिति** । तयोः सन्नियोगशिष्टत्वाभावादिति भावः । अत एवैतद्घटकेति विशेषणमारम्भे सार्थकम्, तदभावेऽपि तदुपस्थितेः ।

---

१. 'यदि तु ह्रस्वादिति मतुप एव विशेषणमित्याग्रहस्तर्हि प्रकल्पकत्वपक्षस्य सिद्धान्तेऽभावादत्रैव दोषो बोध्यः' इत्यधिकः पाठः क० पु० ।

२. 'इति चेन्न' इति पाठः क० पु० ।

३. 'विधेस्सुलभत्वात्' इति पाठः क० पु० ।

४. 'इति वाच्यम्' इत्यादितः 'बोध्यम्' इत्येतत्पर्यन्तम् क० पु० नास्ति ।

५. 'इत्यर्थ इति । चरितमित्यादिलक्ष्यानुरोधात्, प्राधान्याच्च तकारस्यैव विशेषणमिति भावः' इत्यधिकः पाठः क० पु० ।

**तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादिति 'दृषत्तीर्णः' इत्यादौ दोषः स्यादेव ।**

**"स्यतासी लृलुटोः" इत्यादौ लृलुटोः परयोरित्यर्थे नियमेनावधिसाकाङ्क्षत्वेनोपस्थितधातोरित्यस्यावधित्वेनान्वयान्न तदन्तविधिः । 'ङ्याब्भ्यः' इत्यादौ तु न दोषः, तत्र कस्मादिति नियतावध्याकाङ्क्षाया अभावेन पञ्चम्यन्तस्य प्रत्ययविशेषणत्वाभावात् ।**

---

ननूपस्थिततदाद्यंशस्य "एङ्ह्रस्वात्सम्बुद्धेः" ( पा० सू० ६।१।६९ ) इत्यत्रेव पञ्चम्यन्तेनैवान्वयात् समानाधिकरणविशेष्याभावादेव तदन्तविधेरेतत्परिभाषाविषयेऽप्राप्त्या परिभाषा व्यर्थेत्याशङ्कां परिहरति :—**तदन्तांशेति ।** परिभाषाभावे उपस्थिततदाद्यंशस्य विभक्तिकत्वकल्पने मानाभावेन तदादिरूपविशेष्यमादाय तदन्तांशोपस्थितेर्दुर्वारत्वात्, रेफान्तात्तदादेरित्यर्थ एव न सम्भवतीति 'दृषत्तीर्णे' दोषो दुर्वारः स्यादिति भावः ।

ननु "स्यतासी०" ( पा० सू० ३।१।३३ ) इत्यादावुपस्थितधातोरित्यस्य विधेयेनान्वयात्तदन्तविधिर्दुर्वारोऽत आह—**स्यतासी—इत्यर्थे इति ।** "तस्मिन्०[1]" ( पा० सू० १।१।६६ ) इति परिभाषयेति भावः । **अन्वयादिति ।** उपस्थितत्वादिति भावः । वस्तुतो धातोः परौ यौ लृलुटौ तयोः परतः स्यतासी भवतः इत्यर्थे कस्मादित्यवध्याकाङ्क्षायामुपस्थितधातोरित्यस्यैवान्वयान्न दोषः इति भावः[2] । अत्र च "भविष्यति मर्यादावचने" ( पा० सू० ३।३।१३६ ) इति निर्देश एव लिङ्गम् ।

ननु "हल्ङ्याब्भ्यः०" ( पा० सू० ६।१।६८ ) इत्यत्र ङ्याब्भ्यां प्रातिपदिकाक्षेपे सुतिसिभिस्तदाद्यंशोपस्थितौ प्रातिपदिकात्परौ यौ ङ्यापौ तदन्तात्तदादेः परस्य सोर्लोप इत्यर्थे बहुश्रेयसीति न सिद्ध्येदत आह :—**ङ्याब्भ्य इति ।** न च ङ्याब्भ्यां परस्य सोर्लोप इत्यर्थेनेष्टसिद्ध्या तदन्तविध्यभावेऽपि न दोषः, तदन्तांशानुपस्थितावपि सुतिसिभिस्तदाद्यंशोपस्थितेर्दुर्वारत्वेन[3] ङ्याबन्तात्तदादेरित्यर्थेनोक्तस्थले दोषापत्तेरित्याशयात्[4] । आदिना "स्त्रीभ्यो ढक्" (पा०सू० ४।१।१२०)

---

१. 'तस्मिन्' इत्यादितः 'वस्तुतः' इत्येतत्पर्यन्तं खण्डयित्वा—प्रत्ययाधिकारे पूर्वस्य कार्यिणोऽसम्भवेन तस्मिन्नित्यस्यानुपस्थित्या लृलुटोरित्यस्यान्वयाय परयोरित्यध्याहारेण' इति पाठः क० पु० ।

२. 'वस्तुतो लृलुडुपश्लिष्टधातोः स्यादिर्भवतीत्यर्थे न कोऽपि दोष इति बोध्यम्' इत्यधिकः पाठः क० पु० । ३. 'तस्य विशेष्यत्वात्' इत्यधिकः पाठः क० पु० ।

४. 'न च बहुश्रेयसीत्यत्र ङीप्प्रकृत्याद्यवयवकतच्चरमावयवकत्वरूपतदन्तत्वासम्भवेऽपि सुप्प्रकृत्याद्यवयवकङीप्चरमावयवकत्वरूपतदन्तत्वस्याक्षतत्वेन कथं दोष इति वाच्यम्, एतन्निषेधविषये तदाद्यंशोपस्थितेरङ्गीकारेण तस्य ङ्यन्तविशेषणत्वे दोषापत्तेरित्याशयात्' इत्यधिकः पाठः क० पु० ।

**अङ्गसंज्ञासूत्रे तु तदादेः प्रत्यये पर इत्यर्थे पञ्चम्यन्तस्य विशेषणत्वं स्पष्टमेव। अत एव "उत्तमैकाभ्याम्" इत्यादिनिर्देशाः सङ्गच्छन्ते ॥ २४ ॥**

**नन्वेवम् 'कुमारी ब्राह्मणिरूपा' इत्यादौ 'घरूप" इति ह्रस्वापत्तिरत आहः—**

**उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥ २५ ॥**

**"हृदयस्य हृल्लेखयदण्लासेषु" इत्यत्र लेखग्रहणात्। तत्र लेखेति न**

---

इत्यस्य सङ्ग्रहः। सिद्धान्ते तु तदन्तविधिद्वयाङ्गीकारान्ङ्याब्भ्य इत्यादौ न दोष इति बोध्यम्।

ननु अङ्गसंज्ञासूत्रे पञ्चम्यन्ताभावेन तदन्तविधिर्दुर्वारोऽत आह :— **अङ्गसंज्ञेति। इत्यर्थ इति।** उपस्थिततदाद्यंशस्य प्रत्ययेन सामानाधिकरण्येन तदन्तविधौ तत्परकतदादेरसम्भवादुपस्थिततदाद्यंशेऽन्वये वैय्यर्थ्येन पञ्चम्यन्तत्व-परिकल्पनमेव तस्य युक्तमिति भावः ॥ २४ ॥

**'कुमारी ब्राह्मणिरूपा' इति।** ब्राह्मणीशब्दाद् रूपपि "तसिलादिषु०" (पा०सू० ६।३।३५) इति प्राप्तपुँवत्वस्य "जातेश्च" ( पा० सू० ६।३।४१ ) इति निषेधेन "घरूप०" ( पा० सू० ६।३।४३ ) इति ह्रस्वे तस्य कुमारीशब्देन कर्मधारये पुँवत्वं बाधित्वा[1] परत्वात् ह्रस्वस्स्यादिति भावः। विग्रहप्रदर्शनपरं वाक्यमेतत्, न तु समस्तमिदं ह्रस्वप्राप्तियोग्यमिति भ्रमितव्यम्। न च ह्रस्वोत्तरं पुनः प्रसङ्गेन पुँवत्वेन न दोषः, पट्वितरेत्याद्यनुरोधेन ह्रस्वविषये सकृद्गति-न्यायस्यैव प्रवृत्तेः[2]।

एवमपि 'ब्राह्मणिरूपा' इत्यत्राव्याप्त्यापत्तेः। यद्वा वयोवाचिनो[3] विकल्पेन जातिकार्यस्योक्ततया 'कुमारी ब्राह्मणिरूपा यस्याम्' इति बहुव्रीहौ "जातेश्च" ( पा० सू० ६।३।४१ ) इति पुँवत्वनिषेधात्, षष्ठीतत्पुरुषे वा दोषध्रौव्यात् समस्तत्वेऽपि न दोषः।

न चोत्तरपदाधिकारेऽपि उपस्थिततदाद्यंशस्य "सुपि च" ( पा० सू० ७।३।१०२ ) इत्यादेशविधाविव प्रत्ययं प्रत्यविशेष्यत्वात्तदन्तविधिर्नैव प्राप्नोतीति व्यर्थेयमिति वाच्यम्, चेलादिष्विव रूपबंशेऽपि द्वन्द्वनिर्दिष्टत्वेनोत्तरपद इति विशेषणसम्बन्धस्य दुर्वारतया तेन सामानाधिकरण्यायोपस्थिततदाद्यंशस्य

---

१. 'बाधितत्वात् ह्रस्वः स्यादिति भावः' इति पाठः क० पु०।

२. 'पट्वितरेत्याद्यनुरोधेन ह्रस्वविषये सकृद्गतिन्यायस्यैव प्रवृत्तेः' इति नास्ति क० पु०।

३. 'वयोवाचिनाम्' इति पाठः क० पु०।

**घञन्तम्, अनभिधानात् । इयं च 'हृदयस्य' इति सूत्र एव भाष्ये स्पष्टा ॥ २५ ॥**

**नन्वेवम् 'परमकारीषगन्धीपुत्रः' इत्यत्रेव 'अतिकारीषगन्ध्यापुत्रः' इत्यत्र "ष्यङः सम्प्रसारणं पुत्रपत्योः" इति स्यादत आह:—**

**स्त्रीप्रत्यये चानुपसर्जने न ॥ २६ ॥**

---

विशेष्यत्वेन "गतिकारकोपपदात्०" ( पा० सू० ६।२।१३९ ) इत्यत्रेवात्रापि प्राप्ततदन्तविधेर्दुर्वारत्वापत्तेरिति दिक् ।

एवञ्चोत्तरपदाधिकारे प्रत्ययग्रहणेषूत्तरपद इत्यस्यासम्बन्धे तात्पर्यग्राहकं लेखग्रहणम्[1] इति बोध्यम् ॥ २५ ॥

**इत्यत्रेवेति ।** ननु—अस्यामवस्थायां दृष्टान्तासङ्गतिरिति चेत्, अत्राहु:— इव शब्दो भिन्नक्रमः । 'उशीनरवन्मद्रेषु यवाः स्युः' इत्युक्तौ काक्वा यथा मद्रेऽपि नेति गम्यते तद्वदत्रापि न स्यादिति ।

केचित्तु परिभाषाभावेऽपि पूर्वपदानाक्षेपेण तदाक्षेपेऽपि तदन्तविधिद्वयेन वा 'परमकारीषगंधीपुत्रः' इत्यत्र सम्प्रसारणं सिद्ध्यति । तथाश्रयणेऽतिकारीषगंध्यापुत्रेऽपि सम्प्रसारणापत्तिरतः परिभाषैवारम्भणीया । सत्यां तु परिभाषायां पूर्वपदाक्षेपेण ष्यङन्तपूर्वपदस्येत्यर्थेन न दोषः । न च[2] अनिज्वि धौकेवलग्रहणेन[3] पूर्वपदशब्दस्य प्रथमावयवे रूढ्यनङ्गीकारादतिव्याप्तिर्दुर्वारैवेति वाच्यम्, "उत्तरपदत्वे च०" ( का० वा० १।१।६३ ) इति निषेधेन ष्यङन्तस्य पदत्वाभावात् ।

ननु 'अनुपसर्जने' इति पर्युदास उत प्रसज्यप्रतिषेधः । आद्येऽत्रापि ग्रहणपदसम्बन्धस्य वक्ष्यमाणतयोपसर्जनभिन्ने स्त्रीप्रत्यये गृह्यमाणे तदादिनियमो नेत्यर्थे सूत्रे उपात्तष्यङादेरुपसर्जनानुपसर्जनसाधारण्येन सर्वत्रानुपसर्जनस्त्रीप्रत्ययग्रहणरूपलिङ्गनिमित्तकैतत्परिभाषया तदाद्युपस्थितिनिषेधे ष्यङन्तमात्रग्रहणात्सर्वत्र सम्प्रसारणप्रसङ्गः, परिभाषायामनुपसर्जन इति विशेषणस्य वैय्यर्थ्यापत्तिश्च ।

---

१. 'तेन "घरूप०" (पा० सू० ६।३।४३) इत्यादावुत्तरपदाक्षिप्तपूर्वपदेन प्राप्तस्य न निषेधः । अन्यथा इण्धातोः शतरि, ङीपि, यतीरूपमित्यत्र भाषितपुंस्कस्यानेकाच्त्वाभावाद ह्रस्वानापत्तिः' इत्यधिकः पाठः क० पु० ।

२. "पूर्वपदात्संज्ञायामगः" ( पा० सू० ८।४।३ ) इत्यादौ समासाक्षेपार्थं क्रियमाणेन पूर्वग्रहणेन पूर्वपदशब्दस्य रूढिस्वीकारेऽपि' इत्यधिकः पाठः क० पु० ।

३. 'सर्वत्र' इत्यधिकः पाठः क० पु० ।

**विषयसप्तमीयम् ।**

**यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाऽऽह तत्र तदादिनियमो न, यस्त्वप्राधान्येनाऽऽह तत्र तदादिनियमोऽस्त्येवेत्यर्थः ।**

---

द्वितीये नञ्द्वयस्यान्वयसिद्धये वाक्यभेदस्यावश्यकतया स्त्रीप्रत्यये गृह्यमाणे तदादिनियमो नेति निषेधेन प्रथमवाक्येन व्यावर्तिततदादिनियमस्य पुनः प्रतिप्रसवायोपसर्जने स्त्रीप्रत्यये गृह्यमाणे तदादीति नोपतिष्ठते इति नेत्यर्थात्सूत्रे तदुपस्थितिरस्यैवेति लाभात्सर्वत्र पूर्वोक्तरीत्योपसर्जनस्त्रीप्रत्ययस्य ग्रहणे, विषयत्वसम्भवेन सर्वत्र तदाद्यंशोपस्थित्या परमकारीषगंधीपुत्रेऽपि सम्प्रसारणानापत्तिः, एतत्परिभाषाया वैय्यर्थ्यं चेत्येकस्मिन्नेव शास्त्रे विषयभेदेन व्यवस्थया परिभाषाप्रवृत्त्यप्रवृत्ती न सिद्ध्येयातामित्यत आहुः—**विषयसप्तमीति** । अनुपसर्जनपदे इति शेषः । "स्त्रीप्रत्यये०" ( परि० २६ ) इत्यत्रापि विषयसप्तमीत्वे वक्ष्यमाणग्रहणपदान्वयानापत्तिः । सूत्रे गृह्यमाणस्य स्त्रीप्रत्ययस्योपसर्जनष्यङादिर्यदा वाच्यत्वेन विषयस्तदा तत्र वाक्ये स्त्रीप्रत्यये तदादीति नोपतिष्ठत इति पूर्ववाक्यप्राप्तनिषेधो नेत्यर्थः ।

तथा चैतत्परिभाषारम्भसामर्थ्येनैकस्यापि शास्त्रस्य "हृक्रोरन्यतरस्याम्" ( पा० सू० १।४।५३ ) इतिवद् वाक्यद्वयोपप्लवेन[1] विषयभेदेन परिभाषाप्रवृत्त्यप्रवृत्त्योरङ्गीकारेण ष्यङ्पदे लक्षणयानुपसर्जनष्यङन्तपूर्वपदस्योपसर्जनष्यङन्ततदादिरूपपूर्वपदस्य च सम्प्रसारणमित्यर्थाङ्गीकारेण 'अतिकारीषगंध्यापुत्रः' इत्यत्र न दोष इति भावः ।

ननु सम्प्रसारणयोग्यविषये सर्वत्र पूर्ववाक्येनैव सम्प्रसारणसिद्ध्योपसर्जनष्यङन्तस्य सम्प्रसारणयोग्यस्याभावाद् द्वितीयवाक्यस्यानर्थक्यम् । न चाचारक्विबन्तात् क्यजन्ताद्वा कर्तरि क्विपि तत्सम्भवः, आद्ये आबन्तादाचारक्विपोऽनभिधानात् । अन्त्ये "क्यचि च" ( पा० सू० ७।४।३३ ) इतीत्वे "क्यच्व्योश्च" ( पा० सू० ६।४।१५२ ) इति यलोपेन तत्सिद्ध्या फलाभावात् ।

न च कौमुदगंध्येवेतीवार्थे "संज्ञायाञ्च" ( पा० सू० ५।३।९७ ) इति विहितस्य कनः "लुम्मनुष्य०" (पा० सू० ५।३।९८ ) इति लुपि, तस्य पतिशब्देन समासे तत्सम्भवः, चञ्चेत्यस्येवास्य संज्ञात्वे दृढतरमानाभावेन तत्र कनो दुर्लभत्वादिति चेत्, न; आगता आरविंदगन्ध्या यस्यामिति बहुव्रीहौ "प्रादिभ्यः०" ( का० वा० २।२।२४ ) इत्युत्तरपदलोपे 'आरविंदगधीपुत्रः' इत्यत्र सम्प्रसारणविधायकतया द्वितीयवाक्यस्य चारितार्थ्यात् ।

---

१. 'इति तद्वाक्यद्वयोपप्लवेन' इति पाठः क० पु० ।

**प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम्। तेन 'अतिराजकुमारिः' इत्यादौ राजकुमारीशब्दार्थस्यातिशब्दार्थं प्रत्युपसर्जनत्वेऽपि तदर्थं प्रत्यनुपसर्जनत्वात् तदादिनियमाभावेन ह्रस्वसिद्धिः।**

---

नन्वेवम् 'अतिराजकुमारिः' इत्यादौ राजकुमारीत्यस्योपसर्जनत्वेऽपि स्त्रीप्रत्ययान्तत्वाभावाद् ह्रस्वानापत्तिः[1], अत आह—**प्रत्यासत्त्येति**। उपसर्जने तदादिनियम इति द्वितीयवाक्ये उपसर्जनपदस्य ससम्बन्धिकार्थकत्वेन यं समुदायं प्रत्यप्रधानत्वं तस्य समुदायस्य स्त्रीप्रत्ययान्तत्वे सम्पादनीये तदादिनियम इति प्रकृते न दोष इति भावः। **तदर्थमिति**। समुदायार्थमित्यर्थः।

ननु नव्यमते 'अतिकुक्कुटमयूरिः' इत्यादौ समाहारद्वन्द्ववदितरेतरयोगेऽप्युद्भूतावयवभेदविशिष्टसमुदायस्यैव प्राधान्यान्मयूरीशब्दार्थस्य द्वन्द्वार्थं प्रत्युपसर्जनतया तदादिनियमात्, 'कुक्कुटमयूरी' इत्यस्योपसर्जनत्वेऽपि स्त्रीप्रत्ययान्तत्वाभावाद् ह्रस्वानापत्त्या, तत्सिद्धये उपसर्जनस्य प्रातिपदिकस्य वा विशेष्यत्वात्, द्वितीयतदन्तविधिस्वीकारेण स्त्रीप्रत्ययान्तान्तस्योपसर्जनस्येत्यर्थस्यावश्यकतया तेनैवात्रापि निर्वाहे प्रत्यासत्त्याश्रयणं व्यर्थम्। न च द्वन्द्वे मयूरीशब्दस्य "एकविभक्ति०" ( पा० सू० १।२।४४ ) इत्युपसर्जनत्वेन स्त्रीप्रत्ययान्तत्वेन च तत्समुदायस्य तदन्तत्वेन ह्रस्वसिद्ध्या न दोषः, द्वन्द्वे नेति निषेधेन द्वन्द्वावयवोपसर्जनमादाय 'कुक्कुटमयूर्यौ' इत्यत्रेव तदप्रवृत्तेः। अन्यथा[2] 'परमकुक्कुटमयूर्यौ' इत्यादावपि तदापत्तेः[3]।

न च 'गोगर्भिणी, स्त्रीव्याघ्री' इत्यादेः "अत्यादयः०" (का० वा० १।४।७९) इति समासे ह्रस्वापत्त्या सूत्रे तदन्तविधिद्वयाश्रयणमशक्यमिति वाच्यम्, एकदेशिसमासप्रत्याख्यानभाष्यरीत्या इष्टस्यात्यर्धपिप्पलिरित्यस्य सिद्धये सूत्रकारमतेऽपि तदन्तविधिद्वयस्यावश्यकतयातिकुक्कुटमयूरिरितिवदतिगोगर्भिणिरित्यस्यापीष्टत्वानुमानादिति चेत्, न; तदन्तविधिद्वयानङ्गीकर्तृप्राचीनमते[4] निर्वाहाय प्रत्यासत्त्याश्रयणेनादोषात्। एतेन यं प्रति स्त्रीप्रत्ययस्यानुपसर्जनत्वं तद्घटितसमुदायस्य स्त्रीप्रत्ययान्तत्वे सम्पादनीये तदादिनियमो नेत्यर्थः[5]।

---

१. 'न च ह्रस्वविधौ लौकिकमप्रधानत्वलक्षणं गृह्यते इति न दोषः, तथा सति "स्त्रियाः पुंवद०" ( पा० सू० ६।३।३४ ) इति भाष्योदाहृते दारदवृंदारकेत्यादौ ह्रस्वापत्तेः' इत्यधिकः पाठः क० पु०।

२. 'अत एव' इति पाठः क० पु०। ३. 'इत्यादौ न दोषः' इति पाठः क० पु०।

४. 'प्राचीन' इति नास्ति क० पु०।

५. 'अतिकुक्कुटमयूरिरित्यत्र कुक्कुटपदार्थं प्रति मयूरीपदार्थस्यानुपसर्जनत्वात्कुक्कुटमयूरीत्यस्य स्त्रीप्रत्ययान्तत्वं सूपपादम्' इत्यधिकः पाठः क० पु०।

**अत एवात्र परिभाषायां न शास्त्रीयमुपसर्जनत्वम्, असम्भवात्।**

**अस्याः 'प्रत्ययग्रहणे' इत्यस्यापवादत्वात् तदेकवाक्यतापन्नत्वाच्चात्रापि ग्रहणपदसम्बन्धेन स्त्रीप्रत्ययसामान्यग्रहणे तद्विशेषग्रहणे च प्रवृत्तिः, न तु**

---

'अतिराजकुमारिः' इत्यादावत्यर्थं प्रत्युपसर्जनत्वेऽपि पूर्वपदार्थभूतं राजानं प्रत्यनुपसर्जनत्वेन तद्घटितसमुदायस्य स्त्रीप्रत्ययान्तत्वे सम्पादनीये तदादिनियम-निषेधेन शास्त्रीयोपसर्जनसंज्ञकस्य स्त्रीप्रत्ययान्तत्वसम्भवेन तत्र तदन्तविधिद्वयं विनैव दोषवारणसम्भवात्, तदन्तविधिद्वयाश्रयणं व्यर्थमित्यपास्तम्, परमकारीष-गन्ध्याशब्दे बहुव्रीहावपि सम्प्रसारणापत्तेः।

केचित्तु "गोस्त्रियोः०" ( पा० सू० १।२।४८ ) इति सूत्रे 'अतिराजकुमारिः' इत्यादौ ह्रस्वानापत्तिमाशङ्क्य "स्त्रीप्रत्यये च०" ( परि० २६ ) इति परिभाषया समाहितं भाष्ये। "गोस्त्रियोः०" (पा० सू० १।२।४८) इति[१] सूत्रे तदन्तविधिद्वय-सत्त्वे 'अतिराजकुमारिः' इत्यादौ दोषस्यैवाप्रसङ्गेन तदाशङ्क्य परिभाषाभ्युपगमेन समाधानपरभाष्यासङ्गतिः।

किञ्चोपसर्जनस्येत्यस्य विशेष्यत्वे गोशब्दांशेऽपि द्वन्द्वनिर्दिष्टत्वेन तदन्त-विधेरापत्त्या शोभना गौः सुगौः, न गौरगौः, चित्रा सुगौरगौर्वा यस्य स "चित्रसुगौः" 'चित्रागौः' इत्यत्रापि ह्रस्वापत्तेः, 'चित्रगुः' इत्यत्र ह्रस्वानापत्तेश्च। ससहाये व्यपदेशिवद्भावाभावात्। तस्मात् प्रत्यासत्त्याश्रयणमेव युक्तम्। न चैवम् 'अति बहुश्रेयसिः' 'अतिकुक्कुटमयूरिः' इत्यादौ ह्रस्वानापत्तिः, तत्र ह्रस्वस्येष्टत्वे मानाभावादित्याहुः।

**असम्भवादिति।** यद्यप्यस्य स्त्री ई तेन निरादीनां समासे शास्त्रीयोपसर्जन-सम्भवः। फलं तु तत्रैव तदादिनियमेनान्यत्र तदप्रवृत्त्यातिकारीषगन्ध्यापुत्रे सम्प्रसारणप्रवृत्तिः[२], तथाप्यनुपसर्जनग्रहणस्य वैय्यर्थ्यापत्तेरेतदयुक्तमिति भावः। एतत्प्रवृत्तिस्थलमाह-**अस्या इति।** उत्सर्गसमानविषया अपवादा इति न्यायादिति भावः। **तदेकेति।** उत्सर्गापवादयोरेकवाक्यताया न्याय्यत्वादिति भावः।

**सामान्यग्रहणे इति।** "गोस्त्रियोः०" ( पा० सू० १।२।४८ ) इत्यादौ। **विशेषग्रहणे।** "ष्यङः०" ( पा० सू० ६।१।१३ ) इत्यादौ। **न त्विति।** तेन धनेन

---

१. 'इत्यत्र' इति पाठः क० पु०।

२. 'न च निरेरपत्यमित्यर्थे "स्त्रीभ्यो ढक्" ( पा० सू० ४।१।१२० ) इति ढकः प्रवृत्तिः फलम्, तत्रार्थग्रहणस्यैव सिद्धान्तितत्वेन तदसम्भवात्' इत्यधिकः पाठः क० पु०।

**स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे । ध्वनितञ्चेदम् 'अर्थवत्' सूत्रे भाष्ये ।**
**इयं च वाचनिक्येव । 'ष्यङः' इति सूत्रे भाष्ये स्पष्टा ।। २६ ।।**

परमचिकीर्षेत्यत्र "कर्तृ करणे०" (पा० सू० २।१।३२ ) इति न समासः[१] । **भाष्य इति** । सरूपसूत्र[२] इति शेषः। तत्र हि समुदायादेकविभक्तावेकशेष इति पक्षे पदस्य विभज्यान्वाख्याने 'भैक्षम्' इत्यत्र भिक्षा३ आम्-अ-इत्यत्र पूर्वं लुकि विभक्तिपरत्वा-भावादेकशेषो न स्यादित्युक्तम् । अनया समुदायस्यावन्तत्वेनाप्रत्यय इति निषेधात् प्रातिपदिकत्वाभावेन सुपोऽप्राप्त्या तदसङ्गतिरतोऽर्थवत्सूत्रे प्रत्ययपदेन तत्र निषेधे कर्त्तव्ये इयं नेति सरूपसूत्रे भाष्ये ध्वनितमित्यन्वयः ।

ननु "ष्यङः०" (पा० सू० ६।१।१३) इति सूत्रे एवानुपसर्जनस्येति क्रियताम्, किमनया परिभाषया । 'अतिकारीषगन्ध्यापुत्रे' ष्यङन्तस्योपसर्जनत्वान्न दोषः, 'आरविंदगन्धीपुत्रे' ष्यङन्तत्वेन समुदायस्यानुपसर्जनत्वेन च नाव्याप्तिः[३] । न च 'परमरमायै' इत्यस्य सिद्धये इयमावश्यकीति वाच्यम्, 'अर्धखट्वायै' इत्यस्य सिद्धये तदन्तविधिद्वयस्यावश्यकतया तेनैव तत्सिद्धेः। 'अतिराजकुमारिः' इत्या-दावपि पूर्वोक्तरीत्या तदन्तविधिद्वयाङ्गीकारान्न दोषः ।

न च 'परमगौरितरा' इत्यत्र "ङ्योऽनेकाचः०" ( पा० सू० ६।३।४३ ) इति[४] ह्रस्वसिद्धिः फलम् । एकदेशिसमासप्रत्याख्यातृभाष्यनये इष्टस्यार्धपिप्पलि-तरेत्यस्य सिद्धये सूत्रकृन्मते तदन्तविधिद्वयस्यावश्यकतया तेन तत्र दोषवारण-सम्भवादिति चेत्,[५] अत्राहुः—अर्धकारीषगन्ध्याशब्दस्य पतिशब्देन समासे फलभेदस्य दुर्वारतया तद्वारणाय तदन्तविधिद्वयाङ्गीकारेऽतिकारीषगन्ध्यापुत्रशब्दे सम्प्रसारणापत्त्या भाष्यकृन्मतेऽपि शब्दार्थयोः फलभेदाभावायार्धपिप्पलीत्यादौ सूत्रकारमतवच्छब्दशक्तिस्वाभाव्याद् विशेषणविशेष्यभावव्यत्यासेन पूर्वपदार्थस्यैव

१. 'न त्विति तेन धनेन परमचिकीर्षेत्यत्र "कर्तृकरणे०" ( पा० सू० २।१।३२ ) इति न समासः' इति नास्तिः क० पु० ।

२. "सरूपाणामेकशेष एकविभक्तौ" ( पा० सू० १।२।६४ ) इति सूत्रे इत्यर्थः ।

३. 'न च 'कारीषगन्धीपुत्रः' इत्यत्रोत्तरपदार्थं प्रत्युपसर्जनत्वात्सम्प्रसारणानापत्तिरिति, वाच्यम्, आरम्भसामर्थ्यात् पूर्वपदार्थं प्रत्युपसर्जनत्वस्यैव विवक्षणेनादोषात्' इत्यधिकः पाठः क० पु० ।

४. "घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः" ( पा० सू० ६।३।४३ ) इति सूत्रेणेति भावः ।

५. 'चेन्न, कारीषगन्ध्यापतिरिव कारीषगन्ध्यापतिरित्यत्र पूर्वपदार्थस्यानुपसर्जनत्वेन सूत्रस्य चारितार्थ्येन 'कारीषगन्धीपुत्रे' संप्रसारणानापत्तेः । किञ्च 'परमगंगाया अपत्यम्' इत्यर्थे समुदायाड्ढगनापत्तिः । न च 'परमगार्ग्यायणः' इतिवद वा ढगुत्पत्त्या न दोषः, तथा सति आदिवृद्ध्यनापत्तेः । वस्तुतः' इत्यधिकः पाठः क० पु० ।

**नन्वेवम् "तरप्तमपौ घः" इत्यादिना तरबन्तादेः संज्ञा स्यादत आहः—**

**संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ २७ ॥**

**"सुप्तिङन्तम्" इत्यन्तग्रहणमस्यां ज्ञापकम् ।**

**न च प्रत्यययोः पदसंज्ञायामपि प्रत्ययग्रहणपरिभाषया तदन्तग्रहणसम्भवात् ज्ञापितेऽपि फलाभाव इति वाच्यम्, पदसंज्ञायाः 'स्वादिषु" इति विषये प्रकृतिनिष्ठतया पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावात् ।**

---

प्राधान्याङ्गीकारेण भाष्यमतेऽप्यर्धपिप्पलीतरेत्यादौ ह्रस्वादेरप्राप्त्या तदनुरोधेन बहुप्रदेशेषु तदन्तविधिद्वयाश्रयणक्लेशस्यायुक्तत्वात् । एवं च परमगौरितरेत्यत्र ह्रस्वसिद्धये इवमावश्यकीति बोध्यम् ।

वस्तुतः कौमुदगन्ध्याकारीषगन्ध्ययोः पुत्र इत्यत्र दीक्षितादिमते सम्प्रसारणम्, ग्रन्थकृन्मते तु नेत्यनयोर्युक्तं सुधीभिर्विचार्यम् ॥ २६ ॥

**ज्ञापकमिति ।** न चान्तग्रहणमन्तशब्दस्य संज्ञार्थम्, तत्फलं तु अन्त इवाचरत्यन्ततीत्यत्र पदत्वात्[1] "अतो गुणे" ( पा० सू० ६।१।९७ ) इत्यस्याप्रवृत्तिः, 'अन्तयोः' इत्यत्र पदान्तत्वाद् यलोपश्चेति वाच्यम्, "अलोऽन्त्यात्०" ( पा० सू० १।१।६५ ) इति निर्देशेनान्तशब्दस्य ज्ञापकत्वपरभाष्यप्रामाण्येन च तत्र स्वरूपाग्रहणात् ।

**प्रत्ययमात्रग्रहणत्वाभावादिति ।** ननु संज्ञाविधावित्यत्र कर्मषष्ठ्यन्तेन समासः, उत करणतृतीयान्तेन । आद्ये "तरप्तमपौ घः" ( पा० सू० १।१।२२ ) इत्यत्र सत्यपि निषेधे प्रदेशेषु[2] "घरूप०" ( पा० सू० ६।३।४३ ) इत्यादौ— तदन्तविधेर्दुर्वारत्वेन 'कुमारब्राह्मणितरा' इत्यादौ दोषापत्तेः । द्वितीये घसंज्ञायां तदन्तविधेर्दुर्वारत्वेन प्रदेशेषु[2] "घरूप०" ( पा० सू० ६।३।४३ ) इत्यादौ घपदेन तदन्तस्यैवोपस्थित्या प्रत्ययग्रहणाभावेन तस्या अप्राप्त्या तन्निषेधवैय्यर्थ्यमिति चेत्, न; आद्यपक्षे तत्र निषेधस्य प्रदेशे तदन्तग्रहणव्यावृत्यर्थत्वेन सामर्थ्यात्प्रदेशेऽपि तदप्रवृत्त्या उक्तदोषासम्भवात् ।

न चैतत्परिभाषाभावे संज्ञाविधौ प्रदेशे च तदन्तविधौ 'गौरीपरमब्राह्मणितरा' इत्यत्र ह्रस्वः, सत्यां त्वस्यामेकत्रैव तदन्तविधिरिति तत्र न ह्रस्वः प्राप्नोतीति फले विशेषः, इति कथं सामर्थ्यमिति वाच्यम्, परिभाषाभावे तदन्ते संज्ञायाः प्रवृत्त्या प्रदेशे तदन्तस्यैवोपस्थित्योत्तरपदस्य विशेष्यत्वात् तदन्तविधेः प्राप्तावपि "गिलगिले च" ( का० वा० ६।३।७० ) इति ज्ञापकेन चितादिष्विवोत्तरपदस्य विशेष्यत्वेन द्वितीयतदन्तविधेरप्राप्त्या फलभेदासम्भवात् ।

---

१. 'पदान्तत्वात्' इति पाठः क० पु० ।　　२. 'प्रदेशे' इति पाठः क० पु० ।

"सुप्तिङन्तम्" इति सूत्रे भाष्ये स्पष्टा ॥ २७ ॥

---

नन्वेवम् "घरूप०" ( पा० सू० ६।३।४३ ) इत्यादौ "उत्तरपदाधिकारे०" ( परि० २५ ) इति परिभाषया तन्निषेधात् तदप्राप्त्या तत्र "संज्ञाविधौ०" (परि० २७) इति निषेधस्य चारितार्थ्येन सामर्थ्यासम्भवः। न च तयोत्तरपदस्य विशेष्यत्वात् प्राप्ततदन्तविधिरेव वार्यते, न तु प्रत्ययग्रहणपरिभाषाप्राप्ततदन्त—विधिरपीति वाच्यम्, तथा सति "हृदयस्य०" (पा. सू. ६।३।५०) इति सूत्रेऽण्णन्त इत्यर्थापत्त्या 'हार्दः' इत्यस्यासिद्ध्यापत्तेः, लेखग्रहणस्य वैय्यर्थ्यापत्तेरिति चेत्, न; ज्ञापकसाजात्येनोत्तरपदाधिकारे प्रत्ययस्य साक्षादुपादान एव तत्परिभाषाप्रवृत्त्या "घरूप०" (पा० सू० ६।३।४३) इत्यत्र घांशे तदप्राप्तेः। अत एव "रात्रेः कृति०" (पा० सू० ६।३।७२) इत्यादौ न दोषः। अन्यथा रात्रिशब्दादाचारक्विबन्तात्तृचि मुमश्चारितार्थ्येन कृदन्ते उत्तरपदे तदनापत्तेः।

न च "रदाभ्याम्०" ( पा० सू० ८।२।४२ ) इत्यादौ 'अपञ्चम्याः'[1] इति निषेधात्प्रदेशेषु तदन्तविधेरप्राप्त्या संज्ञाविधौ निषेधस्य चारितार्थ्येन सामर्थ्यं दुर्वचमिति वाच्यम्, "रदाभ्याम्०" ( पा० सू० ८।२।४२ ) इत्यस्य तकारविशेषणतायास्सिद्धान्तितत्वेन तत्रापञ्चम्या इति निषेधाप्रवृत्त्या चारितार्थ्यासम्भवात्।

न च "क्लिशः क्त्वानिष्ठयोः" (पा० सू० ७।२।५०) इत्यत्र क्त्वान्त[2] इव निष्ठांशेऽप्यपञ्चम्या इति निषेधेन प्रदेशे तदप्राप्त्या संज्ञाविधौ निषेधस्य चारितार्थ्यम्। "क्तक्तवतू निष्ठा" ( पा० सू० १।१।२६ ) इति सूत्रे प्रत्ययत्वविशिष्टयोः क्तक्तवत्वोरुपस्थितेरसम्भवेन प्रत्ययग्रहणपरिभाषाया अप्राप्त्या तत्र निषेधस्य चारितार्थ्यासम्भवात्। नहि निष्ठेति सूत्रेण विधानात्पूर्वं तयोः प्रत्ययत्वज्ञानं सम्भवति येनात्रापि प्रत्ययग्रहणपरिभाषा प्रवर्तेत।

एतेन "आडुत्तमस्य पिच्च" ( पा० सू० ३।४।९२ ) इत्यादौ विकरणव्यवधानेऽपि प्रवृत्तये धातोरित्यस्य विहितविशेषणत्वेनापञ्चम्या इति निषेधाप्राप्त्या तदन्तविधिरेतत्सामर्थ्येनैव वारणीय इत्यपास्तम्। "तिङस्त्रीणि०" ( पा० सू०१।४।१०१ ) इति संज्ञाविधौ प्रत्ययविशिष्टतिङ उपस्थितेरसम्भवात् "युष्मद्युपपदे०" ( पा० सू० १।४।१०५ ) इत्येकवाक्यतया उत्तमादिपदैर्विधानानन्तरमेव प्रत्ययत्वज्ञानेनोत्तमत्वस्य प्रत्ययत्वव्याप्यत्वाभावात्।

न चैवमपि "ईदूदेद्द्विवचनम्०" ( पा० सू० १।१।११ ) इत्यादौ तदन्तविध्यभावसम्पादनेन निषेधस्य चारितार्थ्यं तत्प्रदेशेषु प्रत्ययमात्रग्रहणाभावादिति वाच्यम्, ईदादिभिर्द्विवचनस्य विशेषितत्वेन सत्यपि तदन्तविधावदोषात्, द्विवचनस्योक्तरीत्या तद्व्याप्यत्वाभावाच्च। तस्मात् "घरूप०" (पा० सू०६।३।४३) इत्यादिप्रदेशे संज्ञाविधाविति निषेधसामर्थ्यादेव न तदन्तविधिरिति युक्तम्।

---

१. 'प्रत्ययग्रहणे चापञ्चम्याः' ( परि० २४ ) इति निषेधादित्यर्थः।

२. 'क्वान्त' इत्यपपाठः क० पु०।

न चैवमुक्तरीत्या "उत्तरपदाधिकारे०" ( परि० २५ ) इति परिभाषाप्रवृत्तिवारणेऽपि संज्ञाविधाविति निषेधेन प्रदेशेषु तदन्तविधेरनभ्युपगमात् "घरूप०" ( पा० सू० ६।३।४३ ) इत्यादाविव कृतीत्यादावपि कृदन्त इत्यर्थो दुर्वच इति वाच्यम्, "उत्तरपदाधिकारे०" ( परि० २५ ) इत्येतत्परिभाषाविषये उत्तरपदे इत्यस्य सम्बन्धायोगात्तस्य त्यागेऽपि "रात्रेः कृति०" (पा. सू. ६।३।७२) इत्यादौ प्रत्ययस्य साक्षादुपादानाभावेन तदप्रवृत्त्या "उत्तरपदाधिकारे०" ( परि० २५ ) पाठसामर्थ्येनोत्तरपद इत्येतत्सम्बन्धस्य दुर्वारत्वेन कृद्रूपस्योत्तरपदस्यासम्भवेन सामर्थ्यात् तद्बाधेन[1] तदन्तविधेः सूपपादत्वात् ।

न च अशब्दादाचारक्विबन्तात्तृचि, क्तप्रत्यये वा इटि, अतो लोपे, निष्पन्नस्येता-इतः—इत्यस्य रात्रिशब्देन समासे तत्सम्भव इति वाच्यम्, एकाज्भ्य आचार क्विबभावस्य "कास्प्रत्यय०" ( पा० सू० ३।१।३५ ) इति सूत्रे शेखरे सिद्धान्तितत्वेन तदसम्भवात् । "घरूप०" ( पा० सू० ६।३।४३) इत्यस्योत्तरपदाधिकारे पाठस्त्वन्यार्थमावश्यक इति न तत्र घांशे सामर्थ्यात्तदन्तविधिरिति[2] बोध्यम् ।

न चैवम् "किमेत्तिङव्ययघा०" ( पा० सू० ५।४।११ ) इति विधीयमानस्यामः किमेत्तिङव्ययप्रकृतिकघसंज्ञकादेवोत्पत्त्या समुदायस्यामन्तत्वाभावेनाव्ययत्वानापत्तिरिति वाच्यम्, तदन्तविधिं विना प्रातिपदिकादित्यस्यान्वयासम्भवेन घान्तात्प्रातिपदिकादित्यर्थेनादोषात् । एवञ्च प्रत्ययस्य तदवयवस्य वा यत्र संज्ञा तत्रैवेयमिति न "अर्थवत्०" ( पा० सू० १।२।४५ ) सूत्रे प्रत्ययपदे तदन्तविधिप्रतिषेधः । अवयवस्येत्यस्य फलं तु "षः प्रत्ययस्य" ( पा० सू० १।३।६ ) इत्यादाविति बोध्यम् ।। २७ ।।

---

१. 'बाधनात्' इति पाठः क० पु० ।

२. "ननु सर्वादिगणंपठिते डतरडतमप्रत्ययेऽनेन निषेधात्तदन्तविधिर्दुर्वचः । न च केवलयोः संज्ञायाः फलाभावः । अत्र पक्षे सर्वनामत्वस्य प्रकृतिप्रत्ययसाधारणत्वेन प्रातिपदिकमात्रग्रहणत्वाभावेन ग्रहणवतेति निषेधे वास्य "किं सर्वनामबहुभ्यः०" ( पा० सू० ५।३।२ ) इत्यादावप्रवृत्त्या वर्णाश्रमेतरशब्देऽपि अकजाद्यापत्तेः । किं च "बहुगण०" ( पा० सू० १।१।२३ ) इति सूत्रेपि-अत्वंत इत्यर्थो दुर्लभः । प्रत्ययमात्रस्य संज्ञायामपि संज्ञाप्रदेशेषु ग्रहणवतेत्यस्याप्रवृत्त्या तदन्तविधिसम्पादनेन डतेः संज्ञायाः साफल्येनातिपञ्चनशब्दादपि कनाद्यापत्तेरिति चेत्, न; अपञ्चम्या इति निषेधवदस्याप्युपस्थिततदाद्यंशस्य विशेष्यत्वात् प्राप्ततदन्तविधिबाधकत्वेऽपि प्रकारान्तरेण प्राप्ततदन्तविधेरनया वारणात् । तेन सर्वनामसंज्ञायां वाचनिकस्य, संख्यासंज्ञायां महासंज्ञाबललब्धस्य, प्रातिपदिकसंज्ञायामर्थवदित्यनुवृत्त्यलब्धस्य च न निषेध इति बोध्यम्" इत्यधिकः पाठः क० पु० ।

**ननु 'अवतप्ते नकुलस्थितम्' इत्यादौ नकुलस्थितशब्दस्य क्तान्तत्वाभावात् समासो न स्यादत आहः—**

**कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ।। २८ ।।**

---

**न स्यादिति ।** कृत्प्रत्ययग्रहणेषु तदाद्यंशोपस्थित्याधिकस्याव्यावृत्त्या गतिकारकविशिष्टतदादिघटितशब्दरूपस्य कृदन्तत्वासम्भवेन "क्षेपे" ( पा० सू०- २।१।४७ ) इति शास्त्रेण क्तान्तत्वेन समासः । "तत्पुरुषे कृति०" ( पा० सू०- ६।३।१४ ) इत्यलुक्, समासस्वरश्च न स्यादिति भावः । **ग्रहणमिति ।** कृत्प्रत्ययो यत्र गृह्यते तत्र गतिकारकपूर्वस्येत्यपिशब्दात्तदादीति चोपतिष्ठते । तत्र गतिकार-कपूर्वस्येति षष्ठ्यर्थबहुव्रीहिणा न तदादेरित्यस्य समानाधिकरणं विशेषणम्, एकस्मिन् शब्दरूपे गतिकारकपूर्वावयवत्वस्य प्रकृत्याद्यवयवत्वस्य[1] चासम्भवात् । नापि पञ्चम्यर्थबहुव्रीहिणा तद्विशिष्टस्य ग्रहणम् । संयोगसमवायान्यतरसम्बन्धे-नान्यपदार्थस्य वर्तिपदार्थसम्बन्धित्व एव तद्गुणत्वस्वीकारेण प्रकृते तदसम्भवात् ।

तस्मादुभयत्र बहुव्रीहिबललब्धे तदादिशब्दस्वरूपे गतिकारकपूर्वावयवक-शब्दस्वरूपे च कृदादिपदस्यावृत्त्या प्रत्येकं विशेषणत्वस्वीकारेण तदन्तविधिना तदाद्यवयवकस्य गतिकारकपूर्वावयवकस्य च शब्दस्वरूपस्य च कृच्चरमावयवकस्य कृदन्तत्वेनोपस्थितिरिति परिभाषार्थः । तथा च "कर्तृकरणे कृता बहुलम्" ( पा० सू० २।१।३२ ) इत्यादेर्वाक्यभेदेन कृच्चरमावयवकं यत्तदादिशब्दस्वरूपं गतिकारकपूर्वावयवकं यत्कृच्चरमावयवकं[2] शब्दरूपं च तेन तृतीयान्तं समस्यत इत्यर्थः ।

न च "रषाभ्याम्०" ( पा० सू० ८।४।१ ) इति विषये निर्दिष्टपरिभाषया सामान्यतो व्यवधानेऽप्राप्तौ[3] "अट्कुप्वाङ्०" ( पा० सू० ८।४।२ ) इति सूत्रेणाडाद्यंशेऽभ्यनुज्ञानेन[4] तदतिरिक्तव्यवधाने 'आदर्शेन' इत्यादौ यथा णत्व-व्यावृत्तिस्तथा प्रत्ययग्रहणपरिभाषया तदादिनियमेन सामान्यतोऽधिकस्य व्यावृत्तौ प्राप्तायां गतिकारकपूर्वस्येत्यनेन तावन्मात्रस्याभ्यनुज्ञानेऽपि गतिकारकपूर्वस्येत्यस्य तदादेरित्यस्य च परस्परमेकवाक्यतयान्वयासम्भवाद् गतिकारकेतरपूर्वपदासम-भिव्याहृततदाद्युत्तरपदकगतिकारकपूर्वावयवकसमुदायस्यैव ग्रहणे मानाभावेन

---

१. 'अवयवकत्वस्य' इति पाठः क० पु० ।

२. 'यत्कृच्चरमावयवकम्' इति नास्ति क० पु० ।

३. 'अप्राप्ते' इति पाठः क० पु० ।

४. 'परिभाषैकवाक्यतया' इत्यधिकः पाठः क० पु० ।

**अस्याश्च कर्मणि क्तान्त उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर इत्यर्थके 'गतिरनन्तरः' इति सूत्रेऽनन्तरग्रहणं ज्ञापकम् । तद्धि 'अभ्युद्धृतम्' इत्यादावतिव्याप्तिवारणार्थम् । 'प्रत्ययग्रहण'परिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाप्राप्तौ तद्व्यर्थं सदस्या ज्ञापकम् ।**

**न च 'अभ्युद्धृतम्' इत्यादौ परत्वात् 'गतिर्गतौ' इत्यनेनाभेर्निघात एवेति वाच्यम्, पादादिस्थत्वेन, पदात्परत्वाभावेन च तदप्राप्तेः । अनन्तरग्रहणे कृते तु तत्सामर्थ्याद् गत्याक्षिप्तधातुनिरूपितमेवानन्तर्यं गृह्यत इति न दोषः ।**

---

'तण्डुलपरमपाचकः' इत्यस्यापि कृदन्तत्वापत्तिरिति वाच्यम्, गतिपूर्वस्थले 'निर्भिन्नः' इत्यादौ गतिकारकेतरासमभिव्याहृततदाद्युत्तरपदकगतिपूर्वावयवकस्यैव सम्भवेन तत्साहचर्यात् कारकांशेऽपि गतिकारकेतरपूर्वपदासमभिव्याहृततदाद्युत्तर—पदककारकपूर्वावयवकशब्दस्यैव ग्रहणेन 'तण्डुलपरमपाचकः' इत्यादौ 'अवतप्ते नकुलप्रस्थितम्' इत्यादौ च न दोषः ।

न चैवं गतिकारकसमभिव्याहारे 'साङ्कूटिनम्' इत्यत्र केवलस्यापीनुणन्तत्वं दुर्वारमिति वाच्यम्, "अणिनुणः" ( पा० सू० ५।४।१५ ) इति सूत्रस्थेनेनुण्पदेन गतिकारकपूर्वसमुदायस्येव तदादिसमुदायस्याप्युपस्थित्या वाक्यभेदाङ्गीकारेण गतिकारकासमभिव्याहृते कूटिन्शब्दे तदादिवाक्यस्य चारितार्थ्येन सङ्कूटिन्शब्दे गतिकारकवाक्येन[1] बाधाङ्गीकारेण तत्र केवलादणोऽप्राप्त्याऽदोषात् ।

**क्तान्त इति** । "क्ते च" ( पा० सू० ६।२।४५ ) इति सूत्रात् क्तग्रहणे "तृतीया कर्मणि" ( पा० सू० ६।२।४८ ) इति सूत्रात् कर्मणीति चानुवर्तमाने इति भावः । **वारणार्थमिति** । अत्र हृतशब्देनोच्छब्दस्य समासे प्रथमम् "समासस्य" ( पा० सू० ६।१।२२३) इत्यन्तोदात्ते प्राप्ते तदपवादक्रमेणाव्ययपूर्वपदप्रकृतिस्वरे कृत्स्वरथाथादिस्वरे प्राप्ते तमपोद्यानेन गतिस्वरे आद्युदात्त उद्धृतशब्दः, तस्य अभिना समासेऽननन्तरस्याभेर्माभूदिति तत्कृतम् । तत्र निर्दिष्टपरिभाषयाननन्तरस्याभेः कर्मक्तान्तपरत्वाभावादेव तदप्राप्त्या तद्व्यर्थं सज्ज्ञापकमिति भावः ।

ननु ज्ञापितेऽपि चारितार्थ्यं दुर्वचमिति शङ्कते—**न चेति । पदात्परत्वाभावेन चेति** । चो हेतौ, यतः पदात्परत्वाभावोऽतः पादादिस्थत्वेन तदप्राप्तिरिति भावः । एतेन "कुत्सने च सुपि०" ( पा० सू० ८।१।६९ ) इत्यतः प्राक् पदादित्यधिकार इति सिद्धान्तादस्य ततः परत्वेनेदमयुक्तमिति शङ्का निरस्ता ।

ननु अनन्तरग्रहणे कृतेऽप्यसौ दुर्वारः, अनयोद्धृतशब्दस्य क्तान्तत्वेनाभेस्तदानन्तर्यस्य दुर्वचत्वादित्यत आह—**तत्सामर्थ्यादिति । गृह्यत इति** । एतत्परिभाषासत्त्वे सर्वस्या अपि गतेरनन्तरत्वात् "ते प्राग्धातोः" ( पा० सू० १।४।८० )

---

१. 'परत्वात्' इत्यधिकः पाठः क० पु० ।

**न च 'अभ्युद्धृतम्' इत्यादावभिना समासेऽनन्तरस्योदः पूर्वपदत्वाभावेऽपि स्वरार्थं तदिति वाच्यम् 'कारकाद् दत्त' इति सूत्रे 'कारकात्' इति योगं विभज्य तत्र गतिग्रहणमनुवर्त्य कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदात्तमिति नियमेन**

---

इति नियमेन विजातीयव्यवधानेन गतेः प्रयोगासम्भवात् सामर्थ्यात् धात्वानन्तर्यमेव ग्राह्यमिति भावः।

ननु अनन्तरग्रहणमभिशब्देनोद्धृतशब्दस्य समासे पूर्वोक्तापवादक्रमेण सत्ति शिष्टे थाथादिस्वरे प्राप्ते तद्बाधनाय योगविभागेन वाक्यभेदेन सामर्थ्यात् "बहुव्रीहौ प्रकृत्या०" ( पा० सू० ६।२।१ ) इत्यतोऽनुवर्तमानपूर्वपदमित्यस्यासम्बन्धेन क्तान्ते परतो धातोरनन्तरो गतिरपूर्वपदमपि प्रकृत्या स्यादित्यर्थबोधनद्वारोच्छब्दे इष्टस्य प्रकृतिस्वरस्य प्रवृत्त्यर्थमावश्यकमिति न तस्य ज्ञापकत्वं सम्भवति।

न चास्यामवस्थायां परिभाषाया एवासिद्धत्वात्कृत्स्वरस्य तदपवादभूतथाथादिस्वरस्य वा प्राप्तेस्तद्बाधनार्थं योगविभागो व्यर्थ इति वाच्यम्, एवमप्यव्ययपूर्वपदप्रकृतिस्वरं बाधित्वा इष्टस्योच्छब्दस्वरस्य सिद्धयेऽस्यावश्यकत्वात्।

एवञ्चानन्तरग्रहणस्य वैय्यर्थ्याभावात् कथमेतत्परिभाषाया ज्ञापकत्वमिति शङ्कते—**न चेति**। ननु पूर्वपदाधिकारस्योत्तरार्थमावश्यकतयात्र वाक्येऽपि तत्सम्बन्धस्य दुर्वारतया कथमस्यापूर्वपदे प्रवृत्तिरत आह :—**अपूर्वपदत्वेऽपीति (पूर्वपदत्वाभावेऽपि)**। योगविभागसामर्थ्यादिति भावः।

न चाभिना समासे तत्समासीयपूर्वपदत्वाभावेऽपि प्राथमिकसमासीयपूर्वपदत्वमक्षतमिति वाच्यम्, तत्तत्समासे पूर्वपदोत्तरपदाश्रितकार्याणां प्रत्यासत्त्या तत्तत्समासारम्भकपूर्वोत्तरपदेष्वेव प्रवृत्त्या अत्र तदप्राप्तेरित्याशयात्। अत एव "येन विधिः०" ( पा० सू० १।१।७२ ) इति सूत्रे भाष्ये 'परमातिमहान्' इत्यत्र दीर्घानापत्त्या तदुत्तरपदस्येति पाठो दूषितः। अत एव संभोगशब्देन समासे भोगोत्तरपदलक्षणः खो न।

न चैवमुद्धृतशब्दस्यैवैतत्समासारम्भकचरमावयवत्वेनोत्तरपदत्वं न तु क्तान्तस्य हृतशब्दस्येति क्तान्तोत्तरपदत्वाभावात्कथं तेन स्वरसिद्धिरिति वाच्यम्, योगविभागसामर्थ्येन पूर्वपदमित्यस्येवोत्तरपद इत्यस्याप्यसम्बन्धकल्पनेनादोषात्। गूढाभिसंधिना समाधत्ते :—**कारकादिति**।

अयं भावः—अनन्तरग्रहणस्य योगविभागेन वाक्यभेदाङ्गीकारेणाधिकारप्राप्तपूर्वपदस्योत्तरपद इत्यस्य चासम्बन्धकल्पनेन गतिद्वयसमवधाने मध्यमपदे

**थाथादिस्वराप्राप्त्या कृत्स्वरेणोद उदात्तत्वसिद्धेः। तस्मादनन्तरग्रहणं व्यवहित-निवृत्त्यर्थमेवेति ज्ञापकमेव।**

---

स्वरार्थत्वं कल्पनीयम्? उत[1] परिभाषायां ज्ञापकत्वं वर्णनीयम्? न च सति वैय्यर्थ्ये तस्य ज्ञापकता युक्ता, तदेव न सम्भवति, इष्टस्य मध्यमपदस्वरस्य सिद्धये तस्यावश्यकत्वादिति वाच्यम्, कृतेऽपि तत्रानन्तरग्रहणे तत्सामर्थ्यमूलकपूर्वोक्तयोगविभागाद्याश्रयणमन्तरा स्वरसतस्तस्य त्वदुक्तप्रयोजनासम्भवेन तवापि सामर्थ्येन कथञ्चित्तत्सार्थक्यस्य कल्पनीयतया, लाघवात् परिभाषाया बहुफलकत्वेन वक्ष्यमाणकारकादिति नियमेन थाथादिस्वराप्राप्त्यानयैव कृत्स्वरेण त्वदुक्तफलस्यापि सङ्ग्रहेण व्यापकत्वात् परिभाषास्वीकारस्यैवोचितत्वादिति।

केचित्तु कारकांशे निर्वाहाय प्राचीनतन्त्रे वचनरूपेण पठितायाः परिभाषाया इहाप्याश्रणेऽनन्तरग्रहणं ज्ञापकमुत पूर्वोक्तयोगविभागाद्याश्रयणेनाव्ययपूर्वपदप्रकृतिस्वरबाधनार्थमिति विषये लाघवाद् व्यापकत्वाच्च परिभाषास्वीकारे एव ज्ञापकत्वकल्पनं युक्तमित्याहुः।

वस्तुतोऽनन्तरग्रहणस्य[2] अव्ययपूर्वपदप्रकृतिस्वरबाधनमात्रफलकत्वे "आटश्च" ( पा० सू० ६।१।९० ) इत्यत्रेवात्रापि गतिश्चेत्येव ब्रूयात्। चकारस्य पुनर्विधानार्थत्वेन कक्षान्तरीयाव्ययपूर्वपदप्रकृतिस्वरस्य बाधेनेष्टसिद्धेः। तस्मादनन्तरग्रहणं परिभाषाज्ञापनार्थमेवेत्याहुः।

न च ज्ञापितायामपि परिभाषायामिष्टस्य मध्यमपदस्वरस्य योगविभागमन्तरा असिद्ध्या कथं तस्य परिभाषाज्ञापकत्वं सम्भवतीति वाच्यम्, परिभाषाज्ञापकत्ववादिमतेऽव्ययपूर्वपदप्रकृतिस्वरस्य कृत्स्वरेण बाधनेनोद उदात्तत्वसिद्ध्याऽदोषात्।

न च थाथादिस्वरस्य कृत्स्वरापवादत्वेन तद्विषये कृत्स्वराप्राप्त्या तदसिद्धिरिति वाच्यम्, "कारकाद्दत्त०" ( पा० सू० ६।२।१४८ ) इति सूत्रे कारकादिति योगविभागेन कारकात्परीभूतगतेः परस्य क्तान्तस्यान्तोदात्तविधानस्य नियमार्थत्वेन थाथादिस्वराप्राप्त्येष्टसिद्धेः।

न च त्वन्मते कारकादिति योगविभागाश्रयणे[3] गौरवात्तदपेक्षयानन्तरग्रहणस्य योगविभागेन पूर्वोक्तरीत्या मध्यमपदस्वरसाधनमेव लघ्विति वाच्यम्, अनन्तरग्रहणस्य विध्यर्थत्ववादिमतेऽपि गतिद्वयसमवधाने इव कारकपूर्वपदेऽपि

---

१. 'उक्त' इति पाठः क० पु०।
२. 'ग्रहस्य' इति पाठः क० पु०।
३. 'योगविभागनियमाश्रयणे' इति पाठः क० पु०।

"दूरादागतः" इत्यादौ मध्यमपदे तेन स्वरापत्त्या तद्वारणाय तत्रान्तोदात्तसिद्धये कारकादिति योगविभागस्य त्वमन्तेऽपि[1] आवश्यकत्वात् ।

न च लोकेऽनन्तरशब्दस्याननन्तरमपेक्ष्यैव प्रवृत्तेः[2] तत्रानन्तरो गतिरित्युक्तेऽननन्तरस्यापि गतेरेव सन्निधानात् प्रतीत्यानन्तरग्रहणस्य साजात्याद् गतिद्वयसमवधाने एवापूर्वपदे विधानार्थत्वेन 'दूरादागतः' इत्यादौ नातिप्रसङ्गः, इति तन्मते योगविभागाश्रयणं व्यर्थमिति वाच्यम्, एवमपि 'दूरादागतः' इत्यादौ परिभाषाभावे "थाथा०" ( पा० सू० ६।२।१४४ ) इति सूत्राप्राप्त्या तत्रेष्टस्यान्तोदात्तस्य सिद्धये तस्य तव मतेऽप्यावश्यकत्वात् । न च 'समासस्य' ( पा० सू० ६।१।२२३ ) इत्यन्तोदात्तस्सिद्ध इति वाच्यम्, एवमपि 'नखनिर्भिन्नः' इत्यत्र तृतीयान्तपूर्वपदे प्रकृतिस्वरबाधनार्थमस्यावश्यकत्वात् ।

एवञ्चानन्तरग्रहणस्य कक्ष्यान्तरप्राप्ताव्ययपूर्वपदप्रकृतिस्वरबाधकतया मध्यमपदे विधानार्थत्वकल्पे पूर्वोक्तयोगविभागाद्याश्रयणकल्पनं परिभाषासाध्योदाहरणानां सिद्धये वाचनिकपरिभाषाश्रयणञ्चेति गौरवम् । अनन्तरग्रहणस्य परिभाषाज्ञापकत्वकल्पे तु न योगविभागाश्रयणवाक्यभेदसामर्थ्यमूलकाधिकारप्राप्तपूर्वपदाद्यसम्बन्धकल्पनम्, नापि वाचनिकपरिभाषाश्रयणक्लेश इति सर्वमनवद्यमितीदमेव युक्तमिति भाष्यतत्त्वविदः ।

एतेन तदन्तविधिद्वयम् "थाथा०" ( पा० सू० ६।२।१४४ ) इत्यादिसूत्रेष्वभ्युपेत्य तत्स्वरप्रवृत्तिरिति तद्बाधनार्थं योगविभाग इति न चेत्यादि—ग्रन्थाशयस्तथैव कृत्स्वरेण तत्साधनम्, कृद्ग्रहणप्रत्याख्यानपक्षेण वेत्यपास्तम् । तदन्तविधिद्वयमभ्युपेत्य शङ्काग्रन्थप्रवृत्तिरिति तद्ग्रन्थावतरणस्यानौचित्यात् ।

किञ्चास्यामवस्थायां त्वन्मते परिभाषाया अभावेन 'अभ्युद्धृतम्' इत्यादावपूर्वपदेऽपि स्वरप्रवृत्तिवत् 'दूरादागतः' इत्यादावपि तथैव मध्यमपदस्वरापत्त्या तद्बाधनेन तत्रान्तोदात्तसिद्धये कारकादिति योगविभागस्य चारितार्थ्येन नियामकत्वासम्भवेन ज्ञापकत्वानापत्तेः[3] ।

सीरदेवादयस्तु अस्यां कारकांशे ज्ञापकम् 'खिष्णुचि' इकारोकारोच्चारणम् । तद्धि 'अनाढ्यं भविष्णुः' इत्यत्र "कृत्योकेष्णुच्चार्वादयश्च" ( पा० सू०-६।२।१६० ) इति सूत्रेणेष्णुजन्तस्य नञः परस्यान्तोदात्तविधायकेन स्वरो यथा स्यादिति । एतदभावे 'अनाढ्यं भविष्णुः' इत्यत्र नञः परस्येष्णुजन्तत्वाभावात् तदप्राप्त्या तद्वैय्यर्थ्यं स्पष्टमेवेत्याहुः ।

---

१. 'त्वन्मतेऽपि' इति नास्ति क० पु० । २. 'प्रकृतेः' इति पाठः क० पु०

३. 'गतिकारकेतरपूर्वत्वेऽपि स्वरापत्तेश्च' इत्यधिकः पाठः क० पु० ।

**यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र कृद्ग्रहणे तद्विशिष्टस्यैव ग्रहणम् । 'अपि' शब्दात् तदसमभिव्याहृतस्य केवलस्यापीति तदर्थः ।**

---

गतिकारकसमभिव्याहारे केवलस्यापि कृदन्तत्वमपिशब्दादिति प्राचोक्तं खण्डयतिः—**यत्रेति । तद्विशिष्टस्यैवेति ।** नन्वेवं देवदत्तेन कृतमित्यत्रानया समुदायस्यैव कृदन्तत्वेनावयवस्याकृदन्तत्वात्प्रातिपदिकत्वानापत्तिः । न चैवम-प्रत्ययान्तत्वात् पूर्वसूत्रेण तत्सिद्धिः, तत्र प्रत्ययस्य कृदकृत्साधारणत्वेनास्यास्तद्-विषयेऽप्राप्त्या निषेधे प्रत्ययान्तत्वस्य सुवचत्वात् ।

न च देवदत्तेन कृतमिति समुदायस्य समासकृतनियमेन परत्वाद् बाधात् "कृत्तद्धित०" ( पा० सू० १।२।४६ ) इति सूत्रे एतत्परिभाषाप्रवृत्तौ न फलम्, अवयवस्याकृदन्तत्वेन तत्र प्रातिपदिकत्वाभावस्यैव फलत्वादिति चेत्, नः ( कृद्-ग्रहणेषु[1] सर्वत्रानया वाक्यद्वयोपप्लवेन गतिकारकवाक्येन स्वविषये तदादिवाक्यस्य बाधनेन तत्र तत्र तदादिवाक्यस्याप्रवृत्त्यावयवस्य कृदन्तत्वाभावेऽपि ) अस्याः शास्त्रीयकार्ये एव प्रवृत्त्यान्यत्र तदप्रवृत्त्यादोषात् ।

किञ्च कृद्ग्रहणपरिभाषासाध्यमुभयम्, विशिष्टस्य ग्रहणम्, केवलग्रहण-निषेधश्च । तत्र केवलग्रहणनिषेधो यत्र कार्ये गतिकारकयोः कार्यित्वेन निमित्तत्वेन वानुपादानम्, यथा "अणिनुणः" ( पा० सू० ५।४।१५ ) इत्यादौ । यत्र तु तयोः पृथगुपादानं तत्र केवलस्यापि यथा "कर्तृकरणे०" ( पा० सू० २।१।३२ ) इत्यादौ । "कृत्तद्धित०" ( पा० सू० १।२।४६ ) इति सूत्रे गतिकारकयोः पृथगनुपादानेऽपि न विशिष्टस्य कृदन्तत्वम्[2] । समासकृतनियमेन परत्वादबाधनेन गतिकारक-वाक्योपप्लवे फलाभावेन तेन तदादिवाक्यस्य बाधासम्भवेन तदादिवाक्य-स्यैकस्यैवोपप्लवेन कृतमित्यस्य कृदन्तत्वेनादोषात् ।

किञ्च तदाद्युत्तरपदकगतिकारकपूर्वावयवकसमुदायस्यैवानया कृदन्तत्व-बोधनेन वाक्येऽस्याप्रवृत्त्याऽदोषात् । अत एव गतिकारकोपपदानामित्यस्याः 'साङ्कूटिनम्' फलमिति भाष्योक्तं सङ्गच्छते ।

---

१. 'कृदग्रहणेषु' इत्यादितः 'कृदन्तत्वाभावेऽपि' इत्येतत्पर्यन्तं मूलपुस्तके कोष्टके वर्तते क० पु० च नास्ति ।

२. 'कृत्तद्धित इति सूत्रे विषये' इत्यधिकः पाठः क० पु० ।

**अन्यथाऽनया कृद्ग्रहणविषये परत्वात् 'प्रत्ययग्रहण' परिभाषाया बाध एव स्यादित्यपि ग्रहणम् ।**

**अत एव 'साङ्कूटिनम्' इति 'गतिकारकोपपदानाम्' इति 'कृद्ग्रहण' इति च परिभाषाभ्यां कृदन्तेन समासे कृते विशिष्टादेवाणि सिद्ध्यति, न तु 'सङ्कौटिनमिति' इति 'पुंयोगात्' इति सूत्रे भाष्योक्तं सङ्गच्छते । अन्यथा तत्र**

---

अन्यथा कृदन्तेन समासाभावेऽप्यनया गतिकारकसमभिव्याहारे विशिष्ट-स्यैवेनुणन्तत्वेनाणि कर्त्तव्येऽवयवस्येनुणन्तत्वाभावेन समुदायस्येनुणन्तत्वेऽपि समासात्प्रागप्रातिपदिकत्वेन ततोऽप्यप्राप्त्या ( अन्तरङ्गादणोऽपि[1] पूर्वं सुपि ततः समासे सुब्लुकि समुदायस्येनुणन्तत्वप्रातिपदिकत्वयोः सत्त्वेन तत एवाणि तत्सिद्ध्या तदसङ्गतिस्स्पष्टैव । कृद्ग्रहणेषु वाक्यद्वयोपप्लववादिमते तु कृद्भिस्समास-वचनमिति परिभाषाभावे संकूटिनित्यत्र गतिकारकसमभिव्याहृतेनुणन्तात्प्राति-पदिकादणिति प्रथमवाक्यस्य बाधनेन तद्वारणं च भाष्योक्तं सूपपादमिति दिक् ) अवयवात्तदापादनपरभाष्यासङ्गतिः स्पष्टैव ।

मम तु समास एव एतत्प्रवृत्त्यावयवस्येनुणन्तत्वेनाण्विभक्तयोः प्राप्तयोर-त्यन्तस्वार्थिकत्वेनान्तरङ्गत्वात्पूर्वमणि कूटिनित्यस्यैव वृद्धिः स्यादिति तत्सङ्गतिः । एवञ्च तद्विशिष्टस्यैव ग्रहणमित्यस्य गतिकारकवाक्येन स्वविषये तदादिवा-क्यस्य बाधात् तत्रावयवस्य कृदन्तत्वप्रयुक्तकार्यं नेत्याशय इति बोध्यम् ।

**परत्वादिति ।** 'व्यावक्रोशी' इत्यादौ "कर्मव्यतिहारे णच् स्त्रियाम्" ( पा० सू० ३।३।४३ ) इति णचि "णचः स्त्रियामञ्" ( पा० सू० ५।४।१४ ) इत्यञि स्त्रीप्रत्यये तदादिनियमनिषेधात् तत्र अस्याश्चारितार्थ्यसम्भवादिति भावः । न च तदादिनियमनिषेधे समुदायादेव प्रत्ययो भविष्यतीति नास्यास्तत्र फलमिति वाच्यम्, अवयवस्यापि तदन्तत्वमादाय तस्मात् तदप्रवृत्तये एतत्परिभा-षाप्रवृत्तेरावश्यकत्वात् ।

**बाधः स्यादिति ।** तथा च कृद्ग्रहणेषु गतिकारकपूर्वस्यैव तदन्तस्य बोध्यत्वापत्त्या केवलस्य तदबोध्यत्वात् तत्र तत्तत्कार्यानापत्तिरिति भावः । **परिभाषाभ्यामिति ।** गतिकारकोपपदानामित्यस्याभावे कूटधातोः "अभिविधौ भाव इनुण्" ( पा० सू० ३।३।४४ ) इति इनुण्यनया कृदन्तत्वेऽपि समुदायस्याप्रा-तिपदिकत्वात्ततोऽणोऽप्राप्त्या कूटिन्[2] शब्दादण्प्रत्ययविभक्त्योः प्राप्तौ, स्वार्थिक-त्वेनान्तरङ्गत्वात् पूर्वमणि, ततः सुपि समासे तस्य[3] प्रातिपदिकत्वेऽपि आदिवृद्धिर्न्न स्यादिति भावः ।

---

१. 'अन्तरङ्गादणोऽपि' इत्यादितः 'इति दिक्' इत्येतत्पर्यन्तं मूलपुस्तके कोष्टके वर्तते । क० पु० च नास्ति ।

२. 'कूटि' इति पाठः क० पु० ।

३. 'समासस्य' इति पाठः क० पु० ।

**केवलकूटिन्नित्येतस्यापीनुणन्तत्वात्ततोऽणि पाक्षिकदोषो दुर्वार एव स्यात्। स्पष्टं चेदं सर्वम् "समासेऽनञ्पूर्वे" इति सूत्रे भाष्यकैयटयोः।**

**'गतिरनन्तरः' इत्यत्र तु गतेः पूर्वपदस्य क्तान्त उत्तरपदे परे कार्यविधानात्तत्समवधानेऽपि केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम्।**

**इयं च कृद्विशेषग्रहणे कृत्सामान्यग्रहणे च, न तु कृदकृद्ग्रहण इति। 'अनुपसर्जनात्' इति सूत्रे भाष्ये स्पष्टम्॥ २८॥**

---

न च परिभाषाङ्गीकारेऽप्युभयोः कृदन्त एव प्रवृत्त्या समासात्परत्वात् पूर्वमणि तदसङ्गतिदुर्वारैवेति वाच्यम्, अन्तरङ्गत्वेन पूर्वं समासस्यैव प्रवृत्तेः प्राक् सुबुत्पत्तेरित्यनेन प्रातिपदिकसंज्ञाप्रयोज्यप्रत्ययोत्पत्तेः प्रागेव समास इति नियमेन पूर्वं तदप्रवृत्तेश्च। समासविधौ गतिज्ञानम्, समर्थज्ञानञ्चेति द्वयम्। अण्विधौ तु प्रातिपदिकत्वम्, समर्थत्वम्, इनुणन्तत्वञ्चेति त्रयमिति तस्य बहिरङ्ग (त्वम्[1]) त्वेनादोषात्। न च पदद्वयाश्रितत्वेन समासस्यापि बहिरङ्गत्वं तुल्यम्, 'साङ्कूटिनम्' इति लक्ष्यानुरोधेन प्रकृते उक्तान्तरङ्गबहिरङ्गकृतबलवत्त्वस्यैव स्वीकारेणादोषात्। **दुर्वार एवेति**। कारीशब्दाढ्ढगापादनपरभाष्यप्रामाण्येन निष्कृष्यैकार्थीभावाभावेऽपि वृत्त्यङ्गीकारादिति भावः।

नन्वेवम् "गतिरनन्तरः" (पा० सू० ६।२।४९) इति सूत्रे क्तग्रहणेन गतिविशिष्टस्यैव ग्रहणात् तस्मिन्परतोऽनन्तरगतेः कार्यित्वासम्भवात् सूत्रस्यासम्भवदुक्तिकत्वापत्तिरत आहः—**गतिरनन्तर इति**। अनन्तरग्रहणसामर्थ्येनैतादृशे विषये पूर्वोक्तरीत्या वाक्यद्वयोपप्लवानङ्गीकारेण द्वितीयवाक्येन बाधासम्भवात्, केवलस्य क्तान्तत्वं सुस्थमिति बोध्यम्। एवमेव गतिकारकोपपदादित्यादावपि। **कृद्विशेषग्रहण इति**। "खित्यनव्ययस्य" (पा० सू० ६।३।६६) इत्यादौ। तेन 'कूलमुद्वहः' इत्यत्र मुम्सिद्धः। सामान्यग्रहणस्य फलन्तु 'नखनिर्भिन्नः' इति। **न तु कृदकृदिति**। तत्फलं तु "ञ्नित्यादिः०" (पा० सू० ६।१।१९७) इत्यादावस्या अप्रवृत्तिः। तेन 'दृतिहरिः' इत्यादौ न दोष इति केचित्।

अन्ये तु प्रत्ययग्रहणपरिभाषापवादत्वात् कृदकृत्साधारणप्रत्यया-[2]प्रत्ययग्रहणे इयं नेत्यर्थ इति "ञ्नित्यादिः०" (पा० सू० ६।१।१९७) इत्यत्र नास्याः प्राप्तिः। तस्मात् "अर्थवत्०" (पा० सू० १।२।४५) सूत्रस्थाप्रत्ययपदे "टिड्ढा०" (पा० सू० ४।१।१५) इति सूत्रस्थाणपदे चास्या अप्रवृत्तिरेवैतत्फलमित्याहुः। सिद्धान्ते एतन्नियमफलम्[3] विचार्यम्॥ २८॥

---

१. 'त्वम्' इति नास्ति। 'त्वेनादोषात्' इत्यादितः 'स्वीकारेणादोषात्' इत्यन्तमधिकश्च पाठः क० पु०।　　२ 'प्रत्यया' इति नास्ति क० पु०।

३. 'तु अण्णन्ते परे नियुक्तवाचिनि समासे पूर्वपदमाद्युदात्तमित्यर्थकेन "अणि नियुक्ते" (पा० सू० ६।२।७५) इति शास्त्रेण 'छत्रधारः' इत्यत्र इव 'परमछत्रधारः' इत्यत्र पूर्वपदाद्युदात्तत्वाभावः। इत्यधिकः पाठः क० पु० वर्तते। 'विचार्यम्' इति तु नास्ति।

## पदाङ्गाधिकारे तस्य तदन्तस्य च ॥ २९ ॥

**पदमङ्गं च विशेष्यं विशेषणेन च तदन्तविधिः। 'येन विधिः' इत्यस्यायं प्रपञ्चः। तेन 'इष्टकचितम्, पक्वेष्टकचितम्' इत्यादौ "इष्टकेषीकामालानां चित०" इति ह्रस्वः, 'महान्, परममहान्, परमातिमहान्' इत्यादौ "सान्तमहतः" इति दीर्घश्च सिद्धः। अत एव 'तदुत्तरपदस्य' इति पाठोऽयुक्त इति भाष्ये स्पष्टम्।**

**अत्र पदशब्देनोत्तरपदाधिकारः, केवलपदाधिकारश्च। "पादस्य पदाज्याति०"इत्यत्र न तदन्तग्रहणम्, लक्ष्यानुरोधादिति सर्वम् "येन विधिः" इत्यत्र भाष्ये स्पष्टम् ॥ २९ ॥**

**नन्वेवम् 'अस्यापत्यमिः' इत्यादावदन्तप्रातिपदिकाभावादिञ् न स्यात्, अत आह :—**

## व्यपदेशिवदेकस्मिन् ॥ ३० ॥

---

**विशेष्यमिति**। "अलुगुत्तरपदे" ( पा० सू० ६।३।१ ) इत्यधिकारे उत्तरपदेनाक्षिप्तपूर्वपदस्य "ससजुषो रुः" (पा० सू० ८।२।६६) इत्यत्राधिकृतस्य पदस्य च विशेष्यत्वमिति भावः[1]। यत्र तु पूर्वपदेऽपि न तदन्तविधिरिष्यते तत्र पूर्वपदेनैव गृह्यमाणं विशेषणीयं तदनाक्षेपो वेत्याह:—**लक्ष्यानुरोधादिति** ॥ २९ ॥

**न स्यादिति**। स्वसजातीयध्वंसासमानाधिकरणोत्पत्तिकत्वरूपमादित्वम्, स्वसजातीयप्रागभावासमानाधिकरणोत्पत्तिकत्वरूपमन्त्यत्वञ्चैकस्मिन्वर्णे न सम्भवति। तत्र स्वसजातीयस्यैवाप्रसिद्धत्वेन तत्प्रयोगिकाभावस्य सुतरामप्रसिद्धत्वात्। स्वपदमादित्वेनान्त्यत्वेनाभिमतव्यक्तिपरम्। साजात्यञ्चः—तद्घटितविवक्षितावयविघटितत्वेनेति न दोषः[2]।

ननु "येन विधिः०" ( पा० सू० १।१।७२ ) इत्यत्र तदन्तस्य चेति पाठात् स्वस्यापि ग्रहणसम्भवात् नेदं फलं युक्तम्। न चानेनैव सिद्धे तत्र च ग्रहणं व्यर्थम् 'बहुदण्डिका' इत्यादौ नलोपसिद्धये प्रातिपदिकान्तं यत्पदमिति नलोपसूत्रार्थस्यावश्यकतया 'पूर्वदण्डिप्रियः' इत्यादौ 'पूर्वदण्डिन्' इत्यस्यापदत्वेन दण्डिन्नित्येतावन्मात्रस्य तदन्तत्वाभावेन ससहायत्वेन व्यपदेशिवद्भावस्याप्यप्रवृत्त्या तत्र नलोपसिद्धये तत्र च ग्रहणस्यावश्यकत्वात्। न च पदान्तस्य प्रातिपदिकावयवस्य नस्य लोप इत्यर्थेनष्टसिद्धिः, 'पचेरन्' 'कल्पम्' इत्यादौ दोषापत्तेः।

---

१. 'अयं च तदन्तविधिरावश्यकः। अन्यथा पक्वेष्टकचितमिति समाहारे पूर्वपदत्वेऽपि स्वरापत्तिरिति बोध्यम्' इत्यधिकः पाठः क० पु०।

२. 'घटितत्वेनेति न दोषः' इत्यस्य स्थाने 'घटकत्वेनेति न बोध्यम्' इति पाठः क० पु०।

**निमित्तसद्भावाद् विशिष्टोऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्यपदेशी। यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशोऽसहायः, स तेन तुल्यं वर्तते, कार्यं प्रतीत्येकस्मिन्नसहायेऽपि तत्कार्यं कर्तव्यमित्यर्थः। तेनाकारस्याप्यदन्तत्वान्न क्षतिः।**

---

किञ्च प्रातिदिकग्रहणेषु रोणीत्यादिषु = रोणी नाम काचन, तया निर्वृत्तः कूपः, इत्यत्र चातुरर्थिकोऽण् "उदक्च विपाशः" ( पा० सू० ४।२।७४ ) इति कूपलक्षणाञोऽपवादः। अजकरोणीति काचित् तत्र "बह्वचः कूपेषु" ( पा० सू० ४।२।७३ ) इत्यञ्प्राप्तस्तदपवादोऽण्। व्यपदेशिवद्भावस्य निषेधेन तत्र 'रौणः' इति सिद्धये तत्र चग्रहणस्यावश्यकत्वेन तेनैवात्रापि सिद्धेरिति चेत्, न; आद्ये प्रातिपदिकान्तस्य पदान्तस्य नस्य लोप इत्यर्थेनादोषात्। द्वितीये धर्मिग्राहकमानबलेन सूत्रोपात्तान्तादिशब्दविषयकस्याप्रातिपदिकेनेति निषेधस्य 'रोणी' इत्यादावप्राप्त्या तत्र तदन्तस्य चेति पाठस्यानावश्यकत्वात्। अत एव तत्र तत्र प्रत्ययान्तनिमित्तककार्यस्य प्रत्ययमात्रेऽप्रवृत्तिः।

**निमित्तसद्भावादिति।** वक्ष्यमाणव्यहारप्रयोजकसहायसद्भावादित्यर्थः। विशिष्टपदार्थमाह :—**मुख्य इति।** अपदेशपदार्थमाह :—**व्यवहार इति।** शब्दप्रयोगरूप इत्यर्थः। स च द्विविधः, मुख्यो भाक्तश्चेति। यस्मिन्धर्मिणि यद्धर्मसम्बन्धाद् यो व्यवहारो नादिवृद्धपरम्परागतः स तत्र मुख्यः, तद्भिन्नो भाक्तः। यथा गवि गोशब्दप्रयोगो मुख्यः, वाहीके भाक्तः। शब्दप्रयोगरूपव्यवहारनिमित्तस्य गोत्वादेस्तत्राभावात्। एवञ्च शब्दप्रवृत्तिनिमित्तभूतधर्मसम्बन्धाद् यो मुख्यव्यवहारविषयः स व्यपदेशीत्यर्थः।

एकपदार्थमाहः—**यस्त्विति। हेत्वभावादिति।** मुख्यव्यवहारहेतुभूतधर्मसम्बन्धाभावादित्यर्थः। **अविद्यमानव्यपदेश इति।** मुख्यव्यवहाराविषय इत्यर्थः। **तेन तुल्यमिति।** इदं फलितार्थकथनम्। एकस्मिन्नित्युपमेयानुरोधेन, सप्तम्यन्तादेव वतेरौचित्यात्। व्यवहारातिदेशस्यापि कार्यार्थत्वादाह—**कार्यं प्रतीति।** नन्वेवमतस्मिन् तद्व्यवहारः कर्तव्य इत्यर्थः पर्यवसन्नः। तथा चैकग्रहणं व्यर्थम्, अतिदेशस्यारोपरूपतया तस्मिन्नित्यर्थस्यातिदेशबलादेव लासम्भवादिति चेत्, न; असहायार्थकैकपदोपादानस्यैतत्प्रति सम्बन्धित्वेनोपस्थितासहायनिष्ठव्यवहारस्यैवानेनातिदेश इति बोधनद्वारातिदिदिक्षितव्यवहारे विशेषणतया प्रयोजकस्यैवारोपाधिष्ठानत्वबोधनार्थत्वेनादोषात्।

**एकस्मिन्नित्युक्तेः 'सभासन्नयने' आकारस्य नादित्वम्, दरिद्राधाताविकारस्य नान्तत्वम् । अन्यथा 'सभासन्नयने भवः' इत्यर्थे "वृद्धाच्छः" दरिद्रातेरिवर्णान्तलक्षणोऽच्च स्यात् ।**

---

लोके 'असहायशूरः' इत्यादौ स्वप्रयोज्यकार्यप्रयोजक एव सहायशब्दप्रयोगेणासहायपदेनापि तादृशस्यैवोपस्थानात् । एवं चारुरोपयिषितव्यवहारप्रयोजकस्य स्वातिरिक्त[1]सहायरहिते आरोपाधिष्ठानरूपविशेषणसहायसाहित्यप्रयोज्यस्तत्तद् विद्ध्युपात्तः ससहायनिष्ठो यो व्यवहारः स कर्तव्य इति परिभाषार्थः । यथा 'आभ्याम्' इत्यादावारोप्यमाणादन्तत्वव्यवहारप्रयोकस्वातिरिक्तसहायरहितेऽकारे आरोपाधिष्ठानभूताकाररूपसहायसाहित्यप्रयोज्यस्य ससहायनिष्ठस्यादन्तत्वव्यवहारस्यातिदेशः । एवं 'भवति' इत्यादौ शपि परतस्तद्विधानावधिभूतप्रकृत्याद्यवयवकत्वव्यवहारस्यारुरोपयिषितत्वेन तद्व्यवहारप्रयोजकीभूतस्वातिरिक्तसहायरहितभूशब्दे तस्यातिदेशः । एवं 'धुक्' इत्यादावारुरोपयिषितधात्ववयवत्वव्यवहारप्रयोजकस्वातिरिक्तसहायरहिते दुह् शब्दे तादृशधात्ववयवत्वव्यवहारस्यातिदेश ।

न च 'हरिषु' इत्यादौ समुदायनिष्ठसुबन्तत्वरूपधर्मस्यावयवेऽनतिदेशवदवयवनिष्ठदुह् धात्ववयवत्वस्य समुदायेऽप्यतिदेशो दुर्लभ इति वाच्यम्, 'देवदत्त.' 'आभ्याम्' इत्यादौ समुदायेऽकारान्तत्वस्य सत्त्वेऽप्यङ्गेऽकारान्तत्वासम्भवेन तत्राकारान्तत्वस्यातिदेशवदत्रापि दकारादौ धात्ववयवत्वसत्त्वेऽपि वश्घटिते झषन्ते एकाच्के दुह् शब्दे धात्ववयवत्वस्याभावेन तादृशारोपाधिष्ठानरूपसहायघटितधातुरूपसमुदायावयविप्रयोज्यस्यावयवत्वस्यात्रातिदेशेनादोषात् । दकारादौ तु स्वघटितसमुदायनिरूपितावयवत्वम्, न तु निरुक्तैकाज्रूपदुह् शब्दघटितधातुरूपसमुदायनिरूपितमवयवत्वमिति न दोष । 'हरिषु' इत्यादौ तु नैवम् ।

एवम् 'इयाय' इत्यादौ अतिदिदिक्षितैकाच्त्वादिव्यवहारप्रयोजकस्वातिरिक्तसमुदायरहिते इकारेऽतिदिदिक्षितधात्ववयवत्वव्यवहारप्रयोजकस्वातिरिक्तावयि[2]रहितेऽवयवत्वस्य[3] एकाच्त्वस्य धात्ववयवत्वस्य प्रथमत्वस्य चातिदेशः । रामशब्दे जराशब्दत्वस्य तदन्तत्वस्य वा नातिदेशः । तस्यारोपाधिष्ठानरूपरामशब्दसहायसाहित्यप्रयोज्यत्वाभावात् । न चारोपाधिष्ठानभूतरामशब्दस्य रामजरेत्यत्र जराशब्दान्तत्वव्यवहारप्रयोजकत्वादतिदेशो दुर्वार इति वाच्यम्, आरोपाधिष्ठानभूतरामशब्दस्योक्तव्यवहारे विशेषणतया प्रयोजकत्वासम्भवात् ।

**नादित्वमिति ।** एकस्मिन्नित्यस्याभावे[4] हि तत्तन्मुख्यव्यवहाराभाववति तद्वद् व्यवहारः कर्त्तव्य इत्यर्थः स्यात् । तथा च सभासन्नयनशब्दघटकाकारे तद्-

---

१. 'अतिरिक्त' इति पाठः क० पु० ।
२. 'अवयव' इति पाठः क० पु० ।
३. 'अवयवत्व'य' इति नास्ति क० पु० ।
४. 'इत्यस्य भावे' इति पाठः क० पु० ।

**अत एव 'हरिषु' इत्यादौ सोः पदत्वं न। लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठकनिष्ठत्वादिव्यवहारोऽयं मे ज्येष्ठः, कनिष्ठः, मध्यम इति, किन्त्वेकपुत्रसत्त्व एव।**

**अनेन चाशास्त्रीयस्याप्यतिदेशः। अत एव 'इयाय' इत्यादावेकाच्त्वनिबन्धनद्वित्वसिद्धिः। अत एव 'भवति' इत्यादौ 'भू' इत्यस्याङ्गत्वम्, 'इयान्' इत्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वं च सिद्ध्यति। अन्यथा यस्माद्विहितस्तदादित्वाभावान्न स्यात्।**

---

घटकयावदजवधिकादित्वाभाववति तादृशादित्वस्य, तथा दरिद्राधातुसम्बन्धीकारे तद्धात्वन्त्यत्वाभाववति तत्त्वस्यातिदेशापत्तिः। कृते त्वेकग्रहणे न दोषः, आरुरोपयिषितयावदजवधिकादित्वव्यवहारे विशेषणतया प्रयोजकस्य यावदजन्तःपातिनः आरोपाधिष्ठानातिरिक्तस्य सकाराकारस्य सत्त्वात्। एवं दरिद्राधातुसम्बन्धीकारे आरुरोपयिषिततद्धात्वन्त्यत्वं व्यवहारे विशेषणतया प्रयोजकस्य दकारादिरूपसहायस्यातिरिक्तस्य सत्त्वात्।

अत एव स्वसजातीयपुत्रान्तराभाववति एकस्मिन् ज्येष्ठकनिष्ठत्वादिव्यवहारवत् ज्येष्ठे कनिष्ठत्वव्यवहारः, कनिष्ठे ज्येष्ठत्वव्यवहारो वा न। अत एवेषधातावजन्तत्वस्य हलादित्वस्य च नातिदेशः। एवम् 'अटिटिषति' इत्यादौ प्रथमैकाचि द्वितीयैकाच्त्वस्य नातिदेशः। तथा इकाररूपे प्रातिपदिके इकारान्तधातुत्वस्य नातिदेशः। इकारान्तत्वस्येव तदन्तधातुत्वस्यारोपाधिष्ठानभूतैकाररूपविशेषणसहायसाहित्यप्रयोज्यत्वाभावात्।

न चेकारान्तत्वसमानाधिकरणधातुत्वरूपविशिष्टधर्माभाववति 'हरि'शब्दे आरोपाधिष्ठानभूतेकारान्तरूपविशेषणप्रयोज्यस्योक्तधर्मस्यातिदेशापत्तिरिति वाच्यम्, साहित्यस्य भेदगर्भितत्वेनेकारान्तधातुत्वस्याभेदातिरिक्तसम्बन्धेनेकारान्तसाहित्यप्रयोज्यत्वाभावात्।

न च 'कुरुतः' इत्यादावेकस्मिन्नेवाकारेऽन्त्यत्वादित्वयोरतिदेशेन टिसंज्ञावत् 'दधि' 'मधु' इत्यत्रेकारोकारयोः स्वनिरूपितपरत्वस्यातिदेशेन सवर्णदीर्घापत्तिरिति वाच्यम्, तत्र तत्र तत्तन्निमित्तोपादानसामर्थ्येनेदृशे विषयेऽतिदेशानङ्गीकारात्। अत एव 'षडन्यिकः' इत्यत्र ठञ्प्रवृत्तिप्रयोजकीभूतस्य बह्वच्पूर्वपदकत्वव्यवहारस्य नातिदेशः।

केचित्तु तत्तद्विध्युपात्तस्वविष्टवाचक[1]पदबोध्यस्य स्वनिरूपितस्वविशिष्ट[2]निष्ठधर्मस्य स्वस्मिन्नतिदेशाद्रामशब्दे न जराशब्दत्वस्यातिदेशः, नापीकारान्तधातुत्वस्येकाररूपे प्रातिपदिकेऽतिदेश इत्याहुः।

**तद्धितान्तत्वेति**। अत्र प्रत्यये प्रथमं स्वप्रकृतित्वस्य ततस्तदन्तत्वस्यातिदेश

---

१. 'वाचके' इति पाठः क० पु०।　　　　२. 'विशिष्टः' इति पाठः क० पु०।

**यत्तु योऽर्थवांस्तत्रार्थस्य त्यागोपादानाभ्यामेकाज्व्यपदेशः, यथा 'इयाय' इत्यादावर्थवतो धातोरयं वर्णरूप एकोऽजिति कैयटः, तन्न; तस्य 'एकपदा ऋक्' इत्यत्र भाष्योक्तरीत्या मुख्यव्यवहारसत्त्वात् । "एकपदा ऋक्' इत्यत्रार्थेन युक्तो व्यपदेशः" इति भाष्ये उक्तम् । ऋक्त्वादेरर्थशब्दोभयवृत्तित्वेन तस्याः शब्दमात्ररूपं पदमेकोऽवयव इत्यर्थ इति तदाशयः ।**

**तस्मादेकस्मिंस्तत्तद्धर्मारोपेण युगपद् यथा ज्येष्ठत्वादिव्यवहारः,**

---

इति न दोष इति भावः । **त्यागोपादानाभ्यामिति ।** 'इयाय' इत्यादावेकस्यैवेकारस्य वर्तिपदार्थान्यिपदार्थत्वयोरसम्भवेनैकाजिति व्यवहारानुपपत्तिप्रसङ्गेन तदुपपत्तयेऽच्पदबोध्यवर्तिपदार्थत्वेन विवक्षायामिकारस्य वस्तुतोऽर्थवत्त्वेऽपि तद्विशिष्टस्य वर्तिपदार्थत्वेन न विवक्षा । किन्तु केवलवर्णस्यैवाच्पदस्यार्थविशिष्टवर्णबोधकत्वनियमाभावात् । अन्यपदार्थत्वं तु अर्थवत्त्वेन विवक्षितशब्दस्वरूपस्यैवेति भावः । एवञ्चार्थत्यागोपादानाभ्यामित्यस्य विवक्षाविवक्षाभ्यामित्यर्थः ।

न चैवं दरिद्राधातौ दशब्दस्यानर्थकत्वेन द्वित्वानापत्तिरिति वाच्यम्, एकाज्विशिष्टबोधकैकाच्पदेनेणधातावन्यपदार्थान्तराभावेनार्थविशिष्टस्य तस्यैवान्यपदार्थत्वेनग्रहणेऽपि[1] सर्वत्र तादृशस्यैव ग्रहणे मानाभावात् । **तस्येति ।** अर्थत्यागोपादानलक्षणैकाज्व्यपदेशस्येत्यर्थः । **मुख्यव्यवहारसत्त्वादिति ।** मुख्यव्यवहारविषयत्वादित्यर्थः ।

अस्मिन्न्याये 'एकपदा ऋक्' इति लोकव्यवहार एव मूलमित्युक्त्वोक्तरीत्या तत्र मुख्यव्यवहारोपपत्तिसम्भवेन गौणव्यवहारे नेदं साधकमिति ज्येष्ठादिदृष्टान्तान्तरमुपन्यस्तम् । एवञ्च 'इयाय' इत्यादेर्भाष्यस्थ[2]'व्यपदेशिवत्०' (परि० ३०) इति न्यासप्रयोजनस्येत्थं व्याख्याने तत्र परिभाषायोजनं कैय्यटीयमयुक्तमिति भावः । यद्वा तस्येत्यत्राधिकरणस्य शेषत्वविवक्षया षष्ठी अर्थत्यागोपादानविषय इत्यर्थः ।

नन्वेवं रीत्यैव निर्वाहे भाष्ये कथं न्यासप्रयोजनत्वेनास्योपन्यास इति चेच्छृणु—एकाजित्यत्र विशेष्यभूतस्य शब्दस्वरूपस्य ऋगादिपदवदर्थवदुपस्थापकत्वनियमाभावादर्थोपस्थितेरसम्भवात्, तद्वत् अत्रोपपत्त्यसम्भव इति भावः । किञ्च तत्र प्रथमत्वस्यातिदेशेनैव वक्तव्यतया तदर्थं तत्रातिदेशव्यापारस्यावश्यकतया तेनैवैकाच्त्वस्याप्यतिदेशसिद्ध्या तदर्थं यत्नान्तरं नाश्रयणीयमित्याशयात् । **तस्मात्** = भाष्यासाङ्गत्यादित्यर्थः ।

ननु ज्येष्ठादिदृष्टान्तेन स्वसजातीयावधिकप्रथमत्वादेरेकस्मिन्नतिदेशाङ्गी-

---

१ 'प्रतिलक्ष्यं लक्षणोपप्लवे तत्तद्विषयकलक्षणान्तरस्यैव कल्पनात्' इत्यधिकः पाठः क. पु ।

२. '·य' इत्यधिकः पाठः क० पु० ।

**यथा च 'शिलापुत्रकस्य शरीरम्' इत्यादावेकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वाद्यारोपेणैतस्य शरीरमित्यादिव्यवहारः, तथात्रैकाच्त्वादिव्यवहारोपपत्तिरिति लोकन्यायसिद्धेयम् ।**

**न चासहाय एवैतत्प्रवृत्तौ भवतीत्यत्र 'भू' इत्यस्याङ्गत्वानापत्तिः, ससहायत्वादिति वाच्यम्, शपमादायाङ्गत्वे कार्ये यस्माद् विहितस्तदादित्वे तस्य ससहायत्वाभावाल्लोके विजातीयकन्यादिसत्त्वेऽप्येकपुत्रस्य तस्मिन्नेवायमेव ज्येष्ठ इत्यादिव्यवहारवत् ।**

**न चैवम् 'निजौ चत्वार एकाचः' इति भाष्यासङ्गतिः, इकारस्यासहायत्वाभावेन तत्रैकाच्त्वानुपपादनादिति वाच्यम्, 'एकस्मिन्' इत्यस्यापर्यालोचनया तत्प्रवृत्तेः ।**

---

कारेऽपि भेदगर्भितैकाच्त्वव्यवहारादेस्तेनातिदेशे मानाभावेन 'इयाय' इत्यत्रैकाच्त्वातिदेशासम्भवात् कैयटोक्तरीतिरेव तत्र युक्तेत्यतो दृष्टान्तान्तरमाहः— **यथा चेति । आरोपितानेकावस्थाभिरिति ।** अवस्थापदेन प्राणिनिष्ठा वयःकृता वालत्वादयो धर्मा उच्यन्ते । प्रतिमास्वयं वालः, अयं वृद्धः, इत्यादिव्यवहारदर्शनेन तासां प्रतिमाभेदेनारोपवदेकस्यामेव प्रतिमायां शिल्पकौशलाभिव्यङ्ग्यभावभेदावगमेन वालत्वाद्यनेकावस्थारोपस्यावश्यकतया तत्रारोपितावस्थागतसमुदायत्वस्य तदाश्रये आरोपेण तादृशानेकावस्थाविशिष्टसमुदायरूपस्य शिलापुत्रकस्येदमेकावस्था युक्तम्, तत्समुदायघटकं शरीरमिति व्यवहारवदेकस्मिन्नेवेण्धातौ वर्तमान[1]-प्रयोगभेदौपाधिक[2] लिट्परकत्वतिप्परकत्वाद्यनेकधर्मगत[3] समुदायत्वस्यारोपेणैकाच्त्वादिव्यवहार इति भावः ।

न चैकस्मिन्नेव शिलापुत्रकेऽनारोपितक्रीयमाणत्वविक्रीयमाणत्वाद्यनेकावस्थागतसमुदायत्वारोपेणैवोपपत्तिसम्भवेऽवस्थारोपोक्तिर्व्यर्थेति वाच्यम्, लोके वाल्याद्यवस्थावत एव शरीरपदवाच्यत्वेन प्रसिद्ध्या शिलापुत्रकस्य शरीरमित्यादिव्यवहारोपपत्तये तदारोपोक्तेरुचितत्वात् ।

**आदायेति ।** निमित्तीकृत्येत्यर्थः । **विजातीयेति ।** निमित्तत्वेन शपस्तत्राश्रयण[4]काले तस्य कार्यिकोटौ निवेशासम्भवाद्विजातीयसहायत्वस्याप्रतिबन्धकत्वमिति भावः । **अपर्यालोचनयेति ।** यस्य यत्र मुख्यव्यवहारप्रयोजकता तस्यैव तत्र गौणव्यवहारप्रयोजकतानभ्युपगमादिति भावः ।

केचित्तु यस्मिन्धर्मिणि येन सम्बन्धेन यत्सत्ता यादृशव्यवहारप्रयोजिका तेन सम्बन्धेन तदभावप्रयोज्यतादृशव्यवहाराभाववति तद्व्यवहारातिदेशः । एवञ्च

---

१. 'वर्तमान' इति नास्ति क० पु० ।　　२. 'भेदौपाधिकस्य' इति पाठः क० पु० ।
३. 'स्य वा' इत्यधिकः पाठः क० पु० ।　　४. 'आश्रयेण' इति पाठः क० पु० ।

**अर्थवता व्यपदेशिवद्भाव इत्यत्रार्थवत्पदेनाप्यसहायत्वमुपलक्ष्यते। अर्थबोधकेन शब्देन व्यपदेशिसदृशो भावः कार्यं लभ्यत इति तदर्थः, प्रायोऽसहाय एवार्थवत्त्वात्। 'कुरुते' इत्यादौ तशब्दाकारोऽचामन्त्य इति व्यवहारे स आदिर्यस्येति व्यवहारे चासहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धि-रित्यन्यत्र विस्तरः॥ ३०॥**

**ननु गर्गादिभ्यो विहितो यञ् तदन्तविधिना परमगर्गादिभ्योऽपि स्यात्, अत आहः—**

**ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति॥ ३१॥**

**इयं च 'समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रहणवर्जम्' इति वार्त्ति-कस्थप्रत्ययांशानुवादः। अत एवायं प्रत्ययविधिविषय एव। अत एव "येन विधिः"**

---

निजित्यत्रेव तदेकदेशभूते इकारे एकाच्[1] इति व्यवहारप्रयोजकसम्बन्धेनाचोऽ-भावात्तदतिदेशस्सुलभः।

न चैवम् 'हरिषु' इत्यत्र स्वप्रकृत्याद्यवयवकसमुदायघटकत्वसम्बन्धेन[2] सुप्रत्ययाभावेन तत्र सुबन्तस्याप्यतिदेशापत्तिरिति वाच्यम्, एकस्मिन्पुत्रे ज्येष्ठ-त्वादिव्यवहारवत् कनिष्ठे तद्व्यवहाराभावेन स्वप्रयोज्यव्यवहारप्रयोजकद्वितीया-भाववतीव तादृशद्वितीयसत्ताप्रयोज्यतदभाववति तद्व्यवहारानतिदेशात्। यथैकस्मिन् स्वसजातीयानुजाभावप्रयोज्यो[3] ज्येष्ठत्वाभावः, नैवं कनिष्ठेऽनुजाभाव-प्रयोज्यस्तदभावः, किन्तु ज्येष्ठसत्ताप्रयोज्यस्तदभावः। तद्वत् 'हरिषु' इत्यत्र न स्वप्रप्रयोज्यव्यवहारप्रयोजकप्रकृत्यादिसहायाभावप्रयोज्यतदभाववत्त्वम्, किन्तु तादृशप्रकृतिसत्ताप्रयोज्यतदभाववत्त्वमिति न तत्र तदतिदेश इत्याहुः।

**उपलक्ष्यत इति।** न तु कैय्यटोक्तार्थत्यागोपादानमित्यर्थः। अचामन्त्य इति व्यवहारः प्रकृतिमादायापि सुलभ इत्यत आहः—**आदीति।** तत्र तशब्दाकारे इत्यर्थः॥ ३०॥

**अनुवाद इति।** अस्या अपूर्वत्वे गौरवात्फलाभावाच्चेत्यर्थः[4]। नन्वस्या-स्तदनुवादकत्वेन प्रत्ययविधिविषयकत्वेन सङ्कोचकल्पने न मानमत आहः—**अत एव येनेति।** ननु "अप्तृन्०" (पा० सू० ६।४।११) इति सूत्रे सर्वनाम-

---

१. एकाच्क' इति पाठः क० पु०। २. 'सुप्रत्यये' इत्यधिकः पाठः क० पु०।

३. 'प्रयोज्य' इति पाठः क० पु०।

४. 'वस्तुतः सम्पूर्णवार्तिकस्यैवानुवादकत्वकल्पनं युक्तम्। अत एव "कर्तृकरणे कृता०" (पा० सू० २।१।३२) इत्यादौ "समासप्र०" (का० वा० १।१।७२) इति निषेध-बाधनात् सामर्थ्याश्रयक्लेशो न' इत्यधिकः पाठः क० पु०।

**इति सूत्रभाष्ये प्रत्ययविधिभिन्ने "अप्तृन्" इत्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्तविधिप्रतिपादनम् 'स्वसा, परमस्वसा' इत्याद्युदाहरणञ्च सङ्गच्छते ।**

**अत एव च तदन्तविधिसूत्रे भाष्ये समासेत्यादिनिषेधस्य कथनवदस्य न कथनम् । सोऽपि निषेधो विशिष्य तत्तद्रूपेण गृहीतप्रातिपदिकसूत्र एव । ध्वनितं चेदम् "असमासे निष्कादिभ्यः" इति सूत्रे भाष्ये ।**

**अत्र च ज्ञापकम् "सपूर्वाच्च" इति सूत्रम् । अन्यथा "पूर्वादिनिः" इत्यत्र तदन्तविधिनैव सिद्धे किं तेन ॥३१॥**

---

स्थाने इत्यस्य विहितविशेषणत्वे मानाभावेन 'परमस्वसा' इत्यादौ तदन्तविध्यभावेऽपि न दोष इत्यरुचेराह:—**अत एव चेति** । ननु वार्त्तिकस्य गृह्यमाणतद्भिन्नप्रातिपदिकोभयसाधारणतया "वनोरच" (पा० सू० ४।१।७) इत्यत्रापि प्रवृत्तेः कथमस्य तदनुवादकत्वमत आह:—**सोपीति** । अपिरेतत्समुच्चायकः । **विशिष्य—** इत्यस्य तात्पर्यमाह:—**तत्तदिति** ।

अत्र मानमाह:—**ध्वनितमिति** । तत्र हि ग्रहणवतेति निषेधान्निष्कान्ताट्ठकोऽप्राप्त्याऽसमासग्रहणस्येतः प्राग्वति "प्राग्वतेष्ठञ्" ( पा० सू० ५।१।१८ ) इत्यत्र तदन्तविधिज्ञापकत्वमुपन्यस्य गृह्यमाणप्रातिपदिकविषयस्य निषेधस्यात्र सूत्रेऽप्राप्त्या तत्र तदन्तविधिज्ञापने फलाभावात् । "आर्हात्०" ( पा० सू० ५।१।१९ ) इति सूत्रे गृह्यमाणगोपुच्छादिविषये तदन्तविधिज्ञापकत्वमुक्त्वा तत्फलत्वेन 'पारमगोपुच्छिकम्' इत्यत्र ठको निषेधमुक्त्वा, एतदपि नास्ति प्रयोजनम्, प्रत्ययविधौ प्रतिषेधः, प्रतिषेधश्चायमित्युक्त्वा जात्यन्तपरराजमाषशब्दे कल्पितार्थमादाय माषशब्दस्याप्यर्थवत्त्वात्, "खलयव०" ( पा० सू०-५।१।७ ) इति सूत्रे तदन्तविधिना 'राजमाष्यम्' इत्यत्र यत्प्रत्ययसिद्धये तदित्युक्तम् । एवञ्चैतयोर्भिन्नविषयत्वे उक्तभाष्यासङ्गतिरिति भावः ।

अत्र ग्रहणवत्त्वञ्च न साक्षादुपात्तत्वम्, किन्तु प्रातिपदिकत्वव्याप्यधर्मवदुपस्थापकत्वम् । तेन "गर्गादिभ्यः०" ( पा० सू० ४।१।१०५ ) इत्यत्रादिपदेन गृह्यमाणप्रातिपदिके "नक्षत्रेण युक्तः०" ( पा० सू० ४।२।३ ) इत्यादौ न दोषः[1] । तथा च "अत इञ्" ( पा० सू० ४।१।९५ ) इत्यत्र तदन्तविधिः सिद्ध इति "उगिद्वर्ण०" ( का० वा० १।१।७२ ) इत्यत्र वर्णग्रहणं नापूर्वमिति बोध्यम् । **सूत्रमिति** । न च 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' ( परि० ३२ ) इति निषेधात्केवलपूर्वशब्दे तदन्ते च सिद्ध्यर्थं सूत्रद्वयमप्यावश्यकमिति वाच्यम्, तस्य

---

१. 'अत एव अस्यापत्यम्—इरित्यत्र प्रत्ययस्य प्रातिपदिकत्वेऽपि फञ्विधौ "यञञोश्च" ( पा० सू० २ ४।६४ ) इत्यादौ नानेन निषेधः, "वृद्धाच्छः" ( पा० सू० ४।२।११४ ) इत्यादौ न दोषः, तथापूर्वमेवोक्तम्' इत्यधिक. पाठः क० पु० ।

नन्वेवम् "सूत्रान्ताट्ठक्" "दशान्ताड्डः" "एकगोपूर्वात्" इत्यादेः केवलसूत्रशब्ददशन्शब्दैकशब्दादिष्वपि प्रवृत्तिर्व्यपदेशिवद्भावात् स्यात्, अत आह:—

**व्यपदेशिवद्भावोऽप्रातिपदिकेन ।। ३२ ।।**

"पूर्वात्सपूर्वादिनिः" इत्येकयोग एव कर्त्तव्ये पृथग् योगकरणमस्या ज्ञापकम् । न च "इष्टादिभ्यः" इति सूत्रेऽनुवृत्त्यर्थं तथा पाठः, अत एवानिष्टीत्यादिसिद्धिरिति वाच्यम्, ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात्, एकयोगेऽपि तावत उत्तरत्रानुवृत्तौ बाधकाभावाच्च ।

अत एव "नान्तादसङ्ख्यादेः" इति चरितार्थम् । अन्यथा 'पञ्चमः' इत्यादावपि व्यपदेशिवद्भावेन सङ्ख्यादित्वात् तद्वैयर्थ्यं स्पष्टमेव ।

इयं च प्रातिपदिकग्रहणे एव, न तु प्रातिपदिकाप्रातिपदिकग्रहणे । तेन "उगितश्च" इत्यत्र न दोष इति तत्रैव भाष्ये स्पष्टम् । इयम् 'ग्रहणवता' इति च परिभाषा प्रत्ययविधिविषयैवेति "असमासे निष्कादिभ्यः" इति सूत्रे भाष्यकैयटयोः ।

---

निषेधस्य सूत्रोपात्तान्तादिशब्दविषयकत्वेनादोषात्[1] ।

न चैवमपि परमगर्गस्यापत्यमित्यत्र समुदायात्तदसम्भवेऽप्यवयवात्तदापत्तिर्दुर्वारैवेति वाच्यम्, सत्यभिधाने इष्टापत्तेः । "येन विधिः०" (पा. सू. १।१।७२) इत्यत्र 'सौत्रनाडिः' इति भाष्यप्रयोगेण निष्कृष्यैकार्थीभावाभावेऽपि वृत्त्यङ्गीकारस्य क्वाचित्कत्वबोधनाच्च[2] ।। ३१ ।।

**अनिष्टत्वादिति** । पूर्वान्तादित्येव सिद्धे "पूर्वात्सपूर्वात्०" इति पृथग्योगकरणमनुवृत्त्यर्थम् । तथा चैकयोग एव कर्त्तव्ये इत्यनुपपन्नमत आह:— **एकयोगेपीति**[3] । **अत एवेति** । परिभाषाङ्गीकारादेवेत्यर्थः । **तद्वैय्यर्थ्यमिति** । सूत्रवैय्यर्थ्यमित्यर्थः । **"उगितश्च"** ( पा० सू० ४।१।६ ) **इति** । अत एव 'इयती इत्यादौ ङीप्सिद्धिः । **प्रत्ययविधिविषयैवेति** । न चैवमट[4] आगमत्वेनास्यास्त-

---

१. 'अत एव रोणीत्यादौ तदन्तविधिः । एवञ्च अस्याप्रत्ययविधिविषयत्वम्, गृह्यमाणप्रातिपदिकविषयत्वञ्च न कल्पनीयमित्याहुः' इत्यधिकः पाठः क० पु० ।

२. 'केचित्तु—इयं परिभाषा निष्फला । "समासप्रत्यय०" (का० वा० १।१।७२) इति वार्तिकं तु अपूर्वमेवेति "गर्गादिभ्यः०" ( पा० सू० ४।१।१०५ ) इत्यादौ न दोषः । "यञश्च" (पा०सू० ४।१।१६) इत्यादिप्रत्ययग्रहणेषु तु तदन्तविधिर्भवत्येव । तत्र "समासप्र०" (का०वा० १।१७२) इति निषेधस्य परत्वात् प्रत्ययग्रहणपरिभाषया बाधाङ्गीकारात् । "उगिद्वर्ण०" ( का० वा० १।१७२ ) इति—अपूर्वमेवेति न क्वापि दोष इत्याहुः' । इत्यधिकः पाठः क० पु० ।

३. 'अनिष्टत्वात्' इत्यादितः 'एकयोगेऽपीति' इत्येतत्पर्यन्तं नास्ति क० पु० ।

४. 'च चैवमटि' इति पाठः क० पु० ।

**तेन "अहन्" इत्यादेः परमाहन्शब्दे केवलाहन्शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः ॥ ३२ ॥**

**ननु "वान्तो यि" इत्यादौ यादौ प्रत्यय इत्यर्थः कथम्? अत आह:—**

**यस्मिन्विधिस्तदादावल्ग्रहणे ॥ ३३ ॥**

**तदन्तविधेरपवाद इयम् ।**

---

द्विषयेऽप्राप्त्या एतत्प्रवृत्त्या तच्चारितार्थ्योक्तिरयुक्तेति वाच्यम्, प्रत्ययविधिशब्दस्य प्रत्ययाधिकारविहितभावरूपविधिपरत्वेनादोषात् । भावरूपेत्यस्य फलं तु विधौ[1] प्रतिषेधः । प्रतिषेधश्चायमिति भाष्यविरोधाभाव इति बोध्यम् ।

अत एव "षष्ठ्यादेश्चा०" ( पा० सू० ५।२।५८ ) इति सूत्रेऽसङ्ख्यादिग्रहणव्यावर्त्यत्वेनैकषष्ठ इत्युपन्यस्य तत्र 'ग्रहणवता०' ( परि० ३१ ) इति तदन्तविधिप्रतिषेधात्तमटोऽप्राप्त्याऽसङ्ख्यादिग्रहणस्य वैय्यर्थ्यमुक्त्वा, तेन भवतीह प्रकरणे तदन्तविधिरित्युक्त्वा "एकविंशतितमः इति रूपसिद्धिस्तत्फलमिति भाष्योक्तं सङ्गच्छते । अन्यथा तमट आगमत्वेन तत्र 'ग्रहणवता०' ( परि० ३१ ) इति निषेधाप्राप्त्या तेन तद्वैय्यर्थ्यापादनस्य 'एकविंशतितमः' इति तज्ज्ञाप्यतदन्तविधिफलस्य चासङ्गतिः स्पष्टैव ।

न चैवम् 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' ( परि०३२ ) इत्यस्य तमड्विषयेऽपि प्रवृत्त्यापत्त्या 'विंशतितमः' इति रूपासिद्धिरिति वाच्यम्, तस्य[2] सूत्रोपात्तान्तादिशब्दविषयकत्वेनादोषात् । **तेनेति** । 'ग्रहणवता०' ( परि० ३१ ) इति निषेधस्य प्रत्ययाधिकारविहितविधिविषयत्वाङ्गीकारेणेत्यर्थः । वक्ष्यमाणफलस्यैतद्विषय एव सम्भवाद् द्वितीयायाः प्रत्ययविधिविषयत्वोक्तिस्तत्स्वरूपकथनमात्रम्, सूत्रोपात्तान्तादिशब्दविषयकत्वेनास्या अहन्शब्दविषयेऽप्राप्तेस्तथा सङ्कोचकल्पने फलाभावादित्यलम् ॥ ३२ ॥

**कथमिति** । यान्त इत्यर्थापादनं तु न कृतम्, असम्भवात् । न च गोमयमत्तीति 'गोमयात्' इति विडन्ताण्णिचि, टिलोपे 'गोमायकः' इत्यत्र तत्सम्भव इति वाच्यम्, टिलोपस्य बहिरङ्गत्वेनासिद्धत्वेन तदसम्भवात् । "येन विधिः०" ( पा० सू० १।१।७२ ) इति सूत्रस्य "अचो यत्" ( पा० सू० ३।१।९७ ) इत्यादौ विशेषणवाचकस्याच्पदस्यैव विशेषणान्ते शक्तिग्राहकतया तदपवादत्वेनास्य तत्र पाठात्, अत्रत्ययच्छब्देन विशेषणवाचकस्यैव परामर्श इति द्योतयितुमाह— **अपवाद इयमिति** । गृह्यतेऽनेनेति ग्रहणमलो ग्रहणमल्ग्रहणम्, वर्णबोधकेऽलादिपदे इत्यर्थः, न तु वर्णनिर्देशे इत्यर्थः । अचीत्यादिप्रत्याहारग्रहणे दोषापत्तेः, इकोऽचि व्यञ्जने मा भूदित्यत्र व्यञ्जनादाविति भाष्योक्तिविरोधाच्च ।

---

१. 'विधम्' इति पाठः क० पु० ।　　२. 'तत्' इत्यधिकः पाठः क० पु० ।

**वाचनिक्येषा "येन विधिः" इत्यत्र भाष्ये पठिता। अस्याश्च स्वरूपसती सप्तमी निमित्तम्। अत एव "नेड् वशि कृति" इत्यादौ वशादेः कृत इत्याद्यर्थलाभः।**

---

अत्र यस्मिन् इति सत्सप्तमी,[1] सा च प्रत्यासत्त्या विशेषणार्थकानां सप्तम्यन्तानामेव पदानां बुद्धिस्थत्वस्फोरणाय। "तस्मिन्०" (पा० सू०१।१।६६) इति सूत्रे इवात्रेति शब्दाभावेन सप्तम्यन्तार्थपरत्वासम्भवात्, अल्ग्राहक इत्यर्थकाल्ग्रहण इत्यनेनान्वयासम्भवाच्च। तदादावित्यत्र तच्छब्देन तु यच्छब्दबोध्यसप्तम्यन्तपदार्थस्य परामर्शः। तदादावित्यत्रापि सत्सप्तमी, तथा चाल्बोधकविशेषणवाचकपदे सति यो विधिः स तादृशालादिसमुदाये सति भवति न तु तदन्तसमुदाये इति परिभाषार्थः। विशेषणस्यालरूपत्वं त्वार्थिकम्, ततश्च सप्तमीनिर्दिष्टं विशेषणीभूताल्बोधकं तदादेर्बोधकमिति फलितोऽर्थः।

नन्वत्र पक्षे सत्सप्तम्या ज्ञापकत्वार्थकतया विशेषणीभूताल्बोधकसप्तम्यन्तपदप्रयोज्यं यत्कार्यं तत्तादृशालादिसमुदाये सति भवतीति वाक्यार्थः पर्यवसन्नः। स चायुक्तः, तत्तत्सप्तम्यन्तार्थस्य तत्तल्लक्ष्यस्थस्य तत्तल्लक्ष्ये जायमानकार्यं प्रति प्रयोजकत्वेऽपि शास्त्रस्थतादृशपदसत्ताया लक्ष्ये जायमानकार्यप्रयोजकत्वासम्भवेन अत्र यच्छब्दस्य पदपरत्वेन सत्सप्तम्या असम्भवादिति चेत्, न; पदसमुदायात्मकशास्त्रस्य कार्यं प्रति प्रयोजकत्वेन तद्घटकपदस्यापि प्रयोजकत्वसम्भव इत्याशयात्।

केचित्तु एतस्मिन्वाक्ये उपात्तयोर्यत्तच्छब्दयोर्विभिन्नार्थकत्वानौचित्यान्नायं परिभाषार्थः, किन्तु अल्ग्रहण इत्यत्र कर्मणि ल्युट्, अल् चासौ ग्रहणश्चेति कर्मधारयः। निपातनाद् विशेषणस्य परनिपातः। यच्छब्दो निखिलसप्तम्यन्तार्थविशेषणबोधकः। तदादावित्यत्र तत्पदेन यत्पदोपस्थितसप्तम्यन्तार्थस्य परामर्शः।

एवञ्च तत्तद्विधिशास्त्रघटकसप्तम्यन्तवाच्यविशेषणरूपे तत्तल्लक्ष्ये गृह्यमाणे उच्चार्यमाणेऽलि वर्णे सति यो विधिस्तत्प्रयोज्यं यत्कार्यं तत् तादृशालादिसमुदाये सति भवतीत्यर्थ इत्याहुः।

**वाचनिकीति**। केचित्तु "गुणोऽपृक्त०" (पा० सू० ७।३।९१) इति सूत्रस्थापृक्तग्रहणमत्र ज्ञापकम्। तद् हि 'ऊर्णोति' इत्यत्र गुणव्यावृत्तये। असत्यामस्यामनुवृत्तहलीत्यस्य विशेषणत्वात्तदन्तविधौ तत्र तदप्राप्त्या तद्व्यर्थं स्यादित्याहुः।

**स्वरूपसतीति**। न त्वौपश्लेषिकसप्तमीत्यर्थः। **प्रवर्तत इति**। न च

---

१. 'नत्वौपश्लेषिकी। "नेड्वशि०" (पा० सू० ७।२।८) इत्यादौ तदभावात्' इत्यधिकः पाठः क० पु०।

**इयं च "आर्धधातुकस्येड्" इति सूत्रे वलादेरित्यादिग्रहणसामर्थ्याद् विशेष्यविशेषणयोरुभयोः सप्तम्यन्तत्व एव प्रवर्तते। तेन "ङः सि धुट्" इत्यादौ सादेः पदस्येति नार्थः। "तीष्सह," "सेऽसिचि" इत्यादौ यथा तादेरित्याद्यर्थलाभः, तथा शब्देन्दुशेखरे निरूपितम्॥ ३३॥**

---

"येन विधिः०" ( पा० सू० १।१।७२ ) इत्यस्य विभक्तिकविशेषणेऽप्रवृत्त्या तदपवादत्वेन तत्समानविषयकत्वेनास्या अपि तादृशे विशेषणेऽप्राप्त्याऽऽदिग्रहण-मावश्यकमिति वाच्यम्, समानाधिकरणविशेषणेषु तदन्तविधेः प्रवृत्त्यात्रापि वलीत्यस्य षष्ठ्यर्थकत्वेनादोषात्। आदिग्रहणाभावे वल्परकार्धधातुकस्येडित्यर्था-पादनं तु न कृतम्, 'शयितरि' इति निर्देशात्। **नार्थ इति।** सान्तस्येत्यपि नार्थः, असम्भवात्, "श्चुत्वं धुटि०"(का०वा० ८।२।१) इति वार्तिकस्य वैयर्थ्यापत्तेश्च[1]।

**निरूपितमिति।** वलादेरित्यनुवृत्त्या विशेषणीभूतवल्पदार्थस्य तकारेण विशेषणात्तकाररूपो यो वल् तदादेरित्येवं प्रकारेणेत्यर्थः। न च तकारपरकेच्छ-त्यादेः परस्यार्धधातुकस्येत्यर्थेन न दोष इति वाच्यम्, तुल्यन्यायेन वल्परकाङ्गा-त्परस्यार्धधातुकस्येत्यर्थेनेष्टसिद्ध्यादिग्रहण[2]-वैयर्थ्यस्य तादवस्थ्यापत्तेः। न च "नेड्वशि०" ( पा० सू० ७।२।८ ) इत्यत्रैव वल्यार्धधातुकस्येति न्यासेनेष्टसिद्ध्या-दिग्रहणवैयर्थ्यमेवेति वाच्यम्, तत्र वशादौ कृति परतो वलादेरार्धधातुकस्येड्यो-ग्यस्यासम्भवात्। सप्तम्याः षष्ठ्यर्थकत्वेऽपि तस्मिन्परतोऽङ्गस्येड्योग्यस्य सम्भवेन तथा न्यासे दोषापत्तेः। "तादौ च निति०" ( पा० सू० ६।२।५० ) तादौ तद्धिते इत्यादावादिग्रहणं स्पष्टार्थम्।

ननु "वान्तो यि०" ( पा० सू० ६।१।७९ ) इत्यादौ "अमि पूर्वः" ( पा० सू० ६।१।१०७ ) इत्यत्रैव प्रत्यये यो यकारस्तस्मिन्परे इत्यर्थादिष्टसिद्धि-रिति परिभाषा निष्फला। "तस्मान्नुडचि" ( पा० सू० ६।३।७४ ) इत्यादावपि लुप्तनकारान्नञः परस्य पदावयवस्याचो नुडित्यर्थान्न दोष इति चेत्, न; "मिदेर्गुणः" ( पा० सू० ७।३।८२ ) इत्यादौ दोषापत्तेः 'अतृणेट्', इत्यादाविमना-पत्तेश्च। वर्णाश्रयत्वेन प्रत्ययलक्षणासम्भवात्।

---

१. 'केचित्तु अभेदान्वये समानविभक्तिकत्वं तत्र तत्र समानत्वम्, नार्थकृतम्। महता जाड्यादवद्ध इत्यादौ हेत्वर्थे तृतीयापञ्चम्योर्विधानेन समानार्थकत्वेनाभेदान्वयापत्तेः। एवं सुन्दरेषु गवाकृष्यावलक्ष्मीरूपादावभेदान्वयापत्तेः, किन्तु विभक्तित्वव्याप्यप्रथमात्वादिनैव। एवञ्च वलीत्यस्य षष्ठ्यर्थकत्वेऽपि अभेदान्वयानुपपत्त्या विभक्तिविपरिणाम एव कार्यः। एवञ्च यस्य विशेषणत्वं न तत्सप्तम्यन्तमादिग्रहणं सार्थकम्। "ङः सि०" ( पा० सू० ८।३।२९ ) इत्यादौ तु सकारपरको यो ङस्ततः परस्य पदस्येत्यर्थेनेष्टसिद्धिरित्याहुः' इत्यधिकः पाठः क० पु०　　२. 'ग्रहणे' इति पाठः क० पु०।

'घटपटम्, घटपटौ' इत्यादिसिद्धय आहः—

**सर्वो द्वन्द्वो विभाषयैकवद्भवति ।। ३४ ।।**

---

यदि तु अनुबन्धकार्येऽनल्विधाविति निषेधाप्रवृत्त्या शित्परत्वम्, 'अटृणेट्' इत्यादावपि प्रतिपदोक्तत्वात् पूर्वमेवेम्प्रवृत्त्यानचीत्यनुवृत्त्या वा न दोष इत्युच्यते, तदा "नेड्वशि०" ( पा० सू० ७।२।८ ) इत्यादौ दोषो बोध्यः ।। ३३ ।।

**घटपटमिति।** न च "जातिरप्राणिनाम्" ( पा० सू० २।४।६ ) इति नित्यैकवद्भावप्राप्त्यात्र विकल्पोक्तिरयुक्तेति वाच्यम्, 'क्षीरोदके सम्पृक्ते' इति "अन्तादिवच्च" ( पा० सू० ६।१।८५ ) इति सूत्रस्थभाष्यप्रयोगेण "जातिरप्राणिनाम्" ( पा० सू० २।४।६ ) इति सूत्रस्वरसेन च जातिप्राधान्यविवक्षायामेव तत्प्रवृत्त्या व्यक्तिप्राधान्यविवक्षायां दोष इत्याशयात्। अत एवः—

मृदङ्गशंखतूणवाः पृथङ्नदन्ति संसदि ।

इति "अल्पाच्तरम्" ( पा० सू० २।२।३४ ) इति सूत्रस्थभाष्यप्रयोगः सङ्गच्छते। न च तूर्याङ्गत्वात्तत्र नित्यैकवद्भावश्शङ्क्यः, तूर्यशब्देन तूर्यशिल्पोपजीविनां वादकानामेव तत्र ग्रहणमिति, तत्र कैयटोक्तेः[1] अदोषात्।

ननु "सर्वस्य द्वे" ( पा० सू० ८।१।१ ) इत्यत्र सर्वशब्दस्य त्रैविध्यं कैयटेनोक्तम्। अवयवकार्त्स्न्यवाची, प्रकारकार्त्स्न्यवाची, द्रव्यकार्त्स्न्यवाची चेति। आद्यो यथा सर्वः पटो दग्धः, सर्वावयवावच्छेदेन पटो दग्धः इत्यर्थः। द्वितीयो यथा—

भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम् ।
सर्वं सशेषमश्नीयात् निश्शेषं घृतपायसम् ।।

इत्यत्र सर्वविधमन्नमित्यर्थः। तृतीयो यथा 'सर्वस्वं ददाति' स्वत्वाश्रयं यावद् ददातीत्यर्थः।

अत्रावयवकार्त्स्न्यवाची, उत प्रकारकार्त्स्न्यवाची, उत विशेष्यकार्त्स्न्यवाची। आद्ये द्वन्द्वः सर्वावयवावच्छेदेन पाक्षिकैकत्वविशिष्टार्थप्रतिपादक इत्यर्थः स्यात्। ततश्च घटाश्च पटाश्चेति विग्रहेऽपि 'घटपटौ' इति स्यात्। द्वितीये सर्वप्रकारावच्छिन्नो द्वन्द्व एकवदित्यर्थः स्यात्। ततश्च समाहारेतरेतरयोगद्वन्द्वद्वयेऽपि पाक्षिकैकवद्भावापत्तिः। अन्त्ये[2] द्वन्द्वत्वावच्छिन्नयावद्व्यक्तिपाक्षिकैकवदित्यर्थापत्त्या द्वन्द्वपदस्य द्वन्द्वत्वावच्छिन्नयावद्व्यक्तिपरत्वेनैकवचनासङ्गतेः। द्वन्द्व-

---

१. 'तूर्यशिल्पोपजीविन एव तूर्याङ्गत्वेन गृह्यन्ते' इति कैयटानुपूर्वी। ( म० भा० पा० सू०-२।२।३४ )।

२. 'अन्त्य' इत्यपपाठः क० पु०।

पदस्य तत्संज्ञकयत्किंचिद्व्यक्तिपरत्वे सर्वपदानन्वयापत्तेः। जात्यभिप्रायेणैक-वचनमित्यपि न युक्तम्, जातिनिर्देशेनैव 'न ब्राह्मणं हन्यात्' इत्यत्रेव सर्व-व्यक्तिलाभे सर्वपदानर्थक्यापत्तेः, तत्र पक्षे जातेरेव प्राधान्येनोपस्थित्या तत्र सर्वपदार्थान्वियानापत्तेश्च।

न च 'सर्वान् ब्राह्मणान्भोजय' इत्यादाववनिर्वर्तियावद्व्यक्तीनां भोजना-सम्भवेन सर्वशब्दस्य बुद्धिविषयीभूतसमुदायपरत्वस्य दृष्टतया प्रकृतेऽपि बुद्धि-विषयीभूतसमुदायत्वसमानाधिकरणद्वन्द्वत्वाश्रय एकवदित्यर्थ इति न दोष इति वाच्यम्, समुदायो घट इत्यत्रेव समुदायवाचकसर्वशब्दस्य तद्घटकव्यक्तिवाचकेन सामानाधिकरण्येनान्वयासम्भवेन तादृशव्यवहारस्यैव दुरुपपादतया समानविभक्ति-कत्वस्यात्र दौर्लभ्यापत्तेः, 'समानविभक्तिकयोर्नामार्थयोरभेदान्वयः' इति नियम-भङ्गापत्तेश्च।

न च समुदायस्य प्रत्येकानतिरिक्तत्वेन तयोरभेदान्वयः सम्भवतीति वाच्यम्, वृक्षत्वादिसामान्यरूपेण कर्तृत्वेन कर्मत्वेन वा बुद्धौ सन्निहितानेक-व्यक्तिषु परस्परं भेदाग्रहणेन सङ्कलनात्मिकयैकया बुद्ध्यातिरिक्ताखण्ड-पदार्थत्वेन विषयीकृतेषु वस्तुतोऽनेकेषु पदार्थेष्वेव वनसमुदायादिपदस्य शक्त्यङ्गी-कारेण प्रत्येकमवयवेषु सर्वशब्दप्रयोगासम्भवात्।

अत एव 'वनं पश्य' इत्यादाविव 'समुदायं पश्य' इत्यादौ बहूनां कर्मत्वेऽ-प्येकवचनम्, तदुपस्थितैकत्वस्य बुद्धिविषयीकृतकल्पितभेदविशिष्टबौद्धाखण्ड-पदार्थे एव शब्दशक्तिस्वभावेनान्वयाङ्गीकारात्। अत एव द्रव्यसंघस्य द्रव्याणां च न पारमार्थिको भेदोऽस्ति। स केवलं बुद्ध्या परिकल्प्यते। बुद्धिव्यवस्था-पितार्थनिबन्धनाश्च शब्दाः बुद्धिमेवार्थाकारामुपजनयन्तः 'असत्यपि वास्तवे भेदे भेदमवगमयन्ति' इति कैयटोक्तं सङ्गच्छते।

इदमेवाभिप्रेत्य 'सर्वत्र शक्योऽर्थः बुद्धिसत्तासमाविष्ट एव, न तु बाह्य सत्तासमाविष्टः' इत्यादि मंजूषायामुक्तम्। अत एव 'एष वन्ध्यासुतो याति'[1] इत्यतोऽपि अर्थबोध इति चेदत्राहुः—अत्र द्वन्द्वपदं संज्ञायोग्यालौकिकविग्रहवाक्य-समुदाये[2] लाक्षणिकम्। सर्वपदश्च 'सर्वः पटो दग्धः' इत्यत्रेवावयवकात्स्न्र्यपरम्। अवयवकात्स्न्र्यवाचकसर्वशब्दस्यावयविवाचकेन सामानाधिकरण्यं तु समुदाय-समुदायिनोरभेदादिति।

१. एष बन्ध्यासुतो याति खपुष्पकृतशेखरः।
मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः॥ ( वै सि० ल० म० रत्न० प्र० यो० नि० )
२. 'समुदाय' इति पाठः क० पु०।

**"द्वन्द्वश्च प्राणि" इत्यादिप्रकरणाविषयः सर्वो द्वन्द्व इत्यर्थः ।**

**"चार्थे द्वन्द्वः" इति सूत्रेण समाहारेतरेतरयोगयोरविशेषेण द्वन्द्वविधानात् न्यायसिद्धेयम् ।**

**"तिष्यपुनर्वस्वोः" इति सूत्रस्थं बहुवचनस्येति ग्रहणमस्या ज्ञापकम् । तद्धीदम् 'तिष्यपुनर्वसु' इत्यत्र तद्व्यावृत्त्यर्थम् ।**

---

तथा चायमर्थः—द्वन्द्वसंज्ञायोग्यालौकिकविग्रहवाक्यसमुदायः पाक्षिकैकत्वविशिष्टार्थप्रतिपादकयावदवयवावच्छिन इति । तत्त्वञ्च तद्वाक्यस्य पक्षे समाहारवृत्तित्वमन्तरा न घटत इत्यर्थात्समाहारप्रयोज्यैकवद्भावातिदेशमुखेन तत्प्रयोजकसमाहारवृत्तित्वं बोध्यते । एवञ्च द्वन्द्वसंज्ञायोग्यवाक्यसमुदायः स्वावयवभूतद्वन्द्वसंज्ञायोग्यवाक्यावच्छेदेनैकत्वावच्छिन्नसमाहाररूपार्थवद् वा भवतीति फलितमिति ।

ननु 'सर्वो द्वन्द्वः०' (परि० ३४) इत्युक्त्या "द्वन्द्वश्च०" (पा० सू० २।४।२) इत्यादिप्रकरणविषयस्यापि पाक्षिकसमाहारवृत्तित्वं स्यादित्यत आह:—**"द्वन्द्वश्च०" ( पा० सू० २।४।२ ) इत्यादीति** । अन्यथा तत्प्रकरणस्य वैयर्थ्यापत्तेः । न च प्राण्यङ्गादिद्वन्द्वानुवादेनेतरेतरयोगे कदाचिदेकवद्भावविधानार्थं तत्, "द्विगुरेक०" ( पा० सू० २।४।१ ) इति सूत्रे "समाहार इति वक्तव्यम्" ( का० वा० २।४।१ ) इति वार्तिकोक्त्या तत्सूत्रस्य सिद्धान्तेऽनुवादकत्वेन तत्साहचर्यात् लाघवाच्चास्याप्यनुवादकत्वेनादोषात् । अनुवादोऽपि "द्वन्द्वश्च०" ( पा० सू० २।४।२ ) इत्यादिसूत्रेण प्राण्यङ्गादीनामेकवचनत्वातिदेशमुखेन तत्प्रयोजकसमाहार एव इति नियमार्थः ।

केचित्तु 'उद्भूतावयवभेदः समुदाय इतरेतरयोगपदेनोच्यते' इति "द्विगुरेक०" ( पा० सू० २।४।१ ) इति सूत्रे शेखरे उक्तत्वेन तद्रीत्या प्राण्यङ्गादिद्वन्द्वे इतरेतरयोगेऽप्यस्य प्रकरणस्याप्राप्तैकवद्भावविधानार्थत्वेऽपि तस्य तद्विषये कदाप्युद्भूतावयवभेदविवक्षाभावार्थत्वेन तद्विषये इतरेतरयोगासम्भवात् समाहारवृत्तित्वस्यार्थसिद्धतया नपुंसकत्वस्यापि "स नपुंसकम्" ( पा० सू० २।४।१७ ) इत्येव सिद्धेर्न किञ्चिदनिष्टमित्याहुः ।

प्राचीनमतेऽस्या न्यायसिद्धत्वं दर्शयितुमाहः—**"चार्थे०"** (पा० सू० २।२।२९) **इति** । परस्परक्रियासम्बन्धप्रयोज्यक्रियासम्बन्धवत्त्वरूपसाहित्यवतां वर्तिपदार्थानां प्राधान्यविवक्षायामितरेतरयोगः । 'यथा प्लक्षन्यग्रोधौ छिन्धि' इत्यत्र सहितप्लक्षन्यग्रोधकर्मकं छेदनमिति बोधः । एवं निरुक्तसाहित्यवतां वर्तिपदार्थानां समूहस्य प्राधान्यविवक्षायां समाहार इति चार्थभेदेनैकवचनद्विवचनोपपत्तेर्न्यायसिद्धेयम् ।

नव्यरीत्या मानमाह—**"तिष्य०" ( पा० सू० १।२।६३ ) इति** । तन्मते

**न चैवमप्यत्र "जातिरप्राणिनाम्" इति नित्यैकवद्भावेन बहुवचनाभावा-द्विदं सूत्र व्यर्थमिति वाच्यम्, तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात्। न चैते प्राणिन इति वाच्यम्, 'आपोमयः प्राणः' इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात्। स्पष्टं चेदम् "तिष्यपुनर्वस्वोः' इति सूत्रे भाष्ये।**

**अत एव 'द्वन्द्वश्च प्राणि' इत्यादेः प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न॥ ३४॥**

**सर्वे विधयश्छन्दसि विकल्प्यन्ते॥ ३५॥**

**"व्यत्ययो बहुलम्" इति सूत्रे भाष्ये बहुलमिति योगविभागेन "षष्ठी-युक्तश्छन्दसि" इति सूत्रे वेति योगविभागेन चैषा साधिता। तेन 'प्रतीपमन्य ऊर्मिर्युध्यति' इत्यादि सिद्धम्। युध्यत इति प्राप्नोति॥ ३५॥**

---

उभयत्र समूहस्यैव विशेष्यतयैकवचनस्यैव न्यायप्राप्तत्वेन द्विवचनाद्यप्राप्तावत्र बहुवचनग्रहणेनारोपितावयवगतसङ्ख्याकस्यैव समुदायस्येतरेतरयोगपदेन ग्रहण-द्वारा तस्य विशेष्यत्वेन द्विवचनादीनामपि साधुत्वं ज्ञाप्यत इतीयं परिभाषार्थ-सिद्धेति भावः।

न चैवम् 'दधिपयसी' इत्यत्र प्रकरणप्राप्तनियमस्य "न दधिपयः०" ( पा० सू० २।४।१४ ) इति निषेधेऽपि कदाचिदनयैकवद्भावापत्तिः। ब्रह्मप्रजा-पतिशब्दस्य गणे पाठसामर्थ्येन "चार्थे०" ( पा० सू० २।२।२९ ) इति सूत्रेण प्राप्तसमाहारद्वन्द्वस्यापि तेन बाध्यसामान्यचिन्तया बाधाङ्गीकारेणादोषात्। एतेन "अनन्तरस्य०" ( परि० ६२ ) इति न्यायाद् व्यञ्जनत्वात्प्राप्तविकल्पस्य निषेधेऽपि "जातिरप्राणिनाम्" ( पा० सू० २।४।६ ) इति नित्यैकवद्भावापत्ति-रित्यपास्तम्।

ननु ज्ञापितेऽपि चारितार्थ्यं दुर्वचमिति शङ्कते:—**न चेति। नित्यैकवद्-भावेनेति।** न च तिष्यस्यैकत्वादवस्थाभेदमादायापि देवदत्तत्वादिवज्जातित्वान-ङ्गीकारात् कथं जातिद्वन्द्वैकवद्भावापादनमिति वाच्यम्—"प्रतिमन्वन्तरमन्यानि नक्षत्राणि भवन्ति[1]" इति वदता कैयटेन कल्पभेदेन नृसिंहत्वादिवत्तिष्यत्वादेरपि जातित्वाङ्गीकारात्। **ज्ञापनादिति।** न चैवम् "जातिरप्राणिनाम्" ( पा० सू०-२।४।६ ) इत्यस्य वैयर्थ्यापत्तिः "चार्थे०" ( पा० सू० २।२।२९ ) इत्यनेनैव विकल्पस्य सिद्धत्वात्।

किञ्च "विभाषा वृक्ष०" ( पा० सू० २।४।१२ ) इति सूत्रे प्राणिभिन्नानां ग्रहणञ्च व्यर्थं स्यादिति वाच्यम्, तद्वैकल्पिकत्वस्यापीत्यस्य जातिप्राधान्य एव

---

१ 'प्रतिमन्वन्तरे भिन्नानि नक्षत्राणि-इति दर्शने भिन्नाधारा जातिः सम्भवतीति न कश्चि-द्दोषः' इति कैयटानुपूर्वी ( म० मा० पा० सू० १।२।६३ )।

**ननु क्षिय इत्यादावियङ् कथम् ? अत आहः—**

**प्रकृतिवदनुकरणं भवति ।। ३६ ।।**

**क्षिय इतीयङ्निर्देशोऽस्या ज्ञापकः ।**

---

नियमो न व्यक्तिप्राधान्य इति । एवं पूर्वोक्तपक्षभेदेन प्रवृत्त्यप्रवृत्तिरूपव्यवस्थित-वैकल्पिकत्वस्याप्यनेन ज्ञापनादित्यर्थेनादोषात् ।

न चैवं जातिप्राधान्यविवक्षायामेकवचनस्य द्विवचनव्यावृत्तये बहुवचन-ग्रहणस्य चारितार्थ्येन तस्य ज्ञापकत्वासङ्गतिः, नक्षत्रवृत्तिजातिप्राधान्यविवक्षायां नक्षत्रद्वन्द्वत्वाभावेन तदप्राप्त्यादोषात् । एवञ्च व्यक्तिप्राधान्यविवक्षायां वैकल्पिकैकवद्भावाभावे सम्भवव्यावृत्त्योरभावेन बहुवचनग्रहणस्य वैयर्थ्यापत्त्या तेन तज्ज्ञाप्यत इति बोध्यम् ।। ३४ ।। ३५[१] ।।

**ज्ञापक इति ।** ननु घेर्गुणेनेयङः परत्वाद्बाधात्कथं धातुत्वातिदेशेऽपि इयङ् । न च "निष्ठायामण्यदर्थे" ( पा० सू० ६।४।४० ) इति विहितदीर्घ-विशिष्टस्यानुकरणान्न घित्वमिति वाच्यम्, तथा सति 'क्षियः' इतीयङ्निर्देशेनैव दीर्घान्तग्रहणेन 'क्षितम्' इत्यत्र वारणे सिद्धे "क्षियो दीर्घात्" (पा० सू० ८।२।४६) इति सूत्रे दीर्घग्रहणस्य वैय्यर्थ्यापत्तेरिति चेत्, न; इयङ्गुणयोस्सन्निपाते इयङा पूर्वविप्रतिषेधेन गुणस्य बाधाङ्गीकारात् । अत एवात्र[२] दीर्घग्रहणं चरितार्थम् । पूर्वविप्रतिषेधज्ञापनफलं तु "समः क्ष्णुवः" ( पा० सू० १।३।६५ ) इत्यस्य सिद्धिः ।

मम त्वियङ्निर्देशस्योभयसाधारणत्वेन ह्रस्वान्ते वारणाय दीर्घग्रहणमिति ध्येयम् । न चैवम् 'गुणनाभावौत्वनुड्भिः'[३] इति मूलविरोधः । "स्त्रियाः" (पा० सू० ६।४।७९) इतीयङ्विषये तथाङ्गीकारेऽपि "अचिश्नुधातु०" (पा० सू० ६।४।७७ ) इतीयङ्विषये तथानङ्गीकारात् ।

न च "उरण् रपरः" ( पा० सू० १।१।५१ ) इति सूत्रभाष्योदाहृत-ह्रस्वान्तप्रियग्रामणिशब्दाच्चतुर्थ्येकवचने इयङा "घेर्ङिति" (पा० सू० ७।३।१११) इति गुणस्य बाधापत्त्या त्वन्मते 'प्रियग्रामणये' इत्यस्यासिद्धिरिति वाच्यम्, इयङ्यण्गुणानां प्रसङ्गे पूर्वविप्रतिषेधेन गुणं बाधित्वेयङि प्राप्ते, तदपवादत्वाद् यणि प्राप्ते, तं परत्वाद्गुणो बाधत इति न दोषः । न च पूर्वविप्रतिषेधेन गुणं

---

१. 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' ( परि० ३५ ) अस्या व्याख्यानमत्र पुस्तके क० पु० च नास्ति । २. 'एव तत्र' इति पाठः क० पु० ।

३. गुणनाभावौत्वनुड्भिः परत्वात्पुंसि बाध्यते ।
क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् ।। ( वै० सि० कौ० पा० सू० ६।४।८०, ) ।

तत्रव प्रातिपदिकत्वनिबन्धनविभक्तिकरणादनित्या चेयमिति 'क्षियो दीर्घात्' बाधित्वा पुनरपीयङः प्राप्त्या[1] चक्रकापत्तिरिति वाच्यम्, 'चक्रकेष्विष्टतो व्यवस्थेति' न्यायेनादोषात् ।

अत्रानुकरणत्वञ्चः — स्वसजातीयशब्दमात्रप्रतीतितात्पर्यकोच्चारणविषयत्वम् । व्यक्तानुकरणेषु साजात्यं प्राय आनुपूर्वीकृतमेव । अव्यक्तानुकरणेषु मञ्जीरध्वनेः झलं झलमिति तदनुकरणभूतव्यक्तशब्देन साजात्यन्तु तद्ध्वनेरनुकार्यध्वनेश्च समानाकारश्रुतिविषयत्वेन । तेन तद्बोधस्य सर्वानुभवसिद्धत्वात्सूपपादम् । न च—

आम्नायशब्दानभ्यासे केचिदाहुरनर्थकान् ।
स्वरूपमात्रवृत्तींश्च शिष्याणां प्रतिपादने[2] ।।

इत्यभियुक्तोक्तेः शिष्याणां शब्दस्वरूपमात्रप्रतीतीच्छयोच्चरिताध्यापकवाक्यस्याप्यनुकरणत्वापत्तिरिति वाच्यम्, तेनार्थे तात्पर्याभावमात्रप्रतिपादनेऽपि तस्य स्वसजातीयशब्दान्तरप्रतीतीच्छयोच्चरितत्वाभावेनानुकरणत्वस्य दुर्वचत्वात्। एवं शिष्योच्चरितेऽपि । अत्र प्रकृतित्वञ्च स्वतात्पर्यविषयशब्दत्वम् । अनुकरणं स्वप्रकृतिवत्कार्यं लभत इति वाच्योऽर्थः ।

ननु इयं परिभाषा व्यर्था, लोके इदं नानार्थकं पदमित्यबाधितव्यवहाराल्लाघवाच्चानुपूर्वीभेदस्यैव शब्दभेदे तन्त्रत्वात् । तेनानुकार्यानुकरणयोरभेदेनानुकार्यशब्दनिमित्तककार्यस्यानुकरणशब्देषु तत्त्वप्रत्यभिज्ञायाः स्वरसत एव सिद्धेः । अत एव पर्यायेषु भेदोपपत्तिः । अन्यथार्थभेदाभावेन तदनापत्तिः । अव्यक्तानुकरणेष्वपि भेदप्रयोज्यानुपूर्वीविशेषासम्भवादभेदोपपत्तिः ।

न च "क्षियो दीर्घात्" ( पा० सू० ८।२।४६ ) इत्यावनुकरणस्याक्रियावाचकत्वेन क्रियावचनस्यैव भ्वादेर्धातुसंज्ञाप्रवृत्त्यास्याधातुत्वेनेयङादेरप्राप्त्या अयमतिदेश आवश्यक इति वाच्यम्, इवर्णान्तधात्वभिन्नस्याङ्गस्येयङित्यर्थेनानुकार्यस्य धातुत्वेन तदनुकरणस्योक्तरीत्या तदभिन्नाङ्गतयाऽदोषादिति चेत्, न; आनुपूर्व्यैक्यस्य व्यक्त्यभेदग्रहप्रयोजकत्वेऽपि 'सोऽयं देवदत्तः' इत्यत्रेवाक्रियावाचिन्यनुकरणे क्रियावचनत्वादिरूपविशेषणविशिष्टाभेदग्रहप्रयोजकत्वासम्भवात् । अत एव क्रियावाचिन इति विशेषणं चरितार्थम् ।

अत एव[3] 'याः पश्यसि' इत्यादौ क्रियावाचकत्वविशिष्टधात्वभिन्नत्वेन लोपस्य दुर्वारत्वेन तद्वैय्यर्थ्यं स्पष्टमेव । न चैवं 'वा'[4] 'या' धातोरव्ययसंज्ञा

१. 'प्राप्तौ' इति पाठः क० पु० ।
२. वा० प० का० २ श्लो० ४०३ ।
३. 'अन्यथा' इति पाठः क० पु० ।
४. 'मा' इति पाठः क० पु० ।

इति सूत्रे भाष्ये स्पष्टम् ॥ ३६ ॥

---

दुर्वारा, तस्या अर्थानिमित्तकत्वेन शब्दस्वरूपमात्रनिमित्तकत्वादिति वाच्यम्, पूर्वोत्तरसाहचर्येण महासंज्ञाकरणेन कालविशेषासम्बन्ध्यर्थप्रतिपादकस्यैवाव्ययसंज्ञाङ्गीकारेणाऽदोषात् ।

नन्वेवम् 'घट इत्याह' इत्यादौ तयोरभेदे शब्दार्थसम्बन्धरूपायाः वृत्तेस्तत्रासम्भवादनुकार्यस्य वृत्तिज्ञानजन्योपस्थित्यविषयत्वेन तस्य शाब्दत्वानापत्तिरिति चेत्, अत्राहुः—श्रोतृगृहीत एव शब्दोऽर्थे तात्पर्याभावदशायामर्थवच्छाब्दज्ञानविषयः पदजन्योपस्थितेरेव शाब्दं प्रति कारणत्वाङ्गीकारेण प्रत्यक्ष[1]-विषयस्यापि कारणत्वेन स्वप्रत्यक्षरूपां पदजन्योपस्थितिमादाय तस्य शाब्दबोधविषयत्वस्य सूपपादत्वात् ।

न चैवम् 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्' इति न्यायेनार्थस्येव समवायेनोपस्थिताकाशस्यापि पदजन्योपस्थितिविषयत्वेन शाब्दज्ञानविषयत्वापत्तिरिति वाच्यम्, तात्पर्याभावेनैव तस्य तद्वारणसम्भवात् । अन्यथा तवापि लक्षणया तद्बोधस्य दुर्वारत्वापत्तेरित्यन्यत्र स्पष्टम् । अत एव शक्त्यग्रहदशायां 'गौः' इत्ययमाह—इत्यादितो गोशब्दस्य वृत्तिज्ञानजन्योपस्थित्यविषयत्वेऽपि शाब्दबोधः ।

न च 'भू सत्तायाम्' ( भ्वा० १ ) इत्यादौ भूशब्दस्यापदत्वेन तस्य पदजन्योपस्थित्यविषयत्वात्कथं तस्य शाब्दज्ञानविषयत्वमिति वाच्यम्, पदशब्दस्य परिनिष्ठितपरत्वेनादोषात् । अत एव 'अपदं न प्रयुञ्जीत' इति न निषेधः । भाष्यकाराद्यभ्युपगतानादिशिष्टपरम्परागत-'भू सत्तायाम्' (भ्वा० १) इत्यादिनिर्देशादेवेदृशानां साधुत्वेन शास्त्रप्रवृत्तियोग्यता । अत एव गवित्ययमाह प्रत्यक्षमितीत्यादिग्रन्थकृतां प्रयोगस्सङ्गच्छते । अन्यथावादिविधीनां साधुशब्दमात्रविषयतया भाषाशब्देष्विवात्रापि तदनापत्तिरिति दिक् ।

केचित्तु—इतिशब्दो वक्तृबुद्धिस्थपरामर्शकः । गोपदञ्च तदेव वक्तृबुद्धिस्थमिति बोधनायेतिशब्दोत्तरं लुप्तापि द्वितीया वाच्यर्थान्वयिनी । अव्ययेभ्यः प्रथमैकवचनमेवेति मतेऽपीत्यर्थस्य क्रियाकारकभावसंसर्गेण वचनक्रियायामन्वयः । एवञ्च नारद इति पश्यतीतिवत्, गवित्याहेत्यादौ न दोषः । तदुक्तं गवित्याहेत्यादिवाक्ये श्रोत्रेणोपस्थिते 'गवि' इतिशब्दपरामृष्टेऽज्ञेया वचनकर्मतेति, इतिशब्दपरामर्शबीजमनुभवं सम्पादयितुं प्रयुक्तो गोशब्दो न वृत्तिमानतो न प्रातिपदिकत्वम् । 'भू' सत्तायामित्यादावपीतिशब्दाध्याहारेण न दोष इत्याहुः ।

अन्ये तु अव्यक्तानुकरणविषये तयोर्ध्वनिमयत्ववर्णमयत्वनिरर्थकत्वशब्दार्थकत्वरूपविरुद्धधर्माश्रयत्वात्, व्यक्तानुकरणेषु शब्दप्रत्यायकत्वार्थप्रत्याय-

---

१. 'प्रत्यक्षे' इति पाठः क० पु० ।

कत्वस्वरदेशकालादिनियमविषयत्वाविषयरूपविरुद्धधर्माश्रयत्वात्, तयोरुच्चारण-भेदाद् भेद एव युक्तः।

ननु भेदेऽनुकार्यस्य कथमुपस्थितिः, न च सादृश्यादिना तदुपस्थितिः, तथा सति वृत्त्यानुपस्थितत्वेन तस्य शाब्दज्ञानविषयत्वानापत्तेरिति चेत्, न; 'भू' सत्तायाम् (भ्वा० १) 'आ प्रगृह्यस्मृतौ वाक्ये'[1] 'लोकस्तु भुवने जने'[2] इत्यादि-व्याकरणकोशादिव्यवहारेण सर्वेषां शब्दानां स्वसजातीये शब्देऽपि शक्त्यङ्गी-कारात्। सा च शक्तिः शब्दे स्वरूपसती कारणम्, अर्थांशे ज्ञाता सती कारणम्। न च लक्षणयैव स्वरूपबोधसम्भवः, उक्तस्थलेऽस्यैव वाक्यस्य शक्तिग्राहकत्वेन ततः प्राक् शक्त्यग्रहेण जवगडदशमुच्चारयेत्यनर्थकानुकरणस्थले च शक्यसम्बन्ध-मूलिकाया लक्षणाया दुर्वचत्वात्।

न च भूशब्दोऽर्थवान् साधुपदत्वादित्यनुमानेन सामान्यतश्शक्तिग्रहेणै-तत्सम्भव इति वाच्यम्, शब्दत्वेन रूपेण शब्दपदस्यापि शब्दपदवाच्यत्ववदुक्तानु-मानेन सर्वस्यापि शक्यत्वेन स्वस्यापि शक्यतयाऽशक्याभावेन तस्य विशेष्यबोधो-पयोगिलक्षणाप्रयोजकत्वासम्भवात्। अत एव 'गामुच्चारय' इत्यादौ गोशब्दस्य प्रत्यक्षात्मकोपस्थित्यविषयस्यापि शाब्दबोधः। अन्यथा विकृतस्यैव प्रत्यक्षेण तस्य बोधानापत्तिः।

न चैवम् 'भू सत्तायाम्' इति वाक्ये विभक्तिश्रवणापत्तिः, अस्य शब्द-परत्वेनाक्रियावाचित्वेनाधातुरिति निषेधाप्राप्तेरिति वाच्यम्, अनुकरणं प्रकृति-वदित्यतिदेशेनादोषात्। अत एव 'क्षियः' इत्यत्रेयङ्सिद्धिः। न चैवं धातोः प्रत्ययविध्युद्देश्यतावच्छेदकाक्रान्तत्वेन प्रकृतित्वापत्त्या 'न केवला प्रकृतिः'[3] इति निषेधापत्तिरिति वाच्यम्, अतिदेशस्यानित्यत्वेनादोषात्।

न चात्रपक्षे गवित्याहेत्यादौ ओदन्तानुकरणे वृद्ध्यापत्तिर्वान्तानुकरणे वलोपापत्तिरिति वाच्यम्, अस्य शब्दस्वरूपपरत्वेन नपुंसकत्वेनामो लुकि वान्तस्य पदत्वेऽपीदृशे विषये लोपे स्पष्टतयानुकार्यशब्दस्वरूपप्रतीत्यनापत्त्यानुकरणत्वस्यैव भङ्गापत्त्या पूर्वं वैकल्पिकलोपादिकार्यस्यैतादृशस्थले प्रवृत्त्यनङ्गीकारात्। न च सर्व-विश्व-इत्यादिगणपठितेषु विभक्तिर्दुर्वारा, छान्दसत्वेनादोषादित्यलम् ॥३६॥

---

१. अमरकोषः ३।३।२४०। २. अमरकोषः ३।३।२।
३. व्या० म० भा० प्र० पा० सू० ३।१।२

**ननु 'रामौ' इत्यादौ वृद्धौ कृतायां कार्यकालपक्षे कथं पदत्वम् ? उभयत आश्रयणेऽन्तादिवत्त्वाभावाद् यस्माद् विहितस्तदादितदन्तत्वाभावादत आहः—**

**एकदेशविकृतमनन्यवत् ॥ ३७ ॥**

---

**कार्यकाल इति।** इदं यथोद्देशस्याप्युपलक्षणम्। राम-औ-इत्यत्र परत्वान्नित्यत्वादन्तरङ्गत्वात् "वृद्धिरेचि" ( पा० सू० ६।१।८८ ) इत्यस्य प्रवृत्त्या पदत्वस्य स्थानिधर्मत्वाभावेन तत्रापि तदसिद्धेः। **कथं पदत्वमिति।** ननु स्थानिवत्त्वेन सुबन्तत्वान्न दोषः, न च विशेषणतयालाश्रयणम्, द्वितीयव्याख्यायां स्थानिसम्बन्ध्यल्साधारणधर्मस्यैव तेन निषेधेन विशेषणतावच्छेदकस्य सुप्त्वस्यातथात्वात्तन्निषेधाप्रवृत्तेः।

न च तत्र तथा विवक्षायां फलाभावः, 'बभूविव' इत्यादावतिदिदिक्षितस्य धर्मस्य स्थान्यल्वृत्तित्वाभावेनैवादोषादिति वाच्यम्, 'हे राम' इत्यादौ सुबन्तत्वप्रयुक्तपदसंज्ञाया एव तत्फलत्वात्। न च 'हे राम' इत्यादौ यथोद्देशे पूर्वं प्रवृत्तपदत्वस्यातिदेशान्न दोषः, तत्रापि परत्वान्नित्यत्वादनवकाशत्वाच्च पूर्वं लोपे स्थानिवत्त्वेन पदत्वस्य दुर्वचत्वादिति चेत्, न; सुबन्तत्वस्य तत्प्रत्ययविधानावधिभूतप्रकृत्यादिघटितत्वेन तस्याशास्त्रीयत्वेन तदतिदेशासम्भव इत्याशयात्। 'हे राम' इत्यादौ पदत्वं तु प्रत्ययलक्षणसूत्रस्याल्विधौ विध्यर्थत्वेन। तेन प्रत्ययप्रयोज्यस्य कार्यस्यातिदेशस्स्वीक्रियत इति पूर्वपक्षिणोऽभिमानः।

वस्तुतः 'राजपुरुषः' इत्यादौ पूर्वपदे पदत्वसिद्धये क्रियमाणेन "न लुमता०" ( पा० सू० १।१।६३ ) इति सूत्रस्थाङ्गग्रहणेनाशास्त्रीयस्याप्यतिदेशाङ्गीकारेण सुबन्तत्वादिकमप्यतिदेष्टुं शक्यम्। अत एव 'अहन्' इत्यत्र तिङन्तत्वप्रयुक्तपदत्वसिद्धिः। **अभावादिति।** उभयवृत्तिधर्मावच्छिन्ननिमित्तककार्ये प्राचीनमतेऽन्तादिवत्त्वाभावादिति भावः।

नव्यमते तु तेन व्यपवर्गानतिदेशेऽपि पूर्वान्तवद्भावेनौकारान्ते तत्प्रकृतित्वस्य व्यपदेशिवद्भावेन तदादित्वस्य च सम्भवेनौकारे परादिवद्भावेन प्रत्ययत्वे तदन्तत्वस्य समुदायेऽर्थसिद्धत्वान्नेदं युक्तम्।

न च तत्प्रकृतिविहितप्रत्ययत्वस्य तत्प्रत्ययविधानावधिभूतप्रकृतित्वस्य च भेदगर्भितत्वादतिदेशासम्भव इति वाच्यम्, प्रत्ययविध्युद्देश्यतावच्छेदकाक्रान्तत्वरूपतत्प्रकृतित्वस्य तत्प्रकृतिकप्रत्ययत्वस्य चातिदेशे समुदाये तदन्तत्वबुद्धेरार्थसमाजसिद्धत्वात्। अत एव 'कौ' इत्यादौ पदत्वसिद्धिः।

अन्यथा अर्धविकारेऽर्धाधिकविकारे चैतन्न्यायाप्रवृत्त्या पदत्वानापत्तिः। एतेन 'रामाविति' इत्यत्र वलोपे कर्त्तव्ये कार्यकालपक्षेऽल्विधित्वेन सुप्त्वाभावात्, सुबन्तत्वासम्भवात्, पदत्वानापत्त्या तत्र यथोद्देशपक्षस्यैवावश्यकतया 'रामौ'

**अनन्यवदित्यस्यान्यवन्नेत्यर्थः ।**

---

इत्यत्रापि यथोद्देशेनैव निर्वाहान्न दोष इत्यपास्तम् । यथोद्देशेऽपि तदसिद्धेः पूर्वमुपपादितत्वेन तथोक्तेरयुक्तत्वात् । तस्मात् 'अजीगणत्' इत्यादौ हलादिश्शेषे गशब्दमात्रस्याभ्यासत्वाभावादीत्वानापत्तिरित्यवतरणं युक्तम् । न च स्थानिवत्त्वेनाभ्यासत्वम्, अर्थवत्येवानुमानिकस्थानिवद्भावप्रवृत्त्या तदसम्भवात् ।

केचित्तु—'चिकीर्षति' इत्यादावुरदत्वे हलादिश्शेषे चार्धविकारे एतन्न्यायाप्राप्त्या "सन्यतः" ( पा० सू० ७।४।७९ ) इतीत्वसिद्धये पुनरभ्याससंज्ञाया आवश्यकतया 'अजीगणत्' इत्यादावपि तथैव निर्वाहान्नेदमप्यवतरणं युक्तम् ।

तस्मात्कृञः कर्मण्याशीर्लिङि 'कारिषीष्ट' इत्यादावन्तरङ्गत्वात् "लोपो व्योः०" ( पा० सू० ६।१।६६ ) इति यलोपे सीयुट्परत्वाभावाच्चिण्वद्भावानापत्तिरित्यवतारयन्ति । **नेत्यर्थ इति । अनन्यवदिति ।** अत्रान्यशब्दप्रकृतिकवत्यन्तेन नञ्स्समासः । अत्रान्यशब्दस्तत्कार्यविधावपेक्ष्यमाणप्रकृतिनिष्ठधर्मावच्छिन्नप्रतियोगिताकभेदवत्परः ।

तथा च "भवाव' इत्यादौ "नित्यं ङितः" ( पा० सू० ३।४।९९ ) इति सलोपे प्रकृत्यानुपूर्व्या अभावेन तादृशानुपूर्वीभिदप्रयोज्यान्यसादृश्यमूलकान्यत्वग्रहे सम्पादनीये द्वारभूतसादृश्यनिषेधेऽन्यत्वग्रहस्यैवानुदयेन तत्त्वबुद्धेस्सुस्थत्वात् पदसंज्ञा सिद्ध्यतीति बोध्यम् ।

ननु अनन्यशब्दाद् वतिप्रत्ययाङ्गीकारेण विकृतशब्दस्वरूपं स्वप्रकृतिवत् कार्यं लभत इत्यर्थवर्णनं युक्तम्, न तु पूर्वोक्तरीत्या न भवतीति नञः क्रियासम्बन्धेऽसमर्थसमासे गौरवापत्तेः । अन्यसादृश्यघटकस्य तादृशावयवहीनत्वस्य वचनशतेनापि निषेद्धुमशक्यत्वात्सादृश्यस्य भेदगर्भितत्वेनास्याप्यन्यत्वेनान्यस्मिन्नन्यसादृश्याभावादन्यसादृश्यनिषेधेऽप्यन्यत्वनिषेधे मानाभावादिति चेत्, न; पर्युदासपक्षे वतिघटितस्यातिदेशस्याहार्यारोपबोधकत्वेन विकृतं स्वप्रकृतिनिष्ठधर्मावच्छिन्नभेदवद् यत्किञ्चिद्भिन्नवदित्यर्थे 'रामौ' इत्यत्र मान्ते स्वप्रकृतिभिन्नघटशब्दभिन्नत्वाज्जराशब्दत्वस्याप्यतिदेशापत्तेः ।

अन्यत्वावच्छिन्नभिन्नवदित्यर्थेऽपि विकृतेऽन्यत्वनिश्चयोत्तरमेवानन्यत्वारोपस्य वक्तव्यतया तत्रान्यत्वग्रहकालेऽनन्यत्वस्यापि सिद्धतयातिदेशेन तद्दृढीकरणायोगेन 'अज्ञातं नास्ति ते किञ्चित्' इत्यादाविव प्रकृतार्थदृढीकरणस्यात्रासम्भवेन 'द्वौ नञौ प्रकृतार्थं दृढीकुरुतः' इति न्यायेन प्रकृतार्थं[१]—दृढीकरणार्थमुपात्तस्य

---

१. 'प्रकृतोऽर्थं' इति पाठः क० पु० ।

**तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतराम् । अत एव तादृशादर्थबोधः, अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानात् ततो बोधो न स्यात् ।**

---

नञ्द्वयार्थगर्भितानन्यशब्दस्यासाङ्गत्यापत्तेः । लोके छिन्नपुच्छे शुनि अन्यत्वग्रहपूर्वकश्वत्वारोपाभावेन तद्दृष्टान्तेनास्यार्थस्यासिद्धया तेन तत्साधनपरभाष्यासङ्गतेश्च ।

प्रसज्यप्रतिषेधे तु विकृतवस्तुनि श्वत्वग्राहकवक्त्रपुच्छरूपतदसाधारणावयवादर्शनेन[1] श्वान्यमनुष्यादिदृष्टान्तेन तदन्यत्वग्रहप्रसङ्गेऽनेन न्यायेन तत्रान्यत्वग्रहप्रयोजकस्य श्वान्यसाधारणस्य पुच्छात्यन्ताभावप्रयोज्यपुच्छहीनत्वस्य विकृतव्यक्त्यवृत्तित्वेन तस्य सादृश्यघटकत्वाभावेन तस्यान्यत्वग्रहप्रयोजकत्वासम्भवात्तन्निषेध उपपद्यते । पुच्छध्वंसप्रयोज्यपुच्छहीनत्वस्य श्ववृत्तित्वेन संशयप्रयोजकत्वेऽपि तदन्यत्वनिश्चयप्रयोजकत्वासम्भवेन न तेन तदन्यत्वसाधनप्रत्याशेति बोध्यम् ।

**अन्यसादृश्यनिषेधे इति ।** अस्यान्यत्वग्रहप्रयोजकीभूतपुच्छात्यन्ताभावप्रयोज्यपुच्छहीनत्वरूपसादृश्यनिषेध इत्यर्थः । तत्र विकृतशब्देनैकदेशरहितम्, एकदेशमात्रस्थानिकादेशविशिष्टञ्च गृह्यते । तेन सखायमिच्छति 'सखीयति' ततः क्विप्यनेन न्यायेनानङिति मूल एव स्पष्टम् ।

तथा च विकृतं स्वप्रकृत्यन्यत्वग्रहप्रयोजकीभूतसादृश्यविशिष्टं नेति परिभाषार्थः । अत्र आदेशवैशिष्ट्यं स्वस्थानिघटितसमुदायबोध्यार्थमात्रबोधकत्वसम्बन्धेन । एतेन 'अपचत्' इत्यत्र 'पचत्[2]' इति तिङन्तस्याप्यनेन तिङ्त्वं दुर्वारम्, समुदायस्यापि विकारविशिष्टत्वात् । न च स्वावयवस्थानिकादेशविशिष्टे स्वस्मिन्नेव स्वान्य[3]—सादृश्यं निषिद्ध्यते न तूदासीन इति वाच्यम्, आदेशविशिष्टस्य शब्दान्तरत्वेन तस्य स्वपदवाच्यत्वासम्भवादित्यपास्तम् ।

एकदेशमात्रस्थानिक इत्यत्र मात्रपदनिवेशफलं तु 'सौमेन्द्रः' इत्यत्रैकादेशविशिष्टे इन्द्रशब्दत्वातिदेशाभावात् "नेन्द्रस्य०" (पा० सू० ७।३।२२) इत्यस्य ज्ञापकत्वोपपत्तिः । न चैवम् 'रामौ' इत्यत्रापि विकारस्योभयस्थानिकत्वेन तदेकदेशमात्रस्थानिकत्वाभावादेतत्परिभाषाप्रवृत्तिर्दुर्लभेति वाच्यम्, एकादेशविशिष्टे तदानयनासम्भवेऽप्येकदेशरहिते मान्ते तदानयनस्य सूपपादत्वात् ।

**तादृशादिति ।** शास्त्रीयविकारविशिष्टादित्यर्थः । तेन रामशब्दैकदेशामशब्दश्रवणे ततस्तदर्थोपस्थितिर्न । **न स्यादिति ।** न च शक्ततावच्छेदकानुपूर्व्य-

---

१. 'अवयवदर्शनेन' इति पाठः क० पु० ।
२. 'पचत' इति पाठः क० पु० ।
३. 'स्वान्यम्' इति पाठः क० पु० ।

**एवञ्च रामिति मान्तस्य यस्माद् विहितस्तत्त्वम्, औ इत्यस्य परादिवत्त्वेन सुप्त्वमिति तदादितदन्तत्वमार्थसमाजग्रस्तम् ।**

**छिन्नपुच्छे शुनि श्वत्वव्यवहारवन्मान्ते तत्त्वं लोकन्यायसिद्धम् । अत एव "प्राग्दीव्यत०" इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्युक्त्वा, किमर्थं विकृतनिर्देशः ? एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा 'एकदेशविकृतमनन्यवत्' इत्युक्तम् ।**

---

ज्ञानादेकादेशविषयेऽर्थबोधानापत्त्या ततः पदस्फोटं साधयतो वैय्याकरणस्येयमनापत्तिर्गुण एवेति वाच्यम्, सम्प्रसारणाद्युत्तरं तादृशानुपूर्व्यज्ञानात्ततोऽर्थानुपस्थित्यार्थवत्परिभाषया "व्रश्च०" ( पा० सू० ८।२।३६ ) इति षत्वानापत्तेः । एकदेशविकृतस्य प्रकृत्यर्थबोकत्वानङ्गीकारे 'दीव्यतः' इत्यत्रार्थस्यावधित्वानापत्त्या भाष्यासङ्गतेश्च ।

**आर्थसमाजग्रस्तमिति ।** अर्थानामयमार्थः समाजः, तेन ग्रस्तं गिलितं वर्तमानार्थसमुदायान्तर्गतं तदन्तत्वं प्रकृतिप्रत्ययरूपार्थसमुदायान्तर्भूतमिति यावत् । अस्य लोकन्यायमूलकत्वमुपपादयति । **छिन्नेति ।** नन्वस्य लोकसिद्धत्वेऽपि शास्त्रस्याविकृते चारितार्थ्याद्विकृते शास्त्रप्रवृत्तौ न मानमत आहः—**अत एवेति ।** लोकन्यायस्य शास्त्रेऽप्याश्रयणादेवेत्यर्थः । **अनुकरणमिति ।** उच्चारणमित्यर्थः । अत एवार्थस्यावधित्वं भाष्योक्तं सङ्गच्छते ।

न च शास्त्रीयविकाराभावाद्दीव्यच्छब्देन कथमर्थस्योपस्थितिः[1], इकारलोपस्यापि सौत्रत्वेन (निपातने[2]) तस्यापि शास्त्रीयत्वात् । एतेन लोपस्यापि निपातनेन तस्यापि शास्त्रीयत्वमित्यपास्तम् । तथा सति दीव्यत्यर्थे दीव्यच्छब्दस्यापि लोके प्रयोगापत्तेः । न चैकदेशस्यैव लाघवेन निर्देशः, न तु समुदायस्य लोपेन निर्देश इति वाच्यम्, तथा सत्यर्थस्यावधित्वासम्भवेन ततोऽपि लाघवाद्दीव्य इत्येव निर्देष्टव्ये तकारान्तनिर्देशस्य वैयर्थ्यापत्तेः ।

न च ज्ञापितेऽपि चारितार्थ्यं दुर्वचम्, दीव्यतेरणिति न्यासेऽपि तदर्थोपस्थितिसम्भवादिति वाच्यम्, न वयं दीव्यतेरिति वक्तव्ये तान्तनिर्देशस्य ज्ञापकत्वं ब्रूमः, यथान्यासापेक्षया गुरुत्वात् । किन्तु परिभाषानङ्गीकारे शब्दस्यैव यथान्या-

---

१. 'कथमस्योपस्थितिः' इति पाठः क० पु० ।
२. 'निपातने' इति नास्ति क० पु० ।

**एतेनायं न्यायः शास्त्रीयकार्य एव शास्त्रीयविकार एवेत्यपास्तम्। विकृतावयवनिबन्धनकार्ये तु नायम्, छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवद् विकृतावयवव्यवहारस्य दुरुपपादत्वात्।**

**एवमक्तपरिमाणग्रहणेऽपि नायम्, उक्तयुक्तेः।**

---

सेऽवधित्वापत्त्या ततोऽपि लाघवाद्दीव्य इत्येव निर्देष्टव्ये गुरुभूततकारान्तनिर्देशस्यैव ज्ञापकत्वाङ्गीकारात्।

ज्ञापिते तु तकाराभावाद् देवनकर्तृरूपार्थस्यावधित्वानापत्त्या भाष्यासङ्गतिः। **एतेनेति।** लौकिकार्थबोधरूपकार्ये निर्देशेनानुमित[1]—विकारविषयेऽपि प्रवृत्त्यङ्गीकारेणेत्यर्थः। **शास्त्रीयेति।** शास्त्रबोध्यकार्यविषय एव साक्षाच्छास्त्रविहितविकारविशिष्ट एवेत्यर्थः। **अपास्तमिति** अर्थोपस्थितेः शास्त्रीयत्वाभावादत्रेकारलोपस्य साक्षाद् विधेयत्वेन शास्त्रजन्यधीविषयत्वरूपशास्त्रीयत्वाभावाद् भाष्यासङ्गतिरिति भावः।

नन्वेवम् 'द्विपाद्भिः' इत्यादौ अनेन न्यायेनादन्तत्वादैसापत्तिरत आहः—**विकृतावयवेति। अक्तपरिमाणेति।** अक्तं परिच्छिन्नं प्रातिस्विक्रूपेण बोधितं परिमाणम्, लोकप्रसिद्धपरिमाणासम्भवाच्छब्दशास्त्रे आनुपूर्वीविशेषरूपं यस्य शब्दस्य सः—अक्तपरिमाणः। तादृशशब्दोऽर्थो यस्येति बहुव्रीहिः। तस्य ग्रहणे परिच्छन्नानुपूर्वीकशब्दबोधक इत्यर्थः। अत एव दीव्यतिशब्दार्थस्याक्तपरिमाणत्वाभावाद्दीव्यच्छब्देनोपस्थितिः।

न च लोके द्रोणादिशब्दानामिव शास्त्रस्थजरादिशब्दानां परिच्छिन्नार्थकत्वे किं मानमिति वाच्यम्, "स्वं रूपम्०" (पा० सू० १।१।६८) इति शास्त्रस्यैव मानत्वात्। न चैवमनेन न्यायेन 'गुडोदकम्' इत्यत्र स्वरसाधनपरभाष्यासङ्गतिः, पूर्वोत्तरपदनिमित्तककार्यात्पूर्वमन्तरङ्गानिति परिभाषया पूर्वमेव स्वरस्य प्रवृत्तत्वेन तद्भाष्यस्यैकदेशित्वात्।

वस्तुतस्तु "स्वं रूपम्०" (पा० सू० १।१।६८) इत्यस्य प्रत्याख्यानेन सङ्केतसम्बन्धेन परिच्छिन्नपरिमाणार्थकेष्वेव तत्प्रवृत्त्या 'गुडोदकम्' इत्यादौ न दोषः। एतत्फलं तु 'अभीयात्' इत्यत्र भान्तस्योपसर्गत्वेन "एतेर्लिङि" (पा० सू० ७।४।२४) इति ह्रस्वाभावः। **उक्तयुक्तेरिति।** लोके द्रोणादिव्यव-

---

१. 'निर्देशानुमित' इति पाठः क० पु०।

**एतत् "येन विधिः०" इत्यत्र भाष्यकैयटयोर्ध्वनितम् ।**

हारस्य न्यूने अधिके वादर्शनादिति भावः । ध्वनितमिति[1]—'सिद्धं त्वेकदेशविज्ञानात्' इति वार्तिकव्याख्यानवसरे 'सर्वके' 'भिनत्ति' इत्यादौ गङ्गाप्रविष्टनदीदृष्टान्तेन सर्वनामधातुसंज्ञादेस्सिद्धिमुपन्यस्याक्तपरिमाणवाचकानां न्यूने अधिके वा द्रोणादिदृष्टान्तेनाप्रवृत्तिमाशङ्क्याकोर्ग्रहणज्ञापितेन तन्मध्यपतितन्यायेन समाहितम् ।

अक्तपरिमाणग्रहणे एतत्परिभाषाप्रवृत्तौ तु घसंज्ञासूत्रे[2] आगमोपजने 'एकदेशविकारे हि नित्यत्वं नोपपद्यते'[3] इति वदता न्यूने इवाधिकेऽपि विकारशब्द-

---

१. ध्वननप्रकारश्चेत्थमः—सर्वके इत्यादावकच्विशिष्टस्य सर्वनामसंज्ञा न स्यात् । तथाहि—'सर्व जस्' इति स्थिते 'अन्तरङ्गानपि' इति न्यायेन शीभावादि बाधित्वाऽकचि 'यस्मात्प्रत्ययविधिः' इत्युक्तेः 'अप्रत्यय' इति निषेधाभावे प्रातिपदिकत्वेन सुपो लुकि पुनर्जसि शी न स्यात् ।

'उच्चकैः' इत्यत्राकच्विशिष्टस्याव्ययसंज्ञा न स्यात् । तथा सति लुग् न स्यात् । यद्यपि "हल्ङ्याब्भ्यो०" इति सोर्लोपेन सिद्ध्येत्, तथापि अव्ययेभ्यः सर्वविभक्त्युत्पत्तिपक्षे दोषोऽयं विज्ञेयः। भिनत्तीत्यादौ च श्नम्विशिष्टस्य धातुसंज्ञा न स्यात् । तथा च सति धातोरन्त उदात्तो भवतीत्युदात्तत्वं न स्यात् । प्रत्ययस्वरेण तत्सिद्ध्याग्रहे तु अभिनोऽत्रेत्यत्र "दश्च" धातोर्विधीयमानं रुत्वं न स्यात् ।

वस्तुतस्तु भिनत्तीत्यत्रागमानुदात्तत्वेन प्रत्ययस्वरस्य बाधितत्वात् सति शिष्टस्वरो धातुस्वर एव एष्टव्यः ।

इत्याद्युपर्युक्तमाशङ्क्य, यथा गङ्गायमुनाप्रविष्टानेकनदीनां गङ्गायमुनाग्रहणेन ग्रहणं भवति, यथा च देवदत्तास्थगर्भस्य देवदत्ताग्रहणेन ग्रहणं भवति, तथा 'तदेकदेशभूतः, तद्ग्रहणेन गृह्यते' इति लौकिकदृष्टान्तेन समाधाय, पुनः यथा पञ्चसप्तादिसंख्याशब्दाः, द्रोणादिपरिमाणशब्दाश्च परिच्छिन्नपरिमाणार्थकत्वेन न्यूनाधिकयोर्न प्रवर्तन्ते, एवं परिच्छिन्नपरिमाणार्थवाचकत्वेन सर्वनामादिसंज्ञकाः शब्दा अपि न्यूनाधिकयोर्न प्रवर्तेरन्निति समाधानं प्रत्याख्याय "नेदमदसोरकोः" इत्यत्र 'अकोः' इति सककारयोः प्रतिषेधेन 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति तन्मध्यपतितन्यायं ज्ञापयित्वा समाहितम् ।

अत्रेदं विचार्यतेः—यदि 'एकदेशविकृत'न्याय ईदृशे विषये प्रवर्तेत तर्हि, न्यूनत्वाधिकत्वयोरपि विकारत्वाविशेषात् तेनैवोपपत्तौ प्रयत्नान्तरानुसरणं विफलं स्यात्, अतस्तेनेदं ध्वनितमिति नागेशाभिप्रायः (हैम० व्या० टि० परि० ३१, पृ०१३४)

२. "तरसमपौ घः" ( पा० सू० १।१।२२ ) इति सूत्रे इत्यर्थः ।

३. सर्वे सर्वपदादेशाः दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ।। ( व्या० म० भा० पा० सू० १।१।१९ )

**यत्र त्वर्द्धं तदधिकं वा विकृतम्, तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तत्त्वाप्रतीतौ कार्यसिद्ध्यर्थं विकृतानलूरूपावयवत्वप्रतीत्यर्थं च "स्थानिवत्०" सूत्रम्। क्वचित्तु लक्ष्यानुरोधान्न्यायानाश्रयणम्। तेन 'अभीयात्' इत्यादिसिद्धिः। स्पष्टं च क्वचिन्न्यायाप्रवृत्तिः "प्रथमयोः पूर्वसवर्णः" इत्यत्र कैयटेन दर्शितेत्यन्यत्र विस्तरः॥ ३७॥**

इति श्रीनागेशभट्टविरचिते परिभाषेन्दुशेखरे
शास्त्रत्वसम्पादनोद्देशनामकं
प्रथमं प्रकरणम्।

•

---

प्रयोगेणानेन न्यायेनैव सर्वनामत्वादेस्सिद्धचोक्तभाष्यासङ्गतिः। **अर्धं तदधिकमिति।** अत एव 'धीवरी' इत्यादावल्लोपो नेत्याहुः।

वस्तुतो विद्वयतीत्यत्र टिलोपे वस्त्वाभावादनेन न्यायेन सम्प्रसारणाभावः। स्थानिवत्त्वेन तु न वस्त्वं तस्य श्रौतानुमानिकोभयस्थानिधर्मत्वाभावादिति तत्र शेखरे स्पष्टम्।

**स्थानिवत्सूत्रमिति।** इदमुपलक्षणम् "यदागमाः०" (परि० ११) इत्यस्यापि। यासुडादावर्धाधिकविकाराद् घुसंज्ञाया अक्तपरिमाणनिष्ठत्वाच्चेति भावः। **तत्रेति।** अवशिष्टावयवे इत्यर्थः, आदेशविशिष्ट इत्यर्थो वा। **विकृतानलूरूपावयवत्वेति।** बहुव्रीहिरयम्। तेन सुब्लोपेऽपि सुबन्तत्वसिद्धिः। **सिद्धिरिति।** अन्यथा 'अभीयात्' इत्यत्र भान्तस्यानेन न्यायेन पदत्वाज्जश्त्वापत्तिः। न च "अचः पर०" (पा० सू० १।१।५७) इति स्थानिवद्भावान्न दोषः, एवमपि 'पटिति' इत्यादावज्झलादेशत्वेन स्थानिवत्त्वाप्रवृत्तेर्जश्त्वस्य दुर्वारत्वादिति दिक्॥ ३७॥

**इति श्रीमदद्वैतविद्यापारावारीणसुब्रह्मण्यसूरितनूजशेषशर्मसूरिविरचितायां
सर्वमङ्गलाख्यपरिभाषेन्दुशेखरव्याख्यायां शास्त्रत्वसम्पादनोद्देशनामकं
प्रथमं प्रकरणम्।**

•



सर्वमङ्गलासमलङ्कृतः

# । अथ बाधबीजनामकं द्वितीयं प्रकरणम् ।

**पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ।। ३८ ।।**

**पूर्वात्परं बलवत्, विप्रतिषधशास्त्रात्, पूर्वस्य परं बाधकमिति यावत् ।। ३८ ।।**

**नन्वेवम् 'भिन्धि' इत्यत्र परत्वात् तातङा बाधितो धिर्न स्यादत आहः—**

---

## । अथ बाधबीजप्रकरणम् ।

**उत्तरोत्तरमिति ।** "समासवच्च बहुलम्" ( का० वा० ८।१।१२ ) इत्यत्र बहुलग्रहणात्कर्मव्यतिहाराभावेऽपि द्वित्वे समासवद्भावप्रवृत्त्या सुलोपे सिद्धम् । एतेनोत्तरादुत्तरमिति समास इति वदन्तः परास्ताः । तृतीयस्य बलवत्त्वेऽपि द्वितीयस्य पूर्वस्माद् बलवत्त्वानापत्तेः ।। ३८ ।।

**न स्यादिति ।** ननु तातङ्प्रवृत्तिपक्षे इदमनिष्टापादनम् ? उत्, अप्रवृत्तिपक्षे ? आद्ये धेरनिष्टत्वेन न स्यादित्यापादनासङ्गतेः । द्वितीये तल्लक्ष्ये परशास्त्रस्य प्रवृत्त्यभावेन द्विकार्ययोगरूपविप्रतिषेधाभावेन परेण पूर्वस्य बाधासम्भवेन निष्प्रतिद्वन्द्वितया धेः प्रवृत्तिसम्भवेनाप्रवृत्तौ बीजालाभात् ।

न च तातङ्पक्षे तेन बाधितः 'धिः' तदप्रवृत्तिपक्षेऽपि न प्राप्नोति । अस्यामवस्थायाम् "विप्र०" ( पा० सू० १।४।२ ) इति सूत्रस्य नियामकतया धिविधायकस्य तातङ्शास्त्रविषयातिरिक्तविषयत्वेन सङ्कोचस्य कल्पितत्वादिति वाच्यम्, समसमयप्रसक्तयोर्द्वयोः कार्ययोरेकस्मिन्प्रयोगे सामानाधिकरण्यासम्भवरूपविप्रतिषेधमुपजीव्य प्रवर्तमानेन "विप्र०" ( पा० सू० १।४।२ ) इति शास्त्रेण तादृशविप्रतिषेधव्यक्तिविषये पश्चात्प्राप्तपूर्वशास्त्रस्य सङ्कोचकल्पने ( अप्यन्यत्र तथा कल्पने[1] ) बीजाभावादिति चेत्, न; ण्वुल्तृचोर्व्रीहियवयोश्चैकस्मिन् प्रयोगे सामानाधिकरण्यासम्भवेन सामर्थ्यात्प्रयोगभेदेनानुष्ठानवदनित्ययोर्द्वयोः कार्ययोः 'रामेभ्यः' इत्येकस्मिन् प्रयोगे सामानाधिरण्यासम्भवेन प्रयोगभेदेन 'तिसृणाम्' इत्यादौ नित्ययोर्द्वयोः कार्ययोः प्रयोगभेदेनैकस्मिन्प्रयोग एव कालभेदेन चाव्यवस्थायाः[3] पौर्वापर्येण प्रसङ्गे परमेव भवतीति नियमेन सामान्यतः[4] पूर्वस्य परविषयत्वाभावबोधनद्वारा परशास्त्रोद्देश्यतावच्छेदकाक्रान्ते लक्ष्ये पूर्वशास्त्र-

---

१. 'अप्यन्यत्र तथा कल्पने' इति नास्ति क० पु० । २. 'प्रयोग' इति पाठः क० पु० ।
३. 'चाव्यवस्थया' इति पाठः क० पु० । ४. 'सामान्यतः' इति नास्ति क० पु० ।

## पुनः प्रसङ्गविज्ञानात् सिद्धम् ॥ ३९ ॥

**नन्वेवम् 'तिसृणाम्' इत्यत्र परत्वात् तिस्रादेशे पुनस्त्रयादेशः स्यादत आहः—**

---

बोधितकार्यप्रवृत्त्यनुमानस्य सकृद्गतिन्यायपक्षे आवश्यकतया प्रयोगान्तरेऽपि धिभावानापत्तेरित्याशयात् ।

नन्वेवमपि "न वेति विभाषा" ( पा० सू० १।१।४४ ) इति व्यर्थम्, 'शूनः' इत्यत्र "वचिस्वपि०" ( पा० सू० ६।१।१५ ) इति सूत्रस्य चारितार्थ्येन 'शुशाव' इत्यादौ "विभाषा श्वेः" ( पा० सू० ६।१।३० ) इत्यस्य चारितार्थ्येन 'शुशुवतुः' इत्यादावुभयोः प्रसङ्गे परत्वाद्विकल्पे सकृद्गतिन्यायेनोक्तरीत्या 'शिश्वियतुः' इत्यादावपि "वचिस्वपि०" ( पा० सू० ६।१।१५ ) इति सम्प्रसारणाप्रवृत्त्येष्टसिद्धेः ।

न च तत्सूत्राभावे निषेधमुखेन विधिमुखेन वा प्रवृत्तिस्स्यात्, तथा च कित्येव पित्येव वा विकल्पः स्यात्, उभयत्र विकल्पो दुर्वच इति वाच्यम्, विधिमुखेन प्रवृत्तावप्यप्राप्तिस्थले पितीव प्राप्तिस्थले कित्यपि परत्वादस्यैव प्रवृत्त्येष्टसिद्धेरदोषादिति चेत्, न; पुनः प्रसङ्गविज्ञानपक्षे निर्वाहार्थं तस्य चारितार्थ्यात् । अत एव भाष्ये 'अशिष्यो वा विदितत्वात्'[1] इति विकल्पार्थकवापदघटितेन वार्तिकेन पाक्षिकं तत्प्रत्याख्यानं सङ्गच्छते ।

**सिद्धमिति ।** न चैवं तातङ्पक्षेऽपि धिर्दुर्वारः, पुनः प्रसङ्गाश्रयणपक्षे "विप्र०" ( पा० सू० १।४।२ ) इत्यस्य विधित्वेन परशास्त्रविषये पूर्वस्य सङ्कोचकल्पनासम्भवात् । प्रयोगान्तरे तत्प्रवृत्तिवत्तातङ्घटितप्रयोगेऽपि परस्य तातङः पूर्वमभ्यनुज्ञानेन पूर्वं तत्प्रवृत्तौ ततस्तटस्थ इवात्रापि पूर्वं शास्त्रप्रवृत्तेर्दुर्वारत्वादिति वाच्यम्, एतत्परिभाषाद्वयस्यापि लक्ष्यानुरोधेनैव व्यवस्थापकतायाः सिद्धान्तेऽङ्गीकारेण प्रकृतेऽपि लक्ष्यानुरोधेन तातङ्रहितप्रयोगे पुनः प्रसङ्गन्यायाश्रयणेऽपि तातङ्घटितप्रयोगे सकृद्गतिन्यायस्यैवाश्रयणेनादोषात् ।

केचित्तु भिन्धकीति पाठमभ्युपेत्य धिना बाधितोऽकच् न स्यादिति-अवतरणमाहुः । यदि तु "हुझल्भ्यः०" (पा० सू० ६।४।१०१ ) इति सूत्रोक्तभाष्यरीत्याऽन्तरङ्गत्वाद्द्वित्वमुच्यते तर्हि 'ईजतुः' 'बहून्यनड्वांहि' इत्यत्र सम्प्रसारणे आमि च कृते द्वित्वनुमोः प्रवृत्तिः फलम् । अत्रापि प्रतिपदोक्तत्वान्न दोषस्तर्हि 'त्रपुणी' इत्यत्र परत्वान्नुमि शीभाव इति दिक् ॥ ३९ ॥

**स्यादिति ।** न च जातिपक्षे 'तिसृणाम्' इत्यत्रोभयोरप्रतिपत्तौ प्रसक्तायां

---

१. व्या० म० भा० का० वा० पा० सू० १।१।४३ ।

**सकृद्गतौ विप्रतिषेधे[1] यद् बाधितं तद् बाधितमेव ॥ ४० ॥**

**तत्र क्वचिच्चरितार्थयोरेकस्मिन् युगपदुभयोः कार्ययोरसम्भवेन बाधकाभावात् पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थम् "विप्रतिषेध" सूत्रमिति सकृद्गतिन्यायसिद्धिः ।**

**यथा तुल्यबलयोरेकः प्रेष्यो भवति । स तयोः पर्यायेण कार्यं करोति, यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये तदोभयोर्न करोति, यौगपद्यासम्भवात् । तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसम्भवादप्रतिपत्तौ प्राप्तायामिदं परविध्यर्थम् । तत्र कृते यदि पूर्वप्राप्तिरस्ति, तर्हि तदपि भवत्येवेति 'पुनः प्रसङ्गविज्ञान'सिद्धिरिति "विप्रतिषेध" सूत्रे भाष्ये स्पष्टम् ।**

---

परं भवतीत्यनेन परस्याभ्यनुज्ञानेऽपि[2], पश्चात्प्रवर्तमानपूर्वशास्त्रस्य पूर्वप्रवृत्तपरशास्त्रबोधितकार्यविघटकत्वे पूर्वं परशास्त्रस्य विप्रतिषेधेनाभ्यनुज्ञानस्य वैय्यर्थ्यापत्त्या, तादृशे विषये पश्चात्प्राप्तपूर्वशास्त्रस्याप्रवृत्तिकल्पनेनैव सकृद्गतिन्यायसिद्धया, तद्भिन्नविषये पुनः प्रवृत्त्या, पुनःप्रसङ्गविज्ञानस्य सिद्धया च नियमार्थं विप्रतिषेधसूत्रावृत्तिर्व्यर्थेति वाच्यम्, 'चतस्रः' इत्यादौ "चतुरनडुहोः०" ( पा० सू० ७।१।९८ ) इत्याम्प्रवृत्तावपि चतस्रादेशस्य नाशाभावेन सकृद्गतिन्यायाप्रवृत्तावामापत्त्या तद्वारणायास्या आवश्यकतया, अत्रापि तयैव निर्वाह इत्याशयात् ।

किञ्च जातिपक्षे सत्प्रतिपक्षन्यायेनोभयोरप्यप्रतिपत्तौ प्राप्तायां पूर्वं परशास्त्रस्याभ्यनुज्ञानेन सत्प्रतिपक्षन्यायविघटनद्वारोभयोरपि प्रवृत्तिसम्पादनेन "विप्र०" ( पा० सू० १।४।२ ) इति सूत्रप्रवृत्तेश्चारितार्थ्यात् । एतेन पूर्वप्रवृत्तपरशास्त्रबोधितकार्यवैयर्थ्यविषये एव सकृद्गतिन्याय इत्यपास्तम् ।

**सकृदगताविति ।** समसमयप्रसक्ततुल्यबलसावकाशशास्त्रद्वयप्रसञ्जितकार्यद्वयस्यैकस्मिंल्लक्ष्ये सामानाधिकरण्यासम्भवरूपविप्रतिषेधे सति गतौ प्रसक्तौ सत्यां सकृदेकवारं यद्बाधितं तद्बाधितमेव । न पुनस्तस्य प्रसक्तिरिति भावः ।

**तृजादिवदिति ।** ननु 'व्रीहियवयोरन्यतरानुष्ठानेऽन्यतरशास्त्रस्याप्रामाण्यप्रसङ्गेन सामर्थ्यात् (अगत्या[3]) पाक्षिकाप्रामाण्यावहमप्यष्टदोषदुष्टं विकल्पमभ्युपेत्य पर्यायेण प्रवृत्तिराश्रीयते । इह तु शास्त्रयोरन्यत्र चारितार्थ्येन सामर्थ्याभावादष्टदोषदुष्टविकल्पमभ्युपेत्य पर्यायेण तृजादिवत्प्रवृत्तिकल्पनं नव्यमते

---

१. 'विप्रतिषेधेन' इति पाठः क० पु० ।　२. 'परस्याभ्युनुज्ञानेऽपि' इत्यपपाठः क० पु० ।
३. 'अगत्या' इति नास्ति क० पु० ।

**यत्तु कैयटादयो व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्यविषययोरचारितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिदमिति 'सकृद्गति'न्यायसिद्धिः। अत्र पक्षे एतन्नियमवशादेतल्लक्ष्यविषयकपूर्वशास्त्रानुपप्लव एव।**

---

दुर्वचमिति चेत्, न; अचरितार्थयोरिव चरितार्थयोरपि तुल्यबलत्वाविशेषाल्लक्ष्यानुरोधाद् अबाधेनैवोपपत्तौ[1] बाधो न न्याय्य इति न्यायात् पर्यायेण प्रवृत्तिस्वीकारे बाधकाभावात्।

ननु तुल्यबलत्वेन तयोः पर्यायेण प्रवृत्तिस्वीकारे तेनैव हेतुना कथमप्रतिपत्तिरापाद्यत इति चेदुच्यते :—उक्तन्यायसहकृतेन शास्त्रीयदृष्टान्तेन लौकिकदृष्टान्तेन चेदृशे विषये द्वेधापि लक्ष्यानुरोधात्कल्प्यत इति सर्वमनवद्यम्।

**प्रतिलक्ष्यं लक्षणोपप्लवादिति।** ननु व्यक्तिपक्षेऽपि शक्यतावच्छेदकीभूतगोत्वजात्यनुगतीकृतासु निखिलव्यक्तिष्ववच्छेदकधर्मैक्याच्छक्तिरेकैव, अकारणस्यापि कारणतावच्छेदकत्ववदलक्ष्यस्यापि लक्ष्यतावच्छेदकत्ववदशक्याया जातेश्शक्यतावच्छेदकत्वस्वीकारेण जातिविशिष्टव्यक्तिवाद इवात्रापि पक्षे एकेनैव पदेन जातिप्रकाकारकनिखिलव्यक्तिबोधस्सुकर इति व्यक्त्यन्तरबोधार्थमावृत्तिरूपवाक्योपप्लवो व्यर्थः।

यद्वा—'यः प्रकृष्टप्रकाशः स चन्द्रः', 'यः पीतवासाः स देवदत्तः' इत्यादाविव यो घटत्वाश्रयस्स घटपदवाच्य इत्येवं व्यक्तिमात्रविषयकशक्तिग्रहः। चन्द्रादिपदजन्यबोधे प्रकृष्टप्रकाशादीनामिव घटादिपदजन्यबोधे घटत्वादीनां न प्रकारतया भानम्। इदमेव हि घटत्वादेरुपलक्षणत्वं यत् स्वाश्रयाणां सर्वेषां स्वरूपतश्शक्तिग्रहविषयत्वं सम्पाद्य स्वयं शक्तिग्रहाविषयो बोधाविषयश्च भवति। एतदेवाभिप्रेत्य—

आनन्त्येऽपि हि भावनामेकं कृत्वोपलक्षणम्।
शब्दस्सुकरसम्बन्धो न च व्यभिचरिष्यति॥

इत्यभियुक्ताः।

न चैवं निर्विकल्पकत्वापत्तिः, तज्जन्यबोधे घटत्वादीनामभानादिति वाच्यम्, पदस्यैव प्रकारत्वाश्रयणात्, इत्येकशेषप्रकरणे विवरणकृतैव समाहितत्वात्। एवञ्च जातिपक्षे इव व्यक्तिपक्षेऽप्येकयैव शक्त्या जातिप्रकारकस्य पदप्रकारकस्य वा निखिलव्यक्तिबोधस्य श्रूयमाणेनैव सिद्धतया सर्वासामप्युद्देश्यत्वे सिद्धे व्यक्त्यन्तरबोधार्थमावृत्तिरूपवाक्योपप्लवो व्यर्थः।

---

१. 'अनेनैवोपपत्तौ' इति पाठः क० पु०।

**जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयासम्भवरूपविरोधस्थल उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनः प्रसङ्गविज्ञानसिद्धिरित्याहुः, तन्न; व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति न जातिपक्ष इत्यत्र मानाभावात् ।**

**'न ब्राह्मणं हन्यात्' इत्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात् । अत एव "सरूप०" सूत्रे भाष्ये जातौ पदार्थेऽनवय-**

---

न चैवमेकशेषसूत्रं व्यर्थम्, व्यक्तिपक्षेऽपि सकृदुच्चरितेनानेकव्यक्तिबोधसम्भवादिति वाच्यम्, अनेकव्यक्तीनामिवैकैकव्यक्तीनामपि शक्यतया एकैकव्यक्तिबोधनार्थम् 'घटोऽयम्' 'पटोऽयम्' इति वाक्यप्रयोगवद् व्यक्तिद्वयस्य प्रत्येकं बोधनार्थं घटपदद्वयस्य प्रयोगप्रसङ्गे साहित्ये द्वन्द्ववारणायैकशेषसूत्रस्य चारितार्थ्यात् ।

तथा च तत्तल्लक्ष्यविषययोरचारितार्थ्येन सामर्थ्याण्वुल्तृजादिवत्पर्यायेण द्वयोरपि प्रसङ्गे नियमार्थमित्यसङ्गतमिति चेत्, न; व्यक्तिपक्षे "इको यणचि" ( पा० सू० ६।१।७७ ) इत्यादौ संस्कार्यव्यक्तीनामानन्त्येन तासां युगपदेकबुद्धिविषयत्वासम्भवेनोपस्थितानामपि क्रमेणैव संस्कार्यतया सङ्ग्राहकेनैकेन वाक्येनैव सर्वसंस्कारासम्भवात्तत्तल्लक्ष्योपस्थितिकाले पुनः पुनः शास्त्रानुसन्धानस्यावश्यकतया तत्तल्लक्ष्यविषयकवाक्योपप्लवोऽत्र पक्षे इति बोध्यम् ।

जातिपक्षे तु जातेरेकत्वेन संस्कार्यतया तस्या एव प्राधान्येनोपस्थित्या तत्र संस्कार्यस्य सकृदुच्चरितेन वाक्येनैकप्रवृत्त्यैव सर्वत्र निर्वाहादावृत्तिरूपवाक्योपप्लवो व्यर्थ एव । यद्यपि जातौ कार्यासम्भवाद् व्यक्तीनामेव कार्यित्वम्, तथापि तासामाक्षेपलभ्यत्वेन तदंशे शब्दव्यापाराभावेनानेकव्यक्तिबोधनार्थमनेकपदप्रयोगाप्रसक्तेः ।

एवञ्च विनिगमनाविरहात्सर्वव्यक्त्याक्षेपेण सर्वत्र कार्यसम्बन्धे प्राप्ते यत्र बाधकाभावः, तावद्व्यक्तय एवाक्षिप्यन्ते, न तु यत्र बाधकमस्ति सापि व्यक्तिः, अविरुद्धव्यक्त्याक्षेपेण वचनस्य चारितार्थ्यात् । तथा च विरोधव्यक्तिविषये संस्कारकशास्त्रद्वयस्यापि तत्सम्बन्धाप्राप्तौ परशास्त्रबोधितकार्यसम्बन्धबोधनार्थम् "विप्र०" ( पा० सू० १।४।२ ) इति सूत्रम् । तस्मिन्कृते यदि पूर्वशास्त्रस्यापि विषयता तदा तटस्थ इव पूर्वशास्त्रबोधितकार्यसम्बन्धो भवत्येव । आक्षेपप्रतिबन्धकविरोधस्यास्फुरणात्पुनः प्रसङ्गन्यायसिद्धिरिति प्राचामाशयः ।

**सर्वं लक्ष्यमिति ।** विरुद्धमविरुद्धं च सर्वमित्यर्थः । जातिपक्षे त्वविरुद्धलक्ष्यमेवेत्यत्र प्रमाणाभावादिति भावः । प्रत्युत त्वदुक्तिविपरीतमेव भाष्ये दृश्यत इत्याह :—**न ब्राह्मणमिति ।** व्यक्तिपक्षेऽपि त्वदुक्तरीत्यैव निखिलव्यक्तिविषयक-

**त्वेन साकल्येन विधिप्रवृत्तेः "गौरनुबन्ध्यः' इत्यादौ सकलगवानुबन्धनासम्भवात् कर्मणो वैगुण्यमुक्तम् । द्रव्यवादे चासर्वद्रव्यावगतेः 'गौरनुबन्ध्यः' इत्यादावेकः शास्त्रोक्तोऽपरोऽशास्त्रोक्त इत्युक्तम् ।**

**किञ्च नहि भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्ष एव सर्वविषयत्वं न जातिपक्ष इत्यत्र मानमस्ति ।**

**अपि च व्यक्तिपक्षेऽप्यन्यव्यक्तिरूपविषयलाभेन चरितार्थयोरियं व्यक्तिर्विरोधात् स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम् । जातिपक्षेऽपि तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव; नैतद्व्यक्तिविषयकत्वमित्यत्र नियामकाभावः ।**

**तत्र लक्ष्यानुसारात् क्वचिच्छास्त्रीयदृष्टान्ताश्रयणम्, क्वचिल्लौकिकदृष्टान्ताश्रयणमिति भाष्यसम्मतमार्ग एव युक्त इति बोध्यम् ।**

**द्वयोः कार्ययोर्यौगपद्येनासम्भव एव विप्रतिषेधशास्त्रोपयोगी । इदम् "इको गुण०" इति सूत्रे कैयटे स्पष्टम् ।**

**यथा 'शिष्टात्' इत्यादौ तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः । यद्यपि तातङादेः स्थानिवद्भावेनास्त्येव तत्, तथाप्यादेशप्रवृत्त्युत्तरमेव सः, न तु तत्प्रवृत्तिकाले ।**

---

वाक्योपप्लवस्य सम्भवेनेष्टसिद्धये जातिपक्षाश्रयणपरभाष्यासङ्गत्यापत्तेरिति भावः ।

**वैगुण्यमिति** । ननु विनिगमनाविरहस्थले जातौ बोधितं कार्यं सर्वव्यक्तिविषयकं भवितुमर्हति । इह तु विरोधस्फुरणरूपविनिगमकस्य सत्वान्न सर्वव्यक्तिविषयकत्वं शास्त्रस्य सम्भवति इति वाच्यम्, 'कपिंजलानालभेत' इत्यादौ सर्वेषामालम्भनासम्भवात्, न हन्यादिति—निषेधरूपबाधकबलाच्च, सामान्यतो बहुत्वावच्छिन्नबोधकस्यापि बहुवचनस्य व्यक्तित्रयपरतया सङ्कोचकल्पनवदत्रापि गोत्वाश्रयसकलव्यक्तीनामालम्भनासम्भवात्, न हन्यादिति निषेधरूपबाधक--सत्वाच्च, यत्किञ्चिद् व्यक्तेरालम्भनेनैव शास्त्रस्य चारितार्थ्येन कर्मणो वैगुण्योक्तिरयुक्ता स्यादिति भावः ।

**एकश्शास्त्रोक्त इति** । त्वदुक्तरीत्या सर्वस्यापि शास्त्रविषयत्वेन भाष्यासङ्गतिरिति भावः । दूषणान्तरमप्याह—**अपि चेति** । **शक्यमिति** । जातिपक्षे विरोधाश्रयसंस्कार्यव्यक्तेरुभाभ्यामप्यनाक्षेपवद् व्यक्तिपक्षेऽपि विरुद्धव्यक्त्या स्वविषये संस्कारकशास्त्रद्वयस्याप्यनाक्षेपात् तद्विषयकविरुद्धवाक्यद्वयोपप्लवस्यैवाभावेन तत्सामर्थ्यमूलकपर्यायेण कार्यद्वयप्रवृत्तेरसम्भवादिति भावः ।

सिद्धान्तस्थितिमाह । **लक्ष्यानुसारादिति** । **आनन्तर्यासम्भव इति** । न च "तस्मिन्०" ( पा० सू० १।१।६६ ) इति सूत्रे पूर्वस्येत्यस्य षष्ठ्यन्तत्वेन

एवं नुम्तृज्वत्त्वयोः 'प्रियक्रोष्टूनि' इत्यादौ युगपदसम्भवः, यदागमा इत्यस्य नुम्प्रवृत्त्युत्तरं प्रवृत्तः। एवम् 'भिन्धि' इत्यत्र तातङ्धिभावयोर्युगपदेकस्थानिसम्बन्धस्याङ्गरूपनिमित्तानन्तर्यस्य चासम्भवो बोध्यः। नुम्नुटोरपि नुट्यजादिविभक्त्यानन्तर्यबाधः, नुमि ह्रस्वान्ताङ्गबाध इत्यसम्भवाद् विप्रतिषेधः।

क्वचिदिष्टानुरोधने पूर्वशास्त्रे स्वरितत्वप्रतिज्ञाबलात् स्वरितेनाधिकं कार्यमित्यर्थात् पूर्वमेव भवति। तेन सर्वे पूर्वविप्रतिषेधाः सङ्गृहीता इति "स्वरितेन" इति सूत्रे भाष्ये। विप्रतिषेधसूत्रस्थपरशब्दस्येष्टवाचित्वात् तत्सङ्ग्रह इति "विप्रतिषेध०" सूत्रे भाष्ये॥ ४०॥

नन्वेवम् 'एधते' इत्यादौ परत्वाद् विकरणे "अनुदात्तङितः" इत्यादिनियमानुपपत्तिः, तेन व्यवधानात्, अत आहः—

**विकरणेभ्यो नियमो बलीयान्॥ ४१॥**

अत्र "वृद्भ्यः स्यसनोः" इति सूत्रेण स्ये विभाषाऽतङ्विधानं ज्ञापकम्। अन्यथा स्वव्यवधाने नियमाप्रवृत्तौ सामान्यशास्त्रेणोभयसिद्धौ विकल्पविधानं

---

स्थानिविशेषणताया एव न्याय्यत्वेनादेशप्रवृत्तिकाले स्थानिनि स्वस्वनिमित्तानन्तर्यस्य (सम्भवेन[1] कथं तद) सम्भव इति वाच्यम्, स्वाव्यवहितपूर्वस्थानिकत्वसम्बन्धेनादेश एव तदन्वयस्वीकारेणादोषात्॥ ४०॥

**परत्वादिति**। विकरणस्यावकाशः खश् चानश्, नियमस्य लिङादि[2] विषयेऽवकाशः। "अनुदात्तङितः०" ( पा० सू० १।३।१२ ) इत्यादिप्रकरणस्थानां नियमानां तिबादिविधेश्च भिन्नवाक्यतया विधानमिति पक्षे सामान्यशास्त्रेणाष्टादशानां प्रवृत्तौ नियमेन जातनिवृत्तिः क्रियते, इति पक्षे इदमवतरणं बोध्यम्।

न च धातोः परस्य लस्य स्थाने तिबादयो भवन्ति, अनुदात्तङिद्भ्यः परस्य लस्य स्थाने तादयो भवन्ति, इति तिबादिभिर्नियमानामेकवाक्यतयैव विधानमस्तु, इयञ्च मास्त्विति वाच्यम्, "लः परस्मैपदम्" ( पा० सू० १।४।९९ ) इत्यत्र 'लः' इत्यस्य स्थानषष्ठ्यन्ततया तदादेशानामेव परस्मैपदात्मनेपदसंज्ञाविधानेनैकवाक्यतया विधानमिति पक्षे तिबादीनां प्रवृत्तिकाले परस्मैपदसंज्ञाया असम्भवेन, संज्ञायाश्च विधानोत्तरमेव प्रवृत्त्या, विहितानां संज्ञा, संज्ञया च विधानमिति, अन्योन्याश्रयापत्त्या तदसम्भव इत्याशयात्।

**अतङ्विधानमिति**। तद्धि 'वर्तिष्यते' 'वर्त्स्यति' इति रूपद्वयार्थम्। यदीयं

---

१. 'सम्भवेन कथं तद' इति नास्ति क० पु०।
२. 'लिङादि विषये' इति पाठः क० पु०।

**व्यर्थं स्यात् । अत्रार्थे ज्ञापिते तु 'स्य' इति तत्र विषयसप्तमी बोध्येति "अनुदात्तङितः" इत्यत्र भाष्यकैयटयोः स्पष्टम् ।**

**विकरणव्यवधानेऽपि नियमप्रवृत्तेरिदं ज्ञापकमिति "शदेः शितः" इत्यत्र भाष्ये ध्वनितम् ।**

**वस्तुतोऽस्माज्ज्ञापकात् "अनुदात्तङितः" इत्यादिप्रकरणं तिबादिविध्येक-**

---

न स्यात्तदा नियमेन तिबादिषु सत्सु परत्वाद् विकरणे "अनुदात्तङितः०" ( पा० सू० १।३।१२ ) इति नियमाप्रवृत्तौ जातनिवृत्त्ययोगेन पदद्वयस्यापि सिद्ध्या तद् व्यर्थमिति भावः ।

ननु भावे कर्मणि वा लृटि तत्र भावकर्मणोरात्मनेपदस्यैव प्राप्त्या तत्र पक्षे परस्मैपदविधानार्थं तच्चरितार्थमिति चेत्, न; तत्रापि धातोरित्यनुवृत्त्या तदसम्भवात् । ननु ज्ञापितेऽपि चारितार्थ्यं दुर्वचमत आह :—**अत्रेति । विषयसप्तमीति ।** सन्विषये परसप्तम्यामप्येकस्या अपि विषयभेदेन भेदाङ्गीकारादिति भावः ।

ननु शिति परतः "पाघ्रा०" ( पा० सू० ७।३।७८ ) इति ऋच्छादेशे "समो गम्यृच्छिभ्याम्" ( पा० सू० १।३।२९ ) इति नियमानुपपत्तिः । परिभाषाङ्गीकारेऽपि विकरणव्यवधानस्यात्र दुर्वारत्वादत आहः—**विकरणव्यवधानेऽपीति ।** अत्र पक्षे विकरणव्यवधानेऽपि नियमः प्रवर्तत इति परिभाषाकार इति भावः ।

ननु "अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्" ( का० वा० ७।१।७ ) इति वार्तिके अर्तीति द्वयोर्ग्रहणात् 'समृच्छते' इत्यस्य सिद्धचा नेदं बाधकम् । किञ्च विप्रतिषेधसूत्रबाधनार्थम् "विकरणेभ्यो नियमो बलीयान्" ( परि० ४१ ) इति परिभाषाङ्गीकारे "तस्मादित्युत्तरस्य" ( पा० सू० १।१।६७ ) इति परिभाषाबाधनार्थं विकरणव्यवधानेऽपि नियमः प्रवर्तत इति वचनाङ्गीकारे वा न विशेष इति प्रकारान्तरेण तत्प्रत्याख्यानमाहः—**वस्तुत इति ।** अनुदात्तङितो धातोः परस्य लस्य स्थाने एकत्वे गम्ये आत्मनेपदसंज्ञायोग्यैकवचनान्त इत्यादिक्रमेण वाक्यार्थाङ्गीकारेण विकरणापेक्षया परत्वादात्मनेपदसिद्ध्या परिभाषा निष्फलेति भावः ।

नन्वेवमात्मनेपदेनानुदात्तङिद्भ्यः परस्मैपदं बाध्यते शेषात्त्वात्मनेपदस्या[१]-विधानान्न प्रसक्तिरिति "शेषात्कर्तरि०" ( पा० सू० १।३।७८ ) इति सूत्रे शेषग्रहणं व्यर्थमिति चेत्, न; शेषग्रहणाभावे परस्मैपदविधायकप्रकरणैरेकवाक्यतया तेभ्य एव परस्मैपदं स्यात् न तु भूधातोः इति[२] । शेषग्रहणे कृते तु शेषेभ्योऽपि परस्मैपदविधानाद् भूधात्वादिभ्योऽपि परस्मैपदं सिद्ध्यति ।

---

१. 'पदस्य विधानात्' इति पाठः क० पु०; २. 'इति' इति नास्ति क० पु० ।

**वाक्यतया विधायकम्। तत्र "धातोः" इति विहितपञ्चमो, तत्समानाधिकरणम् "अनुदात्तङित." इत्यादि विहितविशेषणमेव।**

**एवञ्च लावस्थायां स्येऽपि तद्व्यवधाने तङ्सिद्धिः। शबादिभ्यस्तु पूर्वमेव नियमः।**

**यद्वा लमात्रापेक्षत्वादन्तरङ्गा आदेशाः, लकारविशेषापेक्षत्वात् स्यादयो बहिरङ्गा इति दिग्योगलक्षणपञ्चम्यामपि न दोषः।**

**अत्र पक्षे "वृद्भ्यः स्य०" इति सूत्रं स्यविषय इति व्याख्येयम्। आत्मनेपदशब्दादौ भाविसंज्ञाऽऽश्रयणीयेति तत्त्वम्।**

**भिन्नवाक्यतया सामान्यशास्त्रविहितानां नियमे तु लुगादिनेव नियमेन जातनिवृत्तिरङ्गीकार्या। 'भुक्तवन्तं प्रति मा भुङ्क्था इति ब्रूयात्, किं तेन कृतं**

---

ननु 'एधिष्यते' 'ऐधिष्ट' इत्यादौ लावस्थायामेव नित्यत्वात् स्यसिचोः प्रवृत्त्या तेन व्यवधानादात्मनेपदं दुर्वचम्। किञ्च 'निविशिष्यते' इत्यादौ पदान्तरसापेक्षनियमापेक्षयान्तरङ्गत्वात् स्यप्रत्यये तेन व्यवधानेन धातोर्लस्य परत्वाभावादात्मनेपदं दुर्वचमत आहः—**विहितपञ्चमीति।**

वस्तुतो नियमैकवाक्यतापन्नतिबादिविधेः स्यप्रत्ययापेक्षया परत्वेन विहितविशेषणाश्रयणं व्यर्थम्, न च स्यप्रत्ययो नित्यः, तिबाद्यादेशे कृतेऽकृते च लावस्थायाञ्च प्राप्त्या "शब्दान्तरे प्राप्नुवन् विधिरनित्यः" ( परि० ४३ ) इति न्यायेन तस्याप्यनित्यत्वेनादोषात्। "नेर्विशः" ( पा० सू० १।३।१७ ) इत्यादौ नेः परत्वयोग्यादित्यर्थान्न दोष इति बोध्यम्।

न चैवं पूर्वोक्तवाक्यभेदपक्षेऽपि परिभाषा व्यर्था, विहितविशेषणाश्रयणेनैव सर्वसामञ्जस्यात्। एवञ्च भाविसंज्ञाश्रयणक्लेशोऽपि नेति वाच्यम्, तत्पक्षे जातनिवृत्तेर्वाक्यभेदस्य चाङ्गीकारे गौरवेणैकवाक्यतापक्षोपन्यसनेनादोषात्। विहितविशेषणानाश्रयणेऽपि निर्वाह इति प्राचोक्तं पक्षान्तरमाहः—**यद्वेति। न दोष इति।** एकवाक्यतापक्षे इति भावः। न चात्र पक्षे प्रकृतिविशेषापेक्षत्वेनादेशानामपि बहिरङ्गत्वं तुल्यम्, अपरनिमित्तकत्वेनान्तरङ्गत्वस्यापि सूपपादत्वेन तस्य पूर्वं प्रवृत्तिसम्भव इत्याशयात्।

**अत्र पक्षे इति।** परिभाषाङ्गीकारपक्ष इव एकवाक्यतापक्षेऽपीति भावः। सिंहावलोकनन्यायेन भिन्नवाक्यतापक्षे प्राप्तानुपपत्तिपरिहारायाहः—**भुक्तवन्तमिति।**

**स्यात्' इति न्यायस्तु नात्र शास्त्र आश्रयितुं युक्तः, नियमादिशास्त्राणां वैयर्थ्यापत्तेः। ध्वनितं चेदम् "स्थानेऽन्तरतमः" इति सूत्रे भाष्ये।**

**शास्त्रानर्थक्यं तु वृद्धिसंज्ञासूत्रे भाष्ये तिरस्कृतम्। सामान्यशास्त्रेणोत्पत्तिस्तु सरूपसूत्रस्थकैयटरीत्या प्रधानानुरोधेन गुणभेदकल्पना तावत्प्रकृतिकल्पनया कार्या, प्रत्ययनिवृत्तौ च तत्कल्पितप्रकृतेरपि निवृत्तिः कल्प्येति गौरवमित्यन्यत्र विस्तरः॥ ४१॥**

## परान्नित्यं बलवत्[1] ॥ ४२ ॥

**कृताकृतप्रसङ्गित्वात्। तत्राक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनमुचितमिति, नित्यस्य बलवत्त्वे बीजम्॥ ४२॥**

---

ननु लुगादिस्थलेऽपि अनुत्पत्तिरेवान्वाख्यायत इति न दोष इत्यत आह:— **नियमेति**। आत्मनेपदपरस्मैपदनियमविधायकस्येत्यर्थः। एवञ्च **'नात्र शास्त्रे'** इत्यस्यात्मनेपदपरस्मैपदविधायकशास्त्रे इत्यर्थः।

नन्वेकस्याः प्रकृतेरनेकप्रत्ययानामव्यवहितपरत्वासम्भवादुत्पत्तिरेवादौ दुर्लभेति कथं जातानां निवृत्तिरित्युच्यतेऽत आह:—**सामान्येति। कैयटरीत्येति।** तत्र 'ह्य्'कस्माद् गर्गशब्दात्तदीयेषु बहुष्वपत्येषु प्रत्यर्थं शब्दनिवेशाद् बहुषु यञ्षु उत्पन्नेषु तन्निवृत्तये तेषामेकशेषोपसंख्यानं कर्तव्यमित्युक्त्वा, 'यथैव प्रत्ययबहुत्वम्, एवं प्रकृतिबहुत्वमपि कल्प्यते' इति भाष्यमुपादाय एकैकस्यापत्यस्य प्रकृत्यर्थेन योगात्तत्प्रातिपदिकार्थस्य विशेषणत्वात्प्रधानभेदे च गुणावृत्त्या गार्ग्यशब्दानामेवैकशेष इति तेनोक्तम्॥ ४१॥

**उचितमिति।** लोके आर्त्विज्यादिकर्मसूपस्थितयोरावश्यकानावश्यकयोर्द्वयोर्युगपदसम्भवे अक्लृप्ताभावस्य जामात्रादेरावश्यकस्यैवोपादानवत् 'तुदति' इत्यादौ गुणोत्तरमपि विकरणस्य प्रवृत्तेर्दुर्वारतया तस्यावश्यकत्वेन तस्यैव पूर्वं प्रवृत्तिरिति भावः।

ननु लोकन्यायस्य प्रत्यक्षसिद्ध"विप्र०" (पा० सू० १।४।२) इति शास्त्रापेक्षया दुर्बलत्वेन कथं तेन तद्बाधनमिति चेत्, न; 'परम्' इत्येव सिद्धे तत्र कार्यपदोपादानेन कृत्यर्हस्यैव परस्य पूर्वप्रवृत्तिबोधनेन स्वावृत्तिपूर्वप्रवृत्तिप्रयोजकधर्मानवच्छिन्नपूर्वशास्त्रकत्वरूपस्य कृत्यर्हत्वस्य तुल्यबलसावकाशशास्त्रस्थले एव सम्भवेन तत्रैवास्य प्रवृत्तेरौचित्यात्। कृत्यर्हत्वशरीरे स्वावृत्तित्व-

---

१. क्वचित् 'परान्नित्यं बलवत्' इत्येव परिभाषारूपेण स्वीकृतम्, क्वचिच्च 'कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यम्' इत्येव परिभाषारूपेणाङ्गीकृतम्। अत्र सर्वमङ्गलाकारेण 'परान्नित्यं बलवत्' इत्यपि परिभाषारूपेण स्वीकृतम्, 'कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यम्' इत्यपि च परिभाषारूपेण स्वीकृतम्।

**तदाह :—**

**कृताकृतप्रसङ्गि नित्यम्, तद्विपरीतमनित्यम्[1] ।। ४३ ।।**

**अत एव 'तुदति' इत्यादौ परादपि गुणान्नित्यत्वात् शप्रत्ययादिर्भवति ।।४३।।**

---

निवेशफलं तूभयोर्नित्यत्वेऽन्तरङ्गत्वे च "विप्रतिषेध०" ( पा० सू० १।४।२ ) सूत्रप्रवृत्तिरिति बोध्यम् ।

किञ्च कर्मव्यतिहारघञन्त[2]विप्रतिषेधग्रहणसामर्थ्येन तुल्यबलयोर्विप्रतिषेधस्यैव ग्रहणं नातुल्यबलयोः, अन्यथा 'भविष्यति' इत्यादावविरुद्धयोरिट्स्यप्रत्यययोर्विषये एतत्प्रवृत्तावपि पुनः प्रसङ्गाश्रयणेनैव सिद्धेस्तद्व्यर्थम् । न चैवमप्युभयोरुक्तस्थलेऽविरोधेनाप्रतिपत्तेरसम्भवात् पर्यायेण प्रवृत्तिविषये इव युगपत्प्रवृत्तिविषयेऽपि "विप्र०" ( पा० सू० १।४।२ ) इति सूत्रेण परमेवेति नियमेनेदृशे विषये सकृद्गतिन्यायस्यैव प्रवृत्त्या पुनः प्रसङ्गाश्रयणं दुर्वचमिति वाच्यम्, "विप्रतिषेध०" ( पा० सू० १।४।२ ) सूत्रस्य परिभाषात्वेन अनियमप्रसङ्गे एव प्रवृत्त्योक्तस्थले तदसम्भवेनादोषात् ।

एवञ्च परस्परप्रवृत्तिप्रतिबन्धकपरस्परप्रवृत्तिकत्वरूपविरोधसद्भावे एवास्य प्रवृत्तिर्न तदसम्भवे इति नित्यानित्ययोरन्तरङ्गबहिरङ्गयोर्वा "विप्रतिषेध०" ( पा० सू० १।४।२ ) सूत्रेण न व्यवस्थेति बोध्यम् ।। ४२ ।।

ननु कृताकृतप्रसङ्गीत्यत्र कथं समासः, न च क्तेन नञ्विशिष्टेनेति कर्मधारयः, एकस्मिन्नेव कार्ये कृतत्वाकृतत्वयोरेकस्मिंल्लक्ष्ये सामानाधिकरण्यासम्भवेन तदप्राप्तेः । न च कालभेदेन तयोः सामानाधिकरण्यम्, तथा सति 'युवजरती' इत्यादौ युवत्यामेव जरतीधर्मारोपेण सामान्याधिकरण्यप्रतिपादकग्रन्थस्यासाङ्गत्यापत्तेः ।

न च कृतश्चाकृतं चेति द्वन्द्वः, कार्यस्य, विशेष्यस्यात्रैक्येऽप्यन्यत्र पदार्थतावच्छेदकभेदेन शिवरामयोरभेद इतिवत्तदुपपत्तेरिति वाच्यम्, तथा सति एकस्मिन्नेव घटे 'श्यामसुन्दरौ स्तः' इति प्रयोगापत्तेः ।

किञ्च कस्मिंश्चित्कार्ये कृतेऽन्यस्मिन्नकृते यत्प्रसङ्गि तन्नित्यमित्यर्थापत्तेरेति चेत्, उच्यते; भावक्तान्तयोर्द्वन्द्वः । तेनोपपदसमासः । यस्य प्रवृत्तावप्रवृत्तौ च सत्यां यत्प्रसङ्गि तत्तदपेक्षया नित्यम् । यद्वा कृते संस्कृतेऽकृतेऽसंस्कृते वा यत्प्रसङ्गि तन्नित्यमित्यर्थः । **'तुदति' इत्यादावीति** । आदिना 'बभूव' इत्यस्य सङ्ग्रहः ।। ४३ ।।

---

१. समुपलभ्यमानमुद्रितपुस्तकेषु स्वतन्त्रपरिभाषारूपेणास्या अत्र पाठो नोपलभ्यते ।

२. 'फञन्त' इति पाठः क० पु० ।

**यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वमित्याशयेनाह :—**

**शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ।। ४४ ।।**

**इदं 'शदेः शितः' इति सूत्रे भाष्ये स्पष्टम् । तत्र हि 'न्यविशत' इत्यत्र विकरणे कृते तदन्तस्याड्, अकृते विकरणे धातुमात्रस्येत्यडनित्य इत्युक्तम् ।। ४४ ।।**

**एतत्तुल्यन्यायेनाह :—**

**शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ।। ४५ ।।**

**एतन्मूलकमेवाह :—**

**लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः ।। ४६ ।।**

**अतिदेशविषये इयम् "असिद्धवत्०" सूत्रे कैयटेनोक्ता ।। ४६ ।।**

---

अस्याः 'अपीपटत्' इत्युदाहरणम् । तत्र वृद्ध्यपेक्षया टिलोपः शब्दान्तरप्राप्त्यानित्य इति परत्वाद् वृद्धौ सत्यां टिलोपेऽनग्लोपित्वात्सन्वद्भावसिद्धिः । अत्र बीजं तु[१] व्यक्तिपक्षे लक्ष्यभेदेन लक्षणस्य भिन्नतया एकस्यैव लक्षणस्य पुनः प्रसक्त्यभावेनैकस्मिन्कृताकृतप्रसङ्गित्वस्यासम्भवादित्याहुः । **इत्युक्तमिति ।** 'न्यविशत' इत्यत्र विकरणस्य शब्दान्तरात्प्राप्त्या अटश्शब्दान्तरस्य प्राप्त्योभयोरनित्यत्वात्परत्वादटि तद्विशिष्टस्य विशिष्टग्रहणेन ग्रहणादात्मनेपदम् ।। ४४ ।।

शब्दान्तर इत्यस्योदाहरणम् 'करिष्यति' इत्यत्र स्यप्रत्ययस्य शब्दान्तरे प्राप्त्यानित्यत्वात्परत्वात्तिबादय इति[२] । एतत्फलं तु "अनुदात्तङितः०" ( पा० सू० १।३।१२ ) इत्यत्रैकवाक्यतापक्षे विहितविशेषणानाश्रयणम् । अत एव "वस्वेकाज्०" ( पा० सू० ७।२।६७ ) इति सूत्रे 'विभिद्वान्' इत्यादौ द्विर्वचनस्य शब्दान्तरे प्राप्त्याऽनित्यत्वेन द्विर्वचने कृते एकाच्त्वाभावादिटोऽप्राप्त्योभयोरनित्यत्वेन परत्वादिट् प्राप्नोतीत्याशङ्क्य 'कृतद्विर्वचनानामिति वक्तव्यम्' इति भाष्योक्तं सङ्गच्छते ।। ४५ ।।

**"असिद्धवत्०" ( पा० सू० ६।४।२२ ) सूत्र इति ।** तत्र हि एतत्सूत्राभावे 'कुर्वः' इत्यादौ 'कृ उ वस्'[३] इति स्थिते, गुणोकारलोपयोः प्राप्तौ लोपोत्तरं गुणस्या-

---

१. 'अत्र बीजं तु' इति नास्ति: क० पु० ।
२. 'इति' इति नास्ति क० पु० ।
३. 'कृ वस्' इति पाठः क० पु० ।

**यदा तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादिविचारो यदाऽपि व्यक्तिविशेषाश्रयणाभावः, तदाह :—**

**क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता ॥ ४७ ॥**

**कृते द्वितीये नित्यत्वेनाभिमतस्य पुनः प्रसङ्गमात्रं नित्यत्वव्यवहारे प्रयोजकम्, न तु बाधकाबाधितफलोपहितप्रसङ्गोऽपि तथेति भावः ॥ ४७ ॥**

---

तिदेशेन प्राप्त्याऽनेन न्यायेन तस्यानित्यत्वेन नित्यत्वात्प्रागुकारलोपे उप्रत्ययान्तत्वाभावात् "अत उत्०" ( पा० सू० ६।४।११० ) इति उत्त्वानापत्तिः। स्थानिवद्भावस्तु न, अकारस्यादिष्टादचः पूर्वत्वादित्युक्तम्। 'कुर्वः' इत्यादौ गुणापेक्षया नित्यत्वात्प्रागुकारलोपे सति न गुणः। कृते हि तस्मिन्प्रत्ययलक्षणेन गुणः प्राप्नोतीत्येतन्न्यायेनानित्य इत्युक्तम्।

नन्वेवम् 'तुदति' इत्याद्यसिद्धिः, शब्दान्तराल्लक्षणान्तरेण च, गुणे कृते विकरणप्राप्तेरत आह :—**यदा त्विति**। अत एव "वदव्रज०" (पा० सू० ७।२।३) इति सूत्रे भाष्ये 'अपिपठिषीत्' इत्यादौ सकारस्य वृद्धिलोपयोः प्रसङ्गे नित्यत्वाल्लोप इत्युक्तम्। अन्यथाऽकृतायां वृद्धौ "अतो लोपः" ( पा० सू० ६।४।४८ ) इति, कृतयां वृद्धौ तु "आतो लोप०" ( पा० सू० ६।४।६४ ) इति शब्दान्तरप्राप्तेर्लक्षणान्तरप्राप्तेश्च सत्त्वेन नित्यत्वोक्तिरसङ्गता स्यात्। अनाश्रितोपाधिभेदस्य लोपाख्यस्य कार्यस्य कृताकृतप्रसङ्गित्वान्नित्यत्वमाश्रितमिति कैय्यटः।

लक्षणान्तरेणेत्यस्योदाहरणम् 'अजरांसि' इति। अत्र नुम्जरसोः प्राप्तयोः परत्वाज्जरस्[१]। अत्र पूर्वमजन्तलक्षणः, पश्चाज्झलन्तलक्षण इति नुमोऽनित्यत्वम्। जरसस्त्वजन्तलक्षणे नुमि कृते निर्दिश्यमानस्य नुमा व्यवधानाद् विभक्त्यानन्तर्याभावादनित्यत्वादुभयोः प्राप्तौ परत्वाज्जरस् ॥ ४६ ॥

जातिपक्षे लक्ष्यभेदेऽपि कार्यस्यैक्येन कृताकृतप्रसङ्गित्वस्य तस्मिन्सुवचत्वादिति भावः। यदा 'जह्वार[२]' इत्यत्र पूर्वम् "अचो ञ्णिति" ( पा० सू० ७।२।११५ ) इति वृद्धिः, "ऋतश्च संयोगादेः" ( पा० सू० ७।४।१० ) इति गुणे "अत उपधायाः" ( पा० सू० ७।२।११६ ) इति वृद्धिरिति लक्ष्यभेदेऽपि विधीयमानवृद्धिरूपकार्यस्यैक्यात्पूर्वं वृद्धिः।

न च परत्वात् पूर्णं गुणे ततः "अत उपधायाः" ( पा० सू० ७।२।११६ ) इति वृद्ध्या नैतत्फलमिति वाच्यम् "जाग्रोऽवि०" ( पा० सू० ७।३।८५ ) इति सूत्रे चिण्णल्पर्युदासेन गुणे कृते वृद्ध्यभावस्य ज्ञापनेन ततो वृद्ध्यनापत्तेः। एतत्फलम् "ह्म्यन्त०" ( पा० सू० ७।२।५ ) इति सूत्रे जागृहणं न कार्यम। एवञ्च जातिव्यक्तिपक्षाभिप्रायके एते लक्ष्यानुरोधाद् व्यवस्थिते ॥ ४७ ॥

---

१. 'परत्वज्जरस्' इत्यपपाठः क० पु०।　　२. 'जहार' इति पाठः क० पु०।

तदाह :—

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥ ४८ ॥**

क्वचित्तु बाधकाबाधितफलोपहितप्रसङ्ग एव गृह्यते तदाह :—

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥ ४९ ॥**

सप्तमे कैयटेनैतदुपष्टम्भकं लोकव्यवहारद्वयमुदाहृतम्। बालिसुग्रीवयोर्युध्यमानयोर्भगवता बालिनि हतेऽपि सुग्रीवस्य बालितः प्राबल्यं न व्यवहरन्ति, भगवत्सहायैः पाण्डवैर्जये लब्धेऽपि पाण्डवानां प्राबल्यं व्यवहरन्ति चेति सर्वं चेदं लक्ष्यानुरोधाद् व्यवस्थितम् ॥ ४९ ॥

"लुटः प्रथमस्य" इति सूत्रे भाष्ये—

**स्वरभिन्नस्य प्राप्नुन्विधिरनित्यो भवति ॥ ५० ॥**

इति पठ्यते।

यत्र त्वेकस्यैव कार्यस्य परत्वं नित्यत्वं च, तत्रेच्छयान्यतरत्तदुभयं वा तस्य

---

अस्योदाहरणम् 'आह्वः' प्रह्वः' इति। अत्राङ्पूर्वात् ह्वेञः 'क' प्रत्यये आल्लोपसंप्रसारणयोः प्राप्तयोः परत्वादातो लोपे, ततः सम्प्रसारणे तस्यासिद्धत्वादुवङ्भावे यणि 'आह्वः' इति। न च नित्यत्वात्सम्प्रसारणम्, अन्तरङ्गत्वात् पूर्वरूपेण बाधेऽपि 'यस्य निमित्तं लक्षणान्तरेण विहन्यते न तदनित्यम' इति न्यायेनोभयोर्नित्यत्वस्य तुल्यत्वादित्युक्तम् ॥ ४८ ॥

यस्य निमित्तं लक्षणान्तरेण विहन्यते तदप्यनित्यमित्यस्योदाहरणं तु 'स्योनः'। अत्र गुणात्पूर्वमूठ्, गुणस्तूठि यणा बाधितत्वादनित्य इति बोध्यम्। 'अस्मै' इत्यत्र "अनाप्यकः" ( पा० सू० ७।२।११२ ) इत्यपेक्षया नित्यत्वान्ङेः स्मै, तस्मिन् सति हलि लोपेनादेशस्य[1] बाधात्तदनित्यम् ॥ ४९ ॥

**स्वरभिन्न** इत्यत्र स्वरेण भिन्नः स्वरभिन्न इत्यर्थः। शब्दान्तरप्राप्तिरेवात्राप्यनित्यत्वे बीजमिति बोध्यम्। **पठ्यते इति**। तत्र हि श्वः कर्त्तेत्यत्र "तास्यनुदात्तेत्०" (पा० सू० ६।१।८६) इति स्वरस्य डादेशस्य च प्रसङ्गे नित्यत्वाड्डादेशे टिलोपे ततः स्वरे उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वानापत्तिमाशङ्क्यानया परि-

---

१. 'लोपेननादेशस्य' इति पाठः क० पु०।

**बलवत्त्वे नियामकमुल्लेख्यम्। अत एव तत्र तत्र परत्वान्नित्यत्वाच्चेति भाष्ये उच्यते।**

**वस्तुतस्तत्र परत्वादित्युक्तिरेकदेशिनः। स्पष्टं चेदं विप्रतिषेधसूत्रे कैयटे। "णौ चङि" इति ह्रस्वापेक्षया नित्यत्वान्तरङ्गत्वप्रयुक्तद्वित्वस्य प्रथमतः प्रवृत्तौ नित्यत्वादित्येव भाष्य उक्तम्। एवं नित्यान्तरङ्गयोर्बलवत्त्वमपि यौगपद्यासम्भव एवेति बोध्यम् ॥ ५० ॥**

**नित्यादप्यन्तरङ्गं बलीयः; अन्तरङ्गे बहिरङ्गस्यासिद्धत्वात्। तदाहुः—**

**असिद्धं बहिरङ्गमन्तरङ्गे ॥ ५१ ॥**

**अन्तः = मध्ये, बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये, अन्तर्भूतान्यङ्गानि**

---

भाषयोभयोरनित्यत्वात् परत्वात् स्वरेऽन्तोदात्तसिद्धिरुक्ता। **उल्लेख्यमिति**। प्रत्येकं समुच्चित्येवेति भावः। **एकदेशिन इति**। ईदृशे विषये पूर्वोक्तविप्रतिषेधाभावादिति भावः।

ननु नित्यान्तरङ्गत्वयुक्तस्थलेऽन्तरङ्गत्वादित्येवोल्लेख्यम्, न तु नित्यत्वादिति तुल्यन्यायादित्यत आहुः—**"णौ चङि०" ( पा० सू० ७।४।१ ) इति।** तत्र तुल्यबलवाचकविप्रतिषेधशास्त्रप्रवृत्त्यभावेन तथा कल्पने न मानमिति भावः ॥ ५० ॥

**नित्यादपीति**। अपिना परस्य ग्रहणम्। परापेक्षयान्तरङ्गस्य बलवत्त्वे बीजं तु "ओमाङोश्च" ( पा० सू० ६।१।९५ ) इत्यत्राङ्ग्रहणमिति अग्रे स्फुटीभविष्यति। नित्यापेक्षयास्य बलवत्वे तु "अचः परस्मिन्०" ( पा० सू० १।१।५७ ) इति सूत्रस्थभाष्योक्तयुक्तिरेवेति बोध्यम्।

अन्तरङ्गपदार्थस्य सापेक्षत्वद्योतनाय परिभाषाघटकान्तःपदार्थमाह :— **मध्ये इति**। तत्त्वस्य सापेक्षत्वात् कस्येति सम्बन्ध्याकाङ्क्षायां यथा 'पटुच्छात्रको देवदत्तः, इत्यादाववध्यवधिमतोस्साजात्यादन्यदीयच्छात्रत्वावच्छिन्नसमुदायापेक्षं पटुत्वं प्रतीयते, तथोपकारकपराङ्गशब्दसमभिव्याहारात्प्रत्यासत्त्याऽन्यदीयोपकारकसमुदायमध्य इति लभ्यते। तच्चोपकारकं वस्तुतो बहिरङ्गत्वेनाभिमत[1]-शास्त्रसम्बन्ध्येव भवतीत्याशयेनाह :—**बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्य इति।** इदं फलितार्थकथनम्।

पदार्थान्निरूप्य वाक्यार्थमाह—**अन्तर्भूतानीति**। अन्तस्स्थानीत्यर्थः। अधिकरणशक्तिप्रधानस्याप्यन्तश्शब्दस्य वृत्तिविषयेऽन्तरीपमित्यादाविवान्तस्थपरत्वसम्भवात्। एवं बहिरङ्गपदेऽपि बोध्यम्।

---

१. 'बहिरङ्ग' इति पाठः क० पु०।

**निमित्तानि यस्य तदन्तरङ्गम्। एवं तदीयनिमित्तसमुदायाद् बहिर्भूताङ्गकं बहिरङ्गम्। एतच्च "खरवसानयोः" इति सूत्रे "असिद्धवत्" सूत्रे च**

---

एवञ्च तत्तत्प्रयोगे उपस्थितमसिद्धत्वाश्रयत्वेनाभिमतं[1] यच्छास्त्रं तच्छास्त्रसम्बन्धिनिमित्तसमुदायान्तर्भूतनिमित्तसमुदायकत्वमन्तरङ्गत्वम्। एवं तत्तत्प्रयोगप्रसक्तासिद्धत्वप्रयोजकत्वेनाभिमतं यच्छास्त्रं तच्छास्त्रसम्बन्धिनिमित्तसमुदायानन्तर्भूतनिमित्तसमुदायकत्वं बहिरङ्गत्वं। ( एतेन[2] मध्ये इत्यन्तमध्याहारलभ्यमित्यपास्तम्। अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये इति सप्तम्यन्तद्वयस्यानन्वयापत्तेः। द्वितीयस्य विवरणरूपत्वं तु न युक्तम्, तस्योक्तार्थाबोधकत्वात्। फलितार्थपरत्वे त्वध्याहार इत्युक्तेरसङ्गतिः )। अत्र निमित्तवाचकाङ्गशब्देन नहि कार्यीति न्यायेन कार्यिभिन्नस्यैव ग्रहणमिति केचित्।

अन्ये तु गुणानाञ्च[3] इति न्यायेन नहि कार्यीत्यस्यात्राप्रवृत्त्याऽविशेषादुद्देश्यनिमित्तसमुदायस्य ग्रहणम्। अत एव 'पपुषः' इत्यादौ बहिरङ्गसम्प्रसारणस्यासिद्धत्वादाल्लोपानापत्तिमाशङ्क्याभीयान्तरङ्गपरिभाषां प्रत्याभीयाल्लोपादेरसिद्धत्वादन्तरङ्गाद्यभावेन नैतत्परिभाषाप्रवृत्तिरिति भाष्योक्तं सङ्गच्छते। अन्यथा तत्रासिद्धत्वप्रयोजकसमानाश्रयत्वस्याल्लोपशास्त्रीयनिमिभूतप्रकृतिप्रत्ययान्यूनानतिरिक्तनिमित्तकत्वरूपस्य परिभाषायामपि वक्तव्यतयाङ्गपदेन सप्तम्यन्तमात्रग्रहणे[4] न्यूनतयोक्तसमानाश्रयत्वाभावादसिद्धत्वप्रतिपादनपरभाष्यासङ्गतिः।

मम तु तत्तत्प्रयोगप्रसक्तशास्त्रेऽन्तरङ्गत्वस्य परिभाषालिङ्गत्वेनाङ्गपदेनोपकारकस्य सप्तम्यन्तासप्तम्यन्तोल्लिखितस्य सर्वस्यापि ग्रहणात्समानाश्रयत्वमक्षतम्। परिभाषाणां शास्त्रेष्वेव प्रवृत्त्या लिङ्गकोटौ शास्त्रस्यापि निवेशे फलाभावादित्याहुः।

नन्वत्रान्तर्भूतत्वं किं घटकत्वरूपम्? उत पूर्वोपस्थितिविषयत्वरूपम्? आद्ये घटकत्वमप्यवयवत्वरूपम्, शते पञ्चाशदिति न्यायेनाल्पसंख्याकत्वरूपम्[5]। आद्ये 'स्योनः' इत्यत्र संज्ञापञ्चकापेक्षलघूपधगुणादूठोऽन्तरङ्गत्वप्रतिपादनपरकैय्यटग्रन्थासङ्गत्यापत्तेः। 'पचावेदम्' इत्यादावेकारस्य बहिरङ्गगुणनिमित्ताकारेकारसमुदायाघटकत्वेनैत्वस्यान्तरङ्गत्वानापत्तेः।

---

१. 'उपस्थिताप्रसिद्धत्वा०' इति पाठः० क० पु०।

२. 'एतेन' इत्यादितः 'असङ्गतिः' इत्येतत्पर्यन्तं मूले कोष्टके वर्तते, क० पु० च नास्ति।

३. 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्' ( जै० मीमा० सू० पा० ३।१।२२ ) इति न्यायेनेत्यर्थः।

४. 'सप्त्यम्यन्ततया ग्रहणे' इति पाठः क० पु०।

५. 'किमल्पसंख्याकत्वरूपम्' इति पाठः क० पु०।

**भाष्यकैयटयोः स्पष्टम् ।**

**अत्राङ्गशब्देन शब्दरूपं निमित्तमेव गृह्यते, शब्दशास्त्रे तस्यैव प्रधानत्वात् । तेनार्थनिमित्तकस्य न बहिरङ्गत्वम् । अत एव "न तिसृचतसृ" इति निषेधश्चरितार्थः । अन्यथा स्त्रीत्वरूपार्थनिमित्तकतिस्रपेक्षयाऽन्तरङ्गत्वात् त्रयादेशे तदसङ्गतिः स्पष्टैव ।**

---

द्वितीये 'अग्नी इति' इत्यादावितिशब्दसापेक्षाप्लुतवद्भावापेक्षयाजपेक्षप्रकृतिभावस्यान्तरङ्गत्वानापत्तेः । संख्यासाम्याद् द्वितीयकल्पेऽपि किं पूर्वोपस्थितिविषयत्वं प्रयोगीयोच्चारणक्रमेण ? उत प्रक्रियाक्रमेण ? आद्ये 'खट्वोढा' इत्यादौ गुणस्यान्तरङ्गत्वानापत्तेः ।

द्वितीये 'धियति' इत्यादावियङोऽन्तरङ्गत्वानापत्तेः, 'स्योनः' इत्यत्र यणोऽन्तरङ्गत्वानापत्तेश्च, 'पचावेदम्' इत्यस्य पक्षद्वयेऽप्यसङ्ग्रहापत्तेश्चेति चेत्, न; लक्ष्यानुरोधेनोक्तस्य सर्वविधस्याप्यन्तरङ्गत्वस्य कार्यव्यवस्थापकत्वाङ्गीकारेणादोषात् । 'पचावेदम्' इत्यादौ पदद्वयसम्बन्धिवर्णद्वयप्रयोज्यकार्यापेक्षयैकपदस्थैकवर्णप्रयोज्यकार्यस्याल्पसङ्ख्याकनिमित्तत्वेन तस्य तस्मिन्नन्तर्भावात् तत्त्वस्य सूपपादत्वात् ।

**स्पष्टमिति** । तत्र हि 'पपुषः' इत्यादिसिद्धये आभीयेष्वन्तरङ्गपरिभाषाप्रवृत्तिविघटके परे सत्यन्तरङ्गे बहिरङ्गम्, सति च बहिरङ्गेऽन्तरङ्गं भवतीति भाष्यग्रन्थव्याख्यानकाले 'नहि वस्त्वन्तरनिरपेक्षं स्वभावसिद्धमन्तरङ्गं बहिरङ्गमिति किंचिदस्ति किन्तु परस्परापेक्षयेति' तत्रोक्तम् । एवञ्च तत्प्रयोगप्रसक्तयन्निमित्तसमुदायबहिर्भूतनिमित्तकं यत्तत्तदपेक्षया[1] बहिरङ्गम् । एवं यन्निमित्तसमुदायान्तर्भूतनिमित्तिकं यत्तत्तदपेक्षयान्तरङ्गमिति स्पष्टमेव लभ्यत इति भावः ।

प्राचीनोक्तं खण्डयति :—**अत्रेति । प्रधानत्वादिति** । तिस्रादेशादौ समप्राधान्येन शब्दार्थयोर्निमित्तत्वेनोल्लेखेऽप्यत्रोपकारकसामान्यवाचिनाङ्गशब्देन संस्कार्यत्वेनात्र शास्त्रे शब्दस्यैव प्राधान्यात् "प्रधाना**प्रधानयोः०**" ( परि० १०६ ) इति न्यायेन तस्यैव ग्रहणमुचितमिति भावः ।

वस्तुत इदम् 'सञ्चस्कार' इत्यत्र सुटोऽन्तरङ्गत्वप्रतिपादनपरवक्ष्यमाणग्रन्थविरुद्धम् । अत्रार्थे पाणिन्यादिसम्मतिमाह :—**न तिस्रिति । स्पष्टैवेति ।** 'तिसृणाम्' इत्यत्रान्तरङ्गत्वात् त्रयादेशे तत एव दीर्घे ततस्तिस्रादेशे तस्यासिद्धत्वादादेशे दीर्घप्राप्त्या स्थानिनि कृतत्वेन तद्बुद्धयाऽपि दीर्घप्राप्त्या तद्वैयर्थ्यमिति भावः ।

---

**१. 'यत्तदपेक्षया' इति पाठः क० पु० ।**

**अत एव 'त्रयादेशे स्रन्तस्य प्रतिषेधः' इति "स्थानिवत्" सूत्रस्थभाष्य-वार्त्तिकादि सङ्गच्छते ।**

**एतेन 'गौधेरः, पचेत्' इत्यादावेयादीनामङ्गसंज्ञासापेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वाद् वलिलोपो न स्यादिति परास्तम् । एयादेशादेरपरनिमित्तकत्वेनान्तरङ्गत्वाच्च ।**

---

केचित्वन्तरङ्गत्वात् त्रयादेशे, तत एव टापि, ततस्सवर्णदीर्घे "अचः परस्मिन्०" ( पा० सू० १।१।५७ ) इति स्थानिवत्त्वेन टापा व्यवधानात्तिस्रादेशाप्राप्त्या तद्वैय्यर्थ्यमित्याहुः ।

एतेन लक्ष्ये लक्षणस्येति न्यायेनादेशे दीर्घाप्राप्त्या तद्वैय्यर्थ्यमित्यपास्तम् । 'कुरुतः' इत्यत्र शेखरोक्तरीत्याऽऽदेशावयवस्थानिकादेशस्यान्यत्ववदत्रापि लक्ष्यभेदस्य सूपपादत्वात्[१] न दीर्घात्पूर्वं प्रतिपदोक्तत्वात् तिस्रादेशः, दीर्घस्यापि निमित्तांशे प्रतिपदोक्तत्वस्य तुल्यत्वात् ।

वस्तुतश्चतसृग्रहणं ज्ञापकमिति वक्तुं युक्तम् । तत्रादेशस्यासिद्धत्वादेव दीर्घाप्राप्तेः ।

ननु "नाजानन्तर्ये०" ( परि० ५२ ) इति परिभाषया तन्मते 'तिसृणाम्' इत्यत्रासिद्धत्वासम्भवान्न तस्य वैयर्थ्यमित्यरुचेराह :—**अत एवेति । सङ्गच्छत इति ।** न च 'तिसृणाम्' इत्यत्र "षट्त्रिचतुर्भ्यः०" ( पा० सू० ६।१।१७९ ) इति स्वरनिवृत्तिः फलम्, त्रयादेशे स्रन्तस्येत्यनेन तद्विषये तस्याप्रवृत्तिबोधनात् ।

**एतेनेति ।** परिभाषाघटकाङ्गपदेन प्रयोगस्थशब्दरूपनिमित्तस्यैव ग्रहणेनेत्यर्थः । 'पचेरन्' इत्यपपाठः, सीयुटोऽनङ्गाधिकारस्थत्वात्, किन्तु 'पचेत्, इति पाठः । **एयादीति ।** आदिना इयादिपरिग्रहः । बहुवचनं तु लक्ष्याभिप्रायेण । **अङ्गसंज्ञासापेक्षत्वेनेति ।** संज्ञिपरस्याङ्गस्येत्यस्य तत्रोपस्थितस्य निमित्तषष्ठीत्वेन प्रत्ययस्याङ्गपदवाच्यं प्रति निमित्तत्वासम्भवेन तत्र प्रकारीभूताङ्गसंज्ञां प्रत्येव निमित्तत्वस्य वक्तव्यतयाङ्गपदशक्तिग्रहप्रयोजकप्रत्ययादेर्ढस्य एयादेशस्याकारात्परस्य[२] अङ्गसंज्ञानिमित्तसार्वधातुकावयवस्य 'या' इत्यस्येय् स्यादित्यर्थेन तत्सापेक्षत्वमिति भावः ।

**परास्तमिति ।** संज्ञायाः प्रयोगस्थशब्दरूपत्वाभावादिति भावः । प्रत्युत वैपरीत्यमेवेत्याह :—**अपरनिमित्तकत्वेनेति ।** न परमुत्तरं निमित्तं यस्येत्यर्थः ।

---

१. 'सूपपदत्वात्' इति पाठः क० पु० ।
२. 'एयादेशस्यादकारात्परस्य' इति पाठः क० पु० ।

**ननु "येन विधिस्तदन्तस्य" इति सूत्रे भाष्ये "इको यणचि" इत्यादावपि तदन्तविधौ 'स्योनः' इत्यत्रान्तरङ्गत्वाद् यणो गुणबाधकत्वमिष्यते, तन्न सिद्ध्येत्, ऊनशब्दमाश्रित्य यणादेशः, नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद् गुण एव**

---

एवं चानैमित्तिकस्य स्थान्यपेक्षया पूर्वनिमित्तककार्यस्य च स्थान्यपेक्षया-परनिमित्तककार्यापेक्षयान्तरङ्गत्वस्वीकारान्नात्रासिद्धत्वप्राप्तिरिति भावः[1]।

ननु "ह्रस्वनद्यापः०" (पा० सू० ७।१।५४) "अचः परस्मिन्०" (पा० सू० १।१।५७) "अनुदात्तङितः०" (पा० सू० १।३।१२) "मिदचोऽन्त्यात्०" (पा० सू० १।१।४७) इत्यादिसूत्रस्थभाष्यविरोधः ?

आद्ये "कास्प्रत्ययात्०" (पा० सू० ३।१।३५) इत्यामो ग्रहणे 'कारया-ञ्चकार' इत्यादौ णेरयादेशात् परत्वान्नुटमाशङ्क्य नित्यत्वादयादेश इत्युक्तम्।

द्वितीये 'बेभिदिता' इत्यादौ यलोपाल्लोपयोः कृतयोः प्राप्तस्येट्प्रतिषेधस्य पञ्चमीसमासमाश्रित्य स्थानिवद्भावेन वारणं कृतम्।

तृतीये परत्वान्नित्यत्वाच्च विकरणे तैर्व्यवधानान्नियमाप्राप्तिमाशङ्क्य 'विकरणेभ्यो नियमो बलीयान्' (परि० ४१) इति समाहितम्।

चतुर्थेऽभक्तत्वे 'त्रपुणी' इत्यादौ शीभावात्पूर्वं नुमि शीभावो न स्यादि-त्युक्तम्।

अपरनिमित्तकत्वेनान्तरङ्गत्वस्वीकारे तु आद्ये नुटः, द्वितीयेऽल्लोपापेक्षयेटः, तृतीये नियमस्य, तुरीये शीभावस्य चान्तरङ्गत्वेन तेभ्यः पूर्वमेव प्रवृत्त्या भाष्यासङ्गतिः।

एवम् "जरायाः०" (पा० सू० ७।२।१०१) इति सूत्रस्थभाष्यविरोधोऽपि। तत्र हि 'जरसादेशाद् विभक्त्यादेशाः पूर्वविप्रतिषेधेन, 'अजरांसि' इत्यत्र नुमूजरसोः प्राप्तयोः परत्वाज्जस्'[2] इत्युक्तम्। निरुक्तान्तरङ्गत्वस्वीकारे पूर्वमेव शीभावे तदसङ्गतिरिति चेत्, न; सप्तम्यन्तार्थानिपेक्षपञ्चम्यन्तार्थापेक्षस्यान्तरङ्ग-

---

१. 'अत एवाश्वश्चाश्वश्चेत्यत्रैकशेषात्पूर्वं सवर्णदीर्घो न। अत्र च मानम् "ऊकालः०" (पा० सू०१।२।२७) इति निर्देशः "दिव उत्" (पा० सू० ६।१।१३१) इति तपरकरण-ञ्चेत्याहुः। केचित्तु समाहारेतरेतरद्वन्द्वयोर्ग्रन्थकृन्मते पर्यायत्वेन लाघवाभावान्नात्र तज्ज्ञापकं भवितुमर्हति। एकशेषोऽपि न फलम्, दीर्घेऽप्यन्तादिवद्भावेन सरूपबुद्ध्या तस्य नित्यत्वेन पूर्वं प्रवृत्तेरदोष इत्याहुः'। इत्यधिकः पाठः क० पु०।

२. 'परत्वाज्जरसित्युक्तम्' इति पाठः क० पु०।

**स्यादित्युक्तम् ।**

**अत्र कैयटः । सिवेर्बाहुलकादौणादिके न प्रत्यये गुणवलोपोठां प्रसङ्गे ऊठपवादत्वाद् वलोपं बाधते, गुणं त्वन्तरङ्गत्वाद् बाधते । गुणो ह्यङ्गसम्बन्धिनोमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयति । ऊठ् तु वकारान्तमङ्गमनुनासिकादिश्च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते यण्गुणौ प्राप्नुत इति ।**

**एवञ्च संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमेवोक्तमिति चेत्, न; तदन्तविधावपि बहुपदार्थापेक्षत्वरूपबहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्यासङ्गतेः ।**

---

त्वस्वीकारेऽपि शास्त्रान्तरेणोपात्त[1]सप्तम्यन्तपदार्थसापेक्षस्थले प्रकृतिप्रत्ययोभयापेक्षत्वेन पञ्चम्यन्तनिमित्तकत्वेनान्तरङ्गत्वानङ्गीकारात्, 'बेभिदिता' इत्यत्रेटोऽन्तरङ्गत्वेऽपि ''उपजनिष्य०'' ( परि० ६५ ) इति न्यानेन पूर्वमिटोऽप्रवृत्त्या तद्भाष्यस्य सामञ्जस्यात् ।

अत एव 'दुद्यूषति' इत्यत्रोभयोर्नित्ययोर्द्विवचनात्परत्वादूठ्यन्तरङ्गत्वाद् यणि ततो द्वित्वमिति सिद्धान्तः सङ्गच्छते । अन्यथा द्विर्वचनस्यापरनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वं प्रवृत्तौ तदसङ्गतिः ।

मम तु द्वित्वं प्रति सनो निमित्तत्वेनानैमित्तिकत्वरूपान्तरङ्गत्वस्य तत्राभावेन न तस्य पूर्वं प्रवृत्तिरिति तत्त्वम् ।

"अदसोऽसेः०" ( पा० सू० ८।२।८० ) इत्यत्र ह्रस्वदीर्घयोस्समाहारेऽपरनिमित्तकत्वेनान्तरङ्गत्वाद् ह्रस्व इति शेखरस्य तु नहि कार्यीति न्यायेन तस्यानैमित्तिकत्वेनान्तरङ्गत्वमिति भावः ।

**स्यादित्युक्तमिति ।** स्यादिति = ध्वनितमिति भावः । भाष्ये तूनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इत्येतावन्मात्रस्य सत्त्वात् ।

**ऊठपवादत्वादिति ।** न च लवमाचष्टे 'लौः' इत्यत्र णिलोपाल्लोपयोः स्थानिवत्त्वेन वलोपाप्राप्त्या ऊठि, क्वौ विधिं प्रति निषेधात् तदप्राप्त्या तस्य चारितार्थ्यसम्भव इति वाच्यम्, अनुनासिकनिमित्तस्योठोऽपवादत्वमित्याशयात् ।

**अन्तरङ्ग इति ।** गुणस्तु संज्ञापञ्चकविधायकवाक्यार्थपञ्चकसापेक्षत्वेन बहिरङ्गः, ऊठ् तु संज्ञापञ्चकानपेक्षत्वेनान्तरङ्गः । यत्सूत्रश्रवणोत्तरं यावता कालेन तदर्थाविषयकः शाब्दबोधो भवति ततोऽधिककालापेक्षया शाब्दबोधजनकत्वं बहिरङ्गत्वमिति स्वीकारादिति भावः ।

**असङ्गतेरिति ।** त्वमन्ते ऊठीव यण्यपीगन्ताङ्गाजादिशब्दद्वयमात्रा-

---

१. ''शास्त्रान्तरोपात्त' इति पाठः क० पु० ।

**बहिरङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्यादयाऽलाभाच्च। तथा सत्यसिद्धं बह्वपेक्षमल्पापेक्ष इत्येव वदेत्।**

**अत एव विप्रतिषेधसूत्रभाष्ये 'गुणाद्यणादेशोऽन्तरङ्गत्वात्' इत्यस्य 'स्योनः' इत्युदाहरणम्, न तु गुणादूठ् अन्तरङ्गत्वादित्युक्तम्।**

**त्वद्रीत्या तदपि वक्तुमुचितम्। प्राथम्यात् तदेव वा वक्तुमुचितम्। मम त्वन्तरङ्गपरिभाषया तद्वारणासम्भवात् तन्नोक्तम्।**

---

पेक्षत्वेनाल्पापेक्षत्वाद् गुणापेक्षयान्तरङ्गत्वस्य सुवचत्वेन भाष्यासङ्गतिरिति भावः।

न च गुणेऽपि पूर्वोपस्थितिनिमित्तकत्वरूपान्तरङ्गत्वस्य सुवचत्वेनोभयोरन्तरङ्गयोः परत्वाद् गुणः स्यादिति कैय्यटेनैव तदाशयस्य वर्णितत्वान्न भाष्यासङ्गतिरिति वाच्यम्, सिद्धान्तेऽपि त्वदुक्तान्तरङ्गत्वस्य गुणे सम्भवेन, यणोऽन्तरङ्गत्वाद् गुणबाधकत्वप्रतिपादनपरभाष्यासङ्गतेः। तस्मादत्र लक्ष्यानुरोधेन तादृशान्तरङ्गत्वस्यानाश्रयणात् तदसङ्गतिर्दुर्वारेति भावः।

ननु 'सि-ऊनः' इत्यत्र यण्गुणयोः प्रकृतिप्रत्ययसमुदायापेक्षत्वेन तुल्यत्वेऽपि नित्यत्वानित्यत्ववदन्तरङ्गबहिरङ्गत्वस्याप्यव्यवस्थितत्वेनैकस्मिन्नपि सुवचतया यण ऊनशब्दनिमित्तकत्वेन बहिरङ्गत्वेऽपि चतुष्काश्रयत्वेनान्तरङ्गत्ववद् गुणस्य पञ्चकाश्रत्वेन बहिरङ्गत्वेऽपि त्वदुक्तरीत्योनशब्दघटकनशब्दनिमित्तकत्वेनान्तरङ्गत्वस्य सूपपादतयोभयोरन्तरङ्गयोः परत्वाद् गुणः स्यादिति कैय्यटोक्तरीतिः साध्वीत्यरुचेराह :—**बहिरङ्गान्तरङ्गेति।**

ननु तस्य धने एतस्य धनमेकदेशभूतमिति सर्वलोकसाधारण्येन व्यवहारात् 'शते पञ्चाशत्' इति न्यायेन बह्वपेक्षत्वाल्पापेक्षत्वयोः सङ्ख्याद्वारकमन्तर्भूतत्वं बहिरङ्गत्वं सुवचमित्यत आहः—**तथा सतीति। वदेदिति।** अल्पसङ्ख्याकबहुसङ्ख्याकयोर्निमित्तयोरन्तर्भूतत्वादेः सङ्ख्याद्वारा कल्पनेनान्तरङ्गत्वसमर्थनापेक्षया[1] साक्षादेव तथा निर्दिशेदिति भावः।

ननु तथोक्तौ तत्सङ्ग्रहेऽपि तदितरासङ्ग्रहोऽत आह :—**अत एवेति।** तथा तदर्थानङ्गीकारादेवेत्यर्थः। ननु **'गुणाद्यणादेशोऽन्तरङ्गत्वात्'** इत्यनेन गुणादूठोऽन्तरङ्गत्वमुक्तप्रायम्। ऊठ्प्रवृत्तिं विना यणोऽप्राप्तेरत आह :—**प्राथम्यादिति।** ननु गुणादूठन्तरङ्ग इत्युक्तौ गुणाद्यण इत्यस्यासङ्ग्रहापत्तिः। किञ्च त्वदुक्तरीत्या नित्यत्वादूठः पूर्वं प्रवृत्तिसिद्धेर्नैतत्फलं वक्तुं युक्तमित्यत आह :—**उचितमिति।** नित्यान्तरङ्गयोरन्तरङ्गस्याभ्यर्हितत्वादन्तरङ्गपरिभाषाफलोपन्यासप्रक्रमात्तथैव वक्तुमुचितमिति भावः।

---

१. 'नान्तरङ्गत्वसमर्थनापेक्षया' इति नास्ति क० पु०।

**किञ्च सिद्धान्ते नित्यत्वाद् गुणात्पूर्वमूठ्, गुणस्तु ऊठि यणा बाधितत्वाद-नित्यः। ऊनशब्दमाश्रित्येत्यादिभाष्येण च परिभाषायामङ्गशब्देन सप्तम्याद्यन्त-तयोपात्तं शब्दरूपं निमित्तमेव गृह्यत इति स्पष्टमेवोक्तम्।**

**यत्तु कैयटेन तदन्तविधिपक्षे परत्वाद् गुणः प्राप्नोतीत्युक्तम्, तत्तु 'ऊन'-शब्दमाश्रित्येत्यादिभाष्यासङ्गतया चिन्त्यम्।**

**वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इति तु न युक्तम्। तत्सूत्रे भाष्य**

---

ननु भाष्यस्यान्यथोपपत्त्यसम्भवात्कैय्यटोक्तरीतिरावश्यकीत्यत आह :—**किञ्चेति।** चस्त्वर्थे। **सिद्धान्त इति।** तदन्तविधिपक्षे इत्यर्थः। न च सिद्धान्ते तस्य नित्यत्वेऽपि तदन्तविधिपक्षे गुणस्य परत्वेनान्तरङ्गत्वेन च यणा बाधा-सम्भवात् गुणस्यापि नित्यत्वात् पूर्वमूठः प्रवृत्तौ बीजाभावेन यण्गुणयोस्सम्प्रधा-रणपरभाष्यासङ्गतिस्तवस्थैवेति वाच्यम्, तदन्तविधिपक्षेऽन्तरङ्गबहिरङ्ग-भावव्यवस्थाया असिद्धिवदूठस्तन्मूलकनित्यत्वव्यवस्थापि न सिद्ध्येदिति भाष्या-शय इत्यदोषात्। अन्तरङ्गबहिरङ्गे न प्रकल्प्येयातामिति भाष्यस्योपलक्षण-त्वमिति न दोष इति भावः।

अङ्गपदेन सप्तम्याद्यन्तोपात्तं शब्दरूपमेव गृह्यत इत्युक्तेऽर्थे भाष्यसम्म-तिमप्याह :—**ऊनेति। सप्तम्यादीति।** आदिपदेन पञ्चम्यन्तं कार्यिविशेषणं षठ्यन्तञ्च गृह्यते। तेन पयोट पयोदेत्यादौ प्लुतस्य बहिरङ्गत्वं सिद्धम्। अत एव धर्मिग्राहकमानविरोधो[1] न। अन्यथा सप्तम्यन्तोपात्तयोर्ण्विशसोः 'विश्वौहः' इत्यत्र परस्मिन्परस्यान्तर्भावाभावेनान्तरङ्गत्वाद्युपपादनासम्भवेन भाष्याद्य-सङ्गतिः।

**भाष्यासङ्गत्येति।** ननु तदन्तविधिपक्षेऽन्तरङ्गबहिरङ्गे न प्रकल्प्ये-याताम्, अन्तरङ्गलक्षणस्य यणादेशस्य बहिरङ्गलक्षणो गुणो बाधकः प्रसज्येत। ऊनशब्दमाश्रित्य यणादेशो न शब्दमाश्रित्य गुण इत्युक्तम्। तत्र "इको यणचि" (पा० सू० ६।१।७७) इत्यत्र यदि तदादितदन्तविधी स्यातां तदा यणादेश-स्यापि प्रकृतिप्रत्ययसमुदायापेक्षत्वेन समत्वादन्तरङ्गत्वासम्भवेन परत्वाद् गुणः स्यादिति कैय्यटेन व्याख्यातम्, कथं भाष्यविरुद्धमिति चेत्, न; कैय्यटोक्त-रीत्या न प्रकल्प्येयातामित्यनन्तरमेव तदुपपादकस्यास्य ग्रन्थस्य वक्तुमुचितत्वेन तत्रानुक्त्या बाधकः प्रसज्येतेत्यनन्तरमस्योक्त्या बाधकत्वे हेतूपन्यसनपरतयैव योजयितुमुचितत्वेनान्तरङ्गबहिरङ्गभाववैपरीत्यप्रदर्शनमन्तरा तदसम्भवेन तत्प्र-दर्शनाय तदुपन्यास इति तत्सङ्गतिः।

गौधेरादौ प्राचोक्तं समाधनं खण्डयति :—**वलीति। न प्रवर्तत इति।** एतत्फलं तु 'क्नोपयति' 'यातिः' इत्यत्र पुकः क्ङिन्निमित्तस्यातो लोपस्य च

---

१. 'मान' इति क० पु० नास्ति।

**एव व्रश्चादिषु लोपातिप्रसङ्गमाशङ्क्योपदेशसामर्थ्यान्न ।**

**न च 'वृश्चति' इत्यादौ चारितार्थ्यम्, बहिरङ्गतया सम्प्रसारणस्यासिद्धत्वेन पूर्वमेव तत्प्राप्तेरिति भाष्योक्तेः ।**

**यत्तु नलोपस्य षट्संज्ञायामसिद्धत्वात् 'पञ्च' इत्यत्र "न षट्" इति निषेध इति, तच्चिन्त्यम् । नलोपस्य हि पदसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वाच्यम्,**

---

वलि लोपेनासिद्धत्वम् । अत्र मानं तु "चेले क्नोपेः" ( पा० सू० ३।४।३३ ) इति निर्देश एव । ऐतिकायनस्य वलिलोपेन सिद्धिरिति विप्रतिषेधसूत्रस्थभाष्येण ध्वनितोऽयमर्थः ।

तत्र हि 'वैयाकरणः' 'सौवश्वः' इत्यत्र य्वोर्वृद्धिप्रसङ्गे इयुवौ भवत इत्यर्थकेन व्याकरणान्तरस्थेनेयुवाविति सूत्रेण यणादेशस्यानवकाशत्वाद् बाधमुक्त्वा 'ऐतिकायने, औपगवे' चेयुवोश्चारितार्थ्यान्न यण्बाधकत्वमित्याशङ्क्याच्येव इयुवौ भवतः, अन्यथात्रैव यकारः श्रूयेतेत्याशङ्क्यात्र "लोपो व्योर्वलि" ( पा० सू० ६।१।६२ ) इति लोपो भविष्यतीत्युक्तम् । त्वन्मते वलि लोपे इयादेशस्य सिद्धत्वाल्लोपेन सिद्धिरिति भाष्यासङ्गतिरिति बोध्यम् । अत एव 'वाय्वोः' इत्यत्र वलि लोपो यणः स्थानिवत्त्वेन वारितो भाष्ये ।

**असिद्धत्वेनेति ।** ननु लोपसम्प्रसारणयोर्युगपदप्राप्त्या बहिरङ्गसम्प्रसारणस्य पूर्वमप्रवृत्तत्वेन च कथमत्रासिद्धपरिभाषोपन्यास इति चेत्, उच्यते; **'व्रश्चादिषु लोपातिप्रसङ्गे उपदेशसामर्थ्याद्'** वारिते ततः पूर्वपक्षिणा शास्त्रबाधकल्पनापेक्षया पदस्य विभज्यान्वाख्यानेऽन्तरङ्गं बलीय इति परिभाषां बाधित्वा पूर्वं सम्प्रसारणे तस्य चारितार्थ्येन सामर्थ्याभावाद् 'वव्रश्च' इत्यादौ लोपो दुर्वार इति पुनरपि लोपातिप्रसङ्गे उद्भाविते सिद्धान्तिना तत्रापि जातस्य सम्प्रसारणस्यासिद्धत्वाल्लोपप्राप्त्या चारितार्थ्यविघटनं कृतम् । तस्मात्सामर्थ्याल्लोपवारणमेव युक्तमिति तदाशयः ।

यद्वा लोपापवादत्वात्सम्प्रसारणे कृते तस्य चारितार्थ्यमिति शङ्काशयः । एतेन वलि लोपे जातबहिरङ्गासिद्धत्वं नेति तदर्थ इति कथं भाष्यविरोध इत्यपास्तम् । **पूर्वमेव तत्प्राप्तेरिति ।** इदं पश्चात्प्राप्तस्याप्युपलक्षणम् । **भाष्योक्तेरिति ।** उपदेशसामर्थ्यात्सिद्धमिति चेत्, न; अस्त्यन्यदुपदेशवचने प्रयोजनम् । सम्प्रसारणादिषु कृतेषु वकारस्य श्रवणं यथा स्यादिति । न वा एतत्प्रयोजनम्, बहिरङ्गाः सम्प्रसारणादयः, अन्तरङ्गो लोपः, 'असिद्धं बहिरङ्गमन्तरङ्गे' ( परि० ५० ) इत्युक्तम् ।

**असिद्धत्वादिति ।** यथोद्देशे षट्त्वस्याल्वृत्तित्वेन, कार्यकाले विकृतावयवनिबन्धनकार्ये एकदेशन्यायाप्रवृत्त्या नान्तत्वासम्भवेन षट्त्वाप्राप्त्यासिद्धत्ववर्णनमावश्यकमिति भावः ।

**तच्च, न; संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात्। 'पञ्च' इत्यत्र निषेधस्तु स्त्रियां यत्प्राप्नोति, तन्नेति व्याख्यानसामर्थ्येन भूतपूर्वषट्त्वमादायेति बोध्यम्।**

**अत एव कृतितुग्ग्रहणं चरितार्थम्। 'वृत्रहभ्याम्' इत्यादौ पदत्वनिमित्तकत्वेऽपि नलोपस्य बहिरङ्गत्वाभावात्। भ्यामः पदसंज्ञानिमित्तत्वेऽपि नलोपस्य तन्निमित्तकत्वाभावात्। परम्परया निमित्तत्वमादाय बहिरङ्गत्वा-**

---

नन्वेवं 'पञ्च' इत्यत्र का गतिरत आह :—**पञ्चेति। सामर्थ्येनेति।** यद्यपि 'प्रियपञ्चा द्रोपदी' इत्यत्र टापः "अन उपधा०" ( पा० सू० ४।१।२८ ) इति वैकल्पिकं ङीपश्च निषेधसम्पादनेन तथार्थाश्रियणस्य चारितार्थ्येन सामर्थ्योक्तिरयुक्ता, तथापि 'अजाद्यतष्टाप्' 'ऋचि पादोऽन्यतरस्याम्' 'ङीप्' अत्र पाद इत्यनुवर्तते ऋचीति निवृत्तम्। ततः "ऋन्नेभ्यः" इति न्यासेन सिद्धे ङीप्प्रकरणमध्ये पुनष्टाप्करणेन टापोऽपि निषेधबोधनेन भूतपूर्वं षट्त्वमादाय तत्प्रवृत्तेः सुवचत्वात्। किञ्च स्थानिवद्भावेन पूर्वं जातषट्त्वमादायापि निषेधः सुवचः, षट्त्वस्य स्वमतेऽनल्वृत्तिधर्मत्वात्।

ननु 'दत्तण्डिनौ' इत्यत्र नियमेनोभयोरपि पूर्वनिपातसिद्धये "नलोपः सुप्०" ( पा० सू० ८।२।२ ) इत्यत्र संज्ञाग्रहणस्यावश्यकतया तेनैवैतत्सिद्धेः, एवमुक्तिर्व्यर्था। न च नलोपः पूर्वनिपाते सति, नलोपे घित्वे च सति पूर्वनिपात इत्यन्योन्याश्रय इति वाच्यम्, द्युकावित्यादौ दिव्शब्दस्य पूर्वनिपातसिद्धये यस्य घित्वं भावि तत्पूर्वं प्रयोज्यमित्यर्थस्यावश्यकतया संज्ञाग्रहणेनैव सिद्धे 'दत्तदण्डिभ्याम्' इत्यादौ तदसम्भवाच्च।

न च तावन्मात्रार्थत्वे "द्वन्द्वे घि" ( पा० सू० २।२।३२ ) इत्यनन्तरं दिव इति सूत्रयितुमुचितम्, शब्दस्वरूपाध्याहारेण तदन्तविधिना 'परमद्युकौ' इत्यादिसिद्धेरिति वाच्यम्, 'ग्रामणिपुत्रौ' इत्यत्र ह्रस्वविषये पूर्वनिपातसिद्धये तस्यावश्यकत्वात्।

किञ्च गुरुशब्दस्य छत्रशब्देन द्वन्द्वे पूर्वनिपातानन्तरं तुक्प्रवृत्त्या घित्वासम्भवादनियमस्सिद्ध्यति। लक्षणानाश्रयणे तु नियमापत्तिरिति चेत्, न; भाष्ये पूर्वनिपातप्रकरणस्य प्रत्याख्यातत्वेन "समुद्राभ्राद्घः" (पा०सू० ४।४।११८) इति निर्देशेन तस्यानित्यत्वाद्वा 'दत्तदण्डिनौ' इत्यस्य सिद्ध्या संज्ञाग्रहणस्य वैय्यर्थ्यमित्याशयात्।

**चरितार्थमिति।** न च 'वृत्रहधनम्' इत्यत्रापरनिमित्तकत्वेन पदत्वस्यान्तरङ्गत्वं शङ्क्यम्, बहिर्भूतसुब्निमित्तकपदत्वापेक्षनलोपापेक्षयान्तर्भूतक्विब्निमित्तकत्वेन तुकोऽन्तरङ्गत्वाहानेः। **परम्परयेति।** बहिरङ्गत्वेनाभिमतशास्त्रघटकसंज्ञाविधायकशास्त्रान्तरोपात्तसप्तम्यन्तादिद्वारकं बहिरङ्गत्वं नेति भावः।

**श्रयण तु न मानम्। ध्वनितं चेदम् "नलोपः सुप्" इति सूत्रे भाष्य इति, तत्रैव भाष्यप्रदीपोद्द्योते निरूपितम्। अन्तरङ्गे कर्त्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्ग-मसिद्धमित्यर्थः। व्रश्चादिषु पदसंस्कारपक्षे समानकालत्वमेव द्वयोरिति बोध्यम्।**

**एतेन 'अन्तरङ्गं बहिरङ्गाद् बलीयः' इति परिभाषान्तरमित्यपास्तम्। एनामाश्रित्य 'विप्रतिषेध' सूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च।**

---

ननु सन्निपातपरिभाषया तत्प्रत्याख्यातमत आहः—**ध्वनितमिति**। त्वद्रीत्यानया तुकोऽप्राप्त्या तत्प्राप्तिमभ्युपगम्य सन्निपातपरिभाषया वारणपर-भाष्येण ध्वनितमित्यर्थः।

एवं पदार्थमुक्त्वा वाक्यार्थमाहः—**अन्तरङ्ग इति**। नन्वेवम् "लोपो व्योः०" (पा० सू० ६।१।६६) इति सूत्रस्थप्रागुक्तभाष्यविरोधः, लोपस्योपदेश एव प्राप्त्या तदानीं सम्प्रसारणस्य जातत्वतत्कालप्राप्तिकत्वयोरभावेनासिद्धत्वासम्भवोऽत आहः—**व्रश्चादीति**। आदिना पट्व्यादिसङ्ग्रहः।

**एतेनेति**। अर्थद्वयस्याप्यनयैव क्रोडीकारेणेति भावः। **प्रत्याख्यानादिति**। परिभाषाद्वयस्यापि प्रयोजनान्युपन्यस्योभे तर्हि कर्त्तव्ये,नेत्याह, अनयैव सिद्धं भवति, इहापि स्योनः, स्योनेति भाष्येण तत्प्रत्याख्यानस्य कण्ठत एव कृतत्वादिति भावः।

ननु "सम्प्रसारणाच्च" (पा० सू० ६।१।१०८) इति सूत्रे परापेक्षयान्त-रङ्गस्य बलीयस्त्वे "ओमाङोश्च" (पा० सू० ६।१।९५) इत्याङ्ग्रहणस्य ज्ञापकत्वमुपन्यस्य तस्याः प्रयोजनान्यप्युक्त्वा तत्र कतिपयप्रयोजनानामन्यथासिद्धिं प्रदर्श्येयमनावश्यकीत्याशङ्क्य, न चावश्यकमिदमेव प्रयोजनम्, आद्ये योगे बहूनि प्रयोजनानि, तदर्थमेषा परिभाषा कर्त्तव्या, प्रतिविधेयं दोषेष्विति प्रयोजनदि-क्प्रदर्शनेन कतिपयदोषसद्भावेऽपि प्रतिविधानपूर्वकमस्यावश्यकत्वबोधनेन, तथा "अचः परस्मिन्०" (पा० सू० १।१।५७) इति सूत्रे पट्व्येत्यत्र पूर्वपरयणादेश-योरन्तरङ्गनित्ययोर्मध्ये नित्यबलीयस्त्वमनादृत्यान्तरङ्गस्य कथं बलवत्त्वमित्या-शङ्क्य, मनुष्योऽयमित्यादिनावश्यकश्वशुरादिसम्बन्धिकार्यकरणात्पूर्वं सुहृत्कार्यानु-ष्ठानस्य लोके दर्शनेन, तस्य बलवत्त्वमुक्त्वाऽवश्यं चैषाश्रयितव्या।

स्वरार्थमित्यादिना बहुप्रयोजनैषेत्यादिग्रन्थेन च विप्रतिषेधसूत्रेऽनयैव सिद्धं भवतीति[1] भाष्यवार्त्तिककारोपन्यस्तेनान्तरङ्गबलीयस्त्वेन 'पचावेदम्' इत्यादि-कतिपयप्रयोजनानामसिद्ध्या स्वोपन्यस्तोठ्ग्रहणज्ञापितपरिभाषाया आवश्यकत्वेन, तस्यास्तदुक्तप्रयोजननिर्वाहयोग्यताशालित्वमस्तीति स्वोपन्यस्तपरिभाषायास्तुल्य-र्थत्वेन प्रवृत्तत्वान्नेदं भाष्यं सिद्धान्तभूतम्। "नाजानन्तर्ये०" (परि० ५१) इत्यपवादसाहित्यराहित्याभ्यां तयोर्भेदस्यावश्यकत्वादिति चेत्, न; सिद्धान्ते नाजानन्तर्यपरिभाषाया अनाश्रयणेन त्वदुक्तभेदासम्भवेन पृथगङ्गीकारे गौरवेण फलाभावेन च तद्भाष्यस्यैकदेश्युक्तित्वात्।

---

१. 'अनयैव सिद्धं भवतीति' इति नास्ति क० पु०।

**अन्तरङ्गशास्त्रत्वमस्या लिङ्गम् ।**

**इयं च त्रिपाद्यां न प्रवर्तते, त्रिपाद्या असिद्धत्वात् । अस्याञ्च "वाह ऊठ्" सूत्रस्थमूड्ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायीस्था । अन्यथा सम्प्रसारण-मात्रविधानेन लघूपधगुणे "वृद्धिरेचि" इति वृद्धौ 'विश्वौहः' इत्यादिसिद्धेस्तद्-वैय्यर्थ्यं स्पष्टमेव । सत्यां ह्य तस्यां बहिरङ्गसम्प्रसारणस्यासिद्धत्वाल्लघूपधगुणो न स्यात् ।**

**न च "पुगन्त" इति सूत्रे निमित्तमिको विशेषणम्, अत एव 'भिनत्ति' इत्यादौ न गुणः । एवं च 'नाजानन्तर्ये' इति निषेधात् कथं परिभाषाप्रवृत्तिरिति**

---

**लिङ्गमिति ।** ननु "अतो रोर०" (पा० सू० ६।१।११३) इति सूत्रेऽप्लुता-दिति विशेषणसामर्थ्यात् 'प्लुतो नासिद्धः' इत्युक्त्वाऽप्लुतादप्लुतवचनेऽकारहशोः समानपदे प्रतिषेधो वक्तव्यः, 'पयोट, पयोद' न वा बहिरङ्गलक्षणत्वाद् बहिरङ्गः प्लुतः, अन्तरङ्गमुत्वम्, इत्युक्तम् ।

एवं "प्लुतप्रगृह्या०" ( पा० सू० ६।१।१२५ ) इति सूत्रे 'प्लुतस्यासिद्ध-त्वात्कथं प्रकृतिभावः' इत्याशङ्क्य, अत एव ज्ञापकात् 'सिद्धः प्लुतस्स्वरसन्धिषु' इत्युक्त्वा शालेन्द्रादिष्वतिप्रसङ्गमाशङ्क्य, न वा एष दोषः, बहिरङ्गलक्षणत्वात् । बहिरङ्गः प्लुतः, अन्तरङ्ग एकादेश इति समाहितम् । उत्वैकादेशं प्रति ज्ञापकाद-सिद्धत्वाभावेऽपि परिभाषां प्रति प्लुतासिद्धत्वस्य दुर्वारत्वेनान्तरङ्गबहिरङ्ग-ज्ञानाभावेन यथोद्देशपक्ष इव कार्यकालपक्षेऽपि तेनासिद्धत्वं दुर्वचम्, तत्रोपस्थित-परिभाषां प्रत्यसिद्धत्वस्य दुर्वारत्वेनानया सिद्धे पुनरसिद्धत्वारोपासम्भवेन भाष्यासङ्गतिर्दुर्वारा ।

न च बहिरङ्गपरिभाषां प्रति इव विप्रतिषेधसूत्रं प्रत्यसिद्धत्वात्पूर्वं परत्वात्तस्यैवाप्रवृत्तौ[1] बहिरङ्गपरिभाषया समाधानमेकदेशिन एवेति वाच्यम्, विप्रतिषेधसूत्रस्य कार्यकालपक्षे त्रिपाद्यामुपस्थित्या प्रकृते "पूर्वत्रासिद्धम्" (पा० सू० ८।२।१) इत्यस्याप्रवृत्तेरुपपादितत्वेन तेनाविरोधात्परत्वात् प्लुतप्रवृत्तौ बाधकाभावात् । तत्सूत्रे यथोद्देश एवेति ग्रन्थस्तु सिद्धान्ते त्रिपाद्यां तत्प्रवृत्तौ फलाभावाभिप्रायक इति न तद्विरोध इति चेत्, न; नाभावविषये मुत्वस्य दीर्घं प्रत्यप्यसिद्धत्वनिषेधवदुत्वविषये प्लुतस्य सर्वं प्रत्यप्यसिद्धत्वनिषेधेन परिभाषा-दृष्ट्याप्यसिद्धत्वनिषेधेनादोषादिति केचित् ।

अन्ये त्वज्ञदृष्ट्या दृश्यमाने जगति तं प्रति मिथ्यात्वबोधनाय ज्ञस्य प्रवृत्तिवत्स्वदृष्ट्याऽसतोऽपि बहिरङ्गस्योत्वदृष्ट्या वर्तमानत्वात् तं प्रत्यसत्त्व-प्रतिपादने बाधकाभावान्न दोष इत्याहुः ।

**न स्यादिति ।** कार्यकालपक्षेऽनुवृत्त"स्वादिष्वसर्वनामस्थाने" ( पा० सू०

---

१. 'परत्वाप्लुतस्यैवाप्रवृत्तौ' इति पाठः क० पु० ।

**वाच्यम्, प्रत्ययस्याङ्गाश उत्थिताकाङ्क्षत्वेन तत्रैवान्वयात्, "पुगन्त" इत्यादौ कर्मधारयाश्रयणेन प्रत्ययपराङ्गावयवलघूपधारूपेको गुण इति "इको गुणवृद्धी" इति सूत्रभाष्यसम्मतेऽर्थे 'भिनत्ति' इत्यादावदोषाच्च ।**

**अकारान्तोपसर्गेऽनकारान्ते चोपपदे वहेर्वाहेर्वा—**

---

१।४।१७ ) इत्येतत्सहितस्य "यचि०" ( पा० सू० १।४।१८ ) इत्यस्य प्रत्ययग्रहण-परिभाषया तदादेरित्यंशस्य चोपस्थित्या यजादिषु स्वादिष्वसर्वनामस्थानेषु परतो वाहन्तस्य भस्याङ्गस्यावयवस्य निर्दिश्यमानस्य सम्प्रसारणमित्यर्थेन सम्प्रसारणस्य शसादिप्रत्ययनिमित्तकत्वाद् बहिरङ्गत्वमित्याहुः ।

केचित्तु आकडाराधिकारस्थभपदसंज्ञाविषये कार्यकालपक्षाश्रयणेनोक्त-रीत्या सूत्रार्थवर्णनमयुक्तम्, तत्र तत्पक्षानाश्रयणस्योक्तत्वात् । अन्यथात्रैव पदत्वा-ङ्गत्वापत्तेः । न च भपदेन यजादिप्रत्ययस्याक्षेपात् सम्प्रसारणस्य तन्निमित्तत्वं सुवचम्, अयस्मयादिषु 'वृषणश्वः' इत्यादौ च भत्वस्यातादृशत्वेन व्यभिचारेण तेन तदाक्षेपासम्भवात् ।

किञ्च व्याप्येन व्यापकस्यानुमानादिनोपस्थितस्यापि तत्र तत्र कार्ये निमित्तत्वेनाश्रयणे मानाभाव इत्यर्थस्योक्ततयाऽत्राप्याक्षिप्तस्य निमित्तत्वेनाश्रयणे मानाभावात् । सम्प्रसारणस्य बहिरङ्गत्वं तु तत्राधिकृताङ्गभपदाभ्यां यजादि-स्वादिपरकतदादेरुपस्थित्या तत्र प्रकारीभूतयजादिप्रत्ययस्य 'धनी' 'सुखी' 'धनवते वराय कन्या देया'[1] इत्यादौ धर्मिपारतन्त्र्येणोपस्थितधनसुखयोरवच्छेद्या-वच्छेदकभावेन[2] अन्वयवदत्रापि लक्ष्यानुरोधाद् विधेयसम्प्रसारणे निमित्तत्वा-ङ्गीकारेण सूपपादमित्याहुः । अत एव 'प्रष्ठवाट्' 'विश्वौहः' इत्यादौ पूर्वस्य वाहो नोठ् ।

अन्ये त्वत्र सम्प्रसारणनिमित्तभत्वस्य पदद्वयात्मकसमासरूपण्व्यन्तान्त-[3] प्रातिपदिकनिष्ठतया 'गोमत्प्रियः' इत्यादौ सामासिकलुक इव सम्प्रसारणस्यापि बहिरङ्गत्वं सूपपादमिति वदन्ति ।

वस्तुतोऽन्तरङ्गायां वृद्धौ बहिरङ्गस्य लघूपधगुणस्यासिद्धत्वात्तदनापत्तिः । अत एव 'अनैषीत्' इत्यादौ सत्वस्य बहिरङ्गत्वं सङ्गच्छते । ननु 'प्रौहः' इत्यत्र सम्प्रसारणे पररूपापत्तिः, 'वार्यूहः' इत्यत्र दीर्घश्रवणानापत्तिश्चात आह :— **वहेरिति ।** ण्विप्रत्ययस्येति शेषः । **वाहेरिति ।** वाहृप्रयत्न इत्यत इत्यर्थः ।

---

१. 'धनवते वराय कन्या देया' इति नास्ति क० पु० ।

२. 'धनसुखयोरवच्छेदकभावेन' इति पाठः क० पु० ।

३. 'ण्यन्तान्त' इति पाठः क० पु० ।

**ण्विविचावनभिधान्न स्त एव ।**

**वार्यूहेत्यादि तु 'ऊहतेः' क्विपि बोध्यम् । धातूनामनेकार्थत्वान्नार्था-सङ्गतिः । 'प्रौहः' इत्याद्यसाध्वेव, वृद्धेरप्राप्तेः । अस्योहस्यानर्थक्यान्न "प्रादूहोढ" इत्यस्यापि प्रवृत्तिः ।**

---

**ण्विविचाविति ।** इदं क्विपोऽप्युपलक्षणम् । एतेन णिलोपस्य स्थानिवत्त्वेन तत्र भत्वाभावात् सम्प्रसारणाप्राप्त्याऽनभिधानकल्पनमसङ्गतमित्यपास्तम् । णिजन्तत्वेऽपि क्वौ लुप्तमित्याश्रयणे तत्प्राप्तेः सुवचत्वाच्च ।

नन्वेवमपि 'विश्वौहः' इत्यादौ पूर्वरूपस्यासिद्धत्वासम्भवात्कथं ज्ञापकत्व-मिति चेत्, अत्र केचित्, देवदत्तयज्ञदत्तयोः स्थाने देवदत्त एव तिष्ठत्वित्युक्ते एकशेषस्थल इव विद्यमानस्यैवाभ्यनुज्ञानेनेतरनिवृत्तिमात्रे वाक्यस्य तात्पर्य-वदत्रापि सम्प्रसारणादचि पूर्वपरयोः स्थाने पूर्व एवोच्चारणीय इति वचनव्यक्त्या पूर्वस्य विद्यमानस्यैवाभ्यनुज्ञानेन परनिवृत्तिमात्रे तात्पर्यावगमेन तस्मिन्नुकारे सम्प्रसारणत्वबुद्धेर्निष्प्रत्यूहत्वेन बहिरङ्गत्वस्य सूपपादत्वात् । अन्यथा एकस्या एव व्यक्तेरुद्देश्यत्व[1]विधेयत्वयोरेकत्रासम्भवेन पूर्वशब्दस्य लक्षणया पूर्वजातीय इत्यर्थे आन्तरतम्याद्दीर्घापत्तेः । अत एव "हलः" ( पा० सू० ६।४।२ ) इति सूत्रं चरितार्थम्[2] । एतेन पूर्वरूपनिष्पन्नस्य न बहिरङ्गत्वम् । यदि बहिरङ्गस्थानिकत्वेन बहिरङ्गत्वं तर्हि 'पचावेदम्' इत्यादावेत्वस्यापि बहिरङ्गत्वापत्तिरित्यपास्त-मित्याहुः ।

वस्तुतः "क्ङिति च" ( पा० सू० १।१।५ ) इति सूत्रे 'औयत' इत्यत्र "आटश्च" ( पा० सू० ६।१।९० ) इति प्रसक्तवृद्धिनिषेधाभावाय तन्निमित्तग्रहणं कर्तव्यमिति वार्तिककृतोक्ते तत्प्रत्याख्यानायान्तरङ्गः प्रतिषेधः, बहिरङ्गा वृद्धिरित्युक्तं भाष्ये । बहिरङ्गाडाश्रितत्वाद् वृद्धिर्बहिरङ्गेति कैयटः । एवञ्चोक्त-भाष्यप्रामाण्येन बहिरङ्गस्थानिकान्तरङ्गस्यान्यस्मिन्नन्तरङ्गे कर्तव्ये बहिरङ्गा-सिद्धत्वाङ्गीकारे बाधकाभावाच्चेति दिक् ।

ननु "ऊडिदम्०" ( पा० सू० ६।१।१७१ ) इत्यनेन 'विश्वौहः' इत्यत्र स्वरसम्पादनेन चारितार्थ्यादूड्ग्रहणस्य वैय्यर्थ्याभावाज्ज्ञापकत्वासम्भवः, न च तावन्मात्रार्थत्वे वूपधादित्येवास्तु वकारस्थानिक उकार उपधाभूतो यस्य तस्मात्पर इत्यर्थान्न दोष इति वाच्यम् 'विदुषः' इत्यादौ स्वरापत्तेरिति चेत्, न; "अञ्चेश्छन्दसि०" ( पा० सू० ६।१।१७० ) इति पूर्वसूत्रसाहचर्यात् वूपधस्य धातोरेव ग्रहणान्न दोष इत्याहुः ।

---

१. 'त्व' इति नास्ति क० पु० ।

२. 'न च राममित्यादौ "सुपि च" ( पा० सू० ७।३।१०२ ) इति दीर्घापत्तिः, तथा सति पूर्वसवर्णदीर्घेणैव सिद्धेः; अमि पूर्वरूपस्य वैयर्थ्यापत्तेः, इत्यधिकः पाठः क० पु० ।

**न च कार्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति वाच्यम्, पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपितबहिरङ्गत्वाभावात् तया तस्यासिद्धत्वप्रतिपादनासम्भवात् ।**

---

अन्ये तु[1] 'उठ्' इति ह्रस्वः पठ्यताम्, स्वरविधायके ठिदिदमिति[2] पठ्यताम्, "ऊठ्युपधाग्रहणं कर्त्तव्यम्" ( का० वा० ६।१।१७१ ) इति वार्तिकेऽपि ठिद्ग्रहणमेव[3] क्रियताम् । एवञ्च लघूपधगुणेनैवेष्टसिद्ध्या दीर्घोच्चारणं परिभाषाज्ञापकमित्याहुः ।

ननु "झलो झलि" ( पा० सू० ८।२।२६ ) इत्यादिप्रदेशेषु "तस्मिन्०" ( पा० सू० १।१।६६ ) इत्यादीनामुपस्थित्यैकवाक्यतयाऽविशेषेण प्रसक्तकार्यस्य विषयविशेषे व्यवस्थापनवत् 'नार्कुटः' 'नार्पत्यः' इत्यत्र विसर्जनीये कर्त्तव्ये तत्कालोपस्थितया बहिरङ्गपरिभाषया रेफस्यासिद्धत्वविधानेन रेफाभावाद् विसर्गस्य तत्राप्रवृत्तिसम्पादनेन विषयविशेषपरत्वेन सङ्कोचकल्पनं सूपपादम् ।

न च "पूर्वत्रासिद्धम्" ( पा० सू० ८।२।१ ) इति परिभाषां प्रति विसर्गस्यासिद्धत्वाल्लिङ्गज्ञानाभावात् कथं तत्रोपस्थितिरिति वाच्यम्, कार्यकालपक्षे प्राचीनमते सर्वासां परिभाषाणां विधिदेशस्थत्वाङ्गीकारेणादोषात् ।

नव्यमतेऽपि विधिभिरितरासां परिभाषाणामाक्षेपेण पदैकवाक्यतया विषयविशेषे कार्यव्यवस्थापकत्वेन लक्ष्यसंस्कारवद् वाक्यार्थबोधकाले तत्र सन्निहितया बहिरङ्गपरिभाषया वाक्यैकवाक्यतया 'रेफस्य सिद्धत्वबोधनद्वारा'[4] विषयविशेषे कार्यव्यवस्थापकत्वे बाधकाभावादिति शङ्कते :—**न चेति ।**

**असम्भवादिति ।** "पूर्वत्रासिद्धम्" ( पा० सू० ८।२।१ ) इत्यत्र पूर्वत्रेत्यस्य विषयसप्तमीत्वेन पूर्वशास्त्रविषये परशास्त्रस्यानुत्पन्नत्वरूपासिद्धत्वारोपेण तस्यासत्त्वपर्यवसायितयाऽसद्विषयकप्रतिपत्तेरसम्भवात् । सिद्धासिद्धयोः पूर्वपरयोर्युगपदेकबुद्धावुपारोहासम्भवेन निरूप्यनिरूपकभावापन्नान्तरङ्गत्वबहिरङ्गत्वग्रहप्रयोजकीभूतस्यैकबुद्धावपेक्षितपरस्परावस्थानस्यासम्भवेनेदृशे विषयेऽन्तरङ्गत्वबहिरङ्गत्वग्रहस्यैवासम्भवेनास्यास्त्रिपाद्यां प्रवृत्तेर्दुरुपपादत्वादिति भावः ।

ननु पूर्वत्रेति विषयनिर्देशात् तद्विषय एव परस्यासिद्धत्वं प्रतिपाद्यते, न तु सर्वथा । एवञ्च वृद्धिं प्रति विसर्गशास्त्रस्याविद्यमानत्वेऽपि प्रासादस्थराजदारदृष्टान्तेन विसर्गं प्रति वृद्धिविधायकशास्त्रस्य सत्त्वेन वृद्ध्यपेक्षया स्वस्मिन्नन्त-

---

१. 'वपेर्वर्हेश्च विवपि स्वरापत्त्या नैतद् युक्तं किन्तु' इत्यधिकः पाठः क० पु० ।
२. 'टिदिदम्' इत्यपपाठः क० पु० ।
३. 'टिद्ग्रहणमेव' इत्यपपाठः क० पु० ।
४. 'रेफस्यासिद्धत्वबोधनद्वारा' इति पाठः क० पु० ।

रङ्गत्वग्रहस्य स्वापेक्षया तस्मिन्बहिरङ्गत्वग्रहस्य च सुकरत्वेन कार्यकालपक्षे तेन परिभाषाकर्षणेन तया सिद्धत्वं वृद्धेर्दुर्वारमिति चेत्, न, "न धातुलोपे०" ( पा० सू० १।१।४ ) "क्ङिति च" ( पा० सू० १।१।५ ) इति सूत्रभाष्योक्तरीत्या 'उपेद्धः' 'रोरवीति' इत्यादावन्तरङ्गे निषेधे कर्त्तव्ये बहिरङ्गस्य गुणस्यासिद्धत्व-बोधनेन, निषेध्यगुणस्यैवासत्त्वप्रतिपत्त्या तत्प्रसक्तिमुपजीव्य प्रवर्त्तमानस्य निषेधस्याप्रवृत्तिवत्, 'अयजे इन्द्रम्' 'मनोरथः' इत्यादौ दीर्घलोपयोर्गुणोत्वा-पेक्षयासिद्धत्वबोधनद्वारा तदपेक्षया परत्वविशिष्टशात्रस्यैवासत्त्वप्रतिपादनेन, प्रतिपत्तुस्तत्र लक्ष्ये, तत्प्रसक्तिबुद्धेरेवानुदयेन तत्प्रसक्तिमुपजीव्य प्रवर्त्तमानस्य विप्रतिषेधशास्त्रस्यैवाप्रवृत्तिवत् "नार्कुटः" इत्यादावपि बहिरङ्गाया वृद्धेरन्तरङ्ग-विसर्गप्रसक्तिमुपजीव्यासिद्धत्वविधानात्पूर्वमेव "पूर्वत्रासिद्धम्" ( पा० सू०-८।२।१ ) इत्यनेन वृद्धिविषये परस्य विसर्जनीयस्यासिद्धत्वबोधनद्वारा तस्मिन्न-निष्पन्नत्वस्य गृहीतत्वेन, तदपेक्षयान्तरङ्गशास्त्रस्यैवानारम्भेण तत्प्रसक्तिबुद्धेः सुतरामनुदयेन तत्प्रसक्तिमुपजीव्यानया वृद्धेरसिद्धत्वप्रतिपादनस्य कर्तुमशक्यतया कार्यकालपक्षेऽपि त्रिपाद्यामेतत्परिभाषाप्रवृत्तेरसम्भव इत्याशयात् ।

ननु 'अधीत्य' 'कोऽसिचत्' इत्यादौ पूर्वमेव प्रवर्तितस्य कार्यस्यैकादेश-शास्त्रस्य स्वकार्याप्रवर्त्तकत्वलक्षणमसिद्धत्वं बाधितत्वाद् विधातुमशक्यमिति सामर्थ्याद्विधीयमानमसिद्धत्वं तद्विषय एकादेशशास्त्रस्यानुत्पत्त्यन्वाख्यानेनैका-देशेऽसिद्धे सति स्वत एव कार्यमप्रवर्त्तयति सति यथा तुग्भवति षत्वं न भवति, तथा तस्मिन् सिद्धेऽप्यसिद्धवत्कार्यं भवति, न भवतीति वचनव्यक्त्याऽसिद्धत्व-विषयतया निर्दिष्टयोः षत्वतुकोर्निवृत्तिप्रवृत्तिमात्रपर्यवसाय्यसिद्धत्वम्, न त्वेका-देशनिमित्तस्य "एकादेश उदात्तेनोदातः" ( पा० सू० ८।२।५ ) इत्यस्यापि निवृत्तिपर्यवसायि। यथा 'पचावेदम्' इत्यादौ "एत ऐ" ( पा० सू० ३।४।९३ ) इत्यनेनान्तरङ्गे ऐत्वे कर्तव्ये गुणस्य विधीयमानमसिद्धत्वमप्यैत्वनिवृत्तिपर्यव-साय्येव तथा 'नार्कुटः' इत्यत्र वृद्धिविषये विसर्जनीयस्य विधीयमानमसिद्धत्व-मपि विसर्जनीयस्य वृद्धिप्रवृत्तिनिवृत्तिप्रयोजकत्वाभावपर्यवसाय्येव भवेत्, नतू-दासीनबहिरङ्गपरिभाषाया अप्यप्रवृत्तिपर्यवसाने समर्थं भवेत्, मानाभावा-दिति चेत्, न; भाष्यप्रामाण्यादसिद्धवद्भावेनासिद्धवच्छास्त्रसत्ताप्रयोज्यपूर्व-सम्बन्धिकार्यमात्रस्य निवृत्त्यङ्गीकारेण बहिरङ्गपरिभाषयाऽसिद्धत्वस्यापि तादृशत्वादप्रवृत्त्यादोष इत्याशयात् ।

ननु कार्यकालपक्षेऽनया पूर्वमेव वृद्धेरसिद्धत्वविधानेन विसर्गविषये वृद्धिविधायकशास्त्रेऽस्यैवानारम्भानुमानात्[1], तत्र तदपेक्षया पूर्वशास्त्रप्रसक्ति-बुद्धेरेवानुदयेन तत्प्रसक्तिरूपपूर्वशास्त्रविषयाभावात् "पूर्वत्रासिद्धम्" ( पा० सू०-

१. 'शास्त्रस्यैवानारम्भानुमानात्' इति पाठः क० पु० ।

**न चानया पूर्वस्यासिद्धत्वादभावेन तं प्रति परासिद्धत्वं पूर्वत्रेत्यनेन वक्तुमशक्यमिति वाच्यम्, एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः।**

**किञ्च पूर्वत्रेत्यस्य प्रत्यक्षत्वेन तेनानुमानिक्या अस्या बाध एवोचितः। अतः कार्यकालपक्षेऽपि त्रिपाद्यामस्या अनुपस्थितिरेव।**

**अत एव कार्यकालपक्षमेवोपक्रम्योक्तयुक्तीरुक्त्वा 'अतोऽयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वात्' इत्युक्तं विसर्जनीयसूत्र भाष्ये सिद्धान्तिना। त्रिपा-**

---

८।२।१ ) इत्यस्यैवाप्रवृत्त्या बहिरङ्गपरिभाषाप्रवृत्तिः सुस्थेति शङ्कतेः—**न चेति।**

ननु लक्ष्यदर्शनं लाघवञ्च विनिगमकं सम्भवतीत्यरुचेराहः—**किञ्चेति। उचित इति।** अधिकारप्राप्त"पूर्वत्रासिद्धम्" ( पा० सू० ८।२।१ ) इत्यपेक्षया लक्ष्यपर्यालोचनसापेक्षान्तरङ्गत्वरूपलिङ्गाक्षिप्तान्तरङ्गपरिभाषाया विलम्बोपस्थितिकत्वेन वाक्यार्थबोधकाल एव निष्प्रतिद्वन्द्वितया "पूर्वत्रासिद्धम्" ( पा० सू०-८।२।१ ) इत्यसिद्धत्वे सति ततो निमित्ताभावादेव परिभाषाया अप्रवृत्तेरितिभावः[१]।

न च पूर्वशास्त्रे कर्त्तव्ये एवासिद्धत्वं न तु कृतेऽपि मानाभावात्फलाभावादिति वाच्यम्[२], 'पूर्वत्र' इत्यस्य विषयसप्तमीत्वेन तत्प्रवृत्तिसम्भवात्[३]। अत एव "अग्नि३" इत्यादौ प्रगृह्यसंज्ञायां प्लुतस्यासिद्धत्वात् प्रगृह्यत्वेन "अणोऽप्रगृह्यस्य०" ( पा० सू० ८।४।५७ ) इत्यनुनासिकनिषेधः सिद्धयति। अन्यथाऽसिद्धत्वोत्तरं प्रगृह्यसंज्ञायाः कर्त्तव्यता, तत्कर्त्तव्यतायाञ्च तदसिद्धत्वमित्यन्योन्याश्रयापत्तिः। मम त्वसिद्धत्वोत्तरं तत्प्राप्तेस्सुवचत्वेन तद्विषयत्वं सूपपादम्। तत्प्रवृत्त्युत्तरमपि यथा तद्विषयत्वं तथा "हल्ङ्याप्०" ( पा० सू० ६।१।६८ ) इति सूत्रे शब्दरत्ने स्पष्टम्। अत एव "क्वचिदपवादविषये०" ( परि० ५९ ) इत्यस्य 'रमायाम्' इत्युदाहरणं सङ्गच्छते।

केचित्तु पूर्वत्र कर्त्तव्ये एवासिद्धत्वम्, न तु कृतेऽपि मानाभावात्फलाभावाच्च। न च विसर्जनीयसूत्रस्थभाष्यमेव मानम्, अभ्यासे नहि भूयस्त्वमर्थस्य भवतीति

---

१. 'एतेन "तदो ०" ( पा० सू० ७।२।१०६ ) इति सूत्रे "निर्दिश्यमान्०" ( परि० १२ ) परिभाषोपस्थितसामर्थ्येन त्यदादिभिरेव सम्बन्धवदत्र कार्यकालपक्षाश्रयणेन परिभाषोपस्थितिसामर्थ्यात्प्रत्यक्षसिद्धस्याप्यनया बाध इत्यपास्तम' इत्यधिकः पाठः क० पु०।

२. "तस्य दोषः०" ( का० वा० १।१।५८ ) इत्यत्र लग्रहणेन "न भकुर्छुराम्" ( पा० सू०-८।२।७९ ) इति सूत्रे कुर्ग्रहणेन च' इत्यधिकः पाठः क० पु०।

३. 'अत एवाक्राष्टामबाढामित्यादौ बहिरङ्गत्वेन सलोपस्यासिद्धत्वेन कत्वभषभावो न' इत्यधिकः पाठः क० पु०।

**दोस्थेऽन्तरङ्गे कर्त्तव्येऽयं परिहारो न युक्त इति तदर्थः। किन्तु वचनमेवारब्धव्यमिति तदाशयः।**

**अत एव 'निगाल्यते' इत्यादौ लत्वार्थम् 'तस्य दोषः' इति वचनमेवारब्धम्।**

---

न्यायेन वहुषु सूत्रेषु बहिरङ्गपरिभाषया समाधानपरभाष्येण तत्रैव भाष्यकारस्य तात्पर्योन्नयनेनास्य भाष्यस्य वार्त्तिकाशयप्रदर्शनमात्रपरत्वेन प्रवृत्ततयैकदेशित्वात्। अन्यथानेकलक्ष्यसिद्धयेऽनेकवचनानामारम्भे महद् गौरवम्। किञ्च पूर्वशास्त्रे कर्त्तव्ये इत्यर्थं विहाय पूर्वत्रेत्यस्य विषयसप्तमीत्वेन "नमुने" (पा० सू०-८।२।३) इत्यत्रेव कार्यप्रवृत्त्यनन्तरमपि तद्विषयतामभ्युपेत्याऽसिद्धत्वकल्पने न किञ्चिदिष्टं फलम्। 'राज्ञः' इत्यादिसिद्धिस्तु यथोद्देशपक्षेण बोध्या।

न चैवम् 'कुर्यात्' इत्यादौ दीर्घवारणाय "नभकुर्छुराम्" (पा० सू०-८।२।७९) इत्यत्र कुर्ग्रहणं व्यर्थम्, कार्यकालपक्षे बहिरङ्गासिद्धत्वेनैव निर्वाहादिति वाच्यम्, तत्र यथोद्देशपक्ष एवाश्रयणीय इत्यर्थस्य तात्पर्यग्राहकत्वेनाऽदोषात्। अत एव 'चञ्चूर्यते' इत्यत्र दीर्घसिद्धिरित्याहुः। **वचनमेवारब्धव्यमिति।** 'विसर्जनीयोऽनुत्तरपदे[१]' इत्यादिवचनानीत्यर्थः। उत्तरपदे सति यो रेफस्तस्य विसर्गो न भवतीति वार्त्तिकार्थः। रेफस्य तद्धितनिमित्तकत्वेऽपि ऋकारे आदित्वस्योत्तरपदापेक्षत्वेन तद्द्वारा रेफस्याप्युत्तरपदनिमित्तकत्वं बोध्यम्।

ननु 'प्राच्र्छति' इत्यादावसमस्ते 'नार्कलिपः' इत्यादौ चोत्तरपदपरत्वाभावाद् विसर्गो दुर्वारः, न च "कर्तरि चर्षिदेवतयोः" (पा० सू० ३।२।१८६) इति निर्देशेन रेफप्रयोजकखरतिरिक्तखरेव "खरवसानयोः०" (पा० सू० ८।३।१५) इत्यत्र गृह्यते, चर्षीत्यादौ षकारस्य तद्भावभावितामात्रेण[२] आनुमानिकादेशं प्रति स्थानितया वा रेफप्रयोजकत्वान्न दोष इति वाच्यम्, 'दास्याः पुत्रः' इत्यत्राप्यलुक्युत्तरपदस्य निमित्तत्वेन तद्द्वारा रेफं प्रति षकारस्य[३] तद्भावभावितामात्रेण निमित्ततया दोषापत्तेरिति चेत्, न; वार्तिके पदशब्दस्य शक्तपरत्वेनोत्तरञ्च तत्पदञ्चेत्यर्थात्तन्निमित्तस्य रेफस्येत्यर्थः। तस्य निमित्तत्वञ्च "कर्तरि चर्षि०" (पा० सू० ३।२।१८६) इत्यादाववयवद्वारकम्। क्वचित्समुदायद्वारकमिति निमित्तत्वं यथायथमूह्यम्।

न च नव्यमते[४] वचनारम्भे गौरवम् "कर्तरि चर्षि०" (पा० सू० ३।२।१८६) इत्यादौ पदद्वयसम्बन्धिवर्णद्वयाश्रितत्वेन गुणस्येव पदद्वयसम्बन्धिरेफखरात्मकवर्णद्वयाश्रितत्वेन विसर्गस्यापि तत्त्वात्। तत्र विसर्गवारणाय वचनस्य

---

१. व्या० म० भा० पा० सू० ८।३।१५। २. 'तद्भावितामात्रेण' इति पाठः क० पु०।
३. 'पकारस्य' इति पाठः क० पु०। ४. 'नव्यमते' इति नास्ति क० पु०।

**अन्यथाऽन्तरङ्गत्वाण्णिलोपात् पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव ।**

**येऽपि लक्ष्यानुरोधादानुमानिक्याऽप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्य पूर्वत्रेत्यस्य बाधं वदन्ति, तेऽपि लक्षणंकचक्षुर्भिर्नाऽऽदर्तव्येति दिक् । अत एव**

---

त्वन्मतेऽप्यावश्यकत्वात् । न च 'कार्तिः' 'क्षैतिः' 'नार्मतः' 'नैष्पुरुष्यम्' इत्यादिसिद्ध्यर्थम् "वृद्धेर्निष्ठानत्वप्रतिषेधो वक्तव्यः"[1] इत्याद्यनेकवचनारम्भे गौरवमिति वाच्यम्[2], त्रैपादिकेऽन्तरङ्गे कर्तव्ये रपरत्वयोग्यादेशस्य सिद्धत्वं वक्तव्यमिति वचनाङ्गीकारेणादोषात् । योग्यतानिवेशात् 'क्षैतिः' इत्यत्र वृद्धेरपवादत्वाभावेपि न दोषः ।

न चैवं 'सर्पिष्टरम्' 'धनुष्टरम्' इत्यादौ "ह्रस्वात्तादौ०" ( पा० सू० ८।३।१०१ ) इति षत्वस्यासिद्धत्वात्[3] पूर्वं प्लुते तस्यासिद्धत्वादिष्यते षत्वं तन्न सिद्ध्येत्, प्लुतस्य[4] बहिरङ्गत्वेऽपि रपरत्वयोग्यादेशत्वासम्भवादिति वाच्यम्, रपरत्वयोग्येत्यपहाय भावरूपादेशस्येत्यङ्गीकारेणादोषात् ।

**तद्वैय्यर्थ्यमिति ।** ननु 'प्लायते' इत्यादौ लत्वस्यासिद्धत्वादादौ दीर्घे ततो लत्वस्यैव बहिरङ्गत्वेन वचनमावश्यकमिति चेत्, न; निर्दुरोरित्येव वक्तव्ये उपसर्गग्रहणसामर्थ्येन निरवकाशत्वेन पूर्वमेव लत्वप्रवृत्तेः । न च निर्गतमयनम्, 'निरयनम्' इत्यत्र तदर्थं प्रत्युपसर्गत्वाभावेपि लत्वापत्तिः, निर्दुरोः सम्बन्धिन्ययतावित्यर्थेन तत्रादोषात् । न च 'पलायते' इत्यत्र चारितार्थ्यम्, निर्दुरोरयतावित्यस्य "परेश्च घाङ्कयोः" ( पा० सू० ८।२।२२ ) इति सूत्रानन्तरं पाठेनादोषादिति दिक् । **लक्षणंकचक्षुर्भिरिति ।** तेषामेव मुख्याधिकारित्वादिति भावः । **अत एवेति ।** द्वितीयार्थाङ्गीकारादेवेत्यर्थः ।

ननु 'पदानि संस्कृत्य संस्कृत्योत्सृज्यन्ते तेषां यथेष्टमभिसम्बन्धो भवति 'आहर पात्रं पात्रमाहर' इति वृद्धिसूत्रस्थभाष्येणेह शास्त्रे लोके प्रयोगार्हाणां पदानां पदान्तरसमभिव्याहारानपेक्षया स्वातन्त्र्येणैव व्युत्पाद्यत्वप्रतीत्या सह-

---

१. व्या० म० भा० पा० सू० ८।२।४२ ।

२. "कर्तरिचर्षि०" ( पा० सू० ३।२।१८६ ) इत्यादिनिर्देशेन त्वन्मते आरभ्यमाणस्य वचनस्य स्थाने एवैकादेशानुमत्या त्रैपादिके गुणादिवृद्ध्योरसिद्धत्वं वक्तव्यमित्येवं वचनकल्पनेन सर्वेष्टसिद्धेः । इत्यधिकः पाठः क० पु० ।

३. 'षत्वस्य सिद्धत्वात्' इति पाठः क० पु० ।

४. 'प्लुतस्य' इत्यादितः 'वैय्यर्थ्यमिति' इत्येतत्पर्यन्तं क० पुस्तके नास्ति । 'इति वाच्यम्, तत्र प्लुतस्यापि निवेशाङ्गीकारेणादोषादिति दिक् । अत्र गुणपदेन धर्मिग्राहकमानेनैकादेशभूतगुणस्यैवासिद्धत्वविधानान्न धातुरित्यादौ दोषः' इत्यधिकश्च वर्तते ।

**"ओमाङोश्च" इत्याङ्ग्रहणं चरितार्थम्। तद्धि 'खट्वा आ ऊढः' इत्यत्र परमपि सवर्णदीर्घं बाधित्वाऽन्तरङ्गत्वाद् गुणे कृते वृद्धिप्राप्तौ पररूपार्थम्। साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात् 'खट्वा' शब्दस्य समुदायेन योगाद् गुणस्यान्तरङ्गत्वमिति "सम्प्रसारणाच्च" इति सूत्रे भाष्ये स्पष्टम्।**

---

प्रयोगस्यैच्छिकत्वेन पूर्वं पश्चाद्वोपस्थितखट्वारूपार्थबोधकस्य खट्वाशब्दस्य स्वार्थे परिपूर्णेन 'ओढा' शब्देन सहप्रयोगकाले गुणस्य जातत्वेन दीर्घगुणयोर्युगपद-प्राप्त्या तत्र प्राप्तवृद्धिबाधनार्थमाङ्ग्रहणं चरितार्थमिति, कथमाङ्ग्रहणस्य ज्ञापकत्वमत आहः—**तद्धीति**। आङ्ग्रहणं हीत्यर्थः। "युष्मद्युपपदे०" ( पा० सू० १।४।१०५ ) इत्यादिसूत्रस्वरसेन शास्त्रे वाक्यसंस्कारपक्षस्याप्याश्रयणेन तत्पक्षे परत्वाद्दीर्घेणेष्टसिद्ध्याङ्ग्रहणं व्यर्थमिति भावः।

ननूभयोरपि पदद्वयापेक्षत्वेन समत्वात्कथं गुणस्यान्तरङ्गत्वमत :—आह **साधनेति**। ननु वाक्यसंस्कारपक्षेऽपि वाक्यघटकपदद्वारैव तस्य संस्कारः कर्तव्यः, तत्र वर्तमानानां बहूनां पदानां युगपदेव 'खले कपोतन्यायेन' संस्कारः, उत येन क्रमेण पदानामुच्चारणं तेनैव क्रमेण ? आद्ये 'कानि सन्ति' इत्यादिमूलासङ्गतिः, वाचः क्रमवृत्तितया युगपदनेककार्यासम्भवश्च।

द्वितीये श्रुतवर्णक्रमत्यागे बीजाभावेन तादृशान्तरङ्गत्वमादाय पूर्वं दीर्घस्य प्रवृत्त्या गुणस्यान्तरङ्गत्वासम्भवादिति चेत्, न; साधनबोधकप्रत्ययोत्पत्त्य-नन्तरमेव धातोरुपसर्गयोगेन तदुत्तरमेव बहिर्भूतखट्वाशब्दार्थेन योगेन तत्काले खट्वाशब्देन सम्बन्धेऽपि "यथैव चानुपूर्व्याऽर्थानां प्रादुर्भावस्तथैव शब्दानामपि तद्वत्कार्यैरपि भवितव्यम्' इति "अचः परस्मिन्०" ( पा० सू० १।१।५७ ) इति सूत्रभाष्योक्त्या 'पदार्थबोधक्रमेणैव प्रक्रियानुपूर्वी आश्रयणीया' इत्यभियु-क्तोक्त्या च 'खट्वा आ वह् त' इत्यत्र दीर्वसम्प्रसारणयोर्युगपत्प्राप्तौ पूर्वगत-साधननिमित्तकत्वेन सम्प्रसारणस्य पश्चादुपस्थितखट्वाशब्दापेक्षदीर्घापेक्षयान्त-रङ्गत्वेन पूर्वं प्रवृत्त्या ततो दीर्घगुणयोः प्राप्तौ पूर्वोपस्थितार्थकशब्दनिमित्त-कत्वेन गुणस्यान्तरङ्गत्वसम्भवेनादोषात्।

न च सुलोपोत्तरं दीर्घप्राप्तिः, गुणस्य तु "हल्ङ्याप्०" ( पा० सू०-६।१।६८ ) इति सूत्रेण लोपसमकालं प्राप्तिरिति दीर्घगुणयोर्युगपदप्राप्त्यैतत्प-रिभाषाविषयतैव नेति वाच्यम्, पदद्वयापेक्षगुणापेक्षया सुलोपस्यान्तरङ्गत्वात्पूर्वं प्रवृत्त्या दीर्घगुणयोर्युगपत्प्रात्या सम्प्रधारणसम्भव इत्याशयात्। न च[1] गुणस्य

---

१. 'न च' इत्यादितः 'इत्याशयात्' इत्येतत्पर्यन्तं क० पु० नास्ति।

**'एहि' इत्यनुकरणस्य शिवादिशब्दसम्बन्धे तु नास्य प्रवृत्तिः, ज्ञापकपर- "सम्प्रसारणाच्च" इति सूत्रस्थभाष्यप्रामाण्येनानित्यम्, 'प्रकृतिवदनुकरणम्' इत्यतिदेशमादाय लब्धाङ्गत्वे एतदप्रवृत्तेः ।**

**यत्तु 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन । उपसर्गेण तत्संज्ञकशब्देन,**

---

नित्यत्वेन नेदं ज्ञापकमिति वाच्यम्, व्यक्तिभेदेन शब्दान्तरप्राप्त्या गुणस्याप्य- नित्यत्वसम्भव इत्याशयात् ।

न च 'देव आ उष्णम्' इत्यत्र धातूपसर्गकार्याभावेन गुणस्य पूर्वोक्त- रीत्यान्तरङ्गत्वासम्भवादेव तद्विषये सर्वत्र[1] गुणस्य नित्यत्वादेव पूर्वं प्रवृत्तेर्व- क्तव्यतया अनित्यान्नित्यं बलीय इत्यत्रैवाङ्ग्रहणस्य ज्ञापकत्वं युक्तं नत्वन्तरङ्गं बलीय इत्यत्रेति वाच्यम्, शब्दान्तरप्राप्त्या गुणस्यानित्यत्वेन तद्वैय्यर्थ्यस्य सूपपादत्वात्। अनित्यान्नित्यबलीयस्त्वस्य "अचः परस्मिन्०" (पा० सू०- १।१।५७ ) इति सूत्रे भाष्ये लोकन्यायेनोपपादिततया तज्ज्ञापनेनाङ्ग्रहणस्य चारितार्थ्योपपादनस्यायुक्तत्वात् ।

मम तु स्योनेत्यादिसिद्धये[3] परापेक्षयान्तरङ्गस्य बलीयस्त्वबोधनार्थमा- ङ्ग्रहणमिति "सम्प्रसारणाच्च" (पा० सू० ६।१।१०८) इति सूत्रे भाष्ये स्पष्टम् । नन्वेहीत्यनुकरणे 'प्रकृतिवदनुकरणम्' इत्याङ्त्वातिदेशे तत्र वृद्धिबाधनार्थ- माङ्ग्रहणं चरितार्थम् । किञ्च पदसंस्कारपक्षे आङः ऊढशब्देन समासे, ततः खट्वा शब्देन योगे च चरितार्थमिति कथं ज्ञापकत्वमत आह—**भाष्येति । अप्रवृत्तेरिति ।** इदमभ्युपेत्य वस्तुतः प्रकृतिपर्याप्तधर्मस्यैवातिदेशो न तु प्रकृत्यवयवगतधर्मस्या- पीति तेन न्यायेन चारितार्थ्यापादनमयुक्तमिति भावः। अत्र वाक्यसंस्कारपक्षा- श्रयणान्न द्वितीयं दूषणमपीति बोध्यम् ।

ननु वह् धातोः क्ते, ऊढेति सिद्धौ, तत आङ्खट्वाशब्दयोर्योगे[4] युगपद्दीर्घ- गुणयोः प्राप्त्या भाष्योक्तसम्प्रधारणा वाच्या, सैव न सम्भवति 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति "सुट् कात्०" ( पा० सू० ६।१।१३५ ) "गतिर्गतौ" ( पा० सू० ८।१।७० ) इति भाष्योक्तेरित्याशयेनाह :—**यत्त्विति ।**

कैय्यटाद्यभिमतं तदर्थमाह :—**तत्संज्ञकेनेति** । तदुक्तं "सुट् कात्पूर्वः"

---

१. सर्वत्र' इत्यादितः 'वक्तव्यतया' इत्येतत्पर्यन्तं क० पु० नास्ति । पूर्वं प्रवृत्तये गुणस्य परत्वाद्दीर्घे प्राप्ते' इत्यधिकश्च वर्तते ।

२. 'शब्दान्तर' इत्यादितः 'सूपपादत्वात्' इत्येतत्पर्यन्तमत्र नास्ति क० पुस्तके, अग्रे 'अयुक्तत्वात्' इत्यस्यानन्तरं वर्तते ।

३. 'स्योनस्स्योनेत्यादिसिद्धये' इति पाठः क० पु० ।

४. 'आङ्खट्वोढाशब्दयोर्योगे' इति पाठः क० पु० ।

**साधनेन कारकेण तत्प्रयुक्तकार्येण च। अत एव 'अनुभूयते' इत्यादौ सकर्मकत्वात् कर्मणि लकारसिद्धिः' इति तन्न, क्रियायाः साध्यत्वेन बोधात्, साध्यस्य च**

---

( पा० सू० ६।१।१३५ ) इत्यत्र भाष्ये "धातूपसर्गयोः कार्यमन्तरङ्गम्"। कुत एतत्, 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन' इत्युक्त्वा नैतत्सारम् 'पूर्वं हि धातुः साधनेन युज्यते, पश्चादुपसर्गेण। साधनं हि क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टि' इत्युक्तम्। तदग्रे सत्यमेतत्, यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तरं कृत्वा धातुस्साधनेन युज्यते। अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते पूर्वं धातुस्साधनेन युज्यते पश्चादुपसर्गेणेति 'आस्यते गुरुणा' इत्यकर्मकः 'उपास्यते गुरुः' इति सकर्मकः केन स्यात्। एवञ्च कृत्वा सुट् सर्वतोऽन्तरङ्गतरको भवति, इति।

अत्र कैयटेन सर्वत इति प्रतीकमुपादाय धातुसंज्ञाया अपीत्यर्थः। यस्माद् धातूपसर्गसमुदायेन विशिष्टा क्रिया प्रतिपाद्यते सैव साधनेन साध्यते, न तु साधनाल्लब्धस्वरूपाऽन्यतो विशेषं लभते। अडादिव्यवस्थार्थं पृथग्धातूपसर्गप्रकल्पनम्। तत्र सं-कृ-शब्दे व्यवस्थिते एव सुट् भवति। पश्चात्समुदायावयवस्य तेनार्थेनार्थवतः[1] धातुसंज्ञा भवतीति व्याख्यातम्।

अयं भावः सोपसर्गस्थले 'अधीते' इत्यादावुभाभ्यां पृथगर्थद्वयानुपलम्भात्, उपसर्गविशिष्टसमुदायस्यैव क्रियावाचकत्वम्, न तु केवलस्येङः, तावन्मात्रेण तदर्थाप्रतीतेः। न चैवं समुदायस्य क्रियावचनत्वेऽपि भ्वादित्वाभावादवयवस्य भ्वादित्वेऽपि क्रियावचनत्वाभावादत्र धातुसंज्ञैव दुर्लभेति वाच्यम्, यथा कनादीनां साक्षादर्थवत्त्वाभावेऽपि पितृधनेनैव पुत्रस्य धनवत्त्वव्यवहारवत्प्रत्ययाधिकारे पाठसामर्थ्येन प्रकृत्यर्थेनैव प्रत्ययसंज्ञा[2]-प्रयोजकार्थवत्त्वव्यवहारः, यथा वा सामुदायिकधनेनैव भ्रातॄणां धनवत्त्वव्यवहारः, तथा 'इङः' धातूपसर्गसमुदायार्थेनैव भ्वादौ पाठसामर्थ्येनाडादिव्यवस्थार्थमेतादृशे विषये गणपठितशब्दमात्रेऽपि धातुसंज्ञामात्रोपयोग्यर्थवत्त्वप्रतिज्ञाश्रयणेन तावन्मात्रेऽपि धातुसंज्ञा सम्भवात्। न चैवं प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमभङ्गः, प्रकृतिप्रयोज्योपस्थितिविषयार्थान्वितेत्यर्थेनादोषात्। एवञ्च 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति तदाशयः।

**साध्यत्वेन बोधादिति।** निष्पाद्यत्वेन बोधादित्यर्थः। न च पचादिना फूत्कारादिरूपव्यापारस्य साध्यत्वेन बोधे न मानमिति वाच्यम्, फूत्कारादिरूपाणामवयवादि[3]व्यापाराणामनेकेषां क्रमेणैवाभिनिर्वृत्त्याऽऽशुतरविनाशित्वेन

---

१. 'तेनार्थवतः' इति क० पु० पाठः। कैयटे तु मूलोक्त एव पाठो वर्तते।

२. 'प्रत्यसंज्ञा' इत्यपपाठः क० पु०। ३. 'अवयव' इति पाठः क० पु०।

**साधनाकाङ्क्षतया तत्सम्बन्धोत्तरमेव निश्चितक्रियाबोधेन साधनकार्यप्रवृत्त्युत्तरमेव क्रियायोगनिमित्तोपसर्गसंज्ञकस्य सम्बन्धौचित्यात् ।**

**अत एव "सुट् कात्पूर्वः" इति सूत्रे 'पूर्वं धातुरुपसर्गेण' इत्युक्त्वा 'नैतत्सारम्, पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण' इत्युक्त्वोक्तयुक्त्याऽस्यैव**

---

यौगपद्यायोगेन क्रियायाः कर्त्रादिरूपसाधनानाश्रिततया घटादिवत् सिद्धरूपेणाप्रतीत्यानिष्पाद्यमानावस्थां विनावस्थान्तरायोगेन तस्यास्तथैव भानमित्याशयात् ।

न च, वस्तुतः क्रियायास्साध्यावस्थापन्नत्वेऽपि धातोः फूत्कारत्वादिरूपेणैव फूत्कारादौ शक्तिग्रहेण तथा बोधो दुर्वच इति वाच्यम्, पचादिपदस्य शक्तिग्रहकाले नियमेन पक्तृसमवेते साध्यावस्थापन्नतया प्रतीयमाने फूत्कारादिरूपव्यापार एव शक्तिग्रहेण शब्दशक्तिस्वभावात् तेनैव रूपेण ततो बोध इत्याशयात् ।

**आकाङ्क्षतयेति ।** नियमत इति शेषः । तयोर्निरूप्यनिरूपकभावापन्नत्वादिति भावः । अत एव "गतिर्गतौ" ( पा० सू० ८।१।७० ) इति सूत्रेऽभिनिर्वृत्तस्येति प्रतीकमुपादाय 'सतो ह्यर्थस्य विशेषणेन सम्बन्धो दृश्यते साधनायत्तश्च क्रियायास्सत्त्वम्' । न चासती कथं साधनेन युज्यते इति चेत्, 'साधनेन तस्या उत्पाद एवाभिसम्बन्धः । ततश्च साधनादवाप्तजन्मा क्रियोपसर्गेण विशेष्यते' इति तन्मतस्वरूपं कैय्यटो व्याख्यत् ।

**निश्चितक्रियाबोधेनेति ।** ननु 'डुपचष्' पाके ( भ्वा० १०६५ ) इत्यनुशासनेन लोकव्यवहारेण वा धातोः साध्यावस्थापन्नव्यापारे शक्तिग्रहः ? उत केवलव्यापारे ? आद्ये पदश्रवणोत्तरं शक्तिस्मृत्या तादृशार्थोपस्थितौ प्रतिबन्धकाभावेन निश्चितक्रियाबोधसम्भवेन तद्बोधे साधनसम्बन्धानपेक्षणात् । द्वितीये फूत्कारत्वादिरूपेण व्यापारस्योपस्थितौ साधनबोधकप्रत्ययोत्पत्त्यनन्तरमपि साध्यत्वेनोपस्थितेर्लक्षणान्तरासम्भवात् ।

न चोपसर्गसमभिव्याहारे क्रियाविशेषप्रतीतिवत्साधनबोधकप्रत्ययसमभिव्याहार एव साध्यावस्थापन्नक्रियाप्रतीतिरिति वाच्यम्, भावाख्यातेषु दोषापत्तेः[1] । 'लिडादीनाम्'[2] कालविशेषद्योतकत्वसम्भवेऽपि धातुवाच्यव्यापारे साध्यत्वद्योतकतायां मानाभावादिति चेत्, न; क्रियाकारकयोर्नित्यसाकाङ्क्षत्वेन तण्डुलमित्यनेन कारकप्रतीतावपि तन्निरूपकक्रियाविशेषप्रतीतेः पूर्वं नैराकाङ्क्ष्यासम्भवेन कारकत्वेन प्रतीतेरपर्यवसानवत् 'पच'[3] धातुना साध्यावस्थापन्नक्रियाया बोधेऽपि तन्निरूपककारकविशेषप्रतीतेः पूर्वं साध्यत्वेन प्रतीतेरपर्यवसानेन तत्सम्बन्धोत्तरमेव साध्यत्वनिश्चयेनान्तरङ्गत्वात्पूर्वं साधनबोधकप्रत्ययोत्पत्तेरेवौचित्यमित्याशयात् ।

---

१. 'भावाख्यातेष्वदोषापत्तेः' इति पाठः क० पु० । २. 'लडादीनाम्' इति पाठः क० पु० ।
३. 'पचतीत्यादौ' इति पाठः क० पु० ।

**युक्तत्वमुक्तम्, 'साधनं हि क्रियां निर्वर्तयति' इत्यादिना भाष्ये। उपसर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधानादुक्तेषु कर्मणि लकारादिसिद्धिः। पश्चाच्छ्रोतृबोधाय द्योतकोपसर्गसम्बन्धः।**

**एवञ्चान्तरङ्गतरार्थकोपसर्गनिमित्तः सुट् सम्—कृतीत्यवस्थायां द्वित्वादितः पूर्वं प्रवर्तते, ततो द्वित्वादि।**

---

न चैवं साधनसम्बन्धात्पूर्वं पचादिवाच्यव्यापारे क्रियात्वानिश्चयात्तदर्थविशेषद्योतकप्रादेरुपसर्गसंज्ञाभाववत् प्रकृते धातुसंज्ञाया अप्यप्राप्त्या तत्र साधनसम्बन्धबोधकप्रत्ययोऽपि दुर्लभ इति वाच्यम्, 'पिपठिषति' इत्यत्र प्रतीयमानस्येषिकर्मत्वस्य पूर्वमेव विवक्षयेषिकर्मवाचकत्वात् सन्प्रत्ययवद् भाविसाधनसम्बन्धाश्रयणेन क्रियावाचित्वमाश्रित्य पूर्वमेव पदसंस्कारकाले धातुसंज्ञाया अपि प्रवृत्तेरित्याशयात्।

न चैवमुपसर्गद्योत्यार्थविशेषस्य साधनसम्बन्धित्व[1]विवक्षया क्रियात्वेन धातुसंज्ञावत् तत्समकालमेव तन्निमित्तोपसर्गसंज्ञाया अपि प्रवृत्तौ बाधकाभावेन तस्यां सत्यां लिङुत्पत्तिसमकालमेवोपसर्गसंज्ञकशब्दसम्बन्धसम्भवेन साधनबोधकप्रत्ययोत्पत्त्यनन्तरमेवेत्यसङ्गतमिति वाच्यम्, धात्वर्थभूतव्यापारे साधनेन निष्पाद्यत्वविवक्षोत्तरमेव क्रियात्वप्रतिपत्त्या क्रियाविशेषद्योतकत्वरूपक्रियायोगनिमित्तोपसर्गसंज्ञायाः प्रवृत्त्या आकाङ्क्षितविधानं ज्याय इति न्यायेन पूर्वोपस्थितसाधनकार्यस्य लिडादेरेवान्तरङ्गत्वमित्याशयात्।

एवञ्च धातूनामनेकार्थत्वात् 'नदी वहती' 'भारं वहति' इतिवद्, भूधातुनैवार्थविशेषप्रतिपत्त्याऽकर्मकत्व[2]-सकर्मकत्वव्यवस्थापि सिद्धयति। ततश्च पूर्वमुपसर्गेण युज्यत इत्यस्योपसर्गार्थेन युज्यत इत्यर्थः। तत उपसर्गसंज्ञकशब्दयोगात् पूर्वं साधनकार्ययोगस्तत उपसर्गशब्दयोग इति वचनार्थ इति द्वयोरेकवाक्यतयैव समन्वयो युक्त इति न कुत्रापि क्लेश इति बोध्यम्।

एतत् सर्वं ध्वनयन्नाहः—**एवञ्चेति**। उपसर्गसमभिव्याहारविषये तद्द्योत्यार्थविशेषस्यैव निष्पाद्यत्वेन तस्मिन्साधनसम्बन्धेन क्रियात्वनिश्चयाय पूर्वं बुद्धिस्थत्वावश्यकत्वेन बाह्यसाधनसम्बन्धापेक्षया धात्वर्थान्तर्भूतसंशब्दार्थस्य प्रथममुपस्थितत्वेन 'पायसं करोति' इत्यादौ सुण्निवृत्तयेऽर्थवत्परिभाषयाऽर्थवत्संशब्दस्यैव सुटं प्रति निमित्तत्वेनाऽन्तरङ्गतरार्थकसंशब्दनिमित्तकत्वात्सुटोऽन्तरङ्गत्वमिति भावः। एतेन सुड्द्वित्वयोर्मध्ये परत्वात्सुटि न दोष इत्यपास्तम्। पदद्वयापेक्षसुडपेक्षयान्तरङ्गत्वाद् द्वित्वे 'सञ्चस्कार' इत्यस्यासिद्धयापत्तेः।

---

१. 'सम्बन्धित्वे' इति पाठः क० पु०। २. 'कर्मकर्तृ' इति पाठः क० पु०।

**अत एव 'प्रणिदापयति' इत्यादौ णत्वम् 'यदागमाः' इति न्यायेन**

---

न चार्थकृतान्तरङ्गबहिरङ्गभावस्य नव्यमतेऽनाश्रयणात् पूर्वागतलिण्निमित्तद्वित्वापेक्षया पश्चादागतसंशब्दनिमित्तकत्वेन पदद्वयाश्रयत्वेन च सुटो बहिरङ्गत्वेन भाष्यविरोधो दुर्वार इति वाच्यम्, संपरिभ्यां परत्वयोग्यस्येत्यर्थेनादोष इत्याशयात्। एवं "नेर्विशः" ( पा० सू० १।३।१७ ) इत्यादावपि बोध्यम्।

केचित्तु "प्रकल्प्य्०" ( परि० ६४ ) इति न्यायेन न दोष इत्याहुः। नेरित्यस्य षष्ठ्यन्तत्वमाश्रित्य निसम्बन्धिनो विशेरित्यर्थः। तयोस्तादर्थ्यमेव सम्बन्धः। तादर्थ्यञ्च विशिष्टैकार्थवृत्तित्वमिति तु न युक्तम्, "समस्तृतीयायुक्तात्" ( पा० सू० १।३।५४ ) इत्यत्रेव व्यवधानेऽप्यात्मनेपदापत्तेः। यदि तु व्यवधानेऽपि तत्प्रवृत्तिरिष्टा[1] इत्याग्रहस्तदा तदपि सम्यगेवेत्याहुः।

ननु[2] 'उष्ट्रप्रणायः' इति भाष्योदाहरणानुपपत्तिः[3]—उपपदसंज्ञासन्नियोगेनैव "तत्रोपपदम्०" ( पा० सू० ३।१।९२ ) इति तत्रग्रहणेनाणादिप्रत्ययविधानेनोपोच्चारितं पदमुपपदमिति महासंज्ञाबलादुपोच्चारितपदस्यैव तत्संज्ञाङ्गीकारेण पूर्वं तद्योगस्यावश्यकतया तत्रोपपदसंज्ञासमकालमेवाणि पश्चादुपसर्गयोगप्रसक्तावपि तयोर्नित्यसमासत्वेन समासमध्ये उपसर्गप्रवेशानुपपत्तेः।

न च "ते प्राग्०" ( पा० सू० १।४।८० ) इति वचनान्मध्ये प्रवेशः सम्भवतीति वाच्यम्, तद्घटितसमुदाय एकार्थीभावस्य कल्पितत्वेन तस्य तदनाश्रयत्वात्तेन तादृशार्थबोधानापत्तेरिति चेत्, न; "कर्तृकर्मणोः०" ( पा० सू० २।३।६५ ) इत्यत्र कृतीत्यस्य विषयसप्तमीत्वेन कृत्प्रत्यये विवक्षिते प्रत्यासत्त्या कृत्प्रत्ययप्रकृत्यर्थनिरूपितकर्तृकर्मवाचकात् षष्ठीत्यर्थे कृत्प्रत्ययप्रवृत्तेः पूर्वमेव षष्ठीप्राप्त्या बुद्धिस्थे तस्मिन् कृत्प्रत्ययप्रवृत्तिसमकालमेवोपपदसंज्ञायाः सम्भवेन तत उपसर्गयोगे पश्चादुपपदेन योगे विशिष्टार्थे एवैकार्थीभावस्य कल्पनेनादोषात्।

अन्यथा सुबन्तस्यैवोपपदसंज्ञेति सिद्धान्तादपवादविषयत्वात् पूर्वं द्वितीयाया अप्राप्त्या कृद्योगाभावात् षष्ठ्या अप्यप्राप्त्या केवलप्रातिपदिकस्योपपदसंज्ञाभावेन तत्सन्नियोगेनाणादिविधानासङ्गतिः। अत एव "आतोऽनुपसर्गे०" ( पा० सू० ३।२।३ ) इत्यनुपसर्गग्रहणं चरितार्थमिति दिक्।

उक्तार्थे मानमाहुः—**अत एवेति**। णिज्वाच्यव्यापारे उपसर्गद्योत्यप्रकर्षादि-

---

१. 'इष्टा' इति नास्ति क० पु०।
२. 'ननु' इत्यादितः 'इति दिक्' इत्येतत्पर्यन्तं नास्ति क० पु०।
३. व्या० म० भा० पा० सू० ३।२।१।

**समाहितं भाष्ये । अत एव 'प्रत्येति प्रत्ययः' इत्यादिसिद्धिः । अन्यथाऽन्तरङ्गत्वात् सवर्णदीर्घे रूपासिद्धिः ।**

**यदुपसर्गनिमित्तकं कार्यमुपसर्गार्थाश्रितं विशिष्टोपसर्गनिमित्तत्वात् तदन्तरङ्गम् । यत्तु न तथा, तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम् । अत एव "न धातु" इति सूत्रे 'प्रेद्धः' इत्यत्र "गुणो बहिरङ्गः" इति भाष्ये उक्तम् ।**

**किञ्च 'पूर्वमुपसर्गयोगे धातूपसर्गयोः समासे ऐकस्वर्याद्यापत्तिः' इति**

---

विवक्षाया असम्भवस्य शेखरे स्पष्टत्वेन णिचप्रकृत्यर्थ एवोपसर्गार्थप्रकर्षादि-विवक्षणेन पूर्वमेवोपसर्गयोगेन णत्वस्य सिद्धचा भाष्यासङ्गतिरिति भावः ।

ननु सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायां त्रैपादिकस्य पूर्वमप्रवृत्त्या पूर्वं णिचि, पुकि, भाष्यसङ्गतिरित्यरुचेराहः—**अत एवेति** । सिद्धान्ते 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इत्यस्य विषयमाहः—**यदुपेति** । **अन्तरङ्गमिति** । अर्थवत्परि-भाषया सार्थकशब्दस्यैव निमित्तत्वेन पूर्वोपस्थितार्थकशब्दनिमित्तकत्वेनाऽन्तरङ्गत्वं बोध्यम् ।

**यत्तु न तथेति** । विशिष्टोपसर्गानाश्रयणेनार्थस्यानिमित्तत्वात्केवलोपसर्ग-सम्बन्धिवर्णमात्रनिमित्तकमित्यर्थः । 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति सामान्यतः स्वीकर्तृमते दोषमाह—**किंचेति**[1] । न च लकारोत्पत्तावपि समासो दुर्वार एवेति वाच्यम्, साधनस्य सङ्ख्याविशिष्टत्वनियमेन सम्पूर्णतदाकाङ्क्षा-निवर्तकतिङामुत्पत्त्यैव तदाकाङ्क्षानिवृत्त्याऽतिङ इति निषेधसम्भवात्, "प्रकल्प्य०" ( परि० ६४ ) इति न्यायेन लान्ते समासाप्रवृत्तेश्च ।

ननु 'परमगार्ग्यायणः' इत्यादौ परमार्थसंस्पृष्टगार्ग्यस्यापत्येन योगे गार्ग्य-स्यापत्येन योगमाश्रित्य 'फक्'प्रत्ययवत्तिङर्थसंसृष्टधात्वर्थस्योपसर्गेण योगे धातूपसर्गयोगस्यानपायात्समासो दुर्वारः, किञ्चोपसर्गार्थसंसृष्टधात्वर्थस्यैव साधनेन योगेन सामर्थ्यस्य सूपपादत्वादिति चेत्, न; 'अतिङ्' इति निषेधेन तिङन्तघटिते 'प्रपचति' 'कारको व्रजति' इति वाक्ये एकार्थीभावाभावस्यैव कल्पनेन तदवयवे एकार्थीभावस्य दूरापास्तत्वात्, तिङामपि कर्त्रादिद्योतकत्वेन विशिष्टस्यैव धात्वर्थत्वेन तस्य वक्तुमशक्यत्वाच्च ।

वस्तुतोऽतिङ इत्यस्य स्थानेऽक्रियेति न्यासेन क्रियाविशेष्यकबोधजनकेन न समास इत्यर्थाद् धातुना न समासप्राप्तिरिति प्राचीनमतेऽपि न दोषः, योग-विभागस्येष्टसिद्धयर्थत्वेनादोषाच्च ।

ननु समासे जातेऽपि निरुक्तार्थवत्त्वाभावात् प्रातिपदिकत्वाभावेन पदत्वा-भावादैकस्वर्यापत्तिर्नेत्यरुचेराहः—**आदीति** । 'अन्वभवत्'[2] इत्यत्र पाक्षिकः

---

१. 'स्पष्टामति' इत्यधिकः पाठः क० पु० ।  २. 'अबुभवत्' इत्यपपाठः क० पु० ।

**"उपपदमतिङ्" इति सूत्रे भाष्ये स्पष्टम्। भावार्थप्रत्ययस्यापि पूर्वमेवोत्पत्तिः। अत एव "णेरध्ययने" इति निर्देशः सङ्गच्छते। इदं च सामान्यापेक्षं ज्ञापकम्, भावतिङोऽपि पूर्वमुत्पत्तेः। अन्यथा तत्र समासापत्तिः। तिङि तु 'अतिङ्' इति निषेधान्न तत्र दोषः, यदि भावतिङ्युपसर्गयोगोऽस्तीत्यलम्।**

**यत्तु 'विशेषापेक्षात् सामान्यापेक्षमन्तरङ्गम्' विशेषापेक्षे विशेषधर्मस्याधिकस्य निमित्तत्वात्। यथा "रुदादिभ्यः सार्वधातुके" इत्यत्र रुदादित्वं सार्वधातुकत्वं च। तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति यासुडन्तरङ्गः। एतेन यत् "अनुदात्तङितः" इति सूत्रे कैयटेनोक्तम् 'लमात्रापेक्षयाऽन्तरङ्गास्तिबादयो लकारविशेषापेक्षत्वाद् बहिरङ्गाः स्यादयः' इति, तत्परास्तम्; विशेषापेक्षत्वेऽपि तस्य सामान्यधर्मनिमित्तकत्वाभावेन तत्त्वस्य दुरुपपादत्वात्, परनिमित्तकत्वेन स्यादीनां बहिरङ्गत्वाच्चेति, तन्न; विशेषस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि**

---

इष्टः प्रकृतिभावो न स्यात् "न समासे" (का० वा० ६।१।१२७) इति निषेधादिति भावः। ननु भावार्थकस्य पूर्वमेवोत्पत्तौ न किञ्चिद्गमकमिति तत्र पूर्वमुपसर्गयोगे समासो दुर्वार इत्यत आहः—**भावार्थेति**। भिन्नपदोपात्तकर्त्रादिसम्बन्धेन साधनाकाङ्क्षानिवृत्त्या क्रियात्वनिश्चयोत्तरमेवोपसर्गयोगः। भावार्थकप्रत्ययस्य तु स्वार्थिकत्वेनान्तरङ्गतरत्वात्पूर्वमेवोत्पत्तिरित्याशयः।

अत्र मानमाहः—**अत एवेति**। निर्देशस्य सामान्यापेक्षज्ञापकत्वमित्याहः—**इदञ्चेति**। 'प्रपिपठिषति' इत्यादावपि समानकर्तृकादित्युक्त्या सनर्थसाधनेनैव प्रकृतेरपि तदाकाङ्क्षानिवृत्त्या सना एकार्थीभावात्तद्विशेषणत्वाच्च प्रकृत्यर्थस्य तदुत्तरमेवोपसर्गयोग इति तत्रापि "न समासे" (का० वा० ६।१।१२७) इति बोध्यम्। "धातोः कर्मणः०" (पा० सू० ३।१।७) इत्यत्र 'सोपसर्गान्मा भूत्' इति भाष्यं त्वेकदेशिन इति न तद्विरोधः। एवं कर्मलकारविषयेऽपि कारकान्वययोग्यतावच्छेदकरूपसाध्यत्वनिश्चयस्य तदुत्तरमेव जायमानत्वेन न पूर्वमुपसर्गयोग इति न दोषः।

दीक्षितोक्तिं खण्डयतिः—**यत्त्विति**। **आवश्यकमिति**। "धातोः" (पा० सू० ३।१।९१), "प्रत्ययः" (पा० सू० ३।१।१) इति चाधिकारात् धातुविहितप्रत्ययसंज्ञकतिङादेस्तत्संज्ञाविधानादिति भावः। **एतेन**—इत्यस्यार्थमाह—**विशेषापेक्षत्वेऽपीति**। **तस्येति**—स्यादिविधेरित्यर्थः। ननु कैयटोक्तरीत्यङ्गीकारे स्यादिषु कथं निर्वाहोऽत आहः—**परेति**। एवञ्च "विकरणेभ्यः०" (परि० ४१) इत्यस्याभावेऽपि न दोष इति भावः।

**ननु "अनुदात्तङितः०" (पा० सू० १।३।१२) इति प्रकरणस्य लादेशविध्येकवाक्यतापक्षेऽत्रापि प्रकृतिविशेषापेक्षत्वेनोभयोस्समत्वाद् बहिरङ्गपरि-**

**तस्य निमित्तत्वे मानाभावेनाधिकधर्मनिमित्तकत्वानुपपादनात्, भाष्ये एवंविधान्तरङ्गबहिरङ्गभावस्य, क्वाप्यनुल्लेखाच्च ।**

**यत्तु मतुप्सूत्रे भाष्ये 'पञ्च गावो यस्य सन्ति, स 'पञ्चगुः' इत्यत्र मतुप्प्राप्तिमाशङ्क्य 'प्रत्येकमसामर्थ्यात्, समुदायादप्रातिपदिकत्वात्, समासात्, समासेनोक्तत्वात्' इति सिद्धान्तिनोक्ते 'नैतत्सारम्, उक्तेऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितो यथा 'पाञ्चनापितिः' इति पूर्वपक्ष्युक्तिर्भाष्ये । "द्विगोर्लुगनपत्ये" इति लुग्विधानात् तद्धितार्थद्विगोस्तद्धितो भवति, पञ्चगुशब्दश्च द्विगुरिति तदाशयं कैयटः । ततः 'द्वैमातुरः', 'पाञ्चनापितिः' 'पञ्चसु कपालेषु संस्कृतः' इत्यादौ सावकाशद्विगोर्बहुव्रीहिणा प्रकृते परत्वाद् बाध इत्याशयेन 'नैष द्विगुः, कस्तर्हि ?**

---

भाषया कथं निर्वाह इति चेत्, न; उभयोर्बहिरङ्गयोः परत्वाल्लादेशेन निर्वाह इत्याशयात् । **मानाभावेनेति** । न च धातोः परस्य प्रत्ययस्यैव सार्वधातुकसंज्ञाविधानेन धातुत्वप्रत्ययत्वादेः शक्यतावच्छेदककोटिप्रविष्टतया शब्दत एवोपस्थित्या बहिरङ्गत्वं सुवचमिति वाच्यम्, संज्ञाशब्दे स्वरूपस्यैव प्रवृत्तिनिमित्ततया धातोः परत्वप्रत्ययत्वयोरुपलक्षणत्वेन शब्दादनुपस्थितत्वेनानुमितत्वमित्याशयात् । 'रुद्यात्' इत्यादौ नित्यत्वाद्यासुटि न दोष इति भावः ।

ननूक्तान्तरङ्गबहिरङ्गभावस्य मतुप्सूत्रे[1] भाष्ये स्पष्टमुल्लेखेन कथं नोल्लिखितत्वमत आह:—**यत्त्विति** । तत्र हि भाष्ये 'अथेह कस्मान्न भवति 'चित्रगुः' इति, बहुव्रीहिणोक्तत्वान्मत्वर्थस्य न भवति । 'अथेह कस्मान्न भवति 'पञ्चगुः' इति, समासेनोक्तत्वात् । नैतत्सारम्, उक्तेऽपि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितः, तद्यथा 'द्वैमातुरः' 'पाञ्चनापितिः' इति । नैष द्विगुः, कस्तर्हि ? बहुव्रीहिः । अपवादत्वाद् द्विगुः प्राप्नोति । अन्तरङ्गत्वाद् बहुव्रीहिर्भविष्यति । काऽन्तरङ्गता ? अन्यपदार्थे बहुव्रीहिः, विशिष्टेऽन्यपदार्थे तद्धितार्थे द्विगुः तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियते' इत्युक्तम् ।

ननु समासादापाद्यत उत वाक्यात् ? अन्त्येऽपि किं प्रत्येकमुत समुदायात् ? न तत्र मध्य इत्याह:—**प्रत्येकमिति** । परस्परापेक्षत्वेनासामर्थ्यादिति भावः । नान्त्य इत्याह:—**समुदायेति** । **पूर्वपक्ष्युक्तिरिति** । सिद्धान्ते तद्धितार्थ इति विषयसप्तमी न तु वाच्य इति । अत एव तत्र तद्धितः । पूर्वपक्षी तु वाच्ये इत्येवार्थं मन्यते । समासान्तश्चानित्यत्वान्न भवति । मतोस्तु न लुक्, अप्राग्दीव्यतीयत्वात् । ततश्च मतुप्श्रवणं दुर्वारमित्याशयेनाह:—**द्विगोरिति** । **प्रकृते इति** । 'पञ्चगुः' इत्यत्रेत्यर्थः । **बाध इति** । परत्वादिति शेषः ।

---

१. "तदस्यास्त्यस्मिन्निति मतुप्" ( पा० सू० ५।२।९४ ) इति सूत्रे भाष्य इत्यर्थः ।

**बहुव्रीहिः' इति सिद्धान्तिनोक्ते तमवकाशमजानानोऽपवादत्वाद् द्विगुः प्राप्नोतीति पूर्वपक्षी । अन्यपदार्थे सुबन्तमात्रस्य विधीयमानबहुव्रीहेः सङ्ख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद् बाधकः प्राप्नोतीति कैयटः ।**

**ततः सिद्धान्त्येकदेश्याहः—'अन्तरङ्गत्वाद बहुव्रीहिः । क्वान्तरङ्गता ? अन्यपदार्थे बहुव्रीहिः, विशिष्टेऽन्यपदार्थे द्विगुः, तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियते' इति । अधिकास्त्यर्थापेक्षमत्वर्थनिमित्तो द्विगुर्बहिरङ्ग इति कैयट इति ।**

**नैषा सिद्धान्त्युक्तिः, एतावताप्यपवादत्वाहानेः । अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण बाधदर्शनात् ।**

---

**सिद्धान्तिनोक्त इति ।** अप्रथमान्तेषु 'द्वैमातुरः' 'पञ्चकपालम्' इत्यादौ द्विगोश्चारितार्थ्येन समानाधिकरणे प्रथमान्ते परत्वाद् बहुव्रीहिणा बाधेनास्यापि[1] चित्रगुतुल्यत्वात् समासेनोक्तत्वान्न दोष इति भावः । **अपवादत्वाद् द्विगुरिति ।** प्रथमान्तानामेव बहुव्रीहिरिति नियमाभावादन्यपदार्थमात्रे सुबन्तमात्रस्य विधीयमानबहुव्रीहेस्संख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद् बाधको भविष्यति । द्विगुविषये तु 'उक्तार्थानाम्' इति न्यायस्य द्विगोरिति ज्ञापकादप्रवृत्त्या 'चित्रगुः' इत्यत्रैव वारणं न सारमिति भावः ।

ततः सिद्धान्ती 'तुष्यतु दुर्जनः' इति न्यायेन तदुक्तमपवादत्वमभ्युपगम्य **'अपवादोऽपि यद्यन्यत्र०'** ( परि० ६६ ) इति न्यायेन तदुक्तदोषं परिहर्तुमाहः— **अन्तरङ्गत्वादिति ।** अपवादत्वस्य कथमप्यसम्भवात्, तदभ्युपगमादस्य सिद्धान्त्येकदेशित्वमिति भावः । **विशिष्ट इति ।** विशेषविशिष्ट इत्यर्थः । **तस्मिंश्चास्येति ।** अस्य द्विगोरर्थद्वारा निमित्तभूते तस्मिन् तद्धित इत्यर्थः । विषयत्वं सप्तम्यर्थः । मतुब्विधायकेऽस्तिग्रहणमिति यावत् । **अधिकेति ।** बहुव्रीहिनिमित्तान्यपदार्थापेक्षयाधिकोऽस्त्यर्थस्तदपेक्षो यो मतुप् तदर्थनिमित्तिक इत्यर्थः । एवमनूद्य खण्डयति—**एतावतेति ।** अधिकास्त्यर्थापेक्षत्वेनेति भावः । **अहानेरिति ।** "प्रकल्प्य०" ( परि० ६४ ) इति न्यायेन तद्विषये बहुव्रीहेरप्रवृत्तेरिति भावः ।

नन्वपवादत्ववादिना पूर्वपक्षिणा प्रथमान्तानामेव बहुव्रीहिरिति नियमानभ्युपगमात् पञ्चानां नापितानामपत्यमित्यत्रापि बहुव्रीहेः प्राप्त्याऽत्रान्तरङ्गबहिरङ्गभावापन्नत्वेन समानविषये उत्सर्गबहुव्रीहेर्बाधनेनापवादद्विगोश्चारितार्थ्येन 'पञ्चगुः' इत्यत्र मत्वर्थविवक्षायामुभयोरपि प्राप्त्या "अपवादोऽपि०" ( परि० ६६ ) इति न्यायेन बहुव्रीहिणा द्विगोर्बाधविषयेऽपवादत्वस्य हान्यभावेऽपि न दोषोऽत आहः—**अजिति ।** अधिकापेक्षत्वेन बहिरङ्गत्वाङ्गीकारे

---

1. 'बाध इत्यस्यापि' इति पाठः क० पु० ।

**किञ्चोक्तरीत्या परत्वेन बाधसिद्धेः। किञ्चात्राधिकापेक्षत्वेनैव बहिरङ्गत्वम्, न केवलविशेषापेक्षत्वेनेति नतद्भाष्यारूढं विशेषापेक्षस्य बहिरङ्ग-त्वम्।**

**अत एव सुबन्तसामान्यापेक्षो बहुव्रीहिः, तद्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये।**

---

'श्रीशः' इत्यादौ तुल्यन्यायेन दीर्घस्यापि यणपेक्षया बहिरङ्गतया समानविषयत्वा-भावेन दीर्घस्याचारितार्थ्यासम्भवात्[1] केवलापवादत्वेनैव दीर्घेणोत्सर्गबाधे 'अयजे इन्द्रम्' इत्यादावपि बाधापत्तिरित्युक्तरीत्या बहिरङ्गत्वमादाय "अपवादोऽपि०" ( परि० ६६ ) इति न्यायप्रवृत्तिर्दुर्वचेति भावः।

ननु पूर्वपक्षिणः प्रथमान्तानामेव बहुव्रीहिरिति नियमाज्ञानेनापवादत्वो-क्तेरेकदेशित्वेऽपि सिद्धान्तिनस्तज्ज्ञानेनापवादत्वज्ञानाभावेन वस्तुतोऽन्तरङ्गत्वाद् बहुव्रीहिरिति स्वाशयप्रकटनेन नैष द्विगुः, कस्तर्हि? बहुव्रीहिरिति स्वोक्तिस-मर्थनं युक्तमेव। न तु "अपवादोऽपि०" ( परि० ६६ ) इति न्यायेन तत्समर्थनम-भिमतमित्यत आहः—**किञ्चेति। सिद्धेरिति।** अपवादत्वानभ्युपगमपरत्वेनैव बहुव्रीहिसिद्ध्या कथञ्चिदन्तरङ्गत्वसमर्थनायाधिकास्त्यर्थापेक्षणेन तदुपपादन-प्रयासस्य वैय्यर्थ्यापत्तेरिति भावः।

ननु परत्वान्तरङ्गत्वयोर्योगे तुल्यबलत्वासम्भवेन विप्रतिषेधसूत्राप्रवृत्त्या-न्तरङ्गत्वादित्युपन्यास एव युक्तः। किञ्चास्यैकदेशित्वेऽपि विशेषापेक्षात्सामा-न्यापेक्षमन्तरङ्गमिति भाष्ये[2] सूचितमेव। अन्यथोक्तिसम्भव एव न स्यादिति कैय्यटाद्युक्तिर्युक्तैवेत्यत आहः—**किञ्चात्रेति।** 'पञ्चगुः' इत्यत्रेत्यर्थः। **नैवेति।** एवकारेण प्राचीनसम्मतविशेषापेक्षत्वरूपबहिरङ्गत्वहेतोर्व्यावृत्तिः। **बहिरङ्ग-त्वमिति**—वक्तुं युक्तमिति शेषः। एवञ्चात्र लक्ष्ये अधिकापेक्षत्वेनैव भाष्योक्तं बहिरङ्गत्वं निर्वोढुं शक्यमिति भावः। **न केवलविशेषापेक्षत्वेनेति।** केवल-पदेनाधिकापेक्षत्वरूपबहिरङ्गत्वहेतोर्व्यावृत्तिः।

एवञ्चाधिकापेक्षत्वशून्यविशेषापेक्षत्वेनैव बहिरङ्गत्वं निर्वाधमिति नेत्यर्थः। **इतिर्हेतौ।** विशेषापेक्षत्वेन बहिरङ्गत्वमनभ्युपगम्यापि[3] अत्राधिकापेक्षत्वेनैव बहिरङ्गत्वस्य सूपपादतया त्वदुक्तरीत्या विशेषापेक्षत्वेन बहिरङ्गत्ववर्णनमेक-**देशिभाष्यारूढमपि न भवतीत्यर्थः।** एवञ्च भाष्यस्यान्यथाप्युक्तिसम्भवाद् विशेषापेक्षत्वेन बहिरङ्गत्वस्वीकारे न किञ्चिद्गमकमिति भावः।

ननूभयथापि भाष्यस्य सुयोजत्वेनैतदेवाभिमतम्, न तदुक्तमभिमतमित्यत्र किं मानमत आहः—**अत एवेति।** तस्यानभिमतत्वादेवेत्यर्थः। **नोक्तं भाष्ये इति।**

---

१. 'चारितार्थ्यसम्भवात्' इति पाठः क० पु०। २. 'भाष्य' इति पाठः क० पु०।
३. 'अभ्युपगम्यापि' इति पाठः क० पु०।

**न चार्थकृतबहिरङ्गत्वस्यानाश्रयणादिदमयुक्तम्, एकदेश्युक्तित्वेनादोषात् ।**

**अत एवास्तिग्रहणं नोपाध्यर्थम्, किन्त्वस्तिशब्दान्मतुबर्थमिति त्वदभिमतं बहिरङ्गत्वमपि द्विगोर्नास्तीति प्रतिपाद्य सिद्धान्तिना 'मत्वर्थे द्विगोः प्रतिषेधो वक्तव्यः' इति वचनेनैतत्सिद्धमित्युक्तम् ।**

---

अन्यथा काऽन्तरङ्गता ? इति प्रश्ने उक्तरीत्या सामान्यविशेषधर्मपुरस्कारेणैव तदुपपादितं स्यादिति भावः । नन्वधिकास्त्यर्थापेक्षत्वेन बहिरङ्गत्वमपि तवानिष्टमेवेत्याशङ्कतेः—**न चेति** । **एकदेश्युक्तित्वे** मानमाहः— **अत एवेति । त्वदभिमतमिति ।** अधिकास्त्यर्थापेक्षकृतमित्यर्थः । **सिद्धान्तिनेति** । अन्तरङ्गत्ववादिसिद्धान्त्येकदेशिनेत्यर्थः । **वचनेनैवेति ।** द्विगौ तदुक्तापवादत्वस्याङ्गीकृतत्वेन स्वोत्प्रेक्षितान्तरङ्गत्वस्य बहुव्रीहावुक्तरीत्या सम्भवेन वचनमङ्गीकृतमिति भावः । एवञ्चैतत्सूत्रस्थः सर्वोऽपि ग्रन्थः प्राय एकदेशिन एवेति सूचयितुमिदमुक्तमिति बोध्यम् ।

नन्वेवमपि "वर्णो वर्णेन" ( पा० सू० २।१।६९ ) इति सूत्रे 'समानाधिकरणसमासाद् बहुव्रीहिर्भवति विप्रतिषेधेन' इति वार्तिकखण्डनावसरे 'अन्तरङ्गः कर्मधारयः, काऽन्तरङ्गता ? स्वपदार्थे कर्मधारयः, अन्यपदार्थे बहुव्रीहिः' इत्युक्तं भाष्ये तद्विरुद्धचेत ।

न च समासशक्तिवादिनां मतेऽन्यपदार्थेऽस्यापि विशिष्टशक्यत्वेन स्वपदार्थत्वात्कथं बहिरङ्गत्वमिति वाच्यम्, स्वघटकपदघटितवाक्यदृष्टार्थमात्रविषयकतत्पुरुषीयशक्तिग्रहापेक्षया बहुव्रीहिसंज्ञकपदसमुदायीयशक्तिग्रहस्य स्वघटितपदघटकवाक्यदृष्टार्थातिरिक्तार्थविषयकत्वेन बहिरङ्गत्वमित्याशयात् । न च समानाधिकरणानामेव बहुव्रीहेरङ्गीकारेण बहुव्रीहेरनवकाशतयाऽन्तरङ्गत्वप्रतिपादनपरभाष्यमेकदेशिन इति वाच्यम्, 'कण्ठेकालः' [ "अमूर्धमस्तकात्०" ( पा० सू० ६।३।१२ ) इत्यलुक्[1] ] इत्यादौ तस्य चारितार्थ्यसम्भवात् ।

न च "सप्तमी विशेषणे०" ( पा० सू० २।२।३५ ) इति ज्ञापकसिद्धे तस्मिन्सूत्रस्य चारितार्थ्यायोगादपवादत्वं[2] दुर्वारमिति वाच्यम्, 'प्राप्तोदको ग्रामः' इत्यादावुदककर्तृकप्राप्तकर्मीभूतो ग्राम इति विशेषणविशेष्यभावव्यत्यासेनैवैकार्थीभावस्य कल्पनेन तत्र सामानाधिकरण्याभावात्, कर्मधारयाप्राप्त्या बहुव्रीहेश्चारितार्थ्यस्य सुवचत्वात् । न च सामानाधिकरण्याभावे बहुव्रीहेरप्यप्राप्तिः, द्वितीयादीनां प्रतिपदं समासविधानेन प्रथमान्तानामेव शेषत्वेन तत्र समर्थानां जायमानो बहुव्रीहिरर्थात् समानाधिकरणानामेव भवतीत्यर्थस्य कैय्यटेनैव स्पष्टमुक्तत्वेन तथा बोधान्यथानुपपत्त्या, तत्र सामानाधिकरण्याभावेऽपि लौकिकविग्रह-

---

१. कोष्ठकान्तरितः पाठः क० पु० नास्ति ।　　२. 'अपवादित्वम्' इति पाठः क० पु० ।

**अत एव "तदोः सः सा०" इति सूत्रेऽनन्त्ययोरिति चरितार्थम् । अन्यथा प्रत्ययसामान्यापेक्षत्वेनाऽन्तरङ्गत्वादन्त्यस्यात्वेऽनन्त्यस्यैव सत्त्वे सिद्धे तद्वैय्यर्थ्यं स्पष्टमेव । "पादः पत्" इति सूत्रे भाष्यकयटयोरप्येतदन्तरङ्गत्वाभाव एव सूचित इति सुधियो विभावयन्तु ।**

---

वाक्ये 'प्राप्तमुदकं यम्' इत्यत्र यत्कर्मकप्राप्तिकर्त्रभिन्नमुदकमिति बोधेन तत्रत्यसामानाधिकरण्यमादाय बहुव्रीहिप्रवृत्त्यङ्गीकारेऽपि कर्मधारयविधौ समानाधिकरणाधिकारेण तस्योपजीव्यत्वेन वृत्तौ सामानाधिकरण्याभावविषये तदप्रवृत्तेः ।

न चैवं 'प्राप्ता भार्या यं प्राप्तभार्यः' इत्यत्र पुंवत्वसिद्धये "कालाः परिमाणिना" ( पा० सू० २।२।५ ) इति सूत्रस्थभाष्योक्तवृत्तिविग्रहयोः समानार्थकत्वनिर्वाहाय च प्राप्तिकर्त्रभिन्नोदककर्मेत्येव बोधः । विशिष्टे तद्बाधाद् विशेषणीभूतप्राप्तौ तत्पर्यवस्यतीति तत्रापि सामानाधिकरण्यात् कर्मधारयप्राप्तिरस्त्येवेति वाच्यम्, एवमपि 'रामो जामदग्न्यः' 'तक्षकः सर्पः' इत्यादौ बहुलग्रहणात्कर्मधारयाप्राप्तिविषये बहुव्रीहेश्चारितार्थ्यसम्भवात् ।

न च यदा प्रथमत एव विशेष उपक्रम्यते शिंशुपेति तदा वृक्षविशेषस्यैव प्रकान्तत्वाद् विशेषस्य सामान्याव्यभिचाराद् वृक्षशब्दस्य नैव प्रयोगेण भाव्यम् । यदा तु प्रथमत एव सामान्यमुपक्रम्यते 'वृक्षः' इति तदा विशेषणाय शिंशुपाशब्द उपादीयमानो विशेषणमेव भवतीति 'शिंशुपावृक्षः' इत्येव भाव्यमिति कैय्यटोक्त्यैतादृशे विषये कथञ्चित्सहप्रयोगसम्भवेपि 'कण्ठेकालः' इत्यादौ बहुव्रीहेश्चारितार्थ्यप्रदर्शनपरभाष्यप्रामाण्येनैतादृशे विषये बहुलग्रहणेनैकार्थीभावाभावकल्पनेनादोष इति वाच्यम्, एवमपि पञ्चगुर्दशगुरित्यादौ "दिक्संख्ये संज्ञायाम्" ( पा० सू० २।१।५० ) इति नियमेन कर्मधारयाप्राप्तेर्बहुव्रीहेश्चारितार्थ्यस्य सुवचत्वात् ।

न च कर्मधारयाप्राप्तावपि "तद्धितार्थः०" ( पा० सू० २।१।५१ ) इति द्विगोः प्राप्त्योत्सर्गाप्राप्तियोग्यविषयाभावेन बाध्यसामान्यचिन्तयोभयापवादत्वं[1] सुवचम् । एवमपि 'चित्रा जरती गौर्यस्य, इति त्रिपदे बहुव्रीहौ विशेषणयोरेकत्रद्वयमिति रीत्यान्वयविवक्षायां पूर्वयोः परस्परमनन्वयेन 'वाग्दृषदप्रियः' इत्यत्रेव कर्मधारयाऽप्रात्या तस्य चारितार्थ्यस्य सुवचत्वात्[3] ।

अत एव "अनेकमन्यपदार्थे" ( पा० २।२।२४ ) इति सूत्रेऽनेकग्रहणं चरितार्थम् । तद्धि त्रयाणां बहुव्रीहौ पूर्वस्य पुंवत्त्ववारणार्थम् । यदि तत्रापि

---

१. 'उभयोरपवादत्वम्' इति पाठः क० पु० ।  २. 'अन्वयेन' इति पाठः क० पु० ।
३. 'सुवचात्' इति पाठः क० पु० ।

**नन्वेवम् 'असुस्रुवत्' इत्यत्र लघूपधगुणादुवङोऽल्पनिमित्तत्वाभावादुवङ् न स्यादिति चेत्, न; तत्रान्तःकार्यत्वरूपान्तरङ्गत्वसत्त्वात्। अन्तःकार्यत्वं च पूर्वोपस्थितनिमित्तकत्वम्, अङ्गशब्दस्य निमित्तपरत्वात्। इदमन्तरङ्गत्वं लोककन्यायसिद्धमिति 'मनुष्योऽयं प्रातरुत्थाय शरीरकार्याणि करोति, ततः सुहृदाम्, ततः सम्बन्धिनाम्'। अर्थानामपि जातिव्यक्तिलिङ्गसंख्याकारकाणां**

---

कर्मधारयो भवेत्, तदा पुंवत्त्वस्य दुर्वारत्वेन तद्वैयर्थ्यं स्पष्टमेवेति चेत्, न; अत्र पूर्वयोः कर्मधारयाप्रवृत्तावप्युत्तरेण कर्मधारयप्राप्तेर्दुर्वारत्वेन चारितार्थ्यस्य दुर्वचत्वमित्याशयात्। किञ्च संज्ञाविषये "येन ना०" (परि० ५८) इति न्यायाप्रवृत्त्या संज्ञयोस्त्रिपदबहुव्रीहौ भिन्नाश्रयत्वेन 'आकडार'[1]-सूत्रमूलकविरोधस्यापि दुर्वचत्वेन तत्र कर्मधारयवारणायेष्टेरावश्यकत्वेनेष्टयारम्भस्यापि न वैयर्थ्यमिति दिक्।

ननु 'प्रादुद्रुवत्' इत्यादौ 'द्रु' धातोर्लुङि, तिपि, "सार्वधातुका०" (पा० सू० ७।३।८४) इति गुणात्प्राक् नित्यत्वाच्चङि "द्विर्वचनेऽचि[2]" (पा० सू० १।१।५९) इति निषेधादुवङभावे उपधाकार्यस्य द्वित्वात्प्राबल्येऽपि तस्य ह्रस्वमात्रविषयत्वेन, द्वित्वे अच आदेशो न स्यादिति निषेधेनाऽन्तरङ्गत्वाच्च द्वित्वे, तत उवङ्गुणयोः प्राप्तौ पूर्वोक्तान्तरङ्गत्वस्योवङ्यभावेन गुणो दुर्वार इत्याशङ्कतेः—**नन्वेवमिति**। आङ्ग्रहणेन धर्मिग्राहकमानेन प्रक्रियाक्रमेण पूर्वोपस्थितिनिमित्तकस्यान्तरङ्गत्वस्वीकारेऽपीत्यर्थः। प्रत्युत गुणस्यैव प्रक्रियाक्रमेण पूर्वोपस्थितिनिमित्तकत्वमिति गुणः स्यादिति गूढाशयः।

**अल्पनिमित्तत्वाभावेनेति**। अल्पमेकं स्थानिमात्रं निमित्तं यस्य तत्त्वाभावेनेत्यर्थः। अनैमित्तिकत्वेनान्तरङ्गत्वाभावेनेति यावत्। अन्यथा "येन विधिः०" (पा० सू० १।१।७२) इति सूत्रस्थकैयटोक्तरीत्या गुणापेक्षयाल्पनिमित्तकत्वेनोवङोऽल्पनिमित्तत्वाभावेनेत्युक्तेरसङ्गतिः स्यादिति बोध्यम्।

**अन्तःकार्यित्वञ्चेति**। कार्यमस्यास्तीति कार्यिनिमित्तमित्यर्थः। अन्तर्भूत-[3]निमित्तकत्वरूपेत्यर्थः। अन्तःकार्यित्वस्यानेकविधस्य सत्त्वेन प्रकृते कीदृशं तत्, इत्यत आहः—**पूर्वोपेति**। लौकिकप्रयोगीयोच्चारणक्रमेणेत्यर्थः। नन्वस्य पूर्ववन्न ज्ञापकसिद्धत्वम्, अत आहः— **इदमिति। शरीरेति**। तस्य साक्षात्सुखसाधनत्वादिति भावः। **सुहृदामिति**। विजातीयप्रीतिविषयत्वं सुहृत्त्वम्। **सम्बन्धि**-पदेनावश्यकश्वशुरादयः।

न चैतेषां प्रत्यासत्तितारतम्यमेषां कार्याणां क्रमप्रवृत्तौ बीजम्। प्रत्यासत्ति-

---

१. "आकडारादेका संज्ञा" (पा० सू० १ ४।२) इति सूत्रमूलकेत्यर्थः।

२. 'द्विर्वचनेचीननिषेधात्' इत्यपपाठः क० पु०।

३. 'अंर्भूत' इत्यपपाठः क० पु०।

**बोधक्रमः शास्त्रकृत्कल्पितः। तत्क्रमेणव च तद्बोधकशब्दप्रादुर्भावः कल्पित इति तत्क्रमेणैव तत्कार्याणीति 'पट्व्या' इत्यादावन्तरङ्गत्वात् पूर्वं पूर्वयणादेशः, परयणादेशस्य बहिरङ्गतयाऽसिद्धत्वादित्यनेन "अचः परस्मिन्" इति सूत्रे भाष्ये स्पष्टम्।**

**तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव। यथा 'पट्व्या' इत्यत्र पदस्य विभज्यान्वाख्याने, न तु जातस्य बहिरङ्गस्य तादृशेऽन्तरङ्गेऽसिद्धतानियामकम्, 'प्रागुक्तलोकन्यायेन तथैव लाभात्' इति "वाह ऊठ्" सूत्रे कैयटे स्पष्टम्।**

**अत एव वाय्वोरित्यादौ वलिलोपो यणः स्थानिवत्त्वेन वारितः "अचः**

---

तारतम्यश्च तद्गतप्रीतिवैजात्यम्। एवञ्चैतेषु विजातीयप्रत्यासत्त्यनुरोधेनेष्टत्वे-ष्टतरत्वेष्टतमत्वादेर्ग्रहः। तदनुरोधेन पूर्वकर्तव्यत्वज्ञानं प्रकृते चोभयोरपि कार्ययोः शास्त्रविधेयत्वाविशेषात्, प्रतिपत्तुः कार्यस्य मिथः प्रत्यासत्तिर्दुर्वचेति वाच्यम्, 'स्योनः' इत्यादौ तत्तत्कार्यनिमित्तयोः पूर्वोपस्थितिविषयत्वपरोपस्थितिविषय-त्वरूपप्रत्यासन्नतरत्वप्रत्यासन्नत्वादिविवक्षणेनोवङि पूर्वोपस्थितिनिमित्तकत्वरूपा-न्तरङ्गत्वस्य सत्त्वेनादोष इत्याशयात्।

नन्वाङ्ग्रहणेन सामान्यतः पूर्वोपस्थितिविषयस्यान्तरङ्गस्य बलवत्त्वं ज्ञाप्यताम्, तत एव 'अदुद्रुवत्' इति सिद्धमिति चेत्, न; तथा सति प्रक्रियाक्रमेण गुणनिमित्तस्येव प्रयोगीयोच्चारणक्रमेण दीर्घनिमित्तस्यापि 'खट्वोढा' इत्यादौ पूर्वोपस्थितेः[1] सम्भवेन दीर्घापेक्षया गुणस्याऽन्तरङ्गत्वानापत्तेः। मम त्वस्य लोकन्यायसिद्धत्वेन तस्य शास्त्रीयज्ञापकसिद्धत्वेन तस्यैव बलवत्त्वमिति न दोषः।

**शास्त्रकृत्कल्पित इति।** प्रक्रियानिर्वाहायेति शेषः। कल्पित इत्यनेन वस्तुतस्तेषां युगपदेवोपस्थितिरिति सूचितम्। **तत्क्रमेणैवेति।** युगपत्प्राप्तिविषय इति शेषः। तेन 'या' 'सा' इत्यादौ न दोषः। **स्पष्टमिति।** न चैवं 'दिवोकसः' इत्यत्र पूर्वं पूर्वयणादेशे ततः परयणादेशे उक्तरूपासिद्धिः, अकारान्तस्य दिवशब्द-स्याङ्गीकारेण 'दिवौकसः' इति पाठस्यैव सीरदेववृत्तिव्याख्याने स्वीकृतत्वेना-दोषात्। अन्यथा पूर्वं परयणादेशेऽपि स्थानिवत्त्वेन पूर्वयणादेशस्य दुर्वारत्वात्, "सकृद्गति०" ( परि० ४० ) न्यायेन पूर्वयणादेशवारणं तु 'पट्व्या' इत्यादि-भाष्यविरुद्धमिति दिक्।

नन्वसिद्धपरिभाषायामन्तरङ्गपदेनोक्तान्तरङ्गस्यापि ग्रहणे तत्रापि जातबहिरङ्गासिद्धत्वापत्तिरत आहः—**तदपीति।** **पूर्वप्रवृत्तीति।** 'अदुद्रुवत्' 'धियति' इत्यादौ नियामकमेवेति, न तु जातस्य बहिरङ्गस्यासिद्धतानियामक-मित्यर्थः। **अत एवेति।** एतस्यासिद्धतानियामकत्वाङ्गीकारादेवेत्यर्थः।

---

१. 'पूर्वंपस्थितेः' इत्यपपाठः क० पु०।

**परस्मिन्" इत्यत्र भाष्यकृता । क्रमेणान्वाख्याने तूक्तोदाहरणे पूर्वप्रवृत्तिकत्वमन्तरङ्गत्वं बहिरङ्गस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्यम् ।**

**यत्तु एवं रीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति, तच्चिन्त्यम्, 'स्रजिष्ठः' इत्यादौ विन्मतोर्लुकि टिलोपस्यापवादविन्मतोर्लुक्प्रवृत्त्या जातिपक्षाश्रयणेन वारणप्रयासस्य "प्रकृत्यैकाच्" इति सूत्रप्रयोजनखण्डनावसरे भाष्यकृत्कृतस्य नैष्फल्यापत्तेः । त्वदुक्तरीत्या विन्मतोर्लुको बहिरङ्गासिद्धत्वेनानायासतस्तद्वारणात्, भाष्य ईदृशरीत्या बहिरङ्गासिद्धत्वस्य क्वाप्यनाश्रयणाच्च, परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्च ।**

**इयं चोत्तरपदाधिकारस्थबहिरङ्गस्य नासिद्धत्वबोधिकेति "इच एकाचोऽम्" इति सूत्रे भाष्ये पूर्वपक्ष्युक्तिरिति सा नादर्त्तव्या । 'परन्तपः' इत्यादावनुस्वारे नासिद्धत्वं मुमस्त्रिपाद्यां तदप्रवृत्तेः ।**

---

**भाष्यकृतेति** । घटकत्वरूपान्तरङ्गत्वस्यैव तन्नियामकत्वम् । घटकत्वमपि तदीयोद्देश्य[1]–निमित्तसमुदायमध्यपतितत्वम् । तेन 'अक्षद्यूः' इत्यादौ न दोषः । एतत्फलं तु सुधीभिश्चिन्तनीयम् ।

ननु क्रमेणान्वाख्याने कथं परिभाषानिर्वाहो भाष्याद् युक्तोऽत आह:— **क्रमेणेति । उक्तोदाहरण इति** । 'पट्व्या' इत्यादावित्यर्थः । **अप्राप्तिरूपमिति** । अन्तरङ्गे पूर्वयणादेशे कर्त्तव्ये तदानीं बहिरङ्गस्य परयणादेशस्योपस्थितिरूपनिमित्ताभावादित्यर्थः ।

**नैष्फल्यापत्तेरिति** । न च "येन ना०" ( परि० ५८ ) इति बाधविषये अपवादप्रवृत्त्यनन्तरमप्युत्सर्गप्रवृत्तेरसर्वसिद्धत्वेनात्र[2] जातिपक्षाश्रयणप्रयासवैयर्थ्यं दुर्वारमेवेति वाच्यम्, व्यक्तिपक्षे लक्ष्यभेदेन टिलोपशास्त्रस्य विभिन्नत्वेन प्रथमद्विर्वचनापेक्षया वैलक्षण्यस्येह सत्त्वेन बाधानापत्त्या जातिपक्षाश्रयणेनानपेक्षितविषयभेदं टिलोपशास्त्रमात्रं बाध्यत[3] इत्याशयेनादोषात् ।

ननु पूर्वोक्तरीत्या जातबहिरङ्गस्येदमपि नासिद्धत्वविधायकमिति कथं 'स्रजिष्ठः' इत्येतद्भाष्यविरोधोऽत आहः—**भाष्ये इति** । नन्वेवमप्रतिषिद्धमनुमतमिति न्यायेन तदप्यस्त्वत आह: —**अङ्गशब्दस्येति** । उद्देश्यनिमित्तसमुदायपरत्वादिति भावः ।

**पूर्वपक्ष्युक्तिरिति** । तत्र हि 'अथेह कथं भवितव्यम्, श्रियमात्मानं मन्यत इति श्रियं मन्यं कुलम्' इति सिद्धान्त्युक्तौ "स्वमोः०" ( पा० सू० ७।१।२३ ) इति लुक्कुतो नेति प्रश्ने "सुपो धातु०" ( पा० सू० २।४।७१ ) इति लुग्वद्

---

१. 'यदीयोद्देश्य' इति पाठः क० पु० । २. 'प्रवृत्तेस्सर्वसिद्धत्वेन' इति पाठः क० पु० ।
३. 'बोध्यते' इति पाठः क० पु० ।

**नव्यमतेऽपि यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन तस्य तदुक्तित्वमावश्यकमित्याहुः। आभीयेऽन्तरङ्गे आभीयस्य बहिरङ्गस्य समानाश्रयस्य नानेनासिद्धत्वम्, अन्तरङ्गस्यासिद्धत्वादित्यसिद्धवत् सूत्रे भाष्ये स्पष्टम्।**

**एवं सिचि वृद्धेः 'येन नाप्राप्ति' न्य.येनान्तरङ्गबाधकत्वमूलकम् 'न सिच्यन्तरङ्गमस्ति' इति "इको गुण" इति सूत्रे भाष्ये स्पष्टम्॥ ५१॥**

---

बाध्यसामान्यचिन्तयाम्विधिसामर्थ्याद् बाध्यते' इति तेनोक्ते बाध्यविशेषचिन्तामाश्रित्याद्यलुको नाप्राप्तावपि "स्वमोः०" ( पा० सू० ७।१।२३ ) इत्यस्य पुंस्यप्राप्त्या तत्त्वाभावात्, कथं तेन बाध इति पूर्वपक्षिणा पृष्टे 'एवं तर्हि-अन्तरङ्गे लुकि बहिरङ्गस्यामोऽसिद्धत्वान्नेति' सिद्धान्तिनोक्ते, 'नैषा परिभाषोत्तरपदाधिकारे शक्या विज्ञातुमिह हि दोषः स्यात् 'परन्तपः' तस्माच्छ्रिमन्यमित्येव भवितव्यम्' इति पूर्वपक्षिण उक्तिः। अत्र विषये श्रीशब्दो ब्राह्मणकुले स्वलिङ्गपरित्यागेन वर्तते। यथा प्रष्ठादयः पुंयोगात्स्त्रियां वर्तमानाः स्वलिङ्गमपहाय स्त्रीलिङ्गमुपाददते इति "स्वमोः०" ( पा० सू० ७।१।२३ ) इत्यस्य प्राप्तिरिति कैयटः।

**दानेनेति।** यद्यपि 'महादेवः' 'अष्टादश' इत्यादावात्वनिमित्तकदीर्घसिद्धये इयमावश्यकी, तथापि तत्र "नाजानन्तर्ये०" ( परि० ५१ ) इति परिभाषया, अस्या अनित्यत्वाद् वा न दोष इति मूलाशयः। **स्पष्टमिति।** परिभाषां प्रति त्रिपाद्या इवाभीयस्याप्यसिद्धत्वादन्तरङ्गाभावेन तदप्रवृत्तिः।

न च कार्यकालपक्षे तेन परिभाषाकर्षणं दुर्वारमिति वाच्यम्, अन्तरङ्गं प्रति परिभाषाया अप्यसिद्धत्वेन तदाकर्षणासम्भवात्। **अन्तरङ्गेति।** गुणरूपेत्यर्थः। अत्र णिश्रिग्रहणं ज्ञापकम्। 'अश्वयीत्' इत्यादौ गुणायादेशयोः कृतयोर्यान्तत्वेन निषेधसिद्धेस्तद्व्यर्थं सज्ज्ञापकम्। तेन 'अनैषीत्' 'अचैषीत्' इत्यादौ न गुणः।

न च "अनैषीत्" इत्यादौ "सिचिवृद्धिः०" ( पा० सू० ६।२।१ ) इति विषये "सार्वधातुका०" ( पा० सू० ७।३।८४) इति गुणप्राप्तावपि 'अचैषीत्' इत्यादाविव लघूपधगुणाप्राप्त्या तद्विषयेऽस्य नाप्राप्त्यसम्भवेन[1] बाधायोगादन्तरङ्गत्वाल्लघूपधगुणो दुर्वार इति वाच्यम्, बाध्यसामान्यचिन्ताश्रयणेनादोष इत्याशयात्। अस्याः फलं 'पचावेदम्' इत्यादि भाष्ये उक्तम्।

अत्र केचित् "एत ऐ" ( पा० सू० ३।४।९३ ) इत्यत्र 'इत ऐ' इति न्यस्यते। इकारान्तस्य लोडुत्तमस्य 'ऐ' इत्यर्थात् 'रुदिव' रुदिम' इत्यादौ न दोषः। 'भवानि' इत्यादौ तु "मेर्निः" ( पा० सू० ३।४।८९ ) इत्यनेन बाध इति 'आटिटत्' 'अतिष्ठिपत्' इत्यत्रान्तरङ्गे गुणे बहिरङ्गस्य द्वित्वस्यासिद्धत्वाय 'जागृढः' इत्यत्र सम्प्रसारणस्यासिद्धत्वाद्गभावाय चेयमावश्यकीत्याहुः॥ ५१॥

---

१. 'न्यायप्राप्त्यसम्भवेन' इति पाठः क० पु०।

नन्वेवम् 'अक्षद्यूः' इत्यादौ बहिरङ्गस्योठोऽसिद्धत्वादन्तरङ्गो यण् न स्यात्, अत आहः—

**नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ ५२ ॥**

अत्र "षत्वतुकोः" इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम्। अन्यथा 'अधीत्य' 'प्रेत्य' इत्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहिताया नित्यत्वाद् ल्यबुत्पत्तिपर्यन्तमप्यसंहितयाऽवस्थानासम्भवेनैकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतयासिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव।

---

**अक्षद्यूरिति।** ननु 'वाय्वोः इत्यत्रेव बहिरङ्गशास्त्रनिष्पन्नकार्यनिमित्तकत्वेनात्र जातासिद्धत्वाप्राप्त्या न दोष इति चेत्, न; वकारान्ताङ्गात् क्विप्समुदायान्तर्भूतेकारवकारस्थानिकोठ्निमित्तकत्वेन यणोऽत्रान्तरङ्गत्वसम्भवेऽपि[1] 'वाय्वोः, इत्यत्र लोपोपकारकयकारवकारयोर्यणङ्गभूतोकारौकारात्मकवर्णसमुदायेऽन्तर्भूतत्वेन तस्मिन् बहिरङ्गत्वोपपादनस्य दुर्घटत्वमित्याशयात्। आदिना 'हरयः' इत्यत्रायादेशस्य च सङ्ग्रहः।

**अधीत्येति।** क्त्वान्तस्य अधीत्यनेन योगे धातूपसर्गयोः संहिताया नित्यत्वेनान्तरङ्गनिमित्तविनाशकलुक्ल्यप्प्रयोजकसमासस्यान्तरङ्गाऽपेक्षया बलवत्त्वेऽपि प्रकृते तदभावादन्तरङ्गत्वाद्दीर्घे यद्[2]यच्छास्त्रीयनिमित्तसमुदायनिष्ठविषयतानिरूपितविषयिता[3]निरूपितविषयताशालिनिमित्तसमुदायकं यत्तत्तदपेक्षयान्तरङ्गत्वम्। पूर्वान्तवद्भावेन गतित्वाद् व्यपदेशिवद्भावेन कृदन्तत्वात्, ततस्समासे ल्यपि लुक एकपदसम्बन्धिप्रकृतिप्रत्ययमात्रापेक्षत्वेनान्तरङ्गत्वाद्दीर्घस्यासिद्धत्वमिति भावः।

न च दीर्घोत्तरं ह्रस्वाभावादन्तरङ्गकर्तव्यताया असम्भवः, पूर्वं ह्रस्वे सत्यपि पित्परत्वाभावात्तत्कर्तव्यताया असम्भवादसिद्धत्वं कथमिति वाच्यम्, असिद्धत्वोत्तरं ह्रस्वबुद्ध्याऽन्तरङ्गप्राप्तेस्सुवचत्वेन तद्विषयत्वमित्याशयात्। न च समासार्थमेकादेशस्य पूर्वान्तवद्भावेन दीर्घस्य पूर्वपदसम्बन्धित्वेनोभयोरपि पदद्वयसम्बन्धित्वेन कथमसिद्धत्वमिति वाच्यम्, तुकि कर्तव्ये परादित्वेनेकारस्य तदादित्वेनाऽन्तरङ्गत्वस्य सुवचत्वात्।

किञ्च असिद्धत्वेन ह्रस्वबुद्धौ तस्मिन् परपदसम्बन्धित्वबुद्धेरर्थासिद्धत्वेनान्तरङ्गकर्तव्यतायास्सुवचत्वात्। एतेन आदिना केत्येतस्य सङ्ग्रहः। अत्रेषदर्थककुशब्दस्य "ईषदर्थे०" ( पा० सू० ६।३।१०५ ) इत्यनेन कादेशे, तत्र धातू-

---

१. 'अन्तरङ्गत्वाभावेऽपि' इति पाठः क० पु०।　　२. 'यद्' इति नास्ति क० पु०।

३. 'व्यापकविषयिता' इत्यधिकः पाठः क० पु०।

**'पदद्वयसम्बन्धिवर्णद्वयापेक्षं बहिरङ्गम' इति 'प्रेद्धः' इत्यादौ गुणो बहिरङ्ग इति ग्रन्थेन "  धातुलोप" इति सूत्रे "संयोगान्तस्य लोपः" इति सूत्रे च भाष्ये स्पष्टम् ।**

**यत्तु षत्वग्रहणमपि ज्ञापकम्, अन्यथा 'कोऽसिचत्' इत्यादौ पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति । तन्न,**

---

पसर्गत्वाभावात्समासप्रयुक्तमेव[1] संहिताया नित्यत्वं बोध्यमित्यपास्तम् । समासे कृते कादेशापेक्षया ल्यपोऽन्तरङ्गत्वात्पूर्वं ल्यपि तत एव तुकि ततः कादेशे केत्यस्य तदुदाहरणत्वासम्भवात् ।

नन्वन्यतरनिमित्तकसमुदायेऽन्यतरनिमित्तसमुदायस्यान्तर्भूतत्वाभावात्कथं बहिरङ्गत्वमत आहः—**पदद्वयेति** । ननु 'वेञ्' धातोः क्विपि सम्प्रसारणे 'उ-सु' इत्यत्र बहिरङ्गतुग्निवृत्तये असिद्धत्वविधानं चरितार्थमिति कथं तस्य वैय्यर्थ्यम् । न च पदान्तपदाद्योरेकादेशस्यैव तेनासिद्धत्वम्, 'उ-आ' इत्यत्र "स्वादिषु०" ( पा० सू० १।४।१७ ) इति पदत्वेन तत्त्वस्यापि सम्भवादिति चेत्, न; ज्ञापकपरभाष्यप्रामाण्येनाभिन्न[2] पदस्थपदान्तपदाद्योरेव ग्रहणेनादोषात् । न चैवं तुग्दुर्वारः, "अचः परस्मिन्०" ( पा० सू० १।१।५७ ) इति स्थानिवत्त्वेनादोषात् । स्थानिभूतादचः पूर्वत्वेन दृष्टत्वं तु स्थानिद्वारकं बोध्यम् ।

केचित्तु पदसंज्ञायाः पूर्वमेवैकादेशप्रवृत्त्या पदान्तपदाद्योरेकादेशाभावेन नासिद्धत्वप्राप्तिः । 'जुहुवतुः' इति प्रतीकस्थशेखररीत्या न स्थानिवत्वस्यापि प्राप्तिरिति तुकि 'उत्सु' इत्येव रूपमित्याहुः ।

**प्रेद्ध इति** । नन्वन्तरङ्गे निषेधे बहिरङ्गस्यासिद्धत्वाङ्गीकारेऽपि कथं गुणप्रवृत्तिः, असिद्धमनिष्पन्नमप्रवृत्तमित्यर्थात् । न चान्तरङ्गं प्रत्यसिद्धत्वेऽपि स्वतस्सिद्धत्वात्तत्प्रवृत्तिरव्याहतेति वाच्यम्[3], तथा सति 'अक्राष्टाम्' 'अबाद्धाम्' इत्यादौ "षढोः कः सि" ( पा० सू० ८।२।४१ ) इति कत्वस्य, सलोपे भष्भावस्य चासिद्धत्वेऽपि स्वतस्सिद्धत्वेन कत्वभष्भावयोरापत्तेरिति चेत्, न; असिद्धत्वातिदेशेनासिद्धे तस्मिन् यद्यद्भवति तत्तद्भवति, यद्यद् न भवति तत्तद् न भवतीति भावाभावयोरुभययोरप्यतिदेशाङ्गीकारेणान्यत्र प्रतियोगिन्यसिद्धे सति प्रतियोग्यभावाद्यथा निषेधो न भवति, एवं प्रकृते गुणे सिद्धेऽप्यसिद्धत्वबोधनेन निषेधस्याप्रवृत्त्या गुणप्रवृत्तौ बाधकाभावात् 'अक्राष्टाम्' 'अबाद्धाम्' इत्यादौ परस्मिन्कत्वभष्भावेऽसिद्धे सति यथा पूर्वो लोपः निष्प्रतिद्वन्द्वितया प्रवर्तते, एवं तत्सत्त्वेऽपीत्यर्थान्न दोषः ।

---

१. 'उपसर्गत्वाभावासमासप्रयुक्तमेव' इति पाठः क० पु० ।

२. 'प्रामाण्येन भिन्न' इति पाठः क० पु० ।

३. 'वाच्यम्' इति नास्ति क० पु० ।

**इणः पूर्वपदसम्बन्धित्वेन षत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेनोभयोः समत्वात् ।**

**एकादेशस्य परादित्वेन 'ओसिचत्' इत्यस्य पदत्वेन पदादित्वाभावान्न "सात्पदाद्योः" इत्यनेन निषेधः । त्रैपादिकेऽन्तरङ्गे कार्यकालपक्षेऽपि बहिरङ्ग-परिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वाच्च ।**

---

ननु 'अधीत्य' इत्यादौ एकादेशस्य पूर्वान्तवद्भावेन पूर्वपदसम्बन्धित्वेऽपि एकादेशप्राक्कालिकैकपदस्थोद्देश्यनिमित्तकत्वेन तुकोऽन्तरङ्गत्ववत्षत्वस्यान्तरङ्ग-त्वमभ्युपेत्य ज्ञापकत्वं ब्रूषे ? उत एकादेशोत्तरं परादिवद्भावेनैकपदस्थोद्देश्य-निमित्तकत्वेन तत्त्वम् । तत्र नाद्य इत्याहः—**इणः पूर्वेति ।** एकादेशात्प्रागिणः पूर्वपदसम्बन्धित्वेन षत्वेऽन्तरङ्गत्वं दुरुपपादमिति भावः । न च तत्काले अकारेण व्यवधानान्न षत्वप्राप्तिरिति वाच्यम्, 'अधीत्य' इत्यादावेकादेशात्प्राक् पित्कृत्पर-त्वाभावेन तुकोऽप्यप्राप्तेः । अन्तरङ्गस्य बहिरङ्गप्रवृत्तेः पूर्वं नियमेन प्राप्तिविषय एवान्तरङ्गासिद्धत्वमिति नियमाभावात् ।

**समत्वादिति ।** ननु समत्वेनान्तरङ्गत्वाभावादेतत्परिभाषाया अप्राप्त्या तद्वैयर्थ्यासम्भवेऽपि सिद्धान्ते षत्वग्रहणस्य प्रयोजनं दुर्वचम्, एकादेशस्य पूर्वान्त-वत्त्वेन 'को' इत्यस्य पदत्वेनासिचदित्यस्यैकदेशविकृतन्यायेन पदत्वेन पदादादिः पदस्यादिरित्यर्थेन वा षत्वनिषेधस्यासिद्धेः[1] इत्यत आहः—**एकादेशेति । परादित्वेनेति ।** पूर्वान्तवत्त्वं तु न, पदादिरित्यर्थस्य सिद्धान्तेऽसत्त्वेन[2] अतिदेशस्य कार्यार्थत्वादतिदिश्यमानधर्मनिमित्तककार्ये एवातिदेशप्रवृत्तेः । एवञ्च "सात्पदाद्योः" ( पा० सू० ८।३।१११ ) इत्यस्याप्राप्त्या षत्वग्रहणमावश्यकमिति भावः ।

नन्वेवमत्र परादिवद्भावोऽपि दुर्लभः, "सात्पदाद्योः" (पा० सू० ८।३।१११) इति निषेधप्रवृत्तिप्रतिबन्धेऽशास्त्रीये कार्येऽतिदेशाप्रवृत्तेः । अथ तत्प्रवृत्तिप्रति-बन्धकस्यापि षत्वप्रयोजकत्वेन शास्त्रीयकार्यप्रयोजकत्वात्, अतिदेशः[3] प्रवर्तत इति, इत्यभिमानः । तदा इण उत्तरपद[4]सम्बन्धित्वादन्तरङ्गत्वं सुस्थमिति षत्वग्रहणस्य ज्ञापकत्वं सम्भवतीति, द्वितीयपक्षोऽपि न युक्त इत्यत आहः—**त्रैपादिकेति ।**

केचित्तु[5] 'उ'शब्दाल्लालनायां क्यचि सुगागमे ततः क्विपि तस्य भानु-शब्देन समासे भानौ वसतीति वा भानूः, ततोऽतिशायने तमपि 'भानूष्टमम्' इत्यत्र "ह्रस्वात्तादौ०" ( पा० सू० ८।३।१०१ ) इति सूत्रे तदाद्यंशोपस्थित्यास्यैव बहिरङ्गत्वेन षत्वसिद्धये षत्वग्रहणमित्याहुः ।

---

१. 'षत्वनिषेधासिद्धेः' इति पाठः क० पु० । २. 'असिद्धत्वेन' इति पाठः क० पु० ।
३. 'परिभाषा' इति पाठः क० पु० । ४. 'पदासम्बन्धि०' इत्यपपाठः क० पु० ।
५. 'वस्तुतः' इति पाठः क० पु० ।

**परिभाषार्थस्तु—अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिः। बहिष्पदेन बहिरङ्गम्, तस्य भावो बहिरङ्गत्वम्। तत्प्रयुक्तासिद्धत्वस्य न प्रक्लृप्तिः, न प्राप्तिरिति।**

**'असिद्धं बहिरङ्गम्' इत्युक्त्वा 'नाजानन्तर्ये इति वक्ष्यामि' इति भाष्योक्त्या तत्रत्यस्यान्तरङ्ग इत्यस्यानुवृत्तिसूचनात्। तेन 'पचावेदम्' इत्यादौ न दोषः। अन्तरङ्गस्याच्स्थानिककार्यस्यैत्वस्यान्यानन्तर्यनिमित्तकत्वाभावात्।**

**'जातस्य बहिरङ्गस्य' इत्युक्त्या 'अयजे इन्द्रम्' 'धियति' इत्यादौ बहिरङ्गदीर्घगुणादेरसिद्धत्वं सिद्धम्।**

**अत एव 'इण्ङिशीनामाद् गुणः, सवर्णदीर्घत्वाच्छचङन्तस्यान्तरङ्गलक्षणत्वात्' इत्यादि सङ्गच्छते। अत एव "ओमाङोश्च" इत्याङ्ग्रहणं चरितार्थम्। तद्धि 'शिव+आ+इह' इति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद् गुणे वृद्धिबाधनार्थम्।**

**न च 'अक्षद्यूः' इत्यत्र यणि कृते ऊठोऽसिद्धत्वाद् वलिलोपापत्तिरिति**

---

( इदमपरे न क्षमन्ते 'भानु-उ-स्-तम' इत्यत्र दीर्घरुत्वषत्वानां प्राप्तौ "षत्वतुकोः०" (पा० सू० ६।१।८६) इत्यसिद्धत्वेन दीर्घाप्रवृत्त्या षत्वस्यासिद्धत्वाद्रुत्वे "हलि च" ( पा० सू० ८।२।७७ ) इति दीर्घे ततः - सवर्णदीर्घे, ततः षत्वे कर्तव्ये एकादेशस्य सिद्धत्वेऽपि ह्रस्वात्परत्वाभावेन षत्वाप्राप्त्योक्तरूपासम्भवात्। किञ्च कृतसंधेरेव प्रत्ययोत्पत्तावपि 'चतुष्टयम्' इत्यत्र षत्वस्य चारितार्थ्येन षत्वस्य सिद्धत्वेन पूर्वं रुत्वे ततः "हलि च" ( पा० सू० ८।२।७७ ) इति दीर्घे विसर्गसत्वयोः कृतयोः षत्वे कर्तव्ये दीर्घस्यासिद्धत्वाभावेन ह्रस्वात्परत्वाभावेन षत्वाप्राप्तेः।[1] )

**निमित्तकेति**। अच इति सम्बन्धसामान्ये षष्ठी। आनन्तर्यमव्यवधानम्। तच्च सप्तम्यन्ततया पञ्चम्यन्ततया वोपात्तपदबोध्यनिरूपितम्। एवञ्चान्यस्यान्येन वाच आनन्तर्यं विवक्षितम्। आनन्तर्यं पौर्वापर्यनिमित्तभूतम्, यस्मिन्नन्तरङ्गे इति बहुव्रीहिः। **अभावादिति**। धातोरित्यनुवृत्तस्य विहितविशेषणत्वमित्याशयः। ज्ञापकस्य सजातीयत्वादाहः—**जातस्येति**।

ननु 'अयजे इन्द्रम्' इत्यत्र पदसंस्कारपक्षे न दोषः इत्यत्र आहः—**'धियति' इति**। नन्वजादिप्रत्ययस्य धातुविशेषणत्वेऽप्यचो नान्यानन्तर्यमत एवोठ्ग्रहणस्य ज्ञापकत्वं सङ्गच्छते इत्यत आहः—**आदीति**। आदिना 'स्योनः' इत्यस्य सङ्ग्रहः। अत्रैव मानमाहः—**अत एव ओमेति। वलिलोपापत्तिरिति**। वलिलोपेऽन्तरङ्गपरिभाषा नेत्यस्य पञ्चमीसमास्य चानाश्रयणादिति भावः। एतदनङ्गीकर्तृबृहद्-

---

१. कोष्ठकान्तरितः क० पु० नास्ति।

वाच्यम्, अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये कृते च तस्मिन् यदन्तरङ्गं प्राप्नोति, तत्र च कर्त्तव्ये नासिद्धत्वमिति तदर्थात्। असिदधपरिभाषाया अनित्यत्वेन तद्वारणे त्वस्या वैयर्थ्यं तेनैव सिद्धेः।

अत एव "नलोपः सुप्" इति सूत्रे कृति तुग्ग्रहणं चरितार्थम्। अन्यथा 'वृत्रहभ्याम्' इत्यादौ बहिर्भूतभ्याम्निमित्तकपदत्वाश्रयत्वेन बहिरङ्गतया नलोपस्यासिद्धत्वेन सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। मम तु क्यजानन्तर्यसत्त्वान्न दोषः।

न चैवं सति "ह्रस्वस्य पिति" इति सूत्रस्थभाष्यविरोधः। तत्र हि 'ग्रामणिपुत्रः' इत्यत्र "इको ह्रस्वोऽङ्यः" इति ह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरङ्गासिद्धत्वेन समाहितम्। 'नाजानन्तर्ये' इत्यस्य सत्त्वे तत्र तदप्राप्तेरसङ्गतिः स्पष्टैवेति वाच्यम्; तेन भाष्येणास्या अनावश्यकत्वबोधनात्। एतज्ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात्।

अत एव "अचः परस्मिन्" इति सूत्रे भाष्ये 'पटु ई आ' इत्यत्र परयणादेशस्यानयाऽसिद्धत्वात् पूर्वयणादेशः साधितः। अत एवैषा भाष्ये पुनः क्वापि नोल्लिखिता। अत एवान्तरङ्गपरिभाषामुपक्रम्य विप्रतिषेधसूत्रेऽस्या बहूनि प्रयोजनानि सन्ति, तदर्थमेषा परिभाषा कर्त्तव्या, प्रतिविधेयं च दोषषु' इत्युक्तम् "सम्प्रसारणाच्च" इति सूत्रे भाष्ये। प्रतिविधानं च परिभाषाविषयेऽनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम् ॥ ५२ ॥

---

विवरणोक्ति[1] खण्डयतिः—**असिद्धेति**। परिभाषानङ्गीकारे इष्टापत्ति खण्डयतिः—**अत एवेति**। परिभाषासत्त्वादेवेत्यर्थः। **स्पष्टमेवेति**। इदं सर्वं प्राचामनुरोधेन। **असङ्गतिरिति**। न चाचः सप्तम्यन्ततया पञ्चम्यन्ततया वोपादानादानन्तर्यं यत्र तत्रैवासिद्धत्वनिषेध इति वाच्यम्, तथा सति धर्मिग्राहकमानविरोधापत्तेः।

**बोधनादिति**। न च "सन्निपात०" (परि० ८६) परिभाषयासिद्धत्वेनानया तुग्वारणमेकदेशिन इति वाच्यम्, "कृन्मेजन्तः" (पा० सू० १।१।३९) सूत्रे तत्परिभाषाफलत्वेन 'ग्रामणिकुलम्' इत्युपन्यस्य नैतदस्ति बहिरङ्गत्वात्सिद्धमिति भाष्यविरोधापत्तेरित्याशयात्। **न्याय्यत्वादिति**। वचनाकल्पनलाघवादिति भावः। **अत एवेति**। अस्यानावश्यकत्वेनासत्त्वादेवेत्यर्थः। **साधित इति**। नन्वनया जातस्यैवासिद्धत्वनिषेधेन कथमत्र प्राप्तिरिति चेत्, तत्राहः—**अत एवेति**। नन्वेवमतिप्रसङ्गोऽत आहः—**अत एवेति**। **ध्वनितमिति**। **प्रतिविधेयमिति**। विधिप्रत्ययान्तकवचनान्तबहुवचनान्तप्रयोगेण सर्वत्र प्रतिविधानस्यैकरूपत्वं ध्वनितमिति भावः ॥ ५२ ॥

---

१. 'विवरणकारोक्तिम्' इति पाठः क० पु०।

**नन्वेवम् 'गोमत्प्रियः' इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरङ्गं लुकं बाधित्वाऽन्तरङ्गत्वाद्धलङ्यादिलोपे नुमादयः स्युः, अत आह:—**

**अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते ।। ५३ ।।**

**अत्र च "प्रत्ययोत्तरपदयोश्च" इति सूत्रं ज्ञापकम् । 'त्वत्कृतम्' इत्यादौ लुगपेक्षयाऽन्तरङ्गत्वाद् विभक्तिनिमित्तकेन "त्वमावेकचने" इत्यनेन सिद्ध इदं व्यर्थं सत्तज्ज्ञापकम् ।**

**ननु 'तव पुत्रः, त्वत्पुत्रः' इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेत्, एवं तर्ह्यत्रत्यमपर्यन्तग्रहणानुवृत्तिस्तज्ज्ञापिकेति भाष्यकृतः । युष्मदादिभ्य**

---

**हल्ङ्यादिलोप इति** । ततोऽपि परत्वाद्दीर्घनुमापादनं प्राचोक्तमयुक्तम्,"अकृतव्यूह०" (परि० ५७) परिभाषया गतार्थत्वात् । अपरनिमित्तकत्वाच्चेति सूचयितुं लोपोक्तिः । **स्युरिति** । नन्वेतत्परिभाषयान्तरङ्गं बलीय इत्यस्य बाधनेऽपि लुगुत्तरं तस्य बहिरङ्गत्वेनासिद्धत्वान्नुम् दुर्वारः । न चैतत्सामर्थ्येन तस्याप्येतद्विषयेऽप्रवृत्तिः,'नखभिन्नः' इत्यादौ प्रत्ययस्थानिकैसादीनामुच्चारणप्रसङ्गरूपषष्ठ्यर्थाभावेन तद्वारणेन चारितार्थ्यात् । न चैतपरिभाषाभावेऽपि पूर्वमन्तरङ्गत्वादैसादेशे ततो लुकि 'नखभिन्नम्' इति सिद्धमिति वाच्यम्, एतत्परिभाषाभावेऽन्तरङ्गत्वादैसवद्[1] वृद्धेरपि प्रवृत्त्या ततः परादिवद्भावेनैसो लुकि, अकारश्रवणानापत्तेरिति चेत्, न; 'त्वत्पुत्रः' इत्यादौ लुकोऽसिद्धत्वात्तवादीनां प्राप्त्योत्सर्गेति न्यायेनैव मपर्यन्तादेशसिद्ध्या तस्य स्वांशे चारितार्थ्यासम्भवेन मपर्यन्तग्रहणस्य ज्ञापकत्वपरभाष्यप्रामाण्येन तस्याप्येतद्विषये प्रवृत्तेरित्याशयात् । परापेक्षया बलवत्त्वं कैमुतिकन्यायसिद्धमिति सूचयितुमपिशब्दः ।

**सूत्रमिति** । मपर्यन्तानुवृत्तिसहितं सूत्रमित्यर्थः । अन्यथा "त्वमावेकवचने" ( पा० सू० ७।२।९७ ) इत्यनेन मपर्यन्तस्य त्वादेशे सिद्धेऽपि सर्वादेशार्थं चारितार्थ्येन ज्ञापकत्वासङ्गतिः । **इदं व्यर्थमिति** । इदं सूत्रमित्यर्थः । एवं त्वामात्मन इच्छति 'त्वद्यति' इत्यत्रापि लुको धात्वाश्रितत्वेन बहिरङ्गत्वात् "त्वमौ०" ( पा० सू० ७।२।९७ ) इत्येव सिद्धमिति बोध्यम् । आदिना 'त्वदीयः' इत्यस्य सङ्ग्रहः । **बाधनार्थमिति** । बाधकबाधनार्थमित्यर्थः ।

ननु 'त्वदीयः' इत्यादौ प्रत्ययग्रहणं बाधकबाधनार्थमुत 'त्वत्पुत्रः' इत्यादावुत्तरपदग्रहणं तदर्थम् । नाद्यः, अस्य प्रत्ययसामान्यनिमित्तकत्वेन तवादेशस्य विशेषनिमित्तकत्वेन तद्विषयेऽस्य सर्वत्र नाप्राप्त्या तस्यैवैतदपवादत्वेन तद्बाधकत्वासम्भवात् । किञ्चैवं 'त्वया' इत्यादावपि त्वमादेशस्यानेनैव सिद्ध्या "त्वमावेकवचने" ( पा० सू० ७।२।९७ ) इति योगविभागस्य वैय्यर्थ्यापत्त्या

---

१. 'ऐसादेशवत्' इति पाठः क० पु० ।

**आचार क्विप् तु न, सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यात्, "ह्रस्वनद्यापः" इति नुड्विधायकसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्यः 'आचारक्विबभावाच्च। एवमेवैकार्थकाभ्यां प्रातिपदिकाभ्यां प्रातिपदिकणिचोऽप्यनभिधानं बोध्यम्। एतेन तत्राऽऽदेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम्।**

**ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था। 'न चोत्सर्गसमानदेशा अपवादाः' इति न्यायेनासिद्धवत्सूत्रस्थभाष्यसम्मतेन मपर्यन्तस्यैवादेशे सिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यम्, तस्य श्नमकजादौ व्यभिचारादिति चेत्, न; श्नमि मित्वेन, बहुचि पुरस्ताद्ग्रहणेन, अकचि प्राक् टेर्ग्रहणेन तस्य बाधेऽप्यत्रोत्सर्गस्य त्यागे मानाभावात्।**

---

तत्सामर्थ्येनात्र सूत्रे सुब्भिन्नप्रत्ययस्यैव ग्रहणौचित्येन 'त्वदीयः' 'त्वत्पुत्रः' इत्यत्र सुपि परतोऽस्याप्राप्त्या तद्बाधकत्वासम्भवात्।

न द्वितीयः, अस्यामवस्थायां सामासिकलुकः पूर्वमप्रवृत्त्योत्तरपदपरत्वाभावेन तदप्राप्त्या तद्ग्रहणस्यापि तद्बाधकत्वासम्भवादिति चेत्, न; योगविभागेन उक्तार्थज्ञापने फलाभावेन तज्ज्ञापकेनोत्तरपदसाहचर्येण सुबुत्तरवृत्तित्वेन दृष्टप्रत्ययस्यैवात्र प्रत्ययपदेन ग्रहणबोधनेन "येन नाव्यवधानम्" इति न्यायेन विभक्तिव्यवधानेऽप्येतत्प्रवृत्तेः, 'त्वदीयः' 'त्वत्पुत्रः' इत्यादौ तवममादिबाधकत्वसम्भव इत्याशयात्।

वस्तुतः "त्वमावेकवचने" ( पा० सू० ७।२।९७ ) इत्यत्र 'त्वं सुन्दरः पुत्रो यस्य सः 'युष्मत्सुन्दरपुत्रः' इत्यत्र त्वमादिवारणाय तत्र विभक्तावित्यनुवृत्तेरावश्यकतयाऽत्रापि विभक्तावित्यस्य सम्बन्धेन प्रत्ययोत्तरपदपरकविभक्तावेवास्यापि प्रवृत्त्या भाष्योक्तं तवममादिबाधकत्वं युक्तम्। अत एव णिजादौ न दोषः। ज्ञापितायां तु परिभाषायां प्रत्ययपरकविभक्तिपरत्वेन दृष्टस्य युष्मच्छब्दस्येत्यर्थान्न दोषः।

**क्विप्तु इति।** न निमित्तमिति शेषः। **प्रामाण्यादिति।** उक्तभाष्येण पूर्वोक्तार्थस्यैवाङ्गीकारेणाचारक्विपो न निमित्तत्वमिति भावः। तत्र क्विबेव नेत्याहः--**ह्रस्वेति।** "कास्प्रत्ययात्०" ( पा० सू० ३।१।३५ ) इति विहितामो नेत्संज्ञा फलाभावादित्युक्तम्। यदि हलन्तेभ्य आचारक्विप् तदा स्यात्तत्र विशेष्यस्य सत्त्वेन तदसङ्गतिः। **णिचोऽपीति।** अपिनात्यन्तस्वार्थिकसङ्ग्रहः। **अनभिधानमिति।** एतत्सूत्रस्थप्रत्ययपदेनाभिधानं नेत्यर्थः। एवञ्च सत्यभिधाने युष्मयतीत्येव त्वापयतीति परे, इति शेखरस्तु माधवानुरोधी। **एतेनेति।** पूर्वोक्तार्थाङ्गीकारेणेत्यर्थः।

ननु श्नमादिभिन्नेष्वपि द्वितीयद्विर्वचनादावपवादस्योत्सर्गसदेशत्वाभावेन

**अत एव "तस्मिन्नणि च" इत्यनेन युष्माकाद्यादेशविधानं चरितार्थम्, अन्यथाऽऽकङादेशमेव विदध्यात्। आकङि तवकाद्यादेशयोरेतदपवादयोरुक्तन्यायेनाऽन्त्यादेशत्वापत्तिः, अतस्तद्विधानम्, इदमेव च तज्ज्ञापकम्।**

**यद्यपि विरोधे बाधकत्वमिति वार्त्तिकमतेऽयं न्यायः, भाष्यकारस्तु विनापि विरोधं सत्यपि सम्भवे बाधकत्वमिच्छति, इत्यनभिहितसूत्रस्थकैयटरीत्या नायं नियमः, तथापि युष्माकाद्याऽऽदेशविधानज्ञापित उत्सर्गः स्वीक्रियत एवेति प्रकृते न दोषः। एतद् भाष्यमपि तत्स्वीकारे मानम्।**

**एवञ्च मपर्यन्तानुवृत्तिः 'त्वत्कृतम्' इत्यादौ मपर्यन्तस्याऽऽदेशविधानार्था। तत्र चान्तरङ्गत्वात् त्वमावित्येव सिद्धे व्यर्था सतज्ज्ञापिका। ज्ञापिते त्वस्मिन्नेतद्-**

---

तत्स्वीकारेण ज्ञापकसमर्थने न मानमत आहः—**अत एवेति। ज्ञापकमिति।** ज्ञानफलं त्वस्य ज्ञापकस्योपपत्तिरेवेति बोध्यम्।

( न चाकङ्पक्षे साकच्के सर्वादेशत्वानापत्तिः, ङसन्तादामन्ताद्वा—अणि, खञि च विवक्षिते सुबन्तस्यैव टेः प्राक् तत्प्रवृत्त्या तत्राकचा व्यवधानादादेशस्यैवाप्राप्तेः। न चौसि ओकारसकारेत्यादिना टेः प्रागकचि तत्सम्भव इति वाच्यम्, "अलुगुत्तर०" ( पा० सू० ६।३।१ ) इति सूत्रस्थाकरप्रामाण्येन वृत्तौ द्वित्वादिभानस्य प्रमाणं विनाऽनभ्युपगमेन द्विवचनाद्यन्तेन विग्रहायोगात्।

अत एव कुमार्योरगारमिति प्रतीके कैयटेन कथं द्विवचनान्तेन समास इत्याशङ्क्य, नैष दोषः, यथा 'तावकीनः' इत्यादावादेशेन संख्याविशेषो व्यज्यते, तथेहापि। सत्यां प्रगृह्यसंज्ञायां प्रकृतिभावेन द्वित्वं व्यज्येतेति दोषोपन्यास इत्युक्तम्।

वस्तुतस्तु उत्सर्गसमानदेशेति न्यायो युष्माकाद्यादेशवैय्यर्थ्यमूलकः। तद्वैयर्थ्यञ्च युवयोरयम् 'यौष्माकीणः' इत्यत्रान्तरङ्गत्वात्प्राप्तयुवाद्यादेशनिवर्तकान्तरङ्गानपीतिन्यायमूलकमित्यन्योन्याश्रयान्नेदं युक्तं ज्ञापकम्। युष्माकाद्यादेशे तु पूर्वं युवाद्यादेशे जातेऽपि पश्चाद् युष्माकाद्यादेशे 'यौष्माकीणः' इति रूपम्, आकङि 'यौवाकीनः' इति फलभेदः स्पष्ट एव। लुको नित्यत्वेऽपि युवाद्यादेशस्य प्रतिपदोक्तत्वात्[१])।

यद्यपि 'तवकश्', 'ममकश्' इति न्यासेन शित्करणसामर्थ्यात् सर्वादेशसिद्ध्या ज्ञापितेऽपि चारितार्थ्यं दुर्वचम्, तथापि 'तवकश्' 'ममकश्' इत्यत्र शित्करणमेव ज्ञापकं भविष्यतीति न दोषः। **प्रकृते**—त्वादिविषये। **इत्यादाविति।** आदिना त्वत्पुत्रस्य सङ्ग्रहः। **तत्र चेति।** उक्तलक्ष्यद्वये चेत्यर्थः। **सिद्धे इति।** त्वत्पुत्रादावुत्सर्गेति न्यायेन सिद्धे इत्यपि शेषो बोध्यः। **सेति।** मपर्यन्तानुवृत्तिरित्यर्थः। वस्तुतः 'त्वत्कृतम्' इत्यादौ सिद्धे इत्यन्तस्य लेखने उपयोगश्चिन्त्यः,

---

**१. कोष्ठकान्तरितः नास्ति क० पु०।**

**विषये तवादीनामप्राप्त्या तदपवादत्वाभावेन मपर्यन्तस्य वाऽऽदेशार्थं सा चरितार्थेति तदाशयः।**

**यत्तु हरदत्तेनाऽन्तरङ्गप्रवृत्तौ प्रत्यय उत्तरपदे च मपर्यन्तासम्भवेन तदनुवृत्तिर्व्यर्था सती ज्ञापिकेत्युक्तम्, तत्, न; अन्तरङ्गाणामप्यपवादबाध्यत्वेन तद्विषये तदप्रवृत्तेः।**

**वस्तुत इदं ज्ञापकं वार्त्तिकरीत्यैव, भाष्यरीत्या तु वाचनिक एवायमर्थ इत्याहुः।**

---

पौनरुक्त्यापत्तेः। 'त्वत्पुत्रः' इत्यत्र मपर्यन्तस्य त्वाद्यादेशे उक्तन्यायेन सिद्धे इति वक्तुमुचितम्।

( ननु "प्रत्ययोत्तरपदयोः०" ( पा० सू० ७।२।९८ ) इत्यनेन त्वमयोरेव विधानेन न "त्वमावेक०" ( पा० सू० ७।२।९७ ) इत्युत्सर्गः, किन्तु बाध्यसामान्यचिंतया "तवममौ ङसि" ( पा० सू० ७।२।९६ ) इत्यादयः। तथा चात्वयत्वयोरप्युत्सर्गत्वेनानुवृत्त्यभावे कदाचिदन्त्यस्यापि त्वमौ स्यातामिति फलभेदः स्यादिति चेत्, न; "मपर्यन्तस्य" ( पा० सू० ७।२।९१ ) इत्यनुवृत्तावुद्देश्यभेदेन विरोधात् "त्वमौ०" ( पा० सू० ७।२।९७ ) इत्येवोत्सर्गः, नाप्राप्तत्वात्। तथा च तयोरुत्सर्गापवादभावस्य क्लृप्तत्वेन न्यायेन समानदेशत्वे सिद्धेऽनुवृत्तिर्व्यर्था सती ज्ञापिका। पश्चादुत्सर्गापवादभावनाशेऽपि तत्फलस्य न्यायप्रवृत्तेर्जातत्वान्न क्षतिरिति भावः[1] )।

**चरितार्थेति।** न च लुका तवादीनां बाधेऽपि "प्रत्ययोत्तरपदयोश्च" ( पा० सू० ७।२।९८ ) इत्यस्य बाधे न मानम्, तस्य तदपेक्षयाऽनन्तरङ्गत्वात्। एवञ्च लुगपेक्षया परत्वात् पूर्वोक्तरीत्या त्वादेशे कर्तव्ये उत्सर्गस्य तवादेः प्राप्तिसम्भवेनापवादत्वादुत्सर्गन्यायेन त्वादेशे, ततो लुकि, न दोष इति तदनुवृत्तिर्व्यर्थेति वाच्यम्, अपिशब्देन परस्यापि ग्रहणेनादोषात्। **असम्भवेनेति।** यद्यप्यस्मच्छब्दे तत्सम्भवोऽस्त्येव तथापि युष्मच्छब्दसाहचर्यादादेशत्वानाक्रान्तस्य ग्रहणेनासम्भव इति भावः।

**तदप्रवृत्तेरिति।** "उपजनिष्यमाण०" ( परि० ६५ ) न्यायेनेति भावः[2]। **आहुरिति।** आहुरित्यस्य रसोद्भावनं[3] तु 'युष्मद्-ङस्-पुत्र-सु' इत्यत्र तवममादीन्

---

१. कोष्ठकान्तरितः नास्ति क० पु०।

२. 'वस्तुतो वार्णपरिभाषायां वक्ष्यमाणरीत्यानेकशास्त्रबाधकल्पनापेक्षया परिभाषाकल्पनमेव लघु। न च परिभाषाकल्पनम्, तयानेकशास्त्रबाधकल्पनं चेति गौरवमिति वाच्यम्, फलमुखगौरवस्यादोषत्वात्'। इत्यधिकः पाठः क० पु०।

३. 'आहुरित्यस्वरसोद्भावनम्' इति पाठः क० पु०।

**इयम् "सुपो धातु" इति लुग्विषयैवेति केचित्। "एङ्ह्रस्वात्सम्बुद्धेः" "न ङिसम्बुद्ध्योः" इति सूत्रस्थाकरप्रामाण्येन लुग्मात्रविषया। आद्ये 'हे त्रपु' इत्यादावनेन न्यायेन लोपं बाधित्वा लुग् भवतीति भाष्ये उक्तम्। अन्त्येऽन्तरङ्गांश्च विधीन् सर्वोऽपि लुग्बाधते, न तु सुब्लुगेव। अत एव "सनीस्रंसः" इत्यादौ नलोपो न भवति। 'पञ्चभिः खट्वाभिः क्रीतः, पञ्चखट्वः' इत्यादावेकादेशात् प्रागेव टापो लुक्। अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयटे उक्तम्।**

**एतद्विरोधाद् यत् "तद्राजस्य" इति सूत्रे कैयटेनोक्तम् 'अङ्गानतिक्रान्तोऽत्यङ्गः' इत्यत्र सुपो लुकि बहुवचनपरत्वाभावात् "तद्राजस्य" इति लुग् न स्यादिति शङ्कापरभाष्यव्याख्यावसरे अन्तरङ्गानपीति न्यायेनार्थं लुक् सुब्लुको**

---

बाधित्वा मपर्यन्तस्यादेशार्थानुवृत्तिः। यद्ययं न्यायो नास्ति तदा लुगपेक्षयान्तरङ्गत्वात् "शेषे लोपः" ( पा० सू० ७।२।९० ) इत्यस्य प्रवृत्त्या मपर्यन्तानुवृत्त्या 'त्वपुत्रः' इति रूपस्यैव प्राप्त्या 'त्वत्पुत्रः' इत्यस्यासिद्ध्या तद्वैयर्थ्यस्य तादवस्थ्याज्ज्ञापिका।

न च त्वया कृतम् 'त्वत्कृतम्' इत्यादौ यत्वविषये शेषे लोपाप्राप्त्या फले विशेषसम्भव इति वाच्यम्, तत्रान्तरङ्गत्वाद्यत्वे ततो मपर्यन्तस्य त्वादेशे यलोपे 'त्वत्कृतम्' इत्यस्यैव प्राप्त्या फले विशेषाभावात्तत्रान्तरङ्गत्वात् "त्वमावेकवचने" ( पा० सू० ७।२।९७ ) इत्यस्यैव प्रवृत्त्याऽदोषाच्च।

न च तवादीनामिव शेषे लोपस्यापि "उपजनिष्य०" ( परि० ६५ ) इति न्यायेनाप्राप्तिरिति वाच्यम्, अन्तरङ्गस्येति न्यायेन तवादिबाधनेन चारितार्थ्यसम्भवेन मपर्यन्ताधिकारबहिर्भूतशेषेलोपबाधे मानाभावात्। अत एव 'भवतात्' इत्यत्रास्य न्यायस्य ज्ञापकसिद्धत्वेनाप्रवृत्त्युपपादनं च सङ्गच्छते।

अन्ये तु 'तवममौ ङस्यवृत्तौ' इति न्यासेन सिद्धे "प्रत्ययोत्तरपदयोश्च" ( पा० सू० ७।२।९८ ) इति सूत्रं ज्ञापकम्[1]। न चातितवेत्यादौ दोषः, अवृत्तेरिति न्यासेन वृत्त्यनवयवे ङसि इत्यर्थेन सर्वत्रादोषादित्याहुः।

**केचिदिति।** धर्मिग्राहकमानबलादिति भावः। केचिदिति सूचितारुचिमेव आहुः—**आद्ये इति। उक्तमिति।** लोपस्य प्रसक्तवर्णादर्शनं[2] निमित्तम्, लुकस्तु प्रत्ययादर्शनं निमित्तमिति, बहिरङ्गत्वं लुको बोध्यम्। वस्तुतः परिभाषायामपिशब्देन परनित्ययोरपि समुच्चयेन लुकोऽपवादवत्सर्वविधिभ्यो बलवत्त्वेन नान्तरङ्गाद्यपेक्षेति बोध्यम्।

**शङ्कापरभाष्येति।** तत्र हि भाष्ये बहुष्विति पदेन बहुवचनग्रहणमिति पक्षे 'अङ्गानतिक्रान्तः, अत्यङ्गः' इत्यत्र परत्वात् "सुपो धातु०" ( पा० सू०-

---

१. 'इति ज्ञापकम्' इति पाठः क० पु०। २. 'वर्णदर्शनम्' इति पाठः क० पु०।

**बाधकः स्यादित्याशङ्क्य सुब्लुक एवानेन बलवत्त्वं बोध्यत इति तत्प्रौढ्येति द्रष्टव्यम्। लुगपेक्षया लुको बलवत्त्वस्य वक्तुमशक्यत्वादिति तदा शङ्कासमाधनं वक्तुं युक्तम्।**

**अनेन न्यायेनाऽन्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनां च**

---

२।४।७१ ) इति शसो लुकि समासार्थस्यैकत्वविवक्षायां बहुवचनानुत्पत्त्या तत्परत्वासम्भवाल्लुङ्न प्राप्नोतीत्याशयेनाबहुत्वे लुग्वक्तव्य इति दोषे उपन्यस्ते अन्तर्वर्तिशसमेवाश्रित्यान्तरङ्गत्वात् तद्राज्लुकि नायं दोषः, इत्याशयेन न[1] बहुवचन इत्येव सिद्धिमिति प्रत्ययग्रहणवादिनोक्ते ततोऽन्तरङ्गानिति न्यायेन पूर्वं सुपो लुकि दोषो दुर्वार इत्याशयेन, न चात्र बहुवचनं पश्याम इत्युक्तम्।

तत्र 'न चात्र बहुवचनं पश्यामः' इति प्रतीकमुपादायान्तरङ्गानिति न्यायेन बहिरङ्गसुब्लुको यथा प्राबल्यं सम्भवति तद्वत्परिभाषायामपिशब्देन परनित्ययोरपि समुच्चयात्तत्प्रतिद्वन्द्वीभूतपूर्वानित्ययोरप्युपलक्षणीभूतेन परिभाषास्थबहिरङ्गपदेन तयोरपि ग्रहणेन तद्राजलुकोऽपि परिभाषया प्राबल्यबोधनसम्भवेन विनिगमनाविरहादनया "सुपो धातु०" ( पा० सू० २।४।७१ ) इति लुकः प्राबल्यबोधनासम्भवादन्तरङ्गत्वात् पूर्वं तद्राजलुकि न दोषः, इत्याशङ्क्य "प्रत्ययोत्तर०" ( पा० सू० ७।२।९८ ) इति सूत्रे सुब्लुक एव सम्भवाज्ज्ञापकस्य विशेषापेक्षत्वेनानया सुब्लुक एव प्राबल्यं बोध्यत इति यत् कैयटेनोक्तम्, **तत्प्रौढ्या,** इत्यन्वयः।

ननु कैयटोक्तरीत्यनङ्गीकारे परिभाषयाऽन्तरङ्गत्वाद्वा पूर्वं तद्राजलुकि 'अत्यङ्गः' इत्यत्र दोषासम्भवेन 'न चात्र बहुवचनं पश्यामः' इति तद्दोषसमर्थनपरभाष्यासङ्गतिरित्यत आहः—**लुगपेक्षयेति।** "सुपो धातु०" ( पा० सू०- २।४।७१ ) इति लुगपेक्षयेत्यर्थः। **लुको बलवत्त्वस्येति।** तद्राजलुको बलवत्त्वस्येत्यर्थः। **वक्तुमशक्यत्वादिति।** अनयेति शेषः। **तदा शङ्कासमाधनमिति।** षष्ठीतत्पुरुषः। अनया तद्राजलुकः सुब्लुग्बाधकत्वशङ्केत्यर्थः। सुब्लुगपेक्षया तद्राजलुको बलवत्त्वस्यानया वक्तुमशक्यत्वादिति तत्समाधानमिति भावः।

ननु तथा वक्तुमशक्यत्वे को हेतुरित्यत आहः—**अनेनेति। बोध्यत इति।** धर्मिग्राहकमानबलेन कार्यान्तरनिमित्तविनाशकलुक एव कार्यान्तरापेक्षया बलवत्त्वं बोध्यत इति, तद्राजलुकस्सुब्लुङ्निमित्तविनाशकत्वाभावादनया परिभाषया तस्याबलत्वबोधनासम्भवादिति[2] भावः।

एतेन लुग्भिन्नापेक्षयैव लुको बलवत्त्वमनया बोध्यते, न तु लुगपेक्षयाऽपीत्यर्थाङ्गीकारे तद्राजलुगपेक्षया सुब्लुकोऽपि प्राबल्यबोधनासम्भवेनान्तरङ्ग-

---

१. 'न' इति नास्ति क० पु०।　　२. 'तस्य बलवत्त्व०' इति पाठः क० पु०।

**प्राबल्यं बोध्यत इत्यन्यत्र विस्तरः ॥ ५३ ॥**

**नन्वेवम् सौमेन्द्रेऽन्तरङ्गत्वादाद्गुणे पूर्वपदात्परेन्द्रशब्दाभावेन "नेन्द्रस्य परस्य" इति वृद्धिनिषेधो व्यर्थः । अन्तादिवद्भावस्तूभयत आश्रयणे निषिद्धः ।**

**किञ्च वृद्धिरप्यत्र न प्राप्नोति, अन्तादिवत्त्वोभयाभावेऽपि पूर्वान्तवत्त्वेनैकादेशविशिष्टे पूर्वपदत्वेनेन्द्रशब्दस्य 'एकदेशविकृत' न्यायेन 'उभयत आश्रयणे**

---

त्वात्पूर्वं तद्राजलुकि 'अत्यङ्गः' इत्यस्य सिद्धचा तदसिद्धिप्रतिपादनपरभाष्यासङ्गतिरित्यपास्तम् ।

**अन्यत्र विस्तर इति**। अत एव प्रातिपदिकाधिकाराभावे "अनुदात्तादेः०" ( पा० सू० ४।३।१३९ ) इत्यस्य सुवन्तविशेषणत्वापत्त्या "सर्वस्य सुपि" (पा० सू० ६।१।१९१) इत्याद्युदात्तत्वेन सर्वस्य विकारः 'सार्वः' इत्यत्राञनापत्ते— र्भाष्ये आपादनं सङ्गच्छते सिद्धान्ते । **तत् निमित्तविनाशकस्येति—**लुग्विशेषणस्य फलं तु श्रीपम्' इत्यादौ पूर्वं ह्रस्वप्रवृत्त्याम्—सिद्धिरन्यथा बहिरङ्गस्य लुको बलवत्त्वेन लुकि रुपासिद्धिः[1] ॥ ५३ ॥

**नन्वेवमिति** । प्रागुक्तविषये एव तदप्रवृत्तावित्यर्थः । **अन्तरङ्गत्वादिति** । समर्थग्रहणेन तद्धितोत्पत्तेः प्रागेव तत्प्रवृत्त्याऽन्तरङ्गत्वमिति भावः । नन्वन्तादिवद्भावेन तस्य ततः परत्वं सुवचमत आहुः—**अन्तादिवद्भावस्त्विति**। सामग्र्यभावान्निषेधवैय्यर्थ्यमुपपाद्य तेनैव हेतुना प्रतियोग्यप्रसक्त्यापि तद्वैय्यर्थ्यमित्याहुः—**किञ्चेति** ।

ननूभयत इति निषेधात् सामग्र्यभावान्निषेधाप्राप्त्या तद्वैय्यर्थ्यमुत[2], तेनैव हेतुना प्रतियोग्यप्राप्त्या तद्वैय्यर्थ्यमिति तदुक्तकल्पद्वये[3] प्रथमकल्पं दूषयितुं तदाशयमनुवदतिः—**अन्तादीति** । तस्य निषेधस्य व्यपवर्गासम्भवमूलकत्वेन "नेन्द्रस्य०" ( पा० सू० ७।३।२२ ) इति निषेधे व्यपवर्गाश्रयणेनाऽन्तादिवत्त्वासम्भवेऽपीत्यप्यन्तार्थः । प्रकारान्तरेण तत्प्राप्तिं सूपपादयन् तद्वैय्यर्थ्यं विघटयितुमाहुः—**पूर्वान्तेत्यादिना—न्यायेनेत्यन्तेन** ।

द्वितीयकल्पं दूषयतिः—**उभयत इत्यादि—तदाश्रयणेन वेत्यन्तेन** । वृद्धिविधौ

---

१. न चामो लुगपवादत्वेनोपजनिष्येति न्यायेन पूर्वं लुकोऽप्रवृत्त्या न दोषः, अपवादोऽपीति न्यायेन 'ज्ञानम्' इत्यादौ समानविषये चरितार्थस्यामो लुका बाधापत्तेः । अत एव गतिकारकोपपदानामिति चरितार्थम्' इत्यधिकः पाठः क० पु० ।

२. "तद्वैयर्थ्यमिति' इति पाठः क० पु० ।

३. 'विकल्प्य' इति पाठः क० पु० ।

**नान्तादिवत्' इत्यस्याभावेन तदाश्रयणेन वोत्तरपदत्वेऽपि तस्यानच्कत्वादेकस्यैकादेशेन परस्य नित्येन "यस्येति" लोपेनापहारात् ।**

**न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम्; उत्तरपदाद्यच्स्थानिकत्वाद् वृद्धेस्तदभावेनाप्राप्तेस्ताद्रूप्यानतिदेशात् ।**

**अन्यथा 'खट्वाभिः' इत्यादावपि पूर्वान्तवत्त्वेनादन्तत्वे भिस ऐसापत्तिरिति भाष्ये स्पष्टम् । अत एव 'पूर्वैषुकामशमः' इत्यादावन्तरङ्गत्वाद् गुणे वृद्धिर्न**

व्यपवर्गानाश्रयणेनोक्तनिषेधाप्राप्तेरिति भावः । **उत्तरपदत्वेऽपि**—इत्यत्र तृतीयान्तद्वयस्य हेतुत्वेनान्वयः । एवं चेन्द्रशब्दस्य ऐन्द्रशब्दस्य वोत्तरपदत्वेनोत्तरपदवृद्धेः प्राप्त्या तद्वारणाय निषेधस्य चारितार्थ्यसम्भवान्न ज्ञापकत्वसम्भव इति पूर्वान्तत्वेनेत्यारभ्योत्तरपदत्वेपीत्यन्तस्य शङ्काग्रन्थस्यार्थः । एकादेशोत्तरं पूर्वपदात्परस्योत्तरपदसम्बन्धिनो वृद्धिनिषेधयोग्यस्याकाररूपस्य-एकाररूपस्य वाचोऽसम्भवात्तद्वैयर्थ्यं सूपपादमेवेति ज्ञापकत्वं युक्तमित्याहः—**तस्येति** । तदेवोपपादयतिः—**एकादेशेनेति** । पूर्वान्तत्वेन पूर्वपदघटकतयोत्तरपदादपहारात्[1] इत्यर्थः ।

नन्वेवमपि प्रकारान्तरेण चारितार्थ्यं सूपपादमिति शङ्कते :—**न चेति** । मान्तस्य "एकदेशविकृत०" ( परि० ३७ ) न्यायेन पूर्वपदत्वमिति भावः[2] । वर्णाश्रयेऽन्तादिवद्भावाप्रवृत्त्या वृद्धेरप्राप्त्या निषेधवैयर्थ्यं सुस्थमित्याहः—**उत्तरेति** । **तदभावेनेति** । उत्तरपदाद्यजभावेनेत्यर्थः । ननु तस्याप्यतिदेशः कुतो न, अत आहः - **ताद्रूप्येति** । वर्णमात्रवृत्तिधर्मानतिदेशादित्यर्थः ।

ननु 'अमी' इत्यत्र एकारघटितसमुदाये अदश्शब्दत्वातिदेशे एकारे तदवयवत्ववदेकादेशविशिष्टे 'एन्द्र' शब्दे उत्तरपदत्वस्य, इन्द्रशब्दत्वस्य चातिदेशे एकारे इन्द्रशब्दाद्यवयवत्वस्य स्वतोऽच्त्वस्य सम्भवेन "नेन्द्रस्य परस्य" (पा. सू. ७।३।२२) इति निषेधस्य सार्थक्यं सम्भवतीति चेत्, न; वर्णाश्रयेऽन्तादिवद्भावप्रतिषेध इत्यस्य एकादेशस्थानिभूतान्तादिवर्णनिष्ठाल्मात्रवृत्तियो धर्मस्तदभावप्रयोज्या यत्र कार्यस्याप्राप्तिस्तत्रान्तादिवद्भावेन तादृशधर्मप्रयुक्तकार्यानतिदेश इति तदर्थः ।

'अमी' इत्यस्य सिद्धये आद्यं धर्मविशेषणम् । 'अग्नी' इत्यादौ द्विवचनत्वाय वर्णमात्रेति धर्मविशेषणम् । 'क्षीरपेण' इत्यत्र तु एकारान्ते एकाजुत्तरपदकसमासत्वस्य 'पे' शब्दे एकाजुत्तरपदत्वस्य चाभावेन णत्वाप्राप्तिः । तयोर्धर्मयोर्न स्थानिभूताल्वृत्तित्वम्, यश्च तादृशोऽच्त्वरूपः, न तद्वैकल्यप्रयोज्या कार्याप्राप्तिरिति न दोषः ।

१. **'उत्तरपदादपदादपहाराद्' इति पाठः क० पु० ।**

२. **'मान्तस्यैकदेशविकृतन्यायेन पूर्वपदत्वमिति भावः' इति नास्ति क० पु० ।**

**स्यादित्याशङ्कितम् । तदेकदेशमात्रस्य विकाराभावाच्च । तदुक्तं भाष्ये 'इन्द्रे द्वावचौ, एकः "यस्येति" लोपेनापहृतोऽपर एकादेशेन, ततोऽनच्क इन्द्रशब्दः सम्पन्नस्तत्र कः प्रसङ्गो वृद्धेरिति ।**

**मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपातः, अत आह:—**

**पूर्वोत्तरपदनिमित्तकार्यात् पूर्वमन्तरङ्गोऽप्येकादेशो न ।। ५४ ।।**

**अत्र च "नेन्द्रस्य" इति निषेध एव ज्ञापक इति "अन्तादिवच्च" "विप्रतिषेधे परम्०" इति सूत्रयोर्भाष्ये स्पष्टम् ।। ५४ ।।**

---

न च 'एन्द्र' शब्दैकारे आद्यवयवत्वसत्त्वेऽप्युत्तरपदसम्बन्धित्वस्याभावेन वृद्ध्यप्राप्तिः, स च न स्थान्यल्मात्रवृत्तिरिति वाच्यम्, 'पे' शब्दे उत्तरपदत्वाभावप्रयुक्तः 'क्षीरपे' इत्यत्र[1] एकाजुत्तरपदकसमासत्वाभावस्तत्रोभयोरपि धर्मयोर्नाल्वृत्तित्वम् । इह तु एकारे उत्तरपदसम्बन्धित्वाभावप्रयुक्तः उत्तरपदाद्यच्त्वाभावः । तत्र प्रतियोगिभूतमच्त्वमल्मात्रवृत्तिरेवेति नातिदेशप्राप्तिरिति बोध्यम् ।

एवञ्चेन्द्रशब्दत्वस्योत्तरपदत्वस्य वा नातिदेशः । उक्तनिषेधस्य वृद्धेश्च विकृताल्मात्रवृत्तिधर्मप्रयोज्यत्वात् । अत एव 'अमी' इत्यत्र एत्वस्य विकाररूपाल्मात्रवृत्तित्वेऽपि स्थानिभूताल्मात्रवृत्तित्वाभावेनैतन्निषेधाप्रवृत्त्या एकारान्तेऽनेन पूर्वान्तवद्भावेनादश्शब्दत्वेन मीत्वसाधनपरं भाष्यं सङ्गच्छते ।

वस्तुतो मान्ते "एकदेशविकृत०" ( परि० ३७ ) न्यायेन पदत्वं दुर्वचम् । "अचः पर०" ( पा० सू० १।१।५७ ) इति स्थानिवत्त्वादत एवाभीयाद् घटानयनमित्यादौ न जश्त्वम् । **आशङ्कितमिति** । दिग्वाचकशब्दात्परदेशवाचकशब्दाभावेन "दिशोऽमद्राणाम्" ( पा० सू० ७।३।१३ ) इत्युत्तरपदवृद्धिर्न प्राप्नोतीति शङ्कितमित्यर्थः ।

ननु "एकदेशविकृत०" ( परि० ३७ ) न्यायेनैकादेशविशिष्टे उत्तरपदत्वस्य मान्ते पूर्वपदत्वस्य च सुलभतयान्ताऽदिवत्त्वाभावेऽपि वृद्धिप्राप्तिः सूपपादेत्याह:— **तदेकदेशेति** । एकादेशस्योभयस्थानिकत्वादिति भावः । अत एव "अन्तादिवच्च" ( पा० सू० ६।१।८५ ) इति चरितार्थम् ।

ननु विकारे तदेकदेशमात्रसम्बन्धित्वञ्च तदतिरिक्तासम्बन्धित्वम्, तच्च 'रामौ' इत्यत्र दुर्लभम् । एकादेशरूपविकारस्योभयस्थानिकत्वात्, 'परमरामौ' इत्यादावकारस्य परमरामशब्दैकदेशत्ववद्रामशब्दैकदेशत्वस्यापि सत्त्वेन तन्मात्रसम्बन्धित्वस्य दुर्वचत्वादिति चेत्, न; भावरूपविकार ( स्थले तन्मात्रस्य

---

१. 'क्षीरपेत्यत्र' इति पाठः क० पु० ।

**नन्वेवमपि 'प्रधाय, प्रस्थाय' इत्यादावन्तरङ्गत्वाद्धित्वादिषु कृतेषु ल्यप् स्यादत आहः—**

**अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ॥ ५५ ॥**

**"अदो जग्धिः" इति सूत्रे ति कितीत्येव सिद्धे ल्यब्ग्रहणमस्या ज्ञापकमिति "अदो जग्धिः" इत्यत्र भाष्ये स्पष्टम् ॥ ५५ ॥**

---

निवेशेऽपि तद्राहित्यरूपविकारस्थले फलाभावेन तन्निवेशाभावात्[1] )। वस्तुतः इन्द्रत्वस्याक्तपरिमाणतया नैतन्न्यायावसरः। उमया सहितस्सोम इत्यर्थादभ्यर्हितत्वात्पूर्वनिपातः ॥ ५४ ॥

[2]**हित्वादिष्विति**[3]। आदिना "दधातेर्हिः" (पा० सू० ७।४।४२) "द्यतिस्यति०" (पा० सू० ७।४।४०) इतीत्वम् "जनसन०" (पा० सू० ६।४।४२) इत्यात्वम् "घुमास्था०" (पा० सू० ६।४।६६) इतीत्वम्, "अनुनासिकस्य०" (पा० सू० ६।४।१५) इति दीर्घः, शादेशः, ऊठ् इडागमादिपरिग्रहः। **अपिः—** कैमुतिकन्यायेन प्राग्वत्परादिसमुच्चायकः। **बाधत इति**। अन्तरङ्गनिमित्तविनाशक इति भावः। अत एव 'अभिवाद्य' इत्यादौ णिज्निमित्तकवृद्धौ लघुपूर्वत्वाभावाण्णेरयादेशो न। अन्यथाऽनया पूर्वं ल्यपि लघुपूर्वत्वेन प्रतिपदोक्तत्वाण्णेरयादेशो दुर्वारः। अत एव "नाजानन्तर्य०" ( परि० ५१ ) परिभाषायामन्तरङ्गत्वात्सवर्णदीर्घ इत्युक्तम्[4]।

ननूक्तज्ञापकेन ल्यब्विषयेऽन्तरङ्गं नेत्येव ज्ञाप्यताम्। एवञ्च ल्यपीत्यपि न न कार्यमिति चेत्, न; 'निरेष्य गतः' इत्यत्र लघूपधगुणस्याप्यप्रवृत्त्याऽयादेशापत्तेः, 'संकीर्त्य' इत्यादावीत्वादीनामनापत्तेश्च। ल्यप्स्थानिनिमित्तककार्यं[5] नेत्यर्थे णिलोपानापत्तेः[6], अन्तरङ्ग[7]विनाशकल्यब्विषये इत्यर्थे वा "न ल्यपि" ( पा० सू० ६।४।६९ ) इत्यस्यावश्यकतया न किञ्चिल्लाघवमित्याहुः ॥ ५५ ॥

---

१. 'स्थले' इत्यादितः 'निवेशाभावात्' इत्येतत्पर्यन्तं क० पु० नास्ति। 'विशिष्टे प्रकृतिनिष्ठधर्मातिदेशे कर्तव्ये विकारस्य प्रकृत्यवयवमात्रसम्बन्धित्वनिवेशेऽपि तद्रहिते तद्धर्मातिदेशे कर्त्तव्ये तथा निवेशे फलाभावात्' इति च वर्तते।

२. 'इत्वादिषु' इति पाठः क० पु०।

३. 'न च प्रधाय प्रस्थायेत्यत्र "दधातेर्हिः" (पा० सू० ७।४।४२) "द्यतिस्यति०" (पा० सू० ७।४।४०) इत्याभ्यां हित्वेत्वयोः प्रवृत्त्या इत्वादिष्वित्यसङ्गतमिति वाच्यम्, पानार्थकस्येदं प्रधायेति रूपमित्याशयात्'। इत्यधिकः पाठः क० पु०।

४. 'केचित्तु प्रकृत्येत्यादौ पूर्वं प्रादेराद्युदात्तत्वसिद्धिः फलम्। अन्यथा स्वरस्याप्यनया बाधादव्ययपूर्वपदत्वेन प्रकृतिभावादस्वरकत्वापत्तिरित्याहुः।' इत्यधिकः पाठः क० पु०।

५. 'निमित्तं कार्यम्' इति क० पु० पाठः। ६. 'णिलोपानापत्तेः' इति नास्ति क० पु०।

७. 'निमित्त' इत्यधिकः क० पु०।

**नन्वेवमपि 'इयाय' इत्यादौ द्वित्वे कृतेऽन्तरङ्गत्वात् सवर्णदीर्घत्वे तदसिद्धिरत आहः—**

**वार्णादाङ्गं बलीयो भवति ॥ ५६ ॥**

**तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः। "अभ्यासस्यासवर्णे" इतोयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्या ज्ञापकम्। तद्धि 'ईषतुः' इत्यादावियङादिव्यावृत्त्यर्थम्। एतत्परिभाषाभावे तु 'ईषतुः' इत्यादावन्तरङ्गेण सवर्णदीर्घेण बाधात्तद्व्यर्थम्। इयङुवङौ ह्यभ्याससम्बन्धनिमित्तकत्वाद् बहिरङ्गौ।**

**न चेयङादिरपवादः, 'येन नाप्राप्ति' न्यायेन 'इयर्ति' इत्यादिसकललक्ष्य-**

---

**ईषतुरित्यादाविति।** आदिना 'ऊखतुः[१]' इत्यस्य सङ्ग्रहः। तत्र कित्वाद्-गुणाभावे सवर्णाच्परत्वादिति भावः।

ननु ईयतुरित्यत्र यण्सवर्णदीर्घयोः "येन ना प्राप्ति०" ( परि० ५८ ) न्यायेन "दीर्घ इणः किति" ( पा० सू० ७।४।६९ ) इत्यनेनानवकाशत्वाद्बाधे ततो दीर्घे, उत्तरखण्डे "इणो यण्" ( पा० सू० ६।४। ८१ ) इति यणि स्थानिवत्त्वेन तत्रेयङ्वारणार्थमावश्यकमिति चेत् न; इयर्तीत्यत्रेयङर्थम् "अभ्यासस्य०" ( पा० सू० ६।४।७८ ) इति सूत्रे कृते ईयतुरित्यादिवारणार्थमसवर्णग्रहणं कर्तव्यं स्यात्। तावन्मात्रार्थत्वे 'उः' इत्येव सिद्धे तस्य ज्ञापकत्वसम्भव इत्याशयात्।

**सम्बन्ध इति।** अभ्यासघटितस्य इ इष् इति समुदास्यैवाङ्गत्वेन दीर्घनिमित्तापेक्षयाधिकापेक्षत्वेन वहिरङ्गत्वमिति भावः। **यणिति।** "इको यणचि" ( पा० सू० ६।१।७७ ) इति यणिति भावः।

ननु 'ऋ ऋ' इति स्थिते इत्वेनान्त्योपधागुणयोरिव प्रतिपदोक्तत्वेन यण्दीर्घयोरपि "येन ना०" ( परि० ५८ ) इति न्यायेन बाधान्नेत्वप्रवृत्त्युत्तरं यण्विषयतेति कथं यणपवादत्वम्। न च 'ऋ अ ति' इत्यत्र श्लुगुणयोः प्राप्तौ, नित्यत्वात्प्रतिपदोक्तत्वाच्च पूर्वं श्लौ, ततः पूर्वोपस्थितनिमित्तकत्वेनाऽन्तरङ्गत्वात्पूर्वं गुणे, इत्वे यण्विषयताऽस्त्येवेति वाच्यम्, द्वित्वस्य प्रतिपदोक्तत्वेन पूर्वं प्रवृत्त्या पूर्वोक्तदोषस्य दुर्वारत्वादिति चेत्, न; प्राचीनमते निरवकाशस्यैव प्रतिपदोक्तस्य वलवत्त्वेन द्वित्वस्य निरवकाशत्वाभावेन पूर्वमेव गुणप्रवृत्त्याऽदोषात्।

न च 'ऋ ऋ अ ति' इत्यत्र दीर्घे उरदत्वेत्वानां मध्ये परत्वादत्वे प्राप्ते, तदपेक्षयाऽन्तरङ्गत्वाद्दीर्घे प्राप्ते, तदपेक्षया नित्यत्वाद् प्रतिपदोक्तत्वाच्च-इत्वे प्राप्ते अभ्यासविकारेषु बाध्यबाधकभावाभावेनेत्वापेक्षया परत्वादत्वे प्राप्ते तं बाधि-

---

१. 'ऊषतुः' इति पाठः क० पु०।

**प्राप्त्यणपवादत्वस्यैव निर्णयादिति प्राञ्चः ।**

**परे तु—एतत्परिभाषाभावे "अभ्यासस्य" इति सूत्रमेव व्यर्थम् ।**

**न च 'इयाय' 'इयेष' इत्यादौ चरितार्थम्, तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च "द्विर्वचनेऽचि" इति रूपातिदेशेनापहारे द्वित्वे कृते पुनः प्राप्ते**

---

त्वाान्तरङ्गत्वाद्दीर्घ इति चक्रकापत्तिरिति वाच्यम्, "शदेः शितः' (पा० सू० १।३।६०) इति सूत्रस्थभाष्यसम्मतेन 'चक्रकेष्विष्टतो व्यवस्था' इति न्यायेन दोषस्य सूद्धरत्वात् ।

**प्राञ्च इति ।** असवर्णग्रहणाभावे 'ईषतुः' इत्यत्रेव 'इयेष' इत्यत्राप्यन्तरङ्गत्वात् सवर्णदीर्घप्राप्त्या वक्ष्यमाणरीत्या नह्येकमिति न्यायेनेयङस्तदपवादत्वेन 'इयेष' इत्यत्रेव 'ईषतुः' इत्यत्रापीयङा दीर्घस्य बाधस्स्यात् । अतोऽसवर्णग्रहणमावश्यकमिति, न तस्य ज्ञापकत्वं युक्तमित्यस्वरसः—**व्यर्थमिति ।** गुणवृद्धी अन्तराऽसवर्णपराभ्यासासम्भव इति भावः ।

ननु 'इयेष' इत्यादौ यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तसम्पत्तये सर्वत्रातिदेशस्य प्रवृत्तिरिति सिद्धान्तः । नहि 'इयेष' इत्यादावतिदेशप्रवृत्तिमन्तरा द्विर्वचननिमित्तवैकल्यम्, येनातिदेशप्रवृत्तेरवकाशः स्यात् । 'चक्रे' इत्यादौ यणि, एकाच्त्वाभावादतिदेशविषयता युक्ता । प्रकृते तु सत्स्वपि गुणादिषु नैकाच्त्वं विहतमिति "द्विर्वचनेऽचि" (पा० सू० १।१।५९) इत्यस्याप्राप्त्या पूर्वं गुणे, ततो द्वित्वे, ह्रस्वे, 'इयाय' इत्यादौ सूत्रं चरितार्थमिति शङ्कतेः—**न चेति । अपहार इति ।** धातुसंज्ञाया अक्तपरिमाणनिष्ठतया गुणवृद्ध्यनन्तरं धातुत्वातिदेशमन्तरा द्वित्वाप्राप्त्या द्वित्वनिमित्तवैकल्येनातिदेशान्तरवदस्यापि प्रवृत्त्याऽपहारः सम्भवतीति भावः ।

**पुनः प्राप्ते इति ।** न च द्वित्वकर्तव्यतायामेव रूपातिदेशात्कृते तस्मिन् तद्रूपनिवृत्त्या कथं गुणादीनां प्राप्तिरिति वाच्यम्, अतिदिष्टरूपस्य निवर्तकवचनान्तरानुपलम्भेन तद्रूपस्य तादवस्थ्यसम्भवात् । न च द्वित्वे कर्त्तव्ये इव कृतेऽपि तस्मिन्नतिदिष्टरूपाभ्युपगमे द्वित्वे कर्तव्य इति कालावधारणं व्यर्थं स्यादिति वाच्यम्, पुनर्गुणादीनां प्रवृत्त्यभ्यनुज्ञानार्थतया[1] तत्सार्थक्यस्य सूपपादत्वात् । अन्यथा रूपातिदेशे गुणादीनां बाध एव स्यात् । मम तु कालावधारणसामर्थ्यात् कृते द्वित्वे रूपनिवृत्तिस्तु अशाब्दीति सामर्थ्यान्निवृत्तिकल्पनापेक्षया गुणाद्यभ्यनुज्ञानार्थत्वस्यैवौचित्यान्न दोष इति भावः ।

---

१. 'प्रवृत्त्यनुज्ञानार्थतया' इति पाठः क० पु० ।

**गुणवृद्धी बाधित्वाऽन्तरङ्गत्वात् सवर्णदीर्घापत्तेः। न च 'इर्यति' इत्यादौ तच्चरितार्थम्, तावन्मात्रप्रयोजकत्वे 'उः' इत्येव ब्रूयात्। य्वोरित्यनुवर्तते, "इणो यण्" इति साहचर्याद् व्याख्यानाच्च ऋधातोरेव ग्रहणम्। अर्तेरिवर्णस्येयङित्यर्थः। "अभ्यासस्यातौ" इति "अभ्यासस्यार्तेः" इति वा गुरुत्वान्न युक्तम्।**

**न च 'ए, ऐ, ओ, औ' शब्देभ्य आचारक्विबन्तेभ्यो लिटीयङाद्यर्थं**

---

न च लक्ष्यभेदाभावः, द्विर्वचनपदस्यावृत्त्या द्वित्वे कर्तव्य इत्यर्थाश्रयणसामर्थ्येनैतद्विषये तदप्राप्तिः। **अन्तरङ्गत्वादिति**। 'इयाय' इत्यादावभ्यासाङ्गसंज्ञासमकालमेव दीर्घप्राप्त्या इयङपेक्षया पूर्वकालिकत्वेन गुणापेक्षया पूर्वदेशवृत्तिनिमित्तकत्वेन चेति भावः।

ननु "अन्तरङ्गानपि०" ( परि० ५४ ) इति परिभाषायां हरदत्तमतखण्डनावसरोक्तरीत्या "उपजनिष्य०" ( परि० ६५ ) इति न्यायेन पूर्वं सवर्णदीर्घस्याप्राप्त्या गुणे, वृद्धौ च सूत्रं चरितार्थम्। 'ईषतुः' इत्यत्र वारणायासवर्णग्रहणमप्यावश्यकमिति न सूत्रस्य, नाप्यसवर्णग्रहणस्य वा वैय्यर्थ्यमिति चेत्, अत्राहुः, बाध्यसामान्यचिन्तया यण्सवर्णदीर्घयोर्बाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्यमित्याशयात्।

अत एव शास्त्रबाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्यादिति अग्रे वक्ष्यति। ननु "आर" इत्यादावपि तदापत्तिरत आहः—**य्वोरिति**। ननु 'ऋ' धातोरेव ग्रहणे किं मानम्? 'ऋकारान्ताङ्गस्य धातोरपि[1]' ग्रहणसम्भवात्। तथा च सुध्युद्गातेत्यादौ इयङापत्तिरत आहः—**साहचर्यादिति**। ननु व्यवहितसूत्रान्तरसाहचर्याश्रयणे न मानमत आहः—**व्याख्यानादिति**। "अचिश्नु०" ( पा० सू० ६।४।७७ ) इत्यतो धातुपदमनुवर्त्य तस्य विशेषणत्वाश्रयणरूपादित्यर्थः।

वस्तुतः ऋकारान्ताङ्गावयवस्येकारस्य अचीयङित्यर्थात्सुध्युद्गातेत्यादौ न दोषः। अन्तरङ्गेण यणा बाधात्। 'इर्यति' इत्यादौ तु नान्तरङ्गत्वमुभयोः समत्वात्। यद्वा ऋस्थानिकेकारस्येत्यर्थान्न दोषः[2]।

ननु 'इयेथ' इत्यादौ "द्विर्वचनेऽचि" ( पा० सू० १।१।५९ ) इत्यस्याप्राप्त्या पूर्वमेव गुणे, ततो द्वित्वे, ह्रस्वे, सूत्रं चरितार्थमिति कथं नह्येकमिति

---

१. 'ऋकारान्ताङ्गस्याधातोरपि' इति पाठः क० पु०।

२. 'इति तन्न, 'अरियियात्' इत्यादावियङनापत्तेः'। इत्यधिकः पाठः क० पु०।

**तत्सूत्रमावश्यकम्, तथा ओणृधातोर्ण्वुलन्तादिच्छाक्यजन्तात् सनि 'उवोणकीयिषति' इत्याद्यर्थमावश्यकमिति वाच्यम्, षाष्ठप्रथमाह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानात्। अन्त्ये द्वितीयद्विर्वचनस्यैव सत्त्वेन त्वदुक्तप्रयोगस्यैव दुर्लभत्वात्। एवञ्च सम्पूर्णसूत्रस्य ज्ञापकता युक्ता।**

---

न्याय[1] इति चेत्, न; युरिति, रेरिति वा न्यासेनेण्धातोः ऋधातोश्चावयवीभूतो य इकारस्तस्येयङित्यर्थेनादोषात्।

केचित्तु 'इयेथ' इत्यत्र परत्वाद्गुणे, द्वित्वे, ह्रस्वापेक्षयान्तरङ्गत्वादयादेशे, त्वदुक्तरूपस्यैव दुर्लभत्वान्न दोष इत्याहुः।

**तत्सूत्रमिति**। न च "इजादेः०" ( पा० सू० ३।१।३६ ) इत्याम्प्रवृत्त्या न दोषः, 'अनृच्छः' इति पर्युदासेनौपदेशिकेऽजादावेव तत्प्रवृत्तिरित्याशयात्। न च "कास्प्रत्ययात्०" ( पा० सू० ३।१।३५ ) इत्यामापत्तिः, प्रत्ययग्रहणमपनीय तत्स्थाने 'अनेकाच इति वाच्यम्' इत्यर्थाङ्गीकर्त्तृमताभिप्रायेणास्य ग्रन्थस्य प्रवृत्तत्वेनादोषात्।

वस्तुत उक्तरीत्या पूर्वमयाद्यादेशे इकाराभावादेव न दोष इति बोध्यम्। 'उवोणकीयिषति' इति "यथेष्टं नामधातुषु" ( का० वा० ६।१।९ ) इत्यनेन "अजादेर्द्वितीयस्य" ( पा० सू० ६।१।२ ) इत्यस्य बाधनेन तृतीयैकाचो द्वित्ववत्प्रथमैकाचोऽपि द्वित्वं दुर्वारमिति भावः।

**षाष्ठेति**। "दाश्वान् साह्वान्०" ( पा० सू० ६।१।१२ ) इति सूत्रस्थेन 'अस्त्यर्थमेतत्स्यात्, नैकमुदाहरणं योगारम्भं प्रयोजयति' इति ज्ञापकपरभाष्येणेत्यर्थः। **द्वितीयद्विर्वचनस्यैवेति**[2]। "यथेष्टं नामधातुषु" ( का० वा० ६।१।९ )

---

१. 'न च' जग्मतुः' इत्यादिसिद्धये द्वित्वनिमित्तेऽचि तन्निमित्तिकाजादेशो नेत्यर्थस्यावश्यकत्वेन व्यवधानेऽपि तत्प्रवृत्त्या न दोष इति वाच्यम्, 'अचि किं जेघ्रीयते' इति भाष्यप्रामाण्येनाजादौ द्वित्वनिमत्त इत्यर्थे प्रकृते तदभावेनादोषात्। अत एव 'ममाथ' 'सुसूर्षति' इत्यादौ "मीनातिमिनोति०" (पा० सू० ६।१।५०) इत्यात्वस्य "उदोष्ठ्य०" ( पा० सू० ७।१।१०२ ) इत्युत्वस्य चाभ्यासे श्रवणम्।

न च 'इ लिट्' इति स्थिते सिबादेशात्परत्वात् द्वित्वेऽन्तरङ्गत्वात् सवर्णदीर्घो दुर्वार एवेति न चारितार्थ्यम्। न च परत्वात् तत्रापि गुणः, "असंयोगात्०" ( पा० सू० १।२।५ ) इति कित्त्वेन तदप्रवृत्तेः। अपिदिति निषेधस्तु स्थानिवत्त्वेन प्रासकित्त्वस्य निषेधेन चरितार्थ इति वाच्यम्, लावस्थायामेव कित्त्वे 'उवाच' इत्यादौ सम्प्रसारणापत्त्या 'अपित्' इति पर्युदासेन पित्त्वयोग्योद्देशभूतस्यैव लिटो ग्रहणेन लावस्थायां परत्वाद्गुणे चारितार्थ्यस्य सूपपादत्वात्'। इत्यधिकः पाठः क० पु०।

२. 'द्वितीयद्विर्वचनस्यैवेति'। इति नास्ति क० पु०।

**यद्यपि भाष्ये 'यदयमभ्यासस्यासवर्ण इत्यसवर्णग्रहणं करोति' इति ग्रन्थेनासवर्णग्रहणस्यैव ज्ञापकता लभ्यते, तथापि 'न ह्यन्तरेण गुणवृद्धी असवर्णपराभ्यासो भवति' इति तदुपपादनग्रन्थेन सम्पूर्णसूत्रस्यैव ज्ञापकता लभ्यते।**

**अग्रेऽपि 'नैतदस्ति ज्ञापकम्, अत्यर्थमेतत् स्यात्' इत्यनेन सूत्रसार्थक्यमेव दर्शितम्। असवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्व्यावर्त्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात्।**

**न च 'अकृतव्यूह' परिभाषया 'इयेष' इत्यादौ सवर्णदीर्घप्राप्तिः,**

---

इत्यस्याधिकसङ्ग्रहार्थकत्वेन[1] (नामशब्दस्य[2] सुबन्तपरतया तत्प्रकृतिकप्रत्ययान्तधातावेतत्प्रवृत्तिज्ञापकपरभाष्येणेति भावः[3])

स्वमते भाष्यविरोधमाशङ्क्य परिहरतिः—**यद्यपीति**। **तदुपपादनग्रन्थेनेति**। वार्णपरिभाषाभावे 'इयेष' इत्यादौ गुणवृद्ध्योः सवर्णदीर्घापेक्षया पूर्वं प्रवृत्तौ बीजाभावेनासवर्णपराभ्यासासम्भवात् सूत्रमेव निर्विषयं स्यादित्याशयकेनेत्यर्थः। असवर्णग्रहणस्यैव ज्ञापकत्ववादी 'सूत्रं त्वदुक्तदिशा ज्ञापकं न सम्भवतीति' दूषयतिः—**अत्यर्थमिति**। सिद्धान्ती "नैकमुदाहरणम्०"[4] इति न्यायेन सूत्रस्य ज्ञापकत्वं सम्भवतीति तद्दूषितवान्ः—**स्यादिति**। त्वन्मते 'ईषतुः' इत्यादावियङ्वारणार्थत्वेन तत्सार्थक्यमेव दर्शितं स्यादित्यर्थः। एतद्भाष्यानुरोधेनोपक्रमस्थभाष्यमपि बहुव्रीहिणा सूत्राभिप्रायेणैव योज्यम्।

ननु 'इयेष' इत्यादौ दीर्घोत्तरं गुणाद्यप्राप्त्या भाविनिमित्तविनाशाभावेन

---

१. 'सङ्ग्रहार्थत्वमिति भावः' इति पाठः क० पु०।

२. कोष्ठकान्तरितो नास्ति क० पु०।

३. 'ननु 'पयस एतत्, पय एतत्' तस्मादाचारक्विबन्तात् णिजन्ताद्वा सनि 'यथेष्टं नामधातुषु' (का० वा० ६।१।६) इति एतच्छब्दस्य द्वित्वे, हलादिः शेषे, ह्रस्वे, यणः प्राप्त्या चारितार्थ्यम्। तथा एधीत्यस्याभीक्ष्ण्ये द्वित्वे तस्मात्प्रशंसायां रूपपि, एधीत्यस्य पदत्वेन "इकोऽसवर्णे०" (पा० सू० ६।१।१२७) इति प्रकृतिभावे, ततो णिचि, पूर्ववत् एध्शब्दस्य द्वित्वे, ह्रस्वे, यणपवादत्वेन चारितार्थ्यम्। यलोपस्य तु नासिद्धत्वम्, पूर्वत्रासिद्धीये तन्निषेधादिति चेत्, न; ह्रस्वापेक्षयान्तरङ्गत्वादयादेशे चारितार्थ्याभावात्। न च सत्यप्ययादेशे पुनर्हलादिः शेषे, इत्वे, इयङ्विषयतास्त्येवेति वाच्यम्, अन्तरङ्गेण पररूपेण बाधापत्तेः। एतेन हलादिःशेषात्पूर्वं परत्वादित्वे, ततो हलादिः शेषे, इयङ्विषयतास्त्येवेत्यपास्तम्। ईदृशानामभिधाने मानाभावात्'। इत्यधिकः पाठः क० पु०।

४. व्या० म० भा० पा० सू० ६।१।१२।

**यदि दीर्घो न स्यात्, तर्हि गुणः स्यादिति सम्भावनायाः सत्त्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति कथं सम्पूर्णसूत्रस्य ज्ञापकतेति वाच्यम्, तस्या असत्त्वात्। सत्त्वे वैतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्त-विनाशकबहिरङ्गविधेः प्राप्तिः, तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च।**

**न चान्तरङ्गत्वाद् दीर्घेऽपि 'इयाय' इत्यादौ पूर्वान्तवत्त्वेनाभ्यासत्वादि-वर्णत्वाच्च णल्यसवर्ण इयङ्विधानेन सूत्रं चरितार्थम्।**

**न च "अचि श्नु०" इत्यनेन सिद्धिः, वृद्धिबाधनार्थत्वादिति वाच्यम्। प्रत्यासत्त्याऽसवर्णपदेनाभ्यासोत्तरखण्डसम्बन्ध्यसवर्णाच एव ग्रहणात्, शास्त्र-बाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्चेत्याहुः।**

---

कथं प्राप्तिरत आहः—**यदीति। सूपपादत्वादिति।** एतत्परिभाषाप्रवृत्तिविषयेऽन्तरङ्गकार्यस्य प्रतिबध्यमानतया क्वाप्यन्तरङ्गस्याप्रवृत्त्यान्तरङ्गप्रवृत्तेः प्राग्बहि-रङ्गेणान्तरङ्गनिमित्तविनाशस्य सम्भावना यत्र तत्रैवैतत्परिभाषाप्रवृत्ति—र्वक्तव्येति भावः। न च यद्यत्र गुणो न स्यात्तर्हि दीर्घस्स्यादिति सम्भावनया गुणस्याप्यप्रवृत्त्या न दोषः, तस्यानन्तरङ्गत्वेन तत्रैतदप्रवृत्तेरिति भावः[1]।

**योग्यकालोत्तरमेवेति।** एतत्परिभाषाविषयेऽन्तरङ्गप्रवृत्तेः प्रतिबध्यमान-त्वाद्योग्यत्वनिवेशः। सूत्थितादौ समासे प्रातिपदिकसंज्ञासमकालमेव सवर्ण-दीर्घस्य प्राप्त्या प्रातिपदिकसंज्ञाकाल एवान्तरङ्गसवर्णदीर्घप्रवृत्तियोग्यकालस्त-दुत्तरकाले एव तद्धितनिमित्तकवृद्धेः प्राप्त्या "अकृतव्यूह०" ( परि० ५६ ) परिभाषायाः प्रवृत्तिः। एवं 'सेदुषः' इत्यादावपि प्रतिपदिकसंज्ञासमकालमेवेटः प्राप्तिः। 'इयाय' इत्यादौ तु 'इ इ अ' इत्यत्र सवर्णदीर्घप्राप्तिकाल एव तन्निमित्तविनाशकगुणादेरपि[2] प्राप्त्योभयोस्समकालत्वेनात्रैतत्परिभाषाया न विषय इति भावः।

**चरितार्थमिति।** सूत्रेऽसवर्णग्रहणं तु 'इययिथ' इत्यादावियङः प्रवृत्तये चरितार्थमिति भावः। **प्रत्यासत्त्येति।** यन्निरूपितपूर्वत्वमादायाभ्यासत्वं तद-वच्छिन्ननिरूपितोत्तरस्यैव ग्रहणौचित्यादित्यर्थः। **आहुरिति।**

वस्तुतः "अचः परस्मिन्०" ( पा० सू० १।१।५७ ) इति स्थानिवद्भावेना-भ्यासस्यासवर्णाच्परत्वासम्भवादियङ् न। न चैकादेशविशिष्टस्याभ्यासत्वेन तस्य स्थान्यपेक्षया पूर्वत्वेन दृष्टत्वाभावेन कथं स्थानिवत्त्वमिति वाच्यम, यत्किञ्चि-त्स्थानिभूतादचः पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यकविधौ स्थानिवत्त्वप्रवृत्त्यभ्युपगमेना-दोषात्।

---

१. 'अत एवेण्ङिशीनामिति चरितार्थम्'। इत्यधिकः पाठः क० पु०।

२. 'गुणस्यापि' इति पाठः क० पु०।

**सा चेयं धर्मिग्राहकमानादाङ्गवार्णयोः समानकार्यित्व एव ।**

**यत्तु समाननिमित्तकत्वरूपसमानाश्रयत्व एवैषेति, तत्, न; ज्ञापितेऽपि 'इयाय' 'इयेष' इत्याद्यसिद्धेः, सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च ।**

**'स्योनः' इत्यत्र तु वक्ष्यमाणरीत्याऽस्या अनित्यत्वादप्रवृत्तौ गुणादन्तरङ्गत्वाद् यणादेशः ।**

**न चैवमपि 'इयाय' इत्यादावियङ् दुर्लभः, तत्र कर्तव्ये वृद्ध्यादेः स्थानिव-**

---

अत एव "कृदतिङ्" ( पा० सू० ३।१।९३ ) इति सूत्रेऽतिङ्ग्रहणप्रत्याख्यानावसरे 'पचति' इत्यादौ तुग्वारणाय धातुग्रहणानुवृत्तिं कृत्वैवमपि 'चिकीर्षति' इत्यादौ पूर्वान्तवद्भावेन धातुत्वात्तुक् प्राप्नोतीत्याशङ्क्य पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यककार्ये स्थानिवद्भावान्न दोष इति समाहितम् ।

न चैवमपि परत्वादन्तवत्त्वं स्थानिवत्त्वस्य बाधकमिति नायं स्थानिवत्त्वस्य विषय इति वाच्यम्, स्थानिवत्त्वस्याभावातिदेशकत्वेन स्थानिनि यन्न भवति तदादेशेऽपि नेत्यभावातिदेशकवाक्योपप्लवेन "निषेधांश्च बलीयांसः" ( परि० १२१ ) इति न्यायेनान्तवत्त्वस्य स्थानिवत्त्वप्रतिबध्यत्वात् ।

**समानकार्यित्व एवेति** । अत एव "अन्तादिवच्च" ( पा० सू० ६।१।८५ ) इति सूत्रे भाष्येऽन्तवत्त्वस्य 'पिबन्ति' इति प्रयोजनमुक्तम् । तत्र 'पा अ अन्ति' इति स्थिते नित्यत्वादन्तरङ्गत्वाच्च पररूपे शित्परत्वाभावेन 'पिबादेशो न स्यादिति'[1] तदाशयः । अन्यथाऽनया परिभाषया पूर्वं पिबादेशे तदसङ्गतिः स्पष्टैव । एतत्फलं तु 'गाते' इत्यत्र दीर्घं बाधित्वा इयादेशो न ।

केचित्तु वक्ष्यमाणरीत्याङ्गसम्बन्धिन्याङ्ग एवास्याः प्रवृत्त्या 'गाते' इत्यत्र न दोषः । 'गाते' इत्यत्र स्थान्येकत्वे एवास्याः प्रवृत्तिरिति "हलादिश्शेषः" ( पा० सू० ७।४।६० ) इत्यत्रोभयोरादेशत्वे एवास्याः प्रवृत्तिरिति शेखरग्रन्थस्तु प्राचामनुरोधी । 'वारिणी' इत्यादावन्तरङ्गत्वान्नुमं बाधित्वा सवर्णदीर्घापत्तेः । 'चंक्षम्यते' इत्यादौ नुकं बाधित्वा तुगापत्तेश्चेत्याहुः ।

स्वमते भाष्यविरोधं परिहरतिः—**स्योन इति । दुर्लभ इति** । ननु 'इ ऐ अ' इत्यत्रासवर्णे इति निषेधाद् यणपवादस्येयङोऽप्राप्तावपि पूर्वमायादेशोत्तरं तत्प्राप्त्याऽपवादविषयत्वेन यणः पूर्वमप्रवृत्त्याऽऽयादेशे स्थानिवत्त्वेऽपि न दोषः । न च तस्य पुनः स्थानिवत्त्वेनेत्वसिद्धिस्सुलभेति वाच्यम्, 'एतिका' इत्यत्र शेखरोक्तरीत्या लक्ष्ये लक्षणस्येति न्यायेन पुनः स्थानिवत्त्वाप्रवृत्तेः ।

न च 'यूनः' 'सुनयिका' इत्यादौ पूर्वरूपदीर्घयोर्गुणायादेशयोः स्थानिवत्त्वेन

---

१. 'तन्न स्यादिति' इति पाठः क० पु० ।

**त्वेन 'असवर्णे' इति प्रतिषेधादिति वाच्यम्, सूत्रारम्भसामर्थ्यादेव स्थानिवत्त्वाप्रवृत्तेः। तच्च सामान्यापेक्षम्। अभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति।**

---

सम्प्रसारणत्वधात्वन्तयक्त्ववदत्रेकारपरत्वमपि सुलभमिति वाच्यम्, आयादेशे इकारनिष्ठसवर्णत्वातिदेशेऽपि तदवयवाकारेऽसवर्णत्वस्य सुस्थत्वादिति चेत्, न; 'इयेष' 'इयेथ' इत्यादौ दोष इत्याशयात्। "न पदान्त०" (पा० सू०१।१।५८) इति निषेधस्य तु न प्राप्तिः। अस्य सवर्णनिमित्तकविधित्वेऽपि सवर्णविधित्वाभावात्।

**सामर्थ्यादिति।** न चोक्तरीत्या चारितार्थ्यं सुवचम्, किञ्चेयेथेत्यादौ पूर्वं गुणे, ततो द्वित्वे, ह्रस्वे, तस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेन स्थानिवत्त्वाप्राप्तेरिति वाच्यम्, तावन्मात्रार्थत्वे 'रेः' इत्येव ब्रूयादिति पूर्वमेवोक्तत्वात्। किञ्चाभ्यासस्यानणीत्येव सिद्धेऽसवर्णग्रहणवैयर्थ्यस्य सुस्थत्वात्। किञ्चेयङ्विधावसवर्ण इत्यस्य प्रसज्यप्रतिषेधपक्षेऽयादेशेऽपि दोषस्य दुर्वारत्वात्।

**स्थानिवत्त्वं नेति।** अभ्यासस्येत्यस्य फलं तु वेञो यङि 'वेवीयते' इत्यत्र यकारस्य सम्प्रसारणे पूर्वरूपे "अकृत्०" ( पा० सू० ७।४।२५ ) इति दीर्घे तस्य स्थानिवत्त्वेन "न सम्प्रासरणे०" ( पा० सू० ६।१।३७ ) इति निषेधः।

किञ्च 'निन्यतुः' 'निन्ये' इत्यादौ यणः स्थानिवत्त्वाभावे "अनिदिताम्०" ( पा० सू० ६।४।२४ ) इति नलोपापत्तिः। 'यातिः' इत्यत्रालोपस्तु न, "चिणो लुक्" ( पा० सू० ६।४।१०४ ) न्यायेनोत्तरलोपस्यासिद्धत्वात्। **तदुत्तरखण्डेति।** अस्य फलं तु 'वव्रश्च' इत्यत्रैतन्निषेधाप्रवृत्तिः। अत्रैव दोषवारणाय खण्डग्रहणमिति केचित्। तन्न, **तदुत्तरे**त्यत्र तत्पदेनाभ्यासस्यैव ग्रहणेनादोषात्।

**प्रतिबन्धकेति।** अस्य फलं तु 'अरियियात्' इति मूल एव स्पष्टम्। एतज्ज्ञापनफलं तु 'अनूनवत्' इत्यादौ दीर्घसिद्धिः। अन्यथा "णौ चङि०" ( पा० सू० ७।४।१ ) इति ह्रस्वस्य स्थानिवत्त्वेन लघुपरत्वाभावात् सन्वद्भावानापत्तिः। सन्वद्भावस्तु 'अचीकमत' 'अदीदपत्' इत्यादौ उपधाकार्यत्वात् द्वित्वात्पूर्वं ह्रस्वे, ततो द्वित्वे, अभ्यासस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्तदप्राप्त्या चरितार्थः।

न च 'णिच्यच आदेशो न' इति निषेधेन द्वित्वात्पूर्वं कथं ह्रस्व इति वाच्यम्। "द्विर्वचनेऽचि" ( पा० सू० १।१।५९ ) इत्यस्य णिचो द्वित्वनिमित्तत्वाभावेऽप्यजादौ प्रत्यये परे व्यवधायकणिज्निमित्तकाजादेशो न द्वित्वे कर्तव्ये, इत्यर्थज्ञापनेन 'णिच्यचः' इत्यस्य "द्विर्वचनेऽचि" ( पा० सू० १।१।५९ ) इति सिद्धार्थानुवादकत्वेन 'एषिषिषति' इत्यादौ "द्विर्वचनेऽचि" (पा० सू० १।१।५९)

**अत एव 'आरति' इत्यादौ यणादेशस्य स्थानिवत्त्वादभ्यासस्य "ढ्रलोपे" इति दीर्घो दुर्लभ इत्यपास्तम् । दीर्घविधौ तन्निषेधाच्च ।**

---

इति निषेधं बाधित्वोपधाकार्यत्वेन गुणप्रवृत्तिवदत्रापि ह्रस्वस्योपधाकार्यत्वात् पूर्वं प्रवृत्त्यादोषात् ।

न च "दीर्घो लघोः" ( पा० सू० ७।४।९४ ) इति दीर्घे "न पदान्त०" ( पा० सू० १।१।५८ ) इति निषेधान्न स्थानिवत्त्वम्, लोपाजादेशत्वाभावेनाऽदोषात् । एतेन 'मा भवानटिटत्' इत्यत्रोत्तरखण्डेऽवर्णाभावेन णावच इति निषेधाविषये द्वित्वात्पूर्वमन्तरङ्गत्वाद् वृद्धौ, ह्रस्वापेक्षया नित्यत्वाद् द्वित्वे प्राप्ते, तद्बाधनेन पूर्वं ह्रस्वप्रवृत्तये, उपधाकार्यं हीत्यस्य चारितार्थ्येन 'अचकाणत्' इत्यादौ द्वित्वात्पूर्वं णावच इति निषेधेन वृद्धेरभावे, द्वित्वोत्तरं वृद्धौ "काण्यादी०" ( का० वा० ७।४।१ ) इत्यस्य वैकल्पिकत्वेन, तथा कवृधातोर्णिचि, चङि, 'अचकाबत्' इत्यत्र "नाग्लोपि०" ( पा० सू० ७।४।२ ) इति निषेधेन ह्रस्वाभावे वृद्धेः स्थानिवत्त्वेन लघुपरत्वाभावात् सन्वद्भावापत्तिः । स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावादित्यपास्तम् । णिच्यचीत्यस्य "द्विर्वचनेऽचि" ( पा० सू० १।१।५९ ) इति सिद्धार्थानुवादकत्वाण्णिच्यच इत्येतद्बाधकत्वस्यापि सिद्धतायाः पूर्वोक्तत्वेनादोषात् ।

न चैवं प्रतिबन्धकेति निवेशे 'इयाय' इत्यत्रायादेशस्य स्थानिवत्त्वेन लघूपधगुणापत्तिः । आयादेशात्पूर्वमन्तरङ्गत्वादियङ्यदोषात् ।

नन्वेवमपि 'औननत्' इत्यादौ "अत उपधायाः" ( पा० सू० ७।२।११६ ) इति वृद्ध्यापत्तिः, तत्प्रतिबन्धकस्य स्थानिवत्त्वस्यानेन निषेधात् । न च "णौ चङि०" (पा० सू० ७।४।१) इति ह्रस्वः "नाग्लोपि०" (पा० सू० ७।४।२) इति निषेधादिति चेत्, न; 'आटिटत्' इत्यत्र बहिर्भूतचङ्निमित्तकद्वित्वस्य बहिरङ्गत्वेनासिद्धत्वाद् गुणाप्रवृत्तिवदत्रापि वृद्धेर्वारणसम्भवात् ।

न च 'इट्' 'किट्' इत्यत्र प्रश्लिष्टात् 'इ' धातोर्लिटि, अतुसि, उत्तरखण्डे "एरनेकाचः०" ( पा० सू० ६।४।८२ ) इति यणि 'इयतुः' इत्यत्र यणादेशस्य स्थानिवत्त्वेन यणापत्तिरिति वाच्यम्, वार्णपरिभाषाविषये सर्वत्र परमप्यन्तरङ्गं बाधित्वान्तरङ्गे प्राप्तेऽनया लाघवाद् विप्रतिषेधस्यैव प्रसवाभ्युपगमेन "सकृद्गति०" ( परि० ४० ) न्यायेनाङ्गप्रवृत्त्युत्तरं पुनर्यणोऽप्रवृत्त्या न दोष इत्याहुः ।

**अत एव आरतीति** । अत्र पुनर्ह्रस्वस्तु न 'लक्ष्ये लक्षणस्य' इति न्यायात् । **दुर्लभ इति** । स्थानिनि सति यन्न भवति, तदादेशेऽपि नेत्यभावातिदेशेनेति भावः । **दीर्घविधाविति** । न च स्वरदीर्घेष्विति नियमादत्र स्थानिवत्त्वाप्राप्त्येदमसङ्गतमिति वाच्यम्, त्रैपादिके दीर्घे 'पूर्वत्रासिद्धे न स्थानिवत्'

**'अरिय्रियात्' इत्यत्र तु स्थानिवत्त्वेनेयङ् भवत्येव, तस्य स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावात् ।**

**'इयङ्चाङ्गसम्बन्धिन्याङ्ग एव' इति "स्वरितो वा" इति सूत्रे भाष्ये। तत्र हि 'कुमार्यै' इत्यादौ यणुत्तरमाडुक्तः ।**

**इयङ्चानित्या 'छ्वोः' इति सतुग्निर्देशात् । अन्यथाऽन्तरङ्गत्वात् पूर्वं तुकः शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः ॥ ५६ ॥**

---

( का० वा० १।१।५८ ) इति वचनेनैव तत्सिद्धया "न पदान्त०" ( पा० सू० १।१।५८ ) इति सूत्रे दीर्घपदेनासिद्धदीर्घग्रहणे फलाभावेन सिद्धदीर्घस्यैव ग्रहणेन तत्र दीर्घांशे तादृशनियमाङ्गीकारे फलाभावात् ।

न चैवं 'विव्यतुः' इत्यादौ "पूर्वत्रासिद्धे न स्थानिवत्" ( का० वा० १।१।५८ ) इति निषेधापत्तिः, पूर्वत्रासिद्धीये दीर्घे लोपरूपाजादेशस्यैव स्थानिवत्त्वनिषेधेन 'विव्यतुः' इत्यादिसिद्धेः[1] इति दिक् ।

**अरिय्रियादिति।** इयङपेक्षया प्रतिपदोक्तत्वात् पूर्वं रिङि, इयङिति भावः । न चैवं यलोपो दुर्वारः, स्थान्यचः पूर्वत्वाभावेन स्थानिवत्त्वाप्राप्तेरिति वाच्यम्, रिङ आङ्गत्वेन वहिरङ्गत्वादसिद्धत्वेनादोषात्[2] । **आङ्गसम्बन्धिनीति[3]।** अङ्गत्वावच्छिन्नोद्देश्यक इत्यर्थः ।

ननु "अतो येयः" ( पा० सू० ७।२।८० ) इत्यत्र सकारप्रश्लेषो वार्णपरिभाषामनपेक्ष्येति शेखरोक्तिरयुक्ता, तस्याङ्गोद्देश्यकत्वाभावादिति चेत्, न; तस्याः सामान्यतः प्रवृत्तिकल्पनामनपेक्ष्येत्यर्थेनादोषात् ।

**आडुक्त इति।** यद्यपि तत्र "उदात्तयणो हल्पूर्वात्" (पा० सू० ६।१।१७४) इति स्वरात्प्रागाडुक्तस्तथाप्याडपेक्षयान्तरङ्गत्वाद् यणमन्तरा "उदात्तयणः०" ( पा० सू० ६।१।१७४ ) इत्यनेन सम्प्रधारणा दुर्वचेति पूर्वं यणुक्तप्राय एवेति भावः। नद्यन्ताद् विहितस्येत्यर्थाद् यणुत्तरमाटः प्राप्तिर्बोध्या। वस्तुतः समानकार्यत्व एवेत्युक्तत्वान्नात्रास्याः प्राप्तिः। किञ्चाङ्गसम्बन्धिनीत्युक्तौ 'ज्ञाने' 'ज्ञानानि' इत्यादौ श्यादेशात्पूर्वमन्तरङ्गत्वाद् वृद्धयापत्तेः ।

**सतुग्निर्देशादिति।** अनयाङ्गविषये वार्णस्याप्रवृत्त्या पूर्वं श्यादेशे तुको

---

१. 'न च 'हंसौ' इत्यादौ "एकदेशविकृत०" ( परि० ३७ ) न्यायेन सान्तस्याङ्गत्वात "सान्त०" ( पा० सू० ६।४।१० ) इति दीर्घवारणाय सिद्धदीर्घेऽपि स्वरदीर्घेति नियम आवश्यक इति वाच्यम्, वार्तिके उपधादीर्घस्यैव ग्रहणेनादोषात । एकादेशस्य स्थानिवत्त्वेन सान्तेऽङ्गत्वाभावाच्च' इत्यधिकः पाठः क० पु० ।

२. 'स्थानिद्वारकपूर्वत्वाश्रयणेनादोषात्' इति पाठः क० पु० ।

३. 'आङ्ग एवेति' इति पाठः क० पु० ।

**नन्वेवम् 'सेदुषः' इत्यादौ क्वसोरन्तरङ्गत्वादिटि, ततः सम्प्रसारणेऽपीटः श्रवणापत्तिरिति चेत्, अत्र केचित्—**

**अकृतव्यूहाः पाणिनीयाः ॥ ५७ ॥**

**न कृतो विशिष्ट ऊहः—निश्चयः, शास्त्रप्रवृत्तिविषयो यैरित्यर्थः। भाविनिमित्तविनाश इत्यध्याहारः। बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात् सम्भाविते‌ऽन्तरङ्गं नेति यावत्।**

**अत्र च ज्ञापकम् "समर्थानां प्रथमात्" इति सूत्रे समर्थानामिति। तद्धि सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम्। अन्यथाऽन्तरङ्गत्वाद् दीर्घे कृत**

---

निमित्ताभावादप्राप्तौ तज्ज्ञापकमिति भावः। न चासिद्धपरिभाषया श्यादेशस्यासिद्धत्वात् तुकि, पुनस्तद्विशिष्टस्य विधानार्थं तदिति वाच्यम्, वार्णपरिभाषाविषयेऽसिद्धपरिभाषायाः प्रवृत्तौ तस्या वैय्यर्थ्यापत्तेः।

वस्तुतः तुक्श्यादेशयोः समानकार्यित्वाभावेनोभयोरादेशत्वाभावेन चास्या अप्रवृत्तेर्नास्य ज्ञापकत्वं युक्तम्। 'स्योनः' इत्यत्र 'ज्ञापकसिद्धं न सर्वत्र' ( परि० १२५ ) इति न दोषः। केचित्तु[1] वार्णपरिभाषयाङ्गस्य परस्यान्तरङ्गापेक्षया बलवत्त्वं प्रतिप्रसूयत इति "सकृद्गति०" ( परि० ४० ) न्यायेन न तुकः प्रवृत्तिरित्याहुः ॥ ५६ ॥

**शास्त्रप्रवृत्तिविषय इति।** शास्त्रप्रवृत्तिविषयक इत्यर्थः। **बहिरङ्गेणेति।** पूर्वेण परस्य,[2] अनित्येन नित्यस्येति तु नोक्तम्, निमित्तविघातकशास्त्रस्य विनङ्क्ष्यन्निमित्तकशास्त्रस्य च युगपत्प्राप्तिविषयेऽस्या अप्रवृत्तेरुक्ततया पर[3]नित्यप्रवृत्तियोग्यकालोत्तरकालप्राप्तिकेन पूर्वेणानित्येन पूर्वकालप्राप्तिकस्य निमित्तविनाशसम्भावनाविषये पूर्वकालोपस्थितिनिमित्तकत्वेन परस्मिन्नित्ये चाऽन्तरङ्गत्वस्य परकालोपस्थितनिमित्तकत्वेन पूर्वस्मिन्ननित्ये च बहिरङ्गत्वस्य च सूपपादत्वेन बहिरङ्गेणेत्यनेनैव तस्यापि सङ्ग्रहात्। अनित्येन नित्यस्य निमित्तविनाशसम्भावनाविषये तस्मिन्नित्यत्वस्यैव दुर्वचत्वाच्च।

**अन्यथा**—एतत्परिभाषानङ्गीकारे इत्यर्थः। **दीर्घे कृत एवेति।** समासे संहिताया नित्यतया तत्रासंहिततयावस्थानासम्भवेन प्रातिपदिकसंज्ञासमकालमेव

---

१. 'केचित्तु' इत्यादितः 'इत्याहुः' इत्येतत्पर्यन्तं नास्ति क० पु०।

२. 'पूर्वेण परस्य' इति नास्तिः क० पु०।

३. 'निमित्तकविघातकशास्त्रस्य विनङ्क्ष्यन्निमित्तकशास्त्रस्य च युगपत्प्राप्तिविषयेऽस्या अप्रवृत्तेरुक्ततया पर' इति नास्ति क० पु०।

**एव प्रत्ययप्राप्त्या तद्व्यर्थता स्पष्टैव। तत्र हि भाविन्यादिवृद्धया सवर्णाच्त्व-विनाशः स्पष्ट एव।**

**न चात्रैकादेशप्रवृत्तिसमये वृद्धयप्राप्त्यैकादेशे कृत आदेशे वृद्धेः प्राप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम्, तद्द्वारव तन्निमित्तविनाशसत्त्वेनाक्षत्तेः।**

---

दीर्घप्रवृत्त्या ततः पूर्वमेतदप्राप्तेरिति भावः। **भाविन्येति।** अन्तरङ्गप्रवृत्ति-योग्यकालोत्तरकालप्रवृत्तिकयेत्यर्थः। **स्पष्ट एवेति।** अकृतव्यूहपरिभाषाविषयेऽन्त-रङ्गस्य पूर्वमप्रवृत्त्या वृद्धया तन्निमित्तनाशः स्पष्ट एवेति भावः।

न च दीर्घस्य वृद्धयपेक्षया पूर्वप्रवृत्तिवारणेऽपि प्रत्ययोत्पत्त्यपेक्षया पूर्वप्रवृ-त्तिर्दुर्वारैव, तया तन्निमित्ताविनाशादिति वाच्यम्, वृद्धयपेक्षया पूर्वप्रवृत्तिनि-षेधे प्रत्ययोत्पत्त्यपेक्षयापि तन्निषेधस्यार्थसिद्धतया तदयोगात्। न चैतत्परिभाषा-सत्त्वे सूत्थितादौ पूर्वं दीर्घस्याप्रवृत्त्या समर्थं प्रातिपदिकमेव दुर्लभम्, समर्थ-ग्रहणेनैतद्विषये तदप्रवृत्तेरपि ज्ञापनात्।

न च 'ऐन्द्राग्नम्' 'प्रैन्द्रम्'[1] इत्यादौ "अकृत०" ( परि० ५७ ) इति परिभाषाया अविषये तत्सार्थक्यं सम्भवतीति वाच्यम्, तत्रान्तरङ्गत्वादेव पूर्वं दीर्घे समर्थादेवोत्पत्त्या तदर्थं समर्थग्रहणस्यानावश्यकत्वात्।

ननु दीर्घरूपकार्येणैव दीर्घनिमित्तस्य विनाशितत्वान्नष्टस्य पुनर्नाशायो-गात् 'सेदुषः' इत्यत्रेवान्तरङ्गप्रवृत्त्युत्तरकालप्रवृत्तिकया बहिरङ्गया वृद्धया तन्निमित्तविनाशासम्भवात् "अकृत०" ( परि० ५७ ) इति परिभाषाया अप्रवृ-त्त्याऽन्तरङ्गत्वाद्दीर्घे समर्थादेव प्रत्ययोत्पत्त्या समर्थग्रहणस्य चारितार्थ्यं दुर्वचमिति शङ्कते:—**न चेति। वृद्धयप्राप्त्येति।** क्रमेणान्वाख्यानपक्षे इत्यर्थः। विभज्या-न्वाख्याने तूभयोः समकालप्राप्तिकत्वेनेदृशे विषये "अकृत०" ( परि० ५७ ) इत्यस्या अप्रवृत्तेः पूर्वमुपपादितत्वात्।

**तद्वारैवेति।** आदेशरूपकार्यविनाशद्वारैवेत्यर्थः। 'श्रीपाय' इत्यत्रेव दीर्घे कृतेऽपि निमित्तत्वावच्छेदकाक्त्वस्य तत्राप्यनुवृत्त्या वृद्धया तन्नाशे निमित्तवि-विनाशः स्पष्ट एव। एवञ्च पश्चात् प्रवर्त्तमानेन बहिरङ्गेण पूर्वप्रवृत्तान्तरङ्गस्य साक्षादादेशरूपकार्यविनाशद्वारा वा भाविनिमित्तविनाशनिश्चये पूर्वमेव तत्कार्यं न कुर्वन्तीत्यर्थः। अत एव 'सुध्युपास्यः' इत्यत्र पूर्वरूपस्थानिकदीर्घस्य यणा नाशेऽपि नैतत्परिभाषाप्रवृत्तिः।

न च 'विषुणः' इत्यत्रानयाऽकृतसन्धेरेव प्रत्ययसिद्धया "विष्वगित्युत्तर-

---

[1] 'प्रैन्द्रम्' इति नास्ति क० पु०।

**न च सौत्थितौ बहिरङ्गतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति**

---

पदलोश्चाकृतसन्धेः'' ( का० वा० ५।२।१०० ) इति वार्तिके अकृतसन्धिग्रहणेन, अन्यत्र कृतसन्धिभ्य एव प्रत्ययोत्पत्तिज्ञापनेन 'सौत्थितिः' इत्यादिसिद्धया समर्थग्रहणस्य ज्ञापकत्वेऽपि स्वांशे चारितार्थ्यं दुर्वचम् 'तैर्णिः, पौर्णिः' इत्यादौ ''ॠत इद् धातोः'' ( पा० सू० ७।१।१०० ) इतीत्त्वस्य सन्धिकार्यत्वाभावेन, गोमद्दण्डीत्यादाविव[1] अकृतव्यूहपरिभाषया पूर्वमप्रवृत्तौ 'तार्णिः इत्याद्यापत्तेः। कृते तु समर्थग्रहणे परिनिष्ठितादेव प्रत्ययोत्पत्त्या 'तैर्णिः' इति सिद्धयति।

ननु 'सु उत्थितः' इत्यस्यामवस्थायां प्राप्तसवर्णदीर्घनिमित्तभूताक्त्वविनाशस्य पश्चादवश्यम्भावितया तज्ज्ञानेन ''अकृत०'' ( परि० ५७ ) इति परिभाषाप्रवृत्त्या पूर्वं दीर्घाप्रवृत्तौ 'सावुत्थितिः' इति स्यादिति समर्थग्रहणं कृतम्। एतदभावेऽप्यकृतसन्धेः प्रत्ययोत्पत्तौ वृद्ध्युत्तरमप्यन्तरङ्गे दीर्घे कर्त्तव्ये वृद्धेरसिद्धत्वेन दीर्घस्य प्रवृत्तिसम्भवेन भाविनिमित्तविनाशरूपलिङ्गज्ञानस्यैतद्विषयेऽसम्भवेन पूर्वं दीर्घप्रवृत्तेः सुस्थत्वात्, समर्थग्रहणस्य चारितार्थ्यं दुर्वचमिति शङ्कते—**न चेति।**

**असिद्धत्वादिति।** नन्वत्र दीर्घं प्रति वृद्धेरसिद्धत्वेनाऽन्तरङ्गप्रवृत्त्युत्तरकालप्रवृत्तिकया वृद्धया तन्निमित्तविनाशमुपजीव्य प्राप्ताकृतव्यूहपरिभाषाया अप्रवृत्तिः साध्यते? उतान्तरङ्गस्याप्रवृत्तावप्यन्तरङ्गप्रवृत्तियोग्यकालोत्तरकालप्रवृत्तिकया वृद्धया तन्निमित्तविनाशमुपजीव्य प्राप्ताकृतव्यूहपरिभाषाया अप्रवृत्तिः[2] साध्यते? नाद्यः, अन्तरङ्गप्रवृत्त्यनन्तरं निमित्तविनाशविषयेऽन्तरङ्गकर्त्तव्यत्वाभावेनासिद्धत्वासम्भवान्निमित्तविनाशस्य सुस्थत्वात्।

न द्वितीयः, दीर्घात्पूर्वं वृद्धेः प्रवृत्तौ सत्यामसिद्धत्वं सम्भवति, दीर्घस्य पूर्वमप्रवृत्तिश्च ''अकृत०'' ( परि० ५७ ) इति परिभाषासाध्या। सा च दीर्घनिमित्तविनाशगोचरतर्कात्मकलिङ्गज्ञानाधीना। तच्च लिङ्गज्ञानमसिद्धत्वबुद्धया निवर्तत इति वक्तव्यम्, तच्च न सम्भवति। असिद्धपरिभाषाप्रवृत्तेरेतत्परिभाषाप्रवृत्त्यधीनत्वेन तथा वक्तुमशक्यत्वादिति चेत्, न; ''अकृतव्यूह०'' ( परि० ५७ ) परिभाषाप्रवृत्तिप्रयोजकतर्कात्मकलिङ्गज्ञानस्येव प्रवृत्तिप्रतिबन्धकीभूततर्कात्मकलिङ्गाभावज्ञानस्यापि सम्भव इत्याशयात्।

ननु नाजानान्तर्यपरिभाषया नात्रासिद्धत्वम्। न च तज्जातवहिरङ्गस्यैवासिद्धत्वनिषेधकम्, ज्ञापकसाजात्येनासमकालप्राप्तबहिरङ्गस्यासिद्धत्वनिषेध-

---

१. 'गोमद्दण्डीत्यादाविव' इति नास्ति क० पु०। २. 'निवृत्तिः' इति पाठः क० पु०।

**वाच्यम्, समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात् ।**

**यत्तु समर्थग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति । तन्न, असिद्धपरिभाषया समकालप्राप्तबहिरङ्गस्य पूर्वं जातबहिरङ्गस्य चान्तरङ्गे कर्त्तव्येऽसिद्धत्वं बोध्यते, न तु जातेऽन्तरङ्गे तस्य तत्त्वं बोध्यते, मानाभावात्, फलाभावाच्च ।**

**एवञ्च सूत्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन तदनित्यत्वज्ञापनासम्भवात् । 'अन्तरङ्गानपि विधीन्' इत्यादेरप्यस्यामेवान्तर्भावः ।**

---

कल्पनेऽपि 'अयजे इन्द्रम्' इत्यदावदोषादिति चेत्, न; तस्या असत्त्वेनादोष इत्याशयात् ।

**ज्ञापनादिति** । उक्तरीत्यैतद्विषये क्वापि निमित्तविनाशाभावेन[1] परिभाषाया निर्विषयत्वापत्त्या समर्थग्रहणेनासिद्धपरिभाषाया एतादृशे विषयेऽप्रवृत्तिरपि ज्ञाप्यत इति भावः । **ज्ञाप्यत इति** । "अकृतव्यूह०" ( परि० ५७ ) इति परिभाषाज्ञापकत्वस्यान्तरङ्गपरिभाषाया एतद्विषयेऽप्रवृत्तिज्ञापकत्वस्य च कल्पने गौरवादेतत्परिभाषाऽकरणलाघवानुरोधेनासिद्धपरिभाषाया अनित्यत्वकल्पनमेव लघ्वित्याशयः ।

ननु समर्थग्रहणेन 'अन्तरङ्गं बलीयः' इत्यस्यानित्यत्वं कल्प्यते ? उतासिद्धपरिभाषायाः । नाद्यः, सूत्थितादावेकादेशप्राप्तिसमये वृद्धेरप्राप्त्या दीर्घस्याप्रतिद्वन्द्वितया तत्प्रवृत्तेः, 'अन्तरङ्गं बलीयः' इति परिभाषासाध्यत्वाभावेन तदनित्यत्वस्यानेन ज्ञापनासम्भवात् । न द्वितीयः, अन्तरङ्गकर्त्तव्यतादशायां बहिरङ्गस्य जातत्वाभावेन जाते बहिरङ्गेऽन्तरङ्गस्य कर्त्तव्यत्वाभावेन तदनित्यत्वस्याप्यनेन प्रतिपादनासम्भवात् ।

एवञ्च बहिरङ्गपरिभाषायाः सूत्थितादौ प्राप्त्यभावेन तेन तदनित्यत्वज्ञापनमयुक्तमेवेत्याशयेनाह—**असिद्धेत्यादि-फलाभावाच्चेत्यन्तेन** । एतेन दीर्घस्यान्तरङ्गपरिभाषासाध्यत्वाभावेन तदनित्यत्वज्ञापनासम्भवादित्येव सिद्धे **'जातेऽन्तरङ्गे'** इत्यादिग्रन्थस्य प्रकृते उपयोगश्चिन्त्य इत्यपास्तम् ।

एवञ्च "अकृत०" ( परि० ५७ ) इति परिभाषाभ्युपगन्तृमते "अकृत०" (परि० ५७) इति परिभाषाविषयेऽन्तरङ्गस्य पूर्वमप्रवृत्त्या, पूर्वमेव बहिरङ्गप्रवृत्तौ पश्चादन्तरङ्गस्य कर्त्तव्यतेत्यसिद्धपरिभाषयाऽसिद्धत्वे तद्वैयर्थ्यापत्त्या तदनित्यत्व[2]ज्ञापनमावश्यकम् । "अकृत०" ( परि० ५७ ) इति परिभाषानङ्गीकर्तृदूष्यमते त्वन्तरङ्गकर्त्तव्यतासम्भवात्तदप्राप्त्या समर्थग्रहणेन तदनित्यत्वज्ञापनमसङ्गतमिति न पूर्वग्रन्थविरोधः ।

नन्वेतदङ्गीकारे**ऽन्तरङ्गानपी**त्यादेरुच्छेदापत्तिरत आह—**अन्तरङ्गानपीति** । ननु 'सेदुषः' इत्यादाविवान्तरङ्गप्रवृत्त्युत्तरं बहिरङ्गेण साक्षात्तन्निमित्तविनाशस्य

---

१. 'विनाशासम्भवेन' इति पाठः क० पु० । २. 'तदप्रवृत्ति' इति पाठः क० पु० ।

**एतत्प्रवृत्तौ च निमित्तविनाशसम्भावनापि निमित्तम्। अत एव 'गोमद्दण्डी' इत्यादौ हल्ङ्यादिलोपो न।**

**अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्या तदुत्तरं चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः। अस्ति चात्रापि 'यदि लोपो न स्यात्, तर्हि लुक् स्यात्' इति सम्भावना।**

---

'सौत्थितिः इत्यादाविव परम्परया तन्निमित्तविनाशस्य वा 'गोमद्दण्डी' इत्यादावसम्भवेन तत्र कथमनया निर्वाह इत्यत आह—**एतत्प्रवृत्तौ चेति।**

**सम्भावनापि निमित्तमिति।** अतरङ्गप्रवृत्त्यभावसम्भावनाप्रयुक्तविनाशसम्भावनेत्यर्थः। न च परिभाषायां निमित्तपदेन कार्यिणोऽपि ग्रहणे 'सुध्युपास्यः' इत्यादौ स्थानिनोऽपि तत्त्वापत्त्या यणा आदेशविनाशद्वारा तद्विनाशस्य सम्भावितत्वेन पूर्वं दीर्घाप्रवृत्त्या "सम्प्रसारणाच्च" (पा० सू० ६।१।१०८) इति पूर्वरूपापत्तिरिति वाच्यम्, अन्तरङ्गानपीत्यादेः सङ्ग्रहाय प्रवृत्त्यभावघटितसम्भावनाया एव परिभाषाप्रवृत्तौ निमित्तत्वस्वीकारेण प्रवृत्तिघटितसम्भावनायाः परम्परया निमित्तविनाशस्य चाग्रहणात्।

न च 'सेदुषः' इत्यादाविडादेः प्रवृत्तावप्रवृत्तौ च सम्प्रसारणादिप्राप्त्यात्रान्तरङ्गप्रवृत्तितदभावान्यतरसम्भावनाप्रयुक्तविनाशसम्भावनाया असम्भवेनैतत्परिभाषाया अप्रवृत्त्यापत्तिरिति वाच्यम्, **निमित्तविनाशसम्भावनापि**-इत्यत्रापिशब्देन निमित्तविनाशनिश्चयस्य ग्रहणेन तस्यापि परिभाषाप्रवृत्तौ निमित्तत्वेनादोषात्। समर्थग्रहणनेत्थमेव कल्प्यते, अन्तरङ्गानपीत्यादेरकरणलाघवानुरोधेनेति भावः।

एवञ्च 'सौत्थितिः' इत्यत्र परम्परया निमित्तविनाशस्य ग्रहणमिति क्लेशाश्रयणमपि नेति तात्पर्यम्। **अन्यथेति।** निमित्तविनाशसम्भावनाया अनिमित्तत्वे इत्यर्थः। **आपत्तेरिति।** तथा च नुमादिः स्यादिति भावः।

न चान्तरङ्गशास्त्राप्रवृत्तिर्बहिरङ्गशास्त्रप्रवृत्त्या निमित्तविनाशसम्भावनामूलकैतत्परिभाषाप्रवृत्त्यधीना, तादृशी सम्भावना चान्तरङ्गशास्त्राप्रवृत्त्यधीना[1], इत्यन्योन्याश्रय इति वाच्यम्, आहार्यज्ञानस्य प्रतिबध्यत्वप्रतिबन्धकत्वयोरभावेन यदीदं न स्यात्तर्हि तत् स्यादित्येवं रूपाहार्यसम्भावनायां बाधकाभावात्।

ननु 'तत्कुलम्' इत्यादावपरनिमित्तकत्वेन लुकोऽन्तरङ्गत्वात्तन्निमित्तस्य त्यदाद्यत्वेन बहिरङ्गेण विनाशसम्भवात्तदप्रवृत्तौ रूपासिद्धिः। न च लुका त्यदाद्यत्वस्यैव निमित्तविनाशादत्वस्यैवाप्रवृत्तिरस्त्विवति वाच्यम्,एवं हि विनिगमनाविरहाद् 'गोमत्प्रियः' इत्यादौ लोपेन निमित्तविनाशाल्लुकोऽप्यप्रवृत्त्यापत्तेरिति

---

१. 'शास्त्रप्रवृत्त्यधीना' इति पाठः क० पु०।

**"अल्लोपोऽनः" इति सूत्रस्थतपरकरणं तु परिभाषाऽनित्यत्वज्ञापनेन चरितार्थम्। तद्धि 'आन' इत्यादौ लोपवारणाय। अन्यथा दीर्घाभावे लोपसम्भावनयैतत्परिभाषाबलाद् दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याहुः।**

**"समर्थानाम्" इति सूत्रे कैयटस्तु समर्थवचनेनेयं परिभाषा ज्ञाप्यते 'अकृतव्यूहाः पाणिनीयाः' इति। तेन 'पपुषः' इत्यादावन्तरङ्गत्वात्पूर्वं कृतोऽपीडागमो निवर्तत इति वदन् 'न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैः' इत्यर्थमभिप्रैति। 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति यावत्। सूत्थितादिज्ञि वृद्धौ दीर्घनिवृत्तौ सावुत्थितिर्मा भूदिति समर्थानामिति।**

---

चेत्, न; समर्थग्रहणेन पश्चात्प्राप्तबहिरङ्गेण पूर्वप्राप्तान्तरङ्गस्य निमित्तविनाशसम्भावना यत्र तत्रैवैतत्परिभाषाप्रवृत्तिस्वीकारात्। 'तत्कुलम्' इत्यादावुभयोर्युगपत्प्राप्त्यैतत्परिभाषाविषयत्वासम्भवात्।

नन्वेवम् "अल्लोपोऽनः" ( पा० सू० ६।४।१३४ ) इत्यत्र तपरकरणं व्यर्थमत आह—**तपरकरणं त्विति। आन इति।** अनितेः क्विप्, अन्त्वं तु स्थानिवत्त्वेन बोध्यम्। एतेन प्रतिदिवेवाचरतीत्याचारक्विबन्तात्कर्त्तरि क्विपि 'प्रतिदीव्नः' इत्यत्र "अनुनासिकस्य०" ( पा० सू० ६।४।१५ ) इति दीर्घव्यावृत्तिरकृतव्यूहपरिभाषयेति सीरदेववृत्तिव्याख्योक्तमपास्तम्। अन्नन्तात्क्विपि, दीर्घविषये सर्वत्र यदि दीर्घो न स्यात्तर्हि लोपः स्यादिति सम्भावनया क्विपि दीर्घाप्रवृत्त्या तपरकरणव्यावर्त्यानापत्तेः[1]। **आहुः**—इत्यस्य केचिदित्यन्तेनान्वयः।

परिभाषासत्त्वेऽप्यर्थभेदान्मतान्तरमाह—**समर्थेति। कैयटस्तु**—इत्यस्य, **अभिप्रैति**–इत्यत्रान्वयः। **कृतोऽपीति।** क्रमिकान्वाख्यानपक्षे इति भावः। **सावुत्थितिर्मा भूदिति।** ननु दीर्घरूपोकारस्याच्त्वेन निमित्तत्वम्, दीर्घत्वेन नैमित्तिकत्वम्, वृद्ध्याक्त्वावच्छिन्नस्यापाये तदवच्छिन्ननैमित्तिकदीर्घापायस्य स्वत एव सिद्ध्यात्र मते 'देवदत्तहन्तृहतन्यायेन' स्थानिभूतह्रस्वोज्जीवनासम्भवेन 'सौत्थितिः इति रूपस्य सिद्धत्वात्कथमुक्तदोष इति चेत्, न; वृद्ध्या दीर्घनिमित्तस्यापायप्रसङ्गे दीर्घस्य पूर्वमेवापायाङ्गीकारेण ह्रस्वस्यापि दीर्घेण पूर्वमेव निवृत्तत्वात्, आद्यचोऽभावेन वृद्ध्यनापत्त्या 'सौत्थितिः' इत्यस्यानापत्तेरित्याशयात्। प्राचीनमते देवदत्तहन्तृहतन्यायस्यानित्यत्वेन स्थानिनोऽप्युज्जीवनमभ्युपेत्य वाऽयं ग्रन्थो योजनीयः।

ननु वृद्ध्या दीर्घनिवृत्तौ सत्यां स्थानिनिवृत्तेरभावो वक्तव्यः, स च न युक्तः, ध्वन्साभावस्य जन्याविनाशित्वेन स्थानिन उज्जीवनासम्भवात्। तथा च 'सौत्थितिः' इत्यस्य सिद्ध्या सूत्थितादावेकस्मिन्नुकार एव निमित्तनैमित्तिकभावस्य

---

१. 'व्यावर्त्यनापत्तेः' इति पाठः क० पु०।

**लोकन्यायसिद्धश्चायमर्थः। तथा हि लोके निमित्तं द्विविधं दृष्टम्—कार्यस्थितौ नियामकं तदनियामकं च।**

**आद्यं यथा न्यायनयेऽपेक्षाबुद्धिः, तन्नाशे द्वित्वनाशाभ्युपगमात्। वेदान्तिनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव।**

**द्वितीयं यथा दण्डादि, तन्नाशेऽपि घटनाशादर्शनात्। शास्त्रे लक्ष्यानुरोधाद् व्यवस्था।**

**भाविनिमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायः, नापि सम्प्रतिपन्नो दृष्टान्तः। समर्थानामित्यस्यापि लोकसिद्धार्थज्ञापनेन चारितार्थ्यसम्भवे लोकसिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति तदाशय इति बोध्यम्।**

**परे तु 'सेदुषः' इत्यादौ पदावधिकेऽन्वाख्याने 'सेद् वस् अस्' इति स्थिते**

---

गौणत्या तदभ्युपगम्य समर्थग्रहणेनोक्तार्थज्ञापनं न सहृदयाह्लादीत्यरुचेराह—**लोकन्यायेति।**

**अभ्युपगमादिति।** वस्तुतस्तु कार्यकारणभावस्योत्पत्त्यनुमेयतया नानेकत्वावगाहिरूपापेक्षाबुद्धिनाशस्य द्वित्वनाशं प्रति कारणान्तराभावात्तदव्यवधानेन तदुत्पत्त्या कारणत्वकल्पनेऽपि घटध्वंसादौ व्यभिचारेण सामान्यतः कार्यत्वावच्छिन्नध्वंसस्य कारणत्वावच्छिन्नध्वंसः कारणमिति कल्पने मानाभावेनेदमपि न लोकन्यायसिद्धमिति बोध्यम्।

**विक्षेपः**—संस्कारः। **प्रसिद्धमेवेति।** लोकेऽपि जपाकुसुमादिसान्निध्ये स्फटिके लौहित्यं तदभावे नेति प्रसिद्धम्। ननु वैपरीत्यं किं न स्यादत आह—**लक्ष्येति। न्याय इति।** ननु प्रक्षालनाद्धीति न्यायोऽस्तीति चेत्, न; तेन हि प्रसक्तदोषप्रतिविधानापेक्षयाऽप्रसक्तेरेव लाघवं बोध्यते, न तु भावितन्निमित्तविनाशे तत्प्रयुक्तकार्यस्यानुत्पत्तिरपीति भावः। पूर्वमकरणम्, कृत्वा पश्चात्तन्निवर्तनापेक्षया लघ्वित्येव बोध्यत इत्याशयात्।

**दृष्टान्त इति।** ननु वरपूजनादौ दैवज्ञमुखेन वरस्यालपायुष्यमादौ ज्ञाते विवाहादौ प्रवृत्त्यदर्शनाद्,; दृष्टान्तोऽपि प्रसिद्ध इति चेत्, न; सावित्र्युपाख्याने तत्रापि प्रवृत्तेः प्रसिद्धत्वेन व्यभिचार इत्याशयात्।

**तदाशय इति।** अरुचिबीजं तु लोके कार्यकारणभावः। क्वचित्प्रत्यक्षम्, क्वचिदानुमानिकः। तथा तद्विनाशयोरपि तत्र "इको यण्०" (पा० सू० ६।१।७७) इत्यत्राचो यण्निमित्तत्वं वाचनिकम्। तद्विनाशयोर्निमित्तनिमित्तिभावस्त्वन्वयव्यतिरेकदर्शनेन कल्पनीयः। तथा तदभावेन तस्यासम्भव इति परिभाषाया दृढतरफलाभावेन तदाश्रयणेऽस्य व्यर्थत्वाच्च। तदेतन्मनसि निधाय सिद्धान्तमाह—**परे त्विति।**

**इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वात् पूर्वं सम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति तत्सिद्धिरिति स्पष्टम् "समर्थानाम्" इति सूत्रे कैयटे, "असिद्धवत्" सूत्रे कैयटे च स्पष्टमेतत् ।**

**यद्यपि प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजम्, तथापि**

---

**प्राप्ताविति ।** ननु "णौ चङि०" ( पा० सू० ७।४।१ ) इति सूत्रे णिग्रहणाभावे पदसंस्कारपक्षे 'लौ इ अ त्'[1] इत्यत्र चङ्परोपधाया ह्रस्वभाविन्याः सम्भवेन ह्रस्वापत्तिमाशङ्क्य निमित्तनिमित्तिभावापन्नशास्त्राणां तत्तत्कार्याणां च क्रमेणैव ज्ञानेन धातुसंज्ञा, तिङुत्पत्तिचङुत्पत्तिसमय एववृद्ध्यावोर्निष्पन्नत्वज्ञानेन चङुत्तरकालिकह्रस्वेन तद्बाधायोगात्, णिग्रहणं सूत्रस्यासम्भवदुक्तिकत्ववारणार्थमित्युक्तम् ।

तद्रीत्या 'सेद् वस् अस्' इत्यत्र प्रातिपदिकसंज्ञासुबुत्पत्तिसमय एवेट्प्रवृत्त्या सुबुत्तरकालिकसम्प्रसारणेनेटो बाधायोग इति चेत्, न; पदसंस्कारपक्षेऽपि पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिपर्यन्तं निमित्तनिमित्तिभावापन्नकार्याणां क्रमेण प्रवृत्तावऽपि तदुत्तरकालं प्राप्तयोश्चङ्वृद्ध्योर्विरोधाभावेन युगपदन्तरङ्गत्वाद्वा पूर्वं वृद्ध्यावोः[2] प्रवृत्त्या चङुत्तरकालिकह्रस्वप्रवृत्तिकाले तयोर्निष्पन्नत्वेन तद्बाधायोगेन ह्रस्वभाविन्या उपधाया असम्भवेऽपि प्रकृते सद्धातोर्लिटः क्वसूत्तरकाले प्रातिपदिकसंज्ञायां सुबुत्पत्त्या[3] तत्रोभयसंज्ञया सह वसुप्रत्ययशस्प्रत्ययनिमित्तकयोरङ्गसंज्ञयोरेकप्रसरेणैव लक्ष्ये प्रवृत्तिसम्भवेनेट्समकालमेव सम्प्रसारणप्राप्तेः सूपपादत्वमित्याशयात् ।

**प्रतिपदविधित्वेति ।** ननु क्रादिसूत्रेण "नेड्वशि०" (पा० सू० ७।२।८ ) इत्यस्य नियमे फलाभावेन तदतिरिक्तस्यैव नियमेन प्राप्तवलादिलक्षणस्येटः "नेड्वशि०" ( पा० सू० ७।२।८ ) इति निषेधप्राप्तौ "वस्वेकाज्०" (पा० सू० ७।२।६७ ) इति सूत्रं विध्यर्थमिति पक्षः ।

न च क्रादिसूत्रेण "नेड्वशि०" ( पा० सू० ७।२।८ ) इत्यस्यापि नियमे 'बिभिदिवान्[4]' इत्यत्र क्रादिनियमेनेट् सिद्ध्यति । तदतिरिक्तस्यैव नियमे तेन प्राप्तस्य 'नेड्वशि०' ( पा० सू० ७।२।८ ) इति निषेधे 'बिभिद्वान्' इति रूपे विशेष इति वाच्यम्, "नेड्वशि०" ( पा० सू० ७।२।८ ) इत्यस्यापि नियमपक्षे 'सेदिवान्' इत्यत्रापि क्रादिनियमेनैवेट्सिद्ध्या "वस्वेकाज्०" (पा० सू०७।२।६७) इति सूत्रस्य नियमार्थत्वेन, एभ्य एवेट्प्रवृत्त्या 'बिभिद्वान्' इत्यत्रेटः प्रवृत्त्या फले विशेषासम्भवात् ।

---

१. 'ल इ अ त' इति पाठः क० पु० । २. 'वृद्ध्यायोः' इति पाठः क० पु० ।
३. 'सूत्पत्त्या' इति पाठः क० पु० । ४. 'बैभिदिबान्' इति पाठः क० पु० ।

**पूर्वप्रवृत्तौ सावकाशत्वेऽपि नियामकं भवत्येवेति तदाशयः। निरूपितं चैतद् बहुशः शब्देन्दुशेखरादौ।**

---

एवञ्च "वस्वेकाज्०" ( पा० सू० ७।२।६७ ) इति सूत्रं विध्यर्थमिति पक्षे, नियमार्थमिति पक्षे च, नियमशास्त्राणां विधिमुखेनैव प्रवृत्तेरुभयथा-पीडागमस्यापि प्रतिपदोक्तत्वसम्भवात् परत्वादिट् स्यादिति चेत्, न; नियमस्य निषेधमुखेन प्रवृत्तिरिति पक्षे, "आर्धधातुक०" (पा० सू० ७।२।३५) इत्यनेनैवेटः प्राप्त्या तदपेक्षया सम्प्रसारणस्य प्रतिपदविधित्वमित्याशयात्। विधिमुखेन प्रवृत्तिरिति पक्षे "रुदादिभ्यः०" ( पा० सू० ७।२।७६ ) इत्यत्र वलादेरित्यनु-वृत्तेरावश्यकतया मध्ये "वस्वेकाज्०" ( पा० सू० ७।२।६७ ) इत्यत्रापि तत्सम्बन्धेन सम्प्रसारणे वलादित्वाभावेनेटोऽनित्यत्वात्, सम्प्रसारणस्य नित्यत्वेना-दोषात्।

न च सम्प्रसारणस्य बहिरङ्गत्वेनासिद्धत्वादिटोऽपि नित्यत्वं तुल्यम्, सम्प्रसारणस्यासिद्धत्वेऽपि पूर्वरूपस्यासिद्धत्वाभावेनेटोऽप्राप्तेः। किञ्च "वस्वे-काज्०" (पा० सू० ७।२।६७) इत्यस्य एकाजाद्धसामनन्तरो यो वसुस्तदङ्गावयवस्य वलाद्यार्धधातुकस्येट्—इत्यर्थेनास्यापि बहिरङ्गत्वेनोभयोः समत्वात्। अतिदेश-विषये "असिद्धवत्०" ( पा० सू० ६।४।२२ ) सूत्रकैयटोक्तेन "लक्षणान्तरेण०" ( परि० ४५ ) इति न्यायेनास्यानित्यत्वात्।

न चान्तरङ्गत्वादिडापत्तिः, आतिदेशिकलिण्णिमित्तद्वित्वाभ्याससंज्ञाभ्यास-लोपनियमापेक्षे उपेक्षया श्रूयमाणशस्निमित्तसम्प्रसारणस्यैवान्तरङ्गत्वात्, प्रतिपदोक्तत्वाच्च पूर्वं प्रवृत्तिरिति न दोषः।

केचित्तु पूर्वमिडागमेऽपि सम्प्रसारणे, पूर्वरूपे, यणि सम्प्रसारणस्यासिद्ध-त्वात्, वलिलोपे रूपं सिद्धम्। न च पूर्वरूपस्य न बहिरङ्गत्वमिति वाच्यम्, 'पट्व्या' 'मृद्व्या' इत्यत्रेव पूर्वं यणि, पूर्वस्थितवकारनिमित्तकलोपापेक्षया परभूतोकारनिमित्तकपूर्वरूपस्य बहिरङ्गत्वेन पूर्वमेव लोपे बाधकाभावादित्याहुः।

**नियामकमिति।** अत्र मानं त्वधिकारादेव विकारावयवयोर्लाभे पुनस्तदर्थम् "मयड्वैतयोः०" ( पा० सू० ४।३।१४३ ) इति सूत्रस्थमेतयोरिति ग्रहणम्। तद्धि बिल्वाद्यण्विषये पुनर्विधानेन मयट्प्रवृत्त्यर्थम्। यदि प्रतिपदविधेर्बलवत्त्वं न स्यात्तर्हि मयटो वैकल्पिकत्वेन तदभावे बिल्वाद्यणश्चारितार्थ्यान्मयटा परत्वा-द्बिल्वाद्यणो बाधो भविष्यतीति तद्व्यर्थमेव स्यादिति भाष्ये स्पष्टम्।

मम तु प्रतिपदविधेः सावकाशत्वेऽपि पूर्वप्रवृत्तौ नियामकत्वेनाणः प्राप्तौ तद्विषयेऽपि मयटः प्रतिप्रसवार्थं तच्चरितार्थम्। यदि त्वपवादस्य नित्यत्वेन स्वविषये सर्वत्र नित्यमेव प्रवृत्तौ, उत्सर्गस्य तद्विषयेऽप्राप्तावेतयोरिति पुनर्वि-

**"समर्थानाम्" इति सूत्रस्थसमर्थग्रहणं तु 'विषुणः' इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तथा भ्रमवारणाय न्यायसिद्धार्थानुवाद एव ।**

**ध्वनितं चेदम् "विप्रतिषेध" सूत्रे भाष्ये । तत्र हि 'वैक्षमणिः' इत्यन्तरङ्ग-परिभाषोदाहरणमुक्तम् ।**

**किञ्च विभज्यान्वाख्याने 'सु उत्थित अस् इ' इति स्थिते 'वार्णादाङ्गं बलीयः' इति प्राप्तवृद्धिवारणाय समर्थग्रहणमित्यत्रैव कैयटे स्पष्टम् ।**

---

धानमपवादविषयेऽप्युत्सर्गसमावेशार्थमिति न तज्ज्ञापकमित्युच्यते, तदा प्रतिपद-विधेर्बलवत्त्वं शीघ्रोपस्थितिमूलकमेवेति बोध्यम् ।

न चैवम् 'स्त्रीणाम्' 'इयाय' इत्यादावियङः "इणो यण्" ( पा० सू० ६।४।८१ ) इति यण् च स्यादिति वाच्यम्, तस्य क्वाचित्कत्वेनादोषात् ।

ननु परिभाषानङ्गीकारे समर्थग्रहणं व्यर्थमत आह—**समर्थग्रहणमिति । विषुण इत्यादाविति ।** आदिना 'सौमेन्द्रः' इत्यादिसङ्ग्रहः । **वारणायेति ।** समर्थ-ग्रहणाभावे 'विषुणः' इत्यादिप्रयोगेष्वकृतसन्धेः प्रत्ययदर्शनेन 'वैक्षमाणिः' इत्यादि-प्रयोगेऽप्यकृतसंधिभ्य एव प्रत्ययस्य प्रसङ्ग इति भ्रमः स्यात् । समर्थग्रहणे कृते त्वन्तरङ्गकार्यप्रवृत्त्युत्तरमेव तत्प्रवृत्तिरिति ( स्पष्टं प्रतिपत्तिरिति ? ) तच्चरितार्थमिति भावः ।

समर्थग्रहणस्यान्तरङ्गपरिभाषासिद्धार्थानुवादकत्वे मानमाह—**ध्वनितमिति ।** वृद्धेरेकादेशेनान्तरङ्गत्वात् 'वैक्षमाणिः' इत्यादिनेति भावः । **समर्थग्रहणमिति ।** इदमेव परस्य विभज्यान्वाख्याने गमकमिति बोध्यम् ।

ननु लोकानां भ्रमवारणाय समर्थग्रहणमिति न युक्तम्, सूत्रप्रणयनकाले "विष्वग्०" ( का० वा० ५।२।१०० ) इति वार्त्तिकस्यैवाभावेन तदनुरोधेन भ्रमकल्पनस्यानुचितत्वात् । न च वार्त्तिकाभावेऽपि 'विषुणः' इति प्रयोगदर्शनेन भ्रमसम्भव इति वाच्यम्, 'वैक्षमाणिः' इत्याद्यनेकप्रयोगेषु कृतसंधिभ्य एव प्रत्यय-दर्शनेन 'विषुणः' इत्यत्रापि कृतसंधेरेव प्रत्यय इति भ्रमः स्यात्, न तु 'वैक्षमाणिः' इत्यादावकृतसंधिभ्य इति ।

तथा च 'विषुणः' इत्यत्र कृतसंधिभ्य एव प्रत्यय इति भ्रमस्य समर्थग्रह-णेनाव्यावृत्त्या तस्य तत्फलकत्वं नोचितमित्यरुचेराह—**किञ्चेति । वारणायेति ।** पदस्य विभज्यान्वाख्यानेऽकृतसंधेरपि प्रत्यस्य सम्भवेन वार्णपरिभाषया वृद्धिः स्यात् । समर्थग्रहणे कृते तु निमित्तनिमित्तिभावापन्नकार्याणां क्रमेणैव प्रवृत्त्या तत्पक्षे कृतसंधिभ्य एव प्रत्यय इति न दोष इति तदाशयः ।

ननु वार्णपरिभाषाया अनित्यत्वादेवोक्तस्थले दीर्घसिद्धचा समर्थग्रहणम-नन्यार्थं सत्तज्ज्ञापकमेव । अत एव तत्र सूत्रे समर्थग्रहणमसमर्थान्मा भूदित्युक्त्वा

**अत एव "असिद्धवत्" सूत्रे 'वसुसम्प्रसारणमज्विधौ सिद्धं वक्तव्यम्' 'पपुषः' इत्यादौ वसोः सम्प्रसारणे कृते आतो लोपो यथा स्यात्' इति भाष्ये उक्तम् । पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं सम्प्रसारणे इटोऽप्राप्त्या वुस्निमित्तक एवाऽऽतो लोप इति तदाशयः । अन्यथाऽन्तरङ्गत्वादिटि तन्निमित्तक एवातो लोप इति तदसङ्गतिः ।**

**अत एव 'चौ प्रत्यङ्गस्य प्रतिषेधः' इति वचनं वार्त्तिककृताऽऽरब्धम्,**

---

समर्थपरिभाषयैव तत्सिद्धेः 'अथैतत्समर्थवचनं न कर्त्तव्यम, कर्त्तव्यम्, किं प्रयोजनम्, समर्थादुत्पत्त्यर्थम्[1]' इति भाष्यमुपादायान्तरङ्गत्वाद् वार्णकार्येषु कृतेषु प्रत्ययोत्पत्तिः सिद्धेति व्यर्थं सदेतज्ज्ञापकमिति तदाशयप्रदर्शनपरकैयटग्रन्थश्च सङ्गच्छते ।

अस्या लोकसिद्धत्वात्कण्ठतो भाष्यकृतानुक्तापि, समर्थग्रहणं न कर्त्तव्यम्, फलाभावादिति पूर्वपक्षिणोक्ते, कर्त्तव्यमिति निर्हेतुकवचनानुपपत्त्या भाष्यकृत-सम्मतेत्युन्नीयत इति तदाशयः ।

एवञ्च तज्ज्ञापकत्वं तस्य युक्तमेवेत्यरुचेराह—**अत एवेति ।** प्रतिपदोक्तत्वेन पूर्वं सम्प्रसारणाभ्युपगमादेवेत्यर्थः । यद्यपि तत्र सूत्रे क्रमेणान्वाख्यानमिति पक्षेऽन्त-रङ्गत्वादिटमाशङ्क्य, पदस्य विभज्यान्वाख्यानपक्षे पूर्वोक्तान्तरङ्गबहिरङ्गभावा-नङ्गीकारेण 'पपा वस् अस्' इति स्थिते नित्यत्वादिटं बाधित्वा सम्प्रसारण-मित्युक्तम् । तथापि नित्यत्वादित्यस्य प्रतिपदविधित्वेनेडागमात्पूर्वमस्रूपकर्तव्य-त्वादित्यर्थः । अन्यथा क्रमिकत्वप्रयुक्तान्तरङ्गत्वस्य निवृत्तावप्यपरनिमित्तकत्वेन पूर्वोपस्थितनिमित्तकत्वेन चान्तरङ्गत्वस्येटि सम्भवेन सम्प्रसारणस्य नित्यत्वाभि-धानमसङ्गतं स्यादिति बोध्यम् ।

**तदसङ्गतिरिति ।** उस्निमित्तकातो लोपाभावेनासिद्धत्वाप्राप्त्या वचनम-सङ्गतमिति भावः । नन्विटो निवृत्तौ तन्निमित्तकातो लोपोऽपि निवर्तेत, उसस्तन्निमित्तत्वेऽप्यसिद्धत्वात्पुनरालोपो न स्यादिति, मन्मतेऽपि पुनर्लोपार्थं वचनमावश्यकमिति, न तद्वैय्यर्थ्यमिति चेत्, न, तथा सति पुनर्लोपाकरणलाघवा-नुरोधेन 'वसुसम्प्रसारणेऽज्विधिस्सिद्धः' इत्यजादेशस्यानिवृत्तिविधानेनैवेष्टसिद्धा-वुक्तवार्तिकवैय्यर्थ्यस्य तादवस्थ्यमित्याशयात् । किञ्च लक्ष्ये लक्षणस्येति न्यायेन पुनराल्लोपाप्राप्त्या वार्तिकवैय्यर्थ्यस्य सूपपादत्वात् । अस्मादेव वार्तिकात् तन्न्यायाप्रवृत्त्या पुनर्लोपार्थं तच्चरितार्थमिति चेत्, इत एवारुचेराह- **अत एवेति ।** स्थानिवद्भावेन प्राप्तयण्निवृत्तये तु न तद्वार्तिकम् "न पदान्त०" ( पा० सू० १।१।५८ ) इति निषेधात् ।

---

१. व्या० म० भा० पा० सू० ४।१।८२ ।

२. 'स्य तादवस्थ्य' इति क० पु० नास्ति ।

**भाष्यकृता च न प्रत्याख्यातम्। प्रत्यङ्गम्—अन्तरङ्गम्। अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव।**

**अत एव "च्छ्वोः" इति सूत्रे 'अवश्यमत्र तुगभावार्थो यत्नः कार्यः, अन्तरङ्गत्वाद्धि तुक् प्राप्नोति' इति भाष्ये उक्तम्। एतत्सत्त्वे तु तुकोऽप्राप्त्या यत्नावश्यकत्वकथनमसङ्गतमिति स्पष्टमेव।**

**न चैतदनित्यत्वज्ञापनार्थमेव तदिति तदाशयः, अवश्यमत्रेत्यक्षरस्वारस्यभङ्गापत्तेः।**

**किञ्चानयैव "प्रत्ययोत्तरपदयोश्च" "अदो जग्धिर्ल्यप्ति किति" इत्यनयोश्चारितार्थ्येन तज्ज्ञापकवशाल्लुग्ल्यपोरन्तरङ्गबाधकता भाष्योक्ता भज्येत।**

**किञ्चैषा भाष्ये न दृश्यते। तदुक्तम् "असिद्धवत्" सूत्रे कैयटेन "निमित्तापाये नैमित्तिकस्याप्यपायः' इति परिभाषायाः 'भाष्यकृताऽनाश्रयणात्' इति। पदसंस्कारपक्षे 'हरिः' इत्यादौ विसर्गे कृते ततो गच्छतीत्यादिसम्बन्धे 'हरिः गच्छति' इत्याद्येव साधु। तद्विषये पदसंस्कारपक्षानाश्रयणं वेति दिक्॥ ५७॥**

---

ननु "चौ" ( पा० सू० ६।३।१३८ ) इति दीर्घविधिसामर्थ्यादेवाजादेशव्यावृत्त्या त्वन्मतेऽपीदं व्यर्थमिति चेत्, न; 'कर्त्रचः' 'गोचः' इत्याद्यर्थं तस्यावश्यकत्वात्। ननु परिभाषयाऽऽदेशस्य निवृत्तावपि देवदत्तहन्तृहतन्यायेन स्थानिभूतेकारस्याश्रवणापत्त्या रूपासिद्ध्यान्तरङ्गस्य पूर्वमप्रवृत्तये वार्तिकं चरितार्थमित्यरुचेराह—**अत एवेति।**

नन्वस्यानित्यत्वाभिप्रायेणापि योजयितुं शक्यत्वान्नेदमसाधारणं गमकमिति प्राचोक्तम् 'तुष्यतु दुर्जनन्यायेन' अभ्युपेत्याह—**किञ्चेति।** ननु "अकृतव्यूह०" ( परि० ५७ ) इत्यस्याभावे क्वचिदिष्टासिद्धिरतः फलवलादियमावश्यकीत्यत आह—**हरिरित्यादाविति।** आदिना 'हरिः हसति' इत्यस्य सङ्ग्रहः।

ननु "विसर्जनीयस्य सः" ( पा० सू० ८।३।३४ ) इति सूत्रे भाष्ये खरीति नानुवर्तते, फलाभावात्। न चोभयत्र सत्वप्रसङ्गः, विसर्गविधेर्वैयर्थ्यापत्तेः। न चावसाने एव सत्वापत्तिः, "शर्परे विसर्जनीयः" ( पा० सू० ८।३।३५ ) इति ज्ञापकेन खर्येव तस्य प्रवृत्तेर्न दोष इत्युक्तम्। त्वन्मते 'हरिः गच्छति' इत्यत्र जिह्वामूलीयवारणाय "कुप्वोः०" ( पा० सू० ८।३।३७ ) इत्यत्र खरीत्यनुवृत्तेरावश्यकतया तदसङ्गतिरत आह—**पदसंस्कारेति।**

ननु 'अहिरहिर्बुध्यस्व, नृभिर्नृभिः' इत्यत्र विसर्गवारणायेयमावश्यकी, न च पूर्वं द्वित्वे पश्चाद्रुत्वेनेष्टसिद्धिः, "पूर्वत्रासिद्धीयमद्वित्वे" ( परि० १२६ ) इति वचनात्पूर्वं रुत्वविसर्गयोरापत्तेरिति चेत्, न, "पूर्वत्रासिद्धीयमद्वित्वे" (परि० १२६) इत्यस्यानित्यत्वेनादोषात्।

नन्वेवमपि 'स्थाता' 'स्नाति' इत्यत्र "धात्वादेः षः सः" ( पा० सू० ६।१।६४ ) इति सत्वे ठत्वणत्वस्य निवृत्त्यनापत्तिः, निमित्तापाय इति परिभाषाया अभावात् ।

न च धातुस्वरूपबोधनाय भ्वादिषु पठ्यमाने तस्मिन् लाघवेन शास्त्रप्रवृत्तये षोपदेशत्वबोधनार्थं षकारस्य निपातनेऽपि ठकारणकारस्य लक्षण-वशनिष्पन्नत्वेन "तिष्ठतेरित्" ( पा० सू० ७।४।५ ) इत्यादौ 'स्था' धातोरिव 'नकारजावनुस्वार' इत्यभियुक्तोक्त्या[1] थकारनकारघटितस्यैव बोधविषयतया प्रसज्यमाने 'स्नाति' इत्यादौ सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया सत्वात्पूर्वं ष्टुत्वादेः[2] अप्रवृत्त्या न दोष इति वाच्यम्, तथाङ्गीकारे 'औजिढत्' इत्यस्या-सिद्धिप्रसङ्गात् ।

तथा हि सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यलक्ष्ये पूर्वं त्रैपादिकस्या-प्रवृत्त्यङ्गीकारे 'औजिढत्' इत्यादावन्तरङ्गढत्वादीनामप्रवृत्त्या हतिशब्दस्यैव द्वित्वे उत्तरखण्डे ढत्वादिषु कृतेषु ढलोपदीर्घप्रसङ्गः । उकारस्य दीर्घाप्रसङ्गश्च । ततश्च 'मा भवानुजीढत्' इति स्यात् ।

मम तु पूर्वमेव ढत्वदीर्घादिषु कृतेषु पुनर्न दीर्घप्राप्तिः, द्विवर्चननिष्पन्नस्य ढकारस्य लोपानिमित्तत्वात् । न चाभ्यासे जकारस्य श्रवणार्थम् "पूर्वत्रासिद्धीयम-द्वित्वे" ( परि० १२६ ) इत्यस्यानित्यनेन पूर्वं ढत्वादीनामप्रवृत्त्या तवापि जायमानद्विर्वचनहतिशब्दस्यैवेत्युत्तरखण्डे ढत्वादिप्रवृत्त्या दीर्घो दुर्वार इति वाच्यम्, ढिशब्दस्य द्वित्वेऽप्यभ्यासकार्ये ढत्वलोपादीनामसिद्धत्वेन हकारबुद्ध्या चुत्वप्रवृत्त्या जकारश्रवणोपपत्तेः ।

न चाभ्यासे श्रूयमाणस्य ढकारस्य प्रत्ययस्थानिकत्वेन हकारस्थानिकत्वा-भावात्, तस्यासिद्धत्वेऽपि हकारबुद्ध्यभावात्, चुत्वाप्राप्त्या जकारश्रवणानापत्तिः, ढलोपस्यासिद्धत्वेऽपि हकारस्य श्रूयमाणत्वाभावेनोच्चारणप्रसङ्गरूपषष्ठ्यर्था-भावादिति वाच्यम्, 'मनोरथः' इत्यत्र शब्दरत्नोक्तरीत्यालोपाभावस्य प्रतियोगि-रूपतया हकारघटितस्य प्रसक्तिसम्भवेन चुत्वसिद्ध्या जकारश्रवणोपपत्तेः ।

न च प्रत्ययरूपढिशब्दस्यैव द्वित्वेन प्रकृतिसम्बन्धिहकारस्याभ्यासानवयव-त्वाच्चुत्वं न स्यादिति वाच्यम्, अभ्याससंज्ञायां ढत्वढलोपादेरसिद्धतया हति-शब्दस्यैवाभ्याससंज्ञाङ्गीकारेणादोषात् ।

---

१. नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चेद् रषाट्टवर्गस्तवर्गजः ।। इत्यभियुक्तोक्त्येत्यर्थः ।

२. 'षत्वादेः' इति पाठः क० पु० ।

न चैवम् 'औडिढत्' इत्यस्यासिद्धिः, 'अद्विर्वचने' इत्यस्य द्वित्वे कृते तदाश्रयस्य कार्यान्तरे कर्तव्येऽप्यसिद्धत्वनिषेधमते तत्सिद्धेरिति चेत्, सत्यम्, त्रैपादिककार्यप्रतिबन्धकसपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायामेव त्रैपादिकस्याप्रवृत्त्या द्वित्वस्य त्रैपादिकढत्वादिप्रतिबन्धकत्वाभावेन न दोष इति दिक्। 'हृतिशब्दस्य द्वित्वम्' इति मूलमते तु—'औजिढत्' इत्यत्र द्वित्वस्य चङ्निमित्तत्वेन बहिरङ्गत्वेनासिद्धत्वान्न दीर्घः।

ननूक्तपरिभाषाङ्गीकारे[1] उपेन्द्रदत्तशब्दादनुकम्पायां कनि "अनजादौ च विभाषा०" ( का० वा० ५।३।८३ ) इत्युत्तरपदलोपे 'उपकः' इति रूपम्, एतत्परिभाषाभावे पूर्वं गुणे "द्वितीयं सन्यक्षरं चेत्तदार्लोपः०" ( का० वा० ५।३।८३ ) इति एन्द्रदत्तशब्दस्य लोपे पूर्वपदेऽकारश्रवणानापत्तिः। न च "प्राचामुपादेरडज्वुचौ च" ( पा० सू० ५।३।८० ) इति वुचि 'उपकः' इति सिद्धमिति वाच्यम्, कन्पक्षेऽनिष्टापत्तेः।

न च तद्धितविधौ समर्थग्रहणेनास्या अप्रवृत्तावुक्तदोषो दुर्वार इति वाच्यम्, प्राग्दिशीयात्पूर्वमेव समर्थग्रहणस्य निवृत्तेरुक्तत्वेनैतत्परिभाषाप्रवृत्तेः सूपपादत्वात्।

न च 'उपकः' इति प्रतीके "पूर्वोत्तरपदनिमित्तकार्यात्०" ( परि० ५३ ) इति परिभाषया पूर्वमेकादेशाप्रवृत्त्या पूर्वमुत्तरपदस्य लोप इति शेखरोक्तरीत्या निर्वाह इति वाच्यम्, उत्तरकालप्रवृत्तिकस्य बहिरङ्गस्य पूर्वोत्तरपदनिमित्तकत्वं यत्र, तत्र पूर्वमन्तरङ्गाप्रवृत्तावपि 'कहोडः' 'कहिकः' इति भाष्योदाहरणे "द्वितीयं सन्ध्यक्षरं चेत्०" (का० वा० ५।३।८३) इत्यस्यैकपदेऽपि प्रवृत्त्या तस्य पूर्वोत्तरपदनिमित्तकत्वाभावेनैतत्परिभाषाविषयत्वासम्भवादिति चेत्, न; धर्मिग्राहकमानबलेन यत्रान्तरङ्गाप्रवृत्तौ पूर्वोत्तरपदनिमित्तकबहिरङ्गप्रवृत्तिसम्भावना, तत्र पूर्वमन्तरङ्गं न प्रवर्तत इत्यर्थात्। "अजिनान्तस्योत्तरपदलोपश्च" ( पा० सू० ५।३।८२ ) इत्यत उत्तरपदलोप इत्यस्य "ठाजादौ०" ( पा० सू० ५।३।८३ ) इति "अनजादौ०" ( का० वा० ५।३।८३ ) इति वार्तिके चानुवर्त्य द्वितीयादच ऊर्ध्वं वर्तमानस्योत्तरपदस्य लोप इत्यर्थेनास्याप्युत्तरपदनिमित्तककार्यत्वेनैतद्विषये तद्धितोत्पत्तेः पूर्वमपि संधिकार्याप्रवृत्तेरदोषात्।

न चैवम् 'षडिकः' इत्यस्यासिद्धिप्रसङ्गः, द्वितीयादच ऊर्ध्वं वर्तमानस्यानुत्तरपदत्वादिति वाच्यम्, "षषष्ठाजादि०" ( का० वा० ५।३।८३ ) इति वार्तिके उत्तरपदस्येत्यस्यासम्बन्धेन द्वितीयादच ऊर्ध्वमनुत्तरपदस्यापि लोपेनादोषात्।

न चैवमपि 'वाय्वाशीर्दत्तः 'वायुकः' इत्यस्यासिद्धिः, अत्रैकादेशाभावेन परिभाषाया अप्राप्तेः। परिभाषायामेकादेशपदस्यादेशमात्रोपलक्षणत्वाङ्गीकारे-

१. 'परिभाषानङ्गीकारे' इत्यपपाठः क० पु०।

**'अन्तरङ्गादप्यपवादो बलीयान्'**[1]

**तत्रापवादपदार्थमाह—**

**येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ॥ ५८ ॥**

**प्राप्त इति भावे क्तः, येन नाप्राप्त इत्यस्य यत्कर्तृकावश्यप्राप्ताविंत्यर्थः । नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् ।**

---

णादोषात् । "विष्वग्०" ( का० वा० ५।२।१०० ) इति वार्तिके कृताऽकृतसन्धिग्रहणं तु एतत्फलितार्थपरमेवेति सुधियो विभायन्तु ।

दरिद्रातेर्लङि 'अदिरिद्रा झि' इति स्थिते "जक्षित्यादयः०" ( पा० सू०-६।१।६ ) इत्यभ्यस्तत्वात् "सिजभ्यस्त०" ( पा० सू० ३।४।१०९ ) इति जुसि प्राप्ते, तमपोद्य "लङश्शाकटायनस्य" ( पा० सू० ३।४।१११ ) इति वैकल्पिके जुसि प्राप्ते, तं बाधित्वा परत्वात् "श्नाभ्यस्तयोरातः" ( पा० सू० ६।४।११२ ) इति आलोपे, वैकल्पिकजुसोऽप्राप्त्याभ्यस्तलक्षणे नित्यं जुसि, सिद्धम् 'अदरिद्रुः' इति ।

न चैतत्परिभाषाभावे आलोपापवादभूत"इद्दरिद्रस्य" (पा. सू. ६।४।११४) इतीत्त्वापत्तिः । सत्यां तु परिभाषायां भाविजुसादेशेन, निमित्तभूतहलादित्वस्य नाशसम्भावनयेत्त्वाप्रवृत्तिरिति न दोष इति वाच्यम्, उपदेशिवद्वचनेन पूर्वमेवाऽन्तिभावे, ततश्चातो लोपेऽभ्यस्तलक्षणजुसीष्टसिद्धेः । पञ्चमीसमास्यानित्यत्वान्न स्थानिवद्भावः । एतेनाऽड्डुधातोः क्विपि, अनया ष्टुत्वाप्रवृत्त्या पूर्वं संयोगान्तलोपे, अदिति रूपमस्याः फलमित्यपास्तम् ॥ ५७ ॥

**भावे क्त इति ।** "गत्यर्था०" ( पा० सू० ३।४।७२ ) इति अविवक्षितकर्मतयाऽकर्मतया "नपुंसके भावे क्तः" ( पा० सू० ३।३।११४ ) इति वा विहित इत्यर्थो येनेति कर्तरि तृतीया । "नपुंसके भावे क्तस्य योगे षष्ठी" ( का० वा० २।३।६७ ) इति वार्तिकस्य शेषत्वविवक्षया भाष्ये प्रत्याख्यानात् । **'नाप्राप्ते'** इत्यत्र नैकधेतिवद् 'न' शब्देन समासः । पृषोदरादित्वाद्वा नुडभावः साधुः । एतद्भाष्यमेवात्र मानम् ।

अवश्यमित्यर्थलाभे बीजमाहः—**दार्ढ्येति ।** तदुक्तम् "विनञ्भ्याम्०" ( पा. सू. ५।२।२७ ) इति सूत्रे भाष्ये 'द्वौ प्रतिषेधौ प्रकृतार्थं सङ्गमयतः, न न, सह

---

१. कतिपयसंस्करणे यद्यपि 'अन्तरङ्गादप्यपवादो बलीयान्' इत्यपि परिभाषारूपेणाङ्गीकृतम्, किन्तु 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इत्यनेन गतार्थत्वात्, नागेशलेखस्वरसात्, परिभाषापाठे पठितत्वात्, चन्द्रिकाकारेण धृतत्वात्, सिद्धान्तकौमुद्याञ्च भट्टोजिदीक्षितेनापि स्वीकृतत्वात्' 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इत्येवात्र परिभाषारूपेण सर्वमङ्गलाकारेणापि स्वीकृतम् ।

**एवञ्च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधः।**

---

सहैवेत्यर्थः' इति। अत एव 'येन प्राप्ते' इति विहाय 'येन नाप्राप्ते' इत्युक्तम्। प्राप्तावावश्यकत्वञ्च कृताकृतप्रसङ्गित्वरूपम्, लौकिकतक्रदृष्टान्तेन तथैव लाभात्।

न च विशेषधर्मावच्छिन्नोद्देश्यकस्यैव विशेषशास्त्रत्वेन, **विशेषधर्मावच्छिन्नेति**—विशेष्योपादानं व्यर्थमिति वाच्यम्, **विशेषशास्त्रे**- इत्यस्य तत्त्वेनाभिमतशास्त्रे इत्यर्थेनादोषात्। एवञ्चापवादप्रवृत्त्यप्रतिहतप्रवृत्तियोग्यताकत्वमिति यावत्।

एतत्फलितमाह—**एवञ्चेति**। विशेषशास्त्रोद्देश्यभूतं यद्विशेषधर्मावच्छिन्नम्, तन्निष्ठो यः सामान्यधर्मः, तद्रूपविशिष्टोद्देश्यकस्य तेन बाध इत्यर्थः। अत्र धर्मे विशेषत्वसामान्यत्वे व्याप्यत्वव्यापकत्वरूपे। व्याप्यत्वञ्च स्वाधिकरणनिष्ठभेदप्रतियोगितावच्छेदकत्वे सति स्वाधिकरणवृत्तित्वम्। स्वपदमुत्सर्गशास्त्रीयोद्देश्यतावच्छेदकधर्मपरम्। यथा कर्त्तरि शपः श्नमा बाधः। तथा हि स्वाधिकरणं कर्त्रर्थसार्वधातुकपरधातुत्वम्, तन्निष्ठो यो रुधादिभेदस्तत्प्रतियोगितावच्छेदकं तादृशरुधादित्वम्, तत्त्वे सति, स्वाधिकरणं कर्त्रर्थसार्वधातुकपरधातु रुधादिरेव, तद्वृत्तित्वं रुधादित्वस्यास्तीति लक्षणसमन्वयः। लोकेऽपि पृथित्वघटत्वयोरुक्तरीत्या समन्वयो बोध्यः।

न च स्वम्-अजादिविभक्तिपरकतिसृशब्दत्वम्, स्वाधिकरणं तिसृ-शस्-इति, तत्र वर्त्तमानो यो भेदः जस्परकह्रस्वान्ताङ्गत्वावच्छिन्नप्रतियोगिताको भेदः, तादृशभेदे प्रतियोगितावच्छेदकं जस्परकह्रस्वान्ताङ्गत्वम्, तस्य स्वाधिकरणं तिसृ-जसिति, तद्वृत्तित्वमप्यस्तीति, अचिरादेशस्य गुणादेशस्य चोक्तरीत्या परस्परं विशेषशास्त्रत्वापत्त्या रेफेण गुणादेर्बाधवत्, गुणादिनापि रेफस्य बाधापत्तिरिति वाच्यम्, तत्र पूर्वोक्तावश्यप्राप्त्यसम्भवेन तक्रन्यायमूलकैतत्परिभाषाया अप्राप्त्या एतद्भिन्नेऽनवकाशत्वेनैव बाधस्वीकारेणादोषात्।

नन्वेवं सुड्विधेर्नुड्विध्यपेक्षया विशेषशास्त्रत्ववन्नुड्विधेरपि विशेषशास्त्रत्वापत्तिः। एवमकारान्तसर्वनामप्रकृतिकाम्त्वम्, तदधिकरणम् 'सर्वा आम्' इति, तन्निष्ठो यो ह्रस्वान्तप्रकृतिकाम्-भेदः तत्प्रतियोगितावच्छेदकत्वे सति स्वाधिकरणं 'सर्वेषाम्' इत्यपि, तद्वृत्तित्वस्य ह्रस्वान्तप्रकृतिकाम्त्वे विद्यमानत्वात्।

न चानवकाशत्वेनैव सुटा नुटो बाधोऽस्तु, न तु तक्रन्यायेनेति वाच्यम्, तथा सति सुडुत्तरमपि नुडापत्तेरिति चेत्, न; 'सर्व आम्' इत्यत्र विशेषशास्त्रोद्देश्यता-

**तदप्राप्तियोग्येऽचारितार्थ्यं ह्यतस्य बाधकत्वे बीजम् । अत एव**

---

वच्छेदकीभूतयत्किञ्चिद्रूपावच्छिन्नप्रतियोगिताकभेदस्य सम्भवेऽपि विशेषशास्त्रो-द्देश्यतावच्छेदकतावद्धर्मविशिष्टप्रतियोगिताकभेदस्य विवक्षणेनाबन्तत्वावच्छिन्न-भेदस्यात्रासम्भवेन तस्य स्वपदेन ग्रहणासम्भवात् ।

न चैवमपि ङेरामपेक्षया याड्विधेरपि विशेषशास्त्रत्वं दुर्वारम्, स्वाधिकरणे 'ग्रामणी ङि' इत्यत्राबन्तप्रकृतिकङित्त्वावच्छिन्नभेदस्य सम्भवादिति वाच्यम्, स्वपदाभ्यामेकस्यैव धर्मस्य ग्रहणेनादोषात् ।

न च 'रमायाम्' इत्यादावामादेशेन याटो बाधापत्तिः, उत्सर्गस्य नित्यत्व-वल्लोकदृष्टान्तेनापवादस्यापि कृताकृतप्रसङ्गित्वरूपनित्यत्वविशिष्टस्यैव तक्रन्यायेन बाधकत्वस्वीकारात् । न चैवं श्नमा शपो बाधानापत्तिरनित्यत्वादिति वाच्यम्, विकरणानां कर्त्राद्यर्थद्योतकत्वेन कर्त्रर्थसार्वधातुकपरत्वेन श्नमोऽपि नित्यत्वसम्भ-वात् । कर्तृवाचकत्वं तिङामपि नेति तत्रैव शेखरे स्पष्टम् ।

न चैवमपि 'अटिटिषति' इत्यादौ द्वितीयैकाच्त्वस्य प्रथमैकाच्यवृत्तित्वात् तस्याव्याप्यत्वापत्तिरिति वाच्यम, एकाच्पदे बहुव्रीह्याश्रयणेन लिट्परकधात्ववयव-प्रथमैकाच्त्वस्य प्रथमैकाज्रूपतया तदधिकरणत्वस्य धातौ सत्त्वेनोक्तदोषा-नवतारात् ।

न चैवमपि "मिदचोऽन्त्यात्०" ( पा० सू० १।१।४७ ) इत्यनेन स्थाने-योगत्वस्य चानेन न्यायेन बाधात् 'पयांसि' इत्यादौ न दोष इति भाष्ये उक्तम्, तच्च न सम्भवति, परिभाषालिङ्गभूतयोर्मित्त्वषष्ठ्यन्तत्वयोर्व्याप्यव्यापकभावस्य दुरुपपादत्वादिति वाच्यम्, षष्ठ्यन्तपदमित्पदयोर्बहुव्रीहित्वेन षष्ठ्यन्तत्वस्य मित्त्वस्य च षष्ठीमकाररूपतया स्वाधिकरणम्, "अस्तेर्भूः" ( पा० सू० २।४।५२ ) इति शास्त्रम्, तत्रवृत्तिर्यो भेदः, मिद्भेदः, तत्प्रतियोगितावच्छेदकं मित्त्वम्, स्वाधिक-रणम् "इदितो नुम्धातोः" ( पा० सू० ७।१।५८ ) इति शास्त्रम्, तत्रवृत्तित्वस्य मित्त्वे सत्वान्न दोषः ।

अत्र हेतुमाह—**तदप्रेति** । न च "अनचि च" ( पा० सू० ८।४।४७ ) इत्यस्य वैकल्पिकत्वेन हर्यनुभवे रेफे पक्षे द्वित्वस्याप्रवृत्त्या तदप्राप्तियोग्ये तस्मि-न्निमित्तत्वस्य चारितार्थ्यान्निमित्त्वेन कार्यित्वस्य बाधानापत्तिः । किञ्चोत्सर्गप्रवृत्त्यु-त्तरं लक्ष्ये लक्षणस्येति न्यायेन तत्प्राप्तियोग्यताया असम्भवेन तत्र चारितार्थ्य-सम्भवेन विशेषेण सामान्यस्य बाधानापत्तिः । किञ्च लक्ष्ये लक्षणस्येति न्यायेन स्वरप्रवृत्त्यनाश्रयस्यैव स्वोद्देश्यत्वेन स्वाभाववदवृत्तित्वरूपव्याप्यत्वस्य च भङ्गा-पत्तिरिति वाच्यम्, तदप्राप्तियोग्येत्यस्य तत्प्राप्तियोग्यत्वावच्छिन्नप्रतियोगिता-कभेदवान् यो विषयस्तस्मिन्नचारितार्थ्यमित्यर्थस्य विवक्षितत्वात् ।

अत एव "अहन्" ( पा० सू० ८।२।६८ ) इत्यस्य नलोपापवादत्वं शेखरोक्तं सङ्गच्छते। अत एव दयधातोर्लिटि द्वित्वोत्तरं पुनर्द्वित्वाप्राप्त्या दिग्यादेशस्य चारितार्थ्यसम्भवेऽपि दिग्यादेशेन द्वित्वबाधः सङ्गच्छते। एतदर्थमेवात्र 'योग्ये' इत्युक्तम्। तत्प्राप्तियोग्यत्वञ्च—तदुद्देश्यतावच्छेदकधर्माधिकरणत्वम्।

न चैवम् "शेषाद् विभाषा" ( पा० सू० ५।४।१५४ ) इति सूत्रस्थशेषग्रहणवैयर्थ्यम्, कबुद्देश्यतावच्छेदकावच्छिन्नभिन्नविषयाभावेन तेषामपवादतया तैर्बाधसम्भवादिति वाच्यम्, अलौकिकविग्रहवाक्ये समाससंज्ञासमकालमेव समासान्तानां प्रवृत्तिरिति सिद्धान्ताद् युगपदुभयोरन्तावयवत्वासम्भवात्। क्रमेणाप्यलौकिकविग्रहवाक्यावयवत्वेन तत्प्रवृत्त्यसम्भवात्। उत्सर्गापवादयोर्नित्यत्वासम्भवाद् "येन ना०" ( परि० ५८ ) इति न्यायस्याविषयत्वेनानवकाशत्वेनैव बाधस्य वक्तव्यतया समासान्तानां कबभावे सावकाशसम्भवेनानवकाशत्वाभावाद् बाधानापत्त्या शेषग्रहणस्यावश्यकत्वात्।

न च हर्यनुभवे रेफस्य निमित्तत्वाद् द्वित्वस्य बाधसम्भवेऽपि भद्रह्लदीयरेफे द्वित्वबाधे मानाभावः, तस्याचः परत्वाभावेनानिमित्तत्वात्। बाध्यसामान्यचिन्ताविषयेऽपि स्वविषये प्राप्तस्यैव स्वेतरस्य बाधाङ्गीकारात्। अन्यथाचिरादेशेन 'तिस्रः' इत्यत्र दीर्घबाधवत् 'कर्त्तॄन्' इत्यत्रापि दीर्घबाधापत्तेः।

एवञ्च प्रकृते बाध्यसामान्यचिन्तैवायुक्ता, निमित्तत्वाक्रान्ते रेफे "अनचि०" (पा० सू० ८।४।४७) इत्यस्यैव नाप्राप्त्या इतरयोरप्राप्तेरिति वाच्यम्, 'स्रजिष्ठः' इत्यत्र लुकानपेक्षितविषयभेदं टिलोपमात्रस्य जातिपक्षाश्रयणेन बाधवदत्रापि बाधसम्भव इत्याशयात्।

न च 'स्रजिष्ठः' इत्यत्र लक्ष्यभेदेऽपि शास्त्रभेदाभावः, इह तूभयं भिन्नमिति ततो वैलक्षण्यमिति वाच्यम्, 'स्रजिष्ठः' इत्यत्रापि व्यक्तिपक्षे "नस्तद्धिते" ( पा० सू० ६।४।१४४ ) इति "टेः" ( पा० सू० ६।४।१४३ ) इति शास्त्रभेदस्य सूपपादत्वात्। अन्यथा "येन ना०" (परि० ५८) इति बाधविषयेऽप्यपवादप्रवृत्त्यनन्तरमुत्सर्गाप्रवृत्त्या लुगुत्तरं टिलोपाप्राप्त्या जातिपक्षाश्रयणस्य वैयर्थ्यापत्तेः।

मम तु व्यक्ति पक्षे टिलोपशास्त्रस्यापि विभिन्नत्वेन पुनः प्राप्तौ जातिपक्षाश्रयणस्य सार्थक्यं सूपपादम्। अत एव 'अटतुः' इत्यादिसिद्धये जातिपक्षमाश्रित्याभ्यासत्वावच्छिन्ने क्वचिदादिहलसत्ता सर्वत्रानादिहलो निवर्त्तिकेति "हलादिः शेषः" ( पा० सू० ७।४।६० ) इत्यत्र भाष्ये उक्तम्[1]।

---

१. 'तत्र यद्याकृतिपक्ष आश्रीयते तदाऽभ्यासाकृतौ वर्त्तमानो हलादिः सर्वस्यामभ्यासव्यक्तावनादेर्निवृत्तिं करोतीति'। उद्द्यो० व्या० म० भा० पा० सू० ७।४।६०।

न चैवमपि "अचोर०" ( पा० सू० ८।४।४६ ) इति दृष्टचा "अनचि०" ( पा० सू० ८।४।४७ ) इत्यस्यासिद्धत्वात् तद्विषये तस्य नाप्राप्त्यसम्भवादनेन न्यायेन कथं तत्र बाध इति वाच्यम्, "पूर्वत्रासिद्धीयमद्वित्वे" ( परि० १२६ ) इति तस्यासिद्धत्वनिषेधात ।

नन्वेवमप्यवसाने चर्त्वस्यैतन्न्यायेन जश्त्वापवादत्वोक्तिरयुक्ता, जश्त्वं प्रति चर्त्वस्यासिद्धत्वेनोत्सर्गोपस्थितिकाले कदाप्यपवादस्यानुपस्थितया तयोर्युगपदेकबुद्धावुपारोहासम्भवेनैतादृशविषये विशेषेण सामान्यबाधे मानाभावात् । अत एव परोक्षपुरुषेण शतवारं कौण्डिन्याय तक्रमित्युक्तेऽप्युत्सर्गस्य न सङ्कोचः । अत एव चतुर्ग्रहणसामर्थ्यात् "न वृद्भ्यः०" ( पा० सू० ७।२।५९ ) इति निषेध इति मूलोक्तं सङ्गच्छते ।

न चाहार्यासिद्धत्वज्ञानेऽपि वास्तविकोभयज्ञानस्यावर्जनीयतयोत्सर्गस्य सङ्कोचो भविष्यतीति वाच्यम्, प्रथममुभयज्ञानवतः पुरुषात्प्रत्याप्तेन तेनैव मदुक्तं तक्रवाक्यमसिद्धमिति जानीथेत्युक्ते ततस्तेषां कौण्डिन्येऽपि निर्विचिकित्सं दधिदाने प्रवृत्तिवदत्राप्यपवादविषयेऽप्युत्सर्गप्रवृत्तेर्वारयितुमशक्यत्वात् ।

न चैतादृशविषये वचनप्रामाण्यादसिद्धत्वाप्रवृत्तिः, जश्त्वोत्तरं चारितार्थ्यसम्भवेन चर्त्वविधेर्निरवकाशत्वाभावेन केवललोकन्यायेनासिद्धशास्त्रबाधे मानाभावात् । किञ्च 'रत्नमुट्' इत्यादावपवादत्वात्पूर्वं चर्त्वेन षकारे टकारश्रवणानापत्तिः, षकारश्रवणापत्तिश्च ।

किञ्चानुकार्यानुकरणयोरभेदपक्षे पदत्वाभावाज्जश्त्वाप्राप्त्याऽवसाने चर्त्वस्य चारितार्थ्यादचारितार्थ्यमेव दुर्वचम्, तस्मादयं न्यायस्त्रिपाद्यां न प्रवर्त्तत इति चेत्, न; असिद्धत्वस्य वाक्यार्थोत्तरं पूर्वशास्त्रप्रवृत्तियोग्यलक्ष्यज्ञानकालिकत्वेन ततः पूर्वमेव वाक्यार्थबोधकाले "प्रकल्प्य०" ( परि० ६४ ) इति न्यायेन तद्विषये सङ्कोचसम्भवेनोभयोरेकविषयत्वासम्भवादसिद्धत्वस्यैवाप्रवृत्तेः ।

किञ्च 'रनमुट्' इत्यत्रापि न दोषः, "ष्णान्ता षट्" ( पा० सू० १।१।२४ ) इति निर्देशेनान्तरतमपरिभाषायां सति सम्भवे भेदगर्भितसादृश्यविशिष्टस्यैव क्वचिद् ग्रहणमित्यर्थाङ्गीकारेण षकारे षकारभेदासम्भवेन टकारस्यैव प्रवृत्त्यादोषात् । क्वचिदित्युक्तेः "अभ्यासे चर्च" ( पा० सू० ८।४।५४ ) इत्यादौ न दोषः ।

किञ्चानुकार्यानुकारणयोर्भेदपक्षस्यैव सिद्धान्तेऽङ्गीकारेणाभेदपक्षस्यैवाभावेन चारितार्थ्यस्य दुर्वचत्वात्, अभेदपक्षेऽप्यनुकरणत्वभङ्गभिया कार्याप्रवृत्त्यादोषात् ।

अत एव 'वाक्क्' इत्यत्र ककारद्वित्वं भाष्योक्तं सङ्गच्छते । तथाहि 'वाच् स्' इत्यस्यामवस्थायां सुलोपे "चोः कुः" ( पा० सू० ८।२।३० ) इति कुत्वे, जश्त्वं

**"आयादयः०" इति सूत्रे 'गोपायिष्यति' इत्यादावायादीन् बाधित्वा परत्वात् स्यादयः प्राप्नुवन्तीत्याशङ्क्य "अनवकाशा आयादयः, 'गोपायति' इत्यादावपि शप्स्यादिः प्राप्नोति ।**

---

बाधित्वा "वाऽवसाने" ( पा० सू० ८।४।५६ ) इति चर्त्वेन ककारस्य ककारे तस्य द्वित्वे कृते चर्त्वस्यासिद्धत्वेऽपि स्थानिभूतककारस्य झशनन्तर्भावाज्जश्त्वाप्राप्त्या ककारद्वयश्रवणं भवति ।

अन्यथा द्वित्वस्येव चर्त्वस्याप्यसिद्धत्वात् जश्त्वेन गकारे "पूर्वत्रासिद्धीयमद्वित्वे" ( परि० १२६ ) इत्यनया द्वित्वात्पूर्वं चर्त्वेन ककारे तस्य द्वित्वेऽप्यवसाने चर्त्वस्यासिद्धत्वेन गकाररूपे झशि पूर्वस्य जश्त्वेन ककारस्य गकारे "वाऽवसाने" ( पा० सू० ८।४।५६ ) इत्यस्यासिद्धत्वात् खर्परत्वाभावेन "खरि च" ( पा० सू० ८।४।५५ ) इत्यस्याप्राप्त्या गकारस्य श्रवणापत्तिरिति तदसङ्गतिः स्पष्टैव ।

नन्वेतद्भाष्यप्रामाण्यादद्वित्वे इत्यस्यापि "नमुने" ( पा० सू० ८।२।३ ) इतिवद् विषयसप्तमीत्वेनाद्वित्वे कृतेऽपि द्वित्वाश्रयस्य कार्ये कर्त्तव्येऽसिद्धत्वं नेत्यर्थाद् वागित्यत्र न कद्वयश्रवणानुपपत्तिः ।

न च "नमुने" ( पा० सू० ८।२।३ ) इत्यत्रासिद्धत्वप्रतियोग्यनुयोगिविशेषनिर्देशवदत्र निर्देशाभावाद् द्वित्वे कृते सामान्यतः पूर्वं प्रति परस्यासिद्धत्वं नेत्यर्थापत्त्या 'मध्वरिः' इत्यत्र द्वित्वस्य सिद्धत्वाभावेन वलि लोपापत्तिरिति वाच्यम् । प्रत्यासत्त्या द्वित्वे कर्त्तव्ये तत्प्रति यस्यासिद्धत्वं प्राप्तं तस्यैव द्वित्वे कृतेऽन्यं प्रत्यप्यसिद्धत्वेनेत्यर्थाङ्गीकारेण 'मध्वरिः' इत्यत्र दोषाभावादिति चेत्, न; एवमपि वागित्यत्र चर्त्वस्यासिद्धत्वाभावेन "स्कोः०" ( पा० सू० ८।२।२९) इति कलोपापत्तेः ।

यदि तु "स्कोः०" ( पा० सू० ८।२।२९ ) इति लोपं प्रति चर्त्वस्यासिद्धत्वाभावेऽपि द्वित्वस्यासिद्धत्वान्न दोष इत्युच्यते, तर्हि गुणे त्वन्यायकल्पनमिति न्यायेन प्रधानीभूतचर्त्वविधेर्बाधकल्पनापेक्षया तत्रोपस्थितगुणभूतासिद्धत्वबाधकल्पनमुचितमिति बोध्यम् ।

वस्तुतस्तु जश्त्वापवादत्वोक्तिस्तु 'तच्छित्रः' इति प्रतीकस्थमनोरमानुरोधेनेति न कश्चिद् दोषः । एवञ्च त्रिपाद्यामेतन्न्यायप्रवृत्तिपक्षे यानि भाष्याणि विरुद्धानि तानि सर्वाण्येतन्न्यायानित्यत्वाभिप्रायेण प्रवृत्तानीति बोध्यमित्यलम् ।

अत्र मानमाह—**सूत्रे इति** । तत्र हि 'आर्धधातुके' इत्यस्य परसप्तमीत्वे एतद्वाक्यनिरपेक्षैः "गुपूधूप०" (पा० सू० ३।१।२८) इत्यादिभिः परनिमित्तानपेक्षया पूर्वमायादीनां विधानोत्तरमनेनार्धधातुके परतस्ते निवर्त्तन्त इति वाक्यशेषाध्याहारेण तेषां पक्षे निवृत्तिरभ्युपगम्यते ? उत सूत्रत्रयस्याप्ययं योगश्शेष इति,

**न च सति शप्यसति वा न विशेषः । अन्यदिदानीमिदमुच्यते—नास्ति विशेष इति । यदुक्तम् "आयादीनां स्यादिभिरव्याप्तोऽवकाश इति स नास्त्यवकाशः" इति भाष्ये उक्तम् ।**

---

तत्र त्रयाणामनुवृत्त्या विधिपरिभाषान्यायेनैकवाक्यतया, आर्धधातुके परतः गुपादिभ्यो विकल्पेनायादयो भवन्तीति पक्षेऽनुत्पत्तिरभ्युपगम्यते ? इति पक्षद्वयमुपन्यस्तम् ।

ननु एकवाक्यत्वपक्षे ते सार्वधातुके न स्युः, "गुपूधूप०" (पा० सू० ३।१।२८) इत्यत्रैवार्धधातुके वेति वक्तव्ये योगविभागसामर्थ्यात्पूर्ववाक्येन वाक्यभेदेन सार्वधातुकविषयेऽपि भवन्ति, आर्धधातुके एवानेनैकवाक्यतया विकल्पेन विधानमिति तदाशयः ।

तत्राद्यपक्षे 'गुप्तिः' 'जुगोप' इति न सिद्ध्यति, 'गोपा, गोपाञ्चकार' इति प्राप्नोतीत्युक्तम् । 'गोपाय' इत्यस्य प्रत्ययान्तत्वादप्रत्ययादित्यनेन क्तिनो बाधाद् 'गुप्तिः' इत्यस्यामि परतः पाक्षिकस्यायस्य निवृत्त्या 'जुगोप' इत्यस्यासिद्धिरुक्तरूपापत्तिश्चेति तदाशयः ।

द्वितीयपक्षे 'गोपाय' इतीष्टं न सिद्ध्यति, क्तिनि कृते तत आयप्रत्यये 'गोपायतिः' इति प्राप्नोतीति पक्षद्वयेऽपि दोषमुक्त्वा "गुपूधूपविच्छपणिपनिभ्य आयो वा सार्वधातुके' इति न्यासान्तरं वार्त्तिककृता कृतम् । पूर्वेण विकल्पे प्राप्ते नित्यार्थं द्वितीयं सूत्रम् । अत्र न्यासे गोपायिष्यतीत्यत्र लादेशप्रवृत्त्युत्तरं स्यप्रत्ययप्रवृत्तिरिति पक्षे परत्वात्स्यप्रत्ययेनायस्य बाधात् 'सकृद्गतिन्यायेन' ( परि० ४० ) उक्तरूपासिद्धिरुक्ता ।

न च स्यप्रत्ययं बाधित्वान्तरङ्गत्वाद् वैकल्पिकायप्रवृत्त्या न दोषः, अपवादविषये उत्सर्गाप्रवृत्तेः । न च परत्वात्स्यप्रत्यये कृते तेन व्यवधानादपवादाप्राप्त्योत्सर्गस्य प्रवृत्त्या न दोषः, तथा सति स्यप्रत्ययस्वरस्य श्रवणानापत्तेः[1] ।

एतदग्रे च 'गोपायति' इत्यत्रापि शपः प्राप्त्याऽनवकाशत्वादायादिभिरेव स्यादीनां बाधो न भविष्यतीति न दोष इत्युक्ते, पुनर्विप्रतिषेधवादिना गोपायतीत्यत्र शपः प्रवृत्त्यप्रवृत्त्योः[2] फले विशेषाभावाच्छपोऽप्रवृत्त्या चारितार्थ्यभायादीनां सम्भवतीति विप्रतिषेधो युज्यत इत्युक्ते सिद्धान्तिना, **अन्यदिदानीमिदमुच्यते, नास्ति विशेष इति—यदुक्तं स्यादिभिरव्याप्तोऽवकाशोऽस्तीति, स नास्त्यवकाशः—** इत्युक्तम् ।

---

१. 'स्यप्रत्ययस्वरस्य श्रवणानापत्तेः' इत्यस्य स्थाने 'अतो लोपानापत्तेः' इति पाठः क० पु० ।

२. 'प्रवृत्त्यप्रवृत्त्योः' इत्यस्य स्थाने 'प्रवृत्त्योः' इति पाठः क० पु० ।

**एवमत्र तत्प्रवृत्त्युत्तरं चारितार्थ्येऽपि तदव्याप्तोऽवकाशो नास्तीति सममेव।**

**किञ्च—अनेन न्यायेन तत्प्रवृत्त्युत्तरमपि चारितार्थ्ये तद्बाधबोधनम्। अन्यथाऽनवकाशत्वेनैव बाधे सिद्धे एतत्कथनवैयर्थ्यापत्तेः, 'तक्रकौण्डिन्य'न्याय-प्रदर्शनस्यापि वैयर्थ्यापत्तेश्च। तथा प्रथमद्विर्वचनस्य तदुत्तरं सावकाशेनापि द्वितीय-द्विर्वचनेन बाधः। यथा वाऽऽदेरपि प्रवृत्त्या चरितार्थेन 'आदेः परस्य' इत्यनेन 'अलोऽन्त्यस्य' इत्यस्य बाधः।**

---

अग्रे च धूपायन्तीत्यत्र च "शप्श्यनोः०" (पा० सू० ७।१।८१) इति नुम्प्रवृत्त्यप्रवृत्तिभ्यां फले विशेषमुक्त्वा, अनवकाशत्वादायादिभिरेव स्यादीनां बाधनं[1] प्राप्नोतीति 'आर्धधातुके' इति विषयसप्तमीत्युक्तम्। एवञ्च तदप्राप्ति-योग्येऽचारितार्थ्यमेव बाधकत्वे बीजमिति स्पष्टमेवोक्तम्।

**एवमत्रेति**। गोपायतीत्यत्र यथा शपः प्रवृत्तौ फलविशेषाभावेऽपि तद-प्राप्तियोग्ये चारितार्थ्याभावमात्रेणायादीनां स्यादिबाधकत्वम्, तथा शपि कृते आयादीनां चारितार्थ्यसम्भवेऽपि तदव्याप्तावकाशरहितत्वरूपहेतोस्तुल्यत्वाद् बाध-कत्वं समानमिति भाष्याशयः। आयादयः—इत्यारभ्य, समम् – इत्यन्तमेको ग्रन्थः।

ननु सामान्यस्य विशेषविषये सङ्कोचरूपबाधकल्पने तद्वैय्यर्थ्यमेव बीजम्, तदुत्तरं चारितार्थ्यविषयेऽपि सङ्कोचरूपबाधकल्पने न मानमिति कथं सामान्य-तस्तदप्राप्तियोग्येऽचारितार्थ्यं बाधकत्वे बीजमित्यत आह—**किञ्चेति**।

**अनेनेति**। "येन नाप्राप्ते०" (परि० ५८) इति न्यायेनेत्यर्थः। **चारितार्थ्ये-ऽपीति**। अपिना तत्पूर्वतत्समकालयोः सङ्ग्रहः। **अन्यथेति**। केवलानवकाशत्वे एव बाधकत्वाङ्गीकारे इत्यर्थः। **एतदिति**। "येन ना०" (परि० ५८) इत्युक्तपरिभाषो-पन्यसनवैयर्थ्यमित्यर्थः। एतेनायादिविषये न तक्रन्यायेन बाधः। किन्तु निरव-काशत्वेनैवेति कथं तक्रन्यायेन बाधे इदं गमकं स्यात्। किञ्च—**एवमत्र** - इत्यादि-ग्रन्थेन, **किञ्च**—इत्यादिग्रन्थस्य पौनरुक्त्यमिति परास्तम्। वैयर्थ्येन तक्रन्यायेन बाधस्थले तदप्राप्तियोग्येऽचारितार्थ्यस्यानुगतस्य बाधकत्वबीजस्य सम्भवेन लाघवादस्यैव तद्बीजत्वकल्पनं युक्तम्, न पृथग्वैयर्थ्यादेरित्याशयात्।

ननूक्त"येन ना०" (परि० ५८) इति न्यायेन सर्वथानवकाशत्वे एव बल-वत्त्वमित्येव[2] प्रकाश्यते इत्यत आह—**तक्रेति**। स्पष्टार्थमस्योदाहरणद्वयमाह—**यथेति**। **आदेरपीति**। यद्यप्युपसंहारपक्षे, पदोपस्थितिपक्षे च नैकत्रोक्त्योः समावेशः सम्भवति। आदावुपसंहृतस्य पुनरन्त्येऽप्युपसंहारे तथादिपदार्थेऽन्वितस्य पुनरन्त्यपदार्थेऽन्वये आवृत्तिमन्तरान्वयासम्भवात्, तथाप्युभयोरुपस्थितिबलादा-वृत्त्योभयत्रापि कार्यापत्तिः। एतन्न्यायस्वीकारे त्वनेन तस्य बाधान्न दोष इति बोध्यम्।

---

१. 'बाधा' इति पाठः क० पु०। २. 'तत्त्वमित्येव' इति पाठः क० पु०।

**तदुक्तम् 'मिदचोऽन्त्यात्' इति सूत्रे भाष्ये "सत्यपि सम्भवे बाधनं भवति" इति। अन्यथा "ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय' इत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात्। तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यसम्भवात्। अत एव विषयभेदेऽप्यपवादत्वम्।**

**अत एवाचिरादेशेन नुटोऽप्यपवादत्वाद् बाधमाशङ्क्य 'न तिसृ' इति ज्ञापकेन समाहितम् "तृज्वत्"सूत्रे भाष्ये। तेन विषयभेदेऽपवादत्वाभाव एव बोध्यत इति कश्चित्, तन्न; विन्मतोर्लुका टिलोपमात्रस्य बाधानापत्तेः।**

---

न च तदुत्तरमप्रवृत्त्यर्थं न्यायप्रदर्शनं सार्थकमिति वाच्यम्, तक्रदानेन स्वविषये दधिदानस्य पूर्वं समकालं पश्चादपि च बाधदर्शनेनास्य न्यायस्यैव विनिगमनाविरहेणांशद्वयेऽपि बाधबीजत्वसम्भवात्। तथाहि—न्याये तदप्राप्तियोग्येऽचारितार्थ्यांशेनापवादशास्त्रप्रवृत्तियोग्यविषयातिरिक्तविषयकत्वेन सङ्कोचः कल्प्यते। तदुत्तरं चारितार्थ्यरूपद्वितीयांशेन त्वपवादप्रवृत्त्याश्रयविषयातिरिक्तविषयकत्वेनोत्सर्गस्य सः, न तु सामान्यतः, अपवादशास्त्रस्य विषयातिरिक्तविषयकत्वेनेति, 'रमायाम्' इत्यादौ दोषः।

उक्तार्थे भाष्यसम्मतिमप्याह—**तदुक्तमिति। अन्यथेति।** असम्भव एव बाधकत्वस्वीकारे इत्यर्थः। **न स्यादिति।** न च लोके प्रकरणादिना कौण्डिन्ये प्रीत्यभावग्रहेण तत्र वक्तृतात्पर्याभावाद्दधिदानाभावस्योपपत्तेर्न दोषः। प्रकरणानभिज्ञस्याप्युक्तवाक्यश्रवणेन स्वरसतः कौण्डिन्ये दधिदाने प्रवृत्त्यदर्शनेन विशेषविधिविषये सामान्यविधेस्तात्पर्याभावकल्पनस्य सर्वलोकसिद्धत्वात्।

अत्र फलमप्याह—**अत एव विषयेति।** तत्र मानान्तरमाह—**अत एवेति। नुटोऽपीति।** तेनापि स्वनिमित्तविघाताद् विरोधः सम्भवतीति भावः। **नापत्तेरिति।** विषयभेदेन "नस्तद्धिते" (पा० सू० ६।४।१४४) इत्यस्य "टेः" (पा० सू० ६।४।१४३) इत्यस्य च विभिन्नत्वेन पूर्वपरप्राप्तटिलोपयोर्जातिपक्षाश्रयणेऽपि बाधानापत्तेरित्यर्थः।

न च त्वदुक्तरीत्या विषयभेदेऽप्यनेन न्यायेन बाधे तत्र जातिपक्षाश्रयणं व्यर्थमिति वाच्यम्, विषयभेदेन द्वितीयस्य टिलोपस्य लुग्विषये नाप्राप्त्यभावेन बाधायोगात्तदर्थं तस्याश्रयणात्।

न चैवम् 'हे पयोद' इत्यत्र प्लुतस्यासिद्धत्वविधाने 'हे सुस्रोत३' इत्यत्राप्यसिद्धत्वापत्तिः, अनपेक्षितविषये[1] भेदेन जातिपक्षे प्लुतमात्रासिद्धत्वस्य दुर्वारत्वादिति वाच्यम्, सर्वत्रैवंरीत्याश्रयणे प्रमाणाभावात्।

---

१. 'अपेक्षितविषय' इति क० पु० पाठः।

**यत्तु 'दयतेर्दिगि' इति सूत्रे द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्यं कैयटेनोक्तम्, तत् प्रौढ्या। ध्वनितञ्च तेनापि तस्य तथात्वं तदुत्तरग्रन्थेन।**

**'असम्भव एव बाधकत्वम्, विरोधस्य तद्बीजत्वात्' इति वार्त्तिकमतं तु भाष्यकृता दूषितत्वान्न लक्ष्यसिद्ध्युपयोगि।**

**'तक्रकौण्डिन्य'न्यायोऽपि तदप्राप्तियोग्येऽचरितार्थविषयो विधेयविषय एव चेति "तद्धितेष्वचामादेः" "धातोरेकाचः" इत्यादिसूत्रेषु भाष्ये स्पष्टम्।**

---

**ग्रन्थेनेति**—सामान्यविशेषभावानाश्रयणेन सावकाशत्वमुक्तं तदाश्रयणेन नाप्राप्ते द्वित्वे आरम्भमाणदिग्यादेशस्य तदपवादत्वमुच्यत इति ग्रन्थेनेत्यर्थः।

**न लक्ष्येति**—श्नम्-अकच्-बहुजित्यादिघटितलक्ष्यसिद्धीत्यर्थः। न च 'अभूत्' 'इमौ' 'पन्थाः' 'सः' 'हरे' 'एधि' 'आभ्याम' इत्यादौ अडागममत्वात्वसत्वगुणैत्वलोपैस्तिप्त्यदाद्यत्वेतो दित्यत्त्वत्यदाद्यत्वसम्बुद्धिलोपश्नसोरल्लोपात्वानां क्रमेण बाधापत्त्या लक्ष्यासिद्धिस्तवापि तुल्यैवेति वाच्यम्, अतिप्रसङ्गस्यानित्यत्वेन परिहारसम्भवेऽप्यव्याप्त्यभाव इत्याशयात्।

न च वार्त्तिकमतेऽपि "शवादेशाश्श्यन्नादयः" करिष्यन्ते। "शप्श्यनोः०" (पा०सू०७।१।८१) इति ज्ञापकान्न तदादेशेषु शब्निमित्तकनुमादीति"भाष्योक्तरीत्या न दोषः। तथा प्रकृत्यर्थगतकुत्सावोधनाय प्रतिपदोक्तत्वात्पूर्वमकचि, 'उक्तार्थानाम्' इति न्यायेन बहुचि कल्पप इव 'क'प्रत्ययाप्रवृत्त्या न दोषः। 'दिग्ये' इत्यत्रापि यौगपद्यासम्भवरूपविरोधस्य सत्त्वेन 'दयत्योर्दिग्' इति न्यासेनोभयस्थानिकत्वेनैकादेशे इव धातुत्वादीनामतिदेशसम्भवेनादोषात्। तिष्ठासतीत्यादावपि आदिशेषानादिशेषयोरपि वाच्यवृत्त्याविरोधस्य सम्भवेन न दोष इति वाच्यम्, द्वितीयद्विर्वचनेन प्रथमद्विर्वचनस्य बाधानापत्तेः।

न च "अजादेः०" (पा० सू० ६।१।२) इति कर्मधारयेणैव सिद्धे, द्वितीयग्रहणं द्वितीयस्यैवेति नियमार्थमिति न दोषः, तस्य भाष्ये प्रत्याख्यानात्। 'प्रोष्ठपादो ब्राह्मणः' इत्यत्र "जे प्रोष्ठपदानाम्" (पा० सू० ७।३।१८) इत्युत्तरपदवृद्ध्याऽऽदिवृद्धेर्बाधानापत्तेः, 'हर्यनुभवः' इत्यत्र रेफस्य निमित्तत्वेन कार्यित्वस्य बाधानापत्तेश्चेति दिक्।

"येन ना०" (परि० ५८) इति तक्रन्याययोरैक्यं प्रागुक्तम्। तत्र किञ्चिद् विशेषकथनेन तदेव द्रढयितुमुपसंहरति—**तक्रेति। स्पष्टमिति।** तत्र हि "क्रौष्ट्रः" 'जागतः' इत्यत्रान्त्योपधावृद्धयोर्निषेधं पूर्वमुक्त्वोक्तन्यायेन तयोरादिवृद्ध्या बाधमाशङ्क्य 'सौश्रुतः' इत्यादौ तयोरप्राप्त्या चारितार्थ्येन न बाध इति भाष्यमादाय 'सामान्यविशेषभावो बाधहेतुः, स चेह नास्ति[1]। निमित्तांशे सामान्य-

---

१. 'चेहानास्ति' इत्यपपाठः क० पु०।

विशेषभावसम्भवेऽपि कार्यांशे तदभावेन चारितार्थ्यसम्भवादिति तदाशय इति कैय्यटादिभिर्व्याख्यातम् ।

तथा "नित्यं कौटिल्ये०" ( पा० सू० ३।१।२३ ) इति सूत्रे 'कुटिलं क्रामति' 'गर्हितं जपति' इति वाक्येन 'चङ्क्रम्यते' 'जञ्जप्यते' इत्येतत्प्रतिपाद्यार्थविशेषस्यासम्प्रत्ययात् तदर्थकवाक्यव्यावृत्त्यर्थं न 'नित्यग्रहणम्' इत्युक्त्वा तस्यायोगव्यावृत्त्यर्थकत्वासम्भवेऽपि कौटिल्ये एव यङित्यन्यायोगव्यावृत्त्यर्थं तदस्त्वित्याशङ्क्य, क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यम्, इत्युक्तम् ।

तत्र चेन पूर्वोक्तो विशेषसम्प्रत्ययादिति हेतुरनुकृष्यते । 'वाप्यश्वः' इत्यादौ वाक्येन संज्ञानवगमात्समासस्य नित्यत्ववदुक्तविग्रहेण कौटिल्यगर्हाविशिष्टार्थस्य यङन्तेन क्रियासमभिहारे विशिष्टार्थस्य चासम्प्रत्ययादेव तदुभयव्यावृत्तेः सिद्धतया नित्यग्रहणमनर्थकमिति तदाशयः । यदि त्वनुवादविषये एतन्न्यायसञ्चारः स्यात्तर्हि एतन्न्यायेनैव स्पष्टतया तद्वारणसम्भवे हेत्वनुकर्षकचकारवैय्यर्थ्यापत्तिरतोऽस्य विधेयविषयत्वमेवेति ध्वन्यत इति बोध्यम् ।

ननु भाष्ये अत्र सूत्रे एतन्न्यायानुपन्यसनमात्रेणानुवादविषयेऽस्य न्यायो न प्रवर्त्तत इति कल्पनमयुक्तम् । अस्य लोकसिद्धत्वेनातिस्पष्टतया कण्ठतोऽनुपन्यासेऽपि तेन न्यायेनैव तद्भाष्यस्य कैय्यटादिभिर्योजितत्वात् क्रियासमभिहारे चेत्यत्रत्यचकारस्याप्यर्थकतया क्रियासमभिहारेऽपि तक्रन्यायेन 'यङा न भवितव्यम्' इत्याशयकल्पनेन तस्य सार्थक्यसम्भवात् ।

किञ्चास्य न्यायस्यानुवादविषयेऽप्रवृत्तौ "भूते" ( पा० सू० ३।२।८४ ) इति सूत्रस्थभाष्यविरोधः । तत्र हि भूताधिकारस्य प्रयोजनम् "कुमारघातीति भविष्यद्वर्त्तमानयोरेव यथा स्यात्, भूते माभूत्, इत्युक्तम् ।

तत्र भूताधिकारस्थस्य[1] "कर्मणि हनः" ( पा० सू० ३।२।८६ ) इति णिनेः 'कुमारशीर्षयोः०" ( पा० सू० ३।२।५१ ) इति णिनिवत्कालसामान्येऽपि प्रवृत्त्या, भविष्यद्वर्त्तमानयोः "कुमारघाती" इत्यस्य "कर्मणि हनः" ( पा० सू० ३।२।८६ ) इत्येव सिद्धेः "कुमार०" ( पा० सू० ३।२।५१ ) इति सूत्रं व्यर्थं सत्, वासरूपविधिना प्राप्ततृजादिनिवृत्त्यर्थं स्यात् ।

तथा च "कर्मणि हनः" ( पा० सू० ३।२।८६ ) इत्यनेनापि कालसामान्ये विधानाद् भूतेऽपि कुमारघातीति रूपं प्राप्नोति । सति तु भूताधिकारे तक्रन्यायेनोपपदविशेषनिमित्तकेन कुमारणिनिना भूतणिनिर्बाध्यत इति स्वविषये भविष्यद्वर्त्तमानयोरेव विधानात्, कुमारघातीति भविष्यद्वर्त्तमानयोरेवेति व्यवस्था सिद्ध्यतीति कैय्यटादिभिर्व्याख्यातम् ।

---

१. 'भूताधिकाराभावे तदधिकारस्थस्य' इति पाठः क० पु० ।

न च तेनापि णिनेरेव विधानात्[1]—णिनिविषये णिनेः संङ्कोचरूपबाधकल्पनमशक्यमिति वाच्यम्, तस्य साक्षाद्बाधासम्भवेऽपि तत्सहचरितस्य भूतकालस्य बाधसम्भव इत्याशयात् ।

एवञ्चानुवादविषये एतदप्रवृत्तौ 'कुमारघातीति भूते मा भूत्' इति भाष्यविरोधः स्पष्ट एवेति चेत्, न; "कुमार०" ( पा० सू० ३।२।५१ ) इति सूत्रे भविष्यद्वर्त्तमानाधिकाराभावेन तेन तत्प्रतीतेरसम्भवेन "कर्मणि हनः" ( पा० सू० ३।२।८६ ) इत्यस्य भूत एव प्राप्त्या कुमारणिनिविषये नाप्राप्तेरप्यभावेन तस्य भाष्यस्यैकदेशयुक्तित्वात ।

न च "कर्मणि हनः" ( पा० सू० ३।२।८६ ) इत्यस्यान्यत्र पाठात् कालत्रयेऽपि प्रवृत्त्या भूतेऽपि प्रवृत्तिसिद्धौ पूनर्भूताधिकारे पाठसामर्थ्येन 'णिनिर्भूते भवति चेत्, "कर्मणि हनः" ( पा० सू० ३।२।८६ ) इति णिनिरेव भूते, इति नियमात्, "कुमार०" ( पा० सू० ३।२।५१ ) इति णिनेर्भूतार्थकत्वा सम्भवाद् भविष्यद्वर्त्तमानयोरेव प्रवृत्त्या कुमारघातीति तत्रैव प्रयोगः सिद्ध्यतीति वाच्यम, भूताधिकारे "कर्मणि हनः" ( पा० सू० ३।२।८६ ) इति पाठस्य भूते प्रवृत्तिवत भविष्यद्वर्त्तमानयोस्तन्निवृत्तेरपि फलत्वेनान्यत्रास्य पाठे भूते तत्प्रवृत्तिसिद्धावपि भविष्यद्वर्त्तमानयोस्तन्निवृत्तेरसिद्धत्वेन 'पितृव्यघाती'[3] इत्यत्र भविष्यद्वर्त्तमानयोरपि प्रतीत्या तद्व्यावृत्तये तदधिकारे तत्पाठस्यावश्यकत्वेन तस्य वैय्यर्थ्याभावेन तस्य नियमार्थत्वासम्भवात् । कथञ्चिन्नियमेन[4] "कुमार०" (पा० सू० ३।२।५१) इति णिनेः भूते प्रवृत्तावपि तक्रन्यायाप्रवृत्त्या भाष्यविरोधाभावात् ।

तस्मात् "कुमार०" (पा० सू० ३।२।५१) इति णिनेः शब्दशक्तिस्वभावादेव भूतेऽप्रवृत्तिरिति विवरणकाराः ।

केचित्तु 'हर्यनुभवः' इत्यादौ रेफे रत्वस्य लोकसिद्धत्वेनापूर्वबोध्यत्वरूपविधेयत्वासम्भवेऽपि तस्मिन्निमित्तत्वस्यापि लोकसिद्धत्वे मानाभावेनापूर्वबोध्यत्वरूपविधेयत्ववत् क्रियासमभिहारविवक्षायामपि यङ्निमित्तत्वस्यापूर्वबोध्यत्वेन तत्रापि विधेयत्वस्य तुल्यतयात्रापि तक्रन्यायप्रवृत्तिः सूपपादा ।

न च क्रियासमभिहाराविवक्षायां कौटिल्यमात्रविवक्षायामस्य यङश्चारितार्थ्येन कथमपवादत्वमिति वाच्यम्, 'सर्वेभ्यो दिवा देयम, देवदत्ताय रात्रौ देयम्' इत्यादौ तयोर्विभिन्नकालिकत्वेनैकत्र युगपदुभयोरप्राप्तावपि 'यदीदं नारभ्येत तर्हि सामान्यशास्त्रेणैव कार्यं स्यात्' इत्येवं तन्मूलकतत्प्राप्तिमभ्युपगम्य विशेषशास्त्रेण

१. 'विद्यमानत्वात्' इति पाठः क० पु० ।
२. 'भूतार्थकत्वाद् भविष्यद्वर्त्तमानयोरेव' इति पाठः क० पु० ।
३. 'पितृघाती' इति पाठः क० पु० ।　　४. 'कथं नियमेन' इति पाठः क० पु० ।

बाधवदत्रापि धातुमात्रात् क्रियासमभिहारविवक्षायां यङि नाप्राप्ते, गत्यर्थेभ्यः[1] कौटिल्यरूपार्थविशेषविवक्षायामारभ्यमाणेन यङा तद्बाधसम्भवात्।

न च 'यद्यज्जुहोति तत्सर्वमाहवनीये जुहोति, पदे जुहोति' इत्यादाविव दिवारात्र्योर्विधेयविशेषणत्वेन सामान्यधर्मावच्छिन्नोद्देश्यकस्य दिवाधिकरणक-दानस्य विशेषधर्मावच्छिन्नोद्देश्यकेन रात्र्यधिकरणकदानेन बाधसम्भवेऽपि क्रियासमभिहारादेर्यङ्द्योत्यतया तस्य धातुविशेषणतयानुवाद्यत्वेनात्र सामान्य-विशेषभावोपपादनमुद्देश्यतावच्छेदकयोर्दुर्वचमिति वाच्यम्, द्वित्वोत्तरं दिग्या-देशस्य चारितार्थ्यसम्भवेऽपि 'हर्यनुभवः' इत्यत्र "अनचि च" (पा० सू० ८।४।४७) इत्यस्याप्रवृत्तिपक्षे निमित्तत्वस्य चारितार्थ्येऽपि तदप्राप्तियोग्यविषयाभावमात्रेण ताभ्यां तयोर्बाधवदत्रापि बाधस्य सूपपादत्वात्।

सामान्यशास्त्रप्रवृत्त्युद्देश्यतावच्छेदकधर्माधिकरणत्वं हि तत्प्राप्तियोग्य-त्वम्, तच्च गत्यर्थकधातावप्यस्तीति तत्प्राप्तियोग्यतावच्छिन्नविषयत्वेन बाधक-बीजस्य सूपपादत्वात्।

किञ्च स्वाधिकरणनिष्ठभेदप्रतियोगितावच्छेदकत्वे सति स्वाधिकरणवृत्ति-त्वरूपव्याप्यत्वस्य कौटिल्यक्रियासमभिहारयोर्युगपद्विवक्षामादाय कौटिल्यविशिष्ट-गत्यर्थकत्वे सूपपादत्वम्।

नन्वेवम् "मतिबुद्धि०" (पा० सू० ३।२।१८८) इति सूत्रेण विधीयमानक्तेन भूतार्थक्तस्यापि बाधापत्तिः, तथा च 'राजपूजितः' इत्यादौ भूतक्तान्तेन तृतीयान्तस्य समासानापत्तिरिति चेत्, न; वर्त्तमानार्थकक्तविषये भूतार्थकक्तस्य नाप्राप्त्यभावा-देव तदप्राप्तेः।

न च पूर्वोक्तरीत्या तदप्राप्तियोग्यविषयशून्यत्वं सूपपादमिति वाच्यम्, क्रियासमभिहारस्य कौटिल्यस्य च युगपद्विवक्षासम्भवेऽप्येकत्र वर्त्तमानभूतकाल-योर्युगपद्विवक्षासम्भवेन पूर्वोक्तस्य स्वाधिकरणनिष्ठभेदप्रतियोगितावच्छेदकत्वे सति स्वाधिकरणवृत्तित्वरूपव्याप्यत्वस्य दुरुपपादत्वात्। व्याप्यधर्मावच्छिन्नो-द्देश्यकशास्त्रेण व्यापकधर्मावच्छिन्नोद्देश्यकशास्त्रस्य बाधकत्वे हि तदप्राप्ति-योग्यविषयशून्यत्वं बीजम्, तच्च प्रकृते नेति न दोषः।

न चैवं कृत्प्रत्ययः कर्त्तरि वर्त्तताम्, ल्युडादयः करणे वर्त्तन्तामित्यत्र ल्युट्ख्यु-नादौ करणरूपार्थेन कर्त्तृरूपार्थस्य बाधानापत्तिः, कौटिल्य इतिवत् सप्तमीनिर्देशे-नाविधेयत्वादिति वाच्यम्, कौटिल्य इतिवत्कर्त्तरीत्यस्योद्देश्यविशेषणत्वाभावेन विधेयविशेषणत्वेन तस्यापि विधेयकुक्षिप्रविष्टतया ( तस्यापि ) विधेयत्वसम्भव इत्याशयात्।

---

१. 'गत्यर्थेर्थेभ्यः' इति पाठः क० पु०।

**क्वचित्तु सर्वथाऽनवकाशत्वादेव बाधकत्वम् । यथा ङेरामो याडादिबाधकत्वम् । न हि याडादिषु कृतेषु ङे राम् प्राप्नोति, निर्दिश्यमानस्य व्यवधानात् । तत्र स्वस्य पूर्वं प्रवृत्तिरित्येव तेषां बाधः । तत्र बाधके प्रवृत्ते यद्युत्सर्गप्राप्तिर्भवति तदा भवत्येव । यथा तत्रैव याडादयः । अप्राप्तौ तु न, यथा 'पचेयुः' इत्यादौ दीर्घबाधके निरवकाश इयादेशे दीर्घाभावः ॥ ५८ ॥**

**तदेतत् पठ्यते—**

**क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति ॥ ५९ ॥**

**अपवादशब्दोऽत्र बाधकपरः । तदुक्तम् "गुणो यङ्लुकोः" इत्यत्र भाष्ये ।**

---

अत एव 'नियोगतः कर्त्तारं ब्रुवन् कृत्संज्ञको भवति, नियोगतः करणं ब्रुवन् कृत्संज्ञको भवतीति' भाष्यमुपादाय नियोगतः शास्त्रत इति कैयटेन व्याख्यातम् । कृत्संज्ञाऽधिक्रियमाणा ख्युनादिष्वपि प्रवर्त्तत इति न दोष इति तदाशयः ।

यद्वा येषामर्थाकाङ्क्षा तेषु तृजादिषु "कर्त्तरि कृत्" ( पा० सू० ३।४।६७ ) इत्यस्योपस्थितावपि ख्युनादिष्वर्थस्य साक्षादेव निर्देशेन तेषामर्थाकाङ्क्षाविरहात्, तत्रास्यानुपस्थितिरिति न दोषः इत्याहुः[1] ।

तक्रन्यायमूलक "येन ना०" (परि० ५८) इति न्यायेन बाधस्य, निरवकाशमूलकबाधस्य च विषयविभागं दर्शयितुमाह—**क्वचित्त्विति । सर्वथेति ।** तदप्राप्तियोग्ये लक्ष्ये तत्प्रवृत्त्युत्तरमपि तल्लक्ष्येऽचारितार्थ्यमिति भावः । सर्वथानवकाशत्वमेवोपपादयति—**नहीति । तत्रेति ।** सर्वथा निरवकाशस्थले इत्यर्थः । एवकारः[2] पूर्वोक्तात्यन्तिकसङ्कोचरूपबाधव्यवच्छेदार्थः । **दीर्घेति ।** "अतो दीर्घः" ( पा० सू० ७।३।१०१ ) इत्यर्थः ॥ ५८ ॥

**तदेतदिति**—अपवादप्रवृत्त्युत्तरकालप्राप्तिकोत्सर्गकर्त्तृकभवनबोधकवचनमित्यर्थः । **पठ्यते इति ।** आधुनिकैरिति शेषः । नत्विदमपूर्वज्ञापकसिद्धं वा वचनम्, किन्तु न्यायसिद्धार्थबोधकमिति भावः । अपवादप्रवृत्त्यनन्तरं तदप्राप्तिविषये तदप्रवृत्तेः—**क्वचिदित्युक्तम् । विषय इति ।** "अभिनिविशश्च" (पा० सू० १।४ ४७) इत्यस्य व्यवस्थितविभाषात्वात्सप्तमी, अपवादप्रवृत्त्यनन्तरमित्यर्थः ।

ननु नोक्तोऽस्य वचनस्य विषयः, अपवादशब्दस्यात्र सत्त्वात् । 'रमायाम्' इत्यादावनवकाशत्वेन बाधेऽपि तक्रन्यायाप्राप्त्या मुख्यापवादत्वाभावात । अत आह—**अपवादशब्द इति । अत्रेति ।** एतत्परिभाषायामित्यर्थः । **बाधकपर इति ।** लक्षणयानवकाशरूपबाधकपर इत्यर्थः ।

उक्तार्थे मानमाह—**उक्तमिति ।** अपवादपदस्य तक्रन्यायविषये मुख्यावृत्ति-

---

१. 'इत्याहुः' इति नास्ति क० पु० ।　　२. 'एवः' इति पाठः क० पु० ।

**अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते । 'अजीगणत्' । अत्र गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधते । न गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधते । किं तर्हि ? अनवकाशत्वादिति ग्रन्थेन गणरूपाभ्यासान्त्यणस्येत्वमित्यर्थे हलादिःशेषेण तन्निवृत्तौ तदनवकाशम्, ईत्वे तु कृते न तस्य प्राप्तिः, अन्त्यहलोऽभावात । अभ्यासविकारेषु बाध्यबाधकभावाभावेन च साधितम् । तस्मिंश्च सति लोपे कृते सामर्थ्याच्छिष्टस्यान्त्यस्येत्वमिति न दोषः ।**

**न च 'येन नाप्राप्ति'न्यायेनापवादत्वमप्यस्य सुवचम्, तस्य चरितार्थविषयताया उक्तत्वात् ।**

**"इको झल्" इत्यत्र भाष्येऽपि ध्वनितमेतत् । तत्र हि 'अज्झन' इति दीर्घेण गुणोत्तरं फलाभावेनानवकाशत्वाद् गुणे बाधिते दीर्घोत्तरं गुणः स्यात्, दीर्घविधानं तु मिनोतेर्दीर्घे कृते "सनि मीमा" इत्यत्र मीग्रहणेन ग्रहणेऽर्थवत्तत्र**

---

रन्यत्र गौणीत्येतदित्यर्थः । **न गणेरीत्वमिति** । निरवकाशस्याप्यपवादपदवाच्यत्वमभ्युपगम्य 'अजीगणत्' इत्यत्रेत्वेन हलादिश्शेषस्य बाधाभावोऽ**भ्यासविकार** इति परिभाषायाः प्रयोजनम्, इत्येकदेशिनोक्ते, तस्यापवादपदाशक्यत्वादपवादपदघटिताया अस्या एतदुदाहरणत्वमयुक्तमिति प्रतिज्ञाय तत्र हेतुत्वेन **'न गणेरीत्वम्' इत्यादि**—उक्त्वा[1] परिभाषायामपवादपद[2]स्थाने 'बाधका न बाधन्ते' इति वक्तव्यमित्यन्तो ग्रन्थः प्रवृत्तः । तेनापवादशब्दस्य केवलानवकाशपरत्वाभावः, तक्रन्यायविषयपरत्वञ्चोक्तमिति भावः ।

**अनवकाशमिति** । हलादिश्शेषोत्तरमनर्थकत्वेनाक्तपरिमाणत्वेन च स्थानिवद्भावैकदेशविकृतन्याययोरप्राप्त्या 'ग' शब्दे गण्त्वं दुर्लभमिति भावः । **तस्मिंश्च सतीति** । उक्तवचने सतीत्यर्थः । **सामर्थ्यादिति** । गण्सम्बन्ध्यभ्यासान्त्यस्येत्वमित्यर्थाङ्गीकारादित्यर्थः ।

एवञ्च 'क्वचिदपवादविषये' इति परिभाषामभ्युपगम्य तत्र चापवादपदेनोभयोर्ग्रहणेन तद्विषयये तत्प्रवृत्तेः पूर्वं तत्प्रवृत्तेरुत्तरं वोत्सर्गस्य प्रवृत्तिरित्यर्थाभ्युपगमे उक्तरीत्यानयैव 'अजीगणत्' इत्यस्य सिद्ध्या परिभाषान्तरस्वीकारेण तद्बाधनासङ्गतिरिति भावः । तत्रत्यकैयटोक्तिं खण्डयति—**न चेति** ।

**स्यादिति** । 'चिचीषति' इत्यादाविति भावः । **अर्थवदिति** । न चास्य लाक्षणिकत्वम्, माशब्दसाहचर्यान्मीशब्दांशेऽपि सा नेत्याशयात् । न चैवं कित्त्वविधानाभावे त्वेज्विषयत्वेनात्त्वप्रवृत्त्या "गामादा०" ( परि० ११५ ) इति वचनान्माग्रहणे-

---

१. 'उक्त्वा' इति नास्ति क० पु० । २. 'पद' इति नास्ति क० पु० ।

**पश्चात् प्राप्तगुणबाधनार्थम् "इको झल्" इति कित्त्वमित्युक्तम् । अन्यथापवादत्वेन बाधे तद्विषये उत्सर्गाप्रवृत्तेर्भाष्यस्य सूत्रस्य चासङ्गतिरिति स्पष्टमेव ।**

**यत्तु काञ्चनीत्यादावपवादमयड्विषयेऽप्यण् भवति, 'क्वचिदपवादविषयेऽपि' इति न्यायादिति, तन्न; "अण् कर्मणि च" इति सूत्रस्थभाष्यविरोधात् ।**

---

नैवास्यापि ग्रहणात् 'मित्सति' इत्यादाविस् भविष्यतीति मीग्रहणेन ग्रहणे फलाभाव इति वाच्यम्, एवं सति सामर्थ्याद्गुणस्येव 'ज्ञीप्सति' इत्यादौ मिलोपस्यापि बाधापत्तेः, उत्तरार्थं तस्यावश्यकत्वाच्चेत्यन्यत्र विस्तरः । प्रकृतमाह— **अन्यथेति** । अनवकाशत्वमूलकबाधस्थलेऽपि "येन ना०" ( परि० ५८ ) इति बाधाङ्गीकार इत्यर्थः ।

सीरदेवोक्तं खण्डयति—**यत्त्विति** । आदिना 'प्रदीयतां दाशरथाय मैथिली' इत्यादावपवादस्य "अत इञ्" ( पा० सू० ४।१।९५ ) इत्यस्य विषयेऽप्यणः परिग्रहः । **मयड्विषय इति** । इदमुपलक्षणमिञोऽपि[1] । 'काचि'धातोः "अनुदात्तेतश्च" ( पा० सू० ३।२।१४९ ) इति कर्त्तरि युचि, अनुदात्तादित्वादञि प्राप्ते तं बाधित्वा परत्वान्मयटि प्राप्ते, तथोभयमपि बाधित्वा 'अण्' भवति । यद्वा बाहुलकात् कर्त्तरि ल्युटि, काञ्चनशब्द आद्युदात्त इति नात्रः प्राप्तिरिति बोध्यम् ।

**न्यायादिति** । अत्र च ज्ञापकम् "अकेनोः०" ( पा० सू० २।३।७० ) इति सूत्रस्थमकग्रहणम् । तद्धि 'कृष्णं दर्शको याति' इत्यादौ "कर्त्तृकर्मणोः०" ( पा० सू० २।३।६५ ) इति षष्ठी निषेधार्थं यदि कर्मण्युपपदे ण्वुल् स्यात्तर्हि तत्सार्थकम् । 'शायको व्रजति' इत्याद्यकर्मकेषु "तुमुन्ण्वुलौ०" ( पा० सू०-३।३।१० ) इति ण्वुलश्चारितार्थ्येन सकर्मकेषु "अण् कर्मणि च" ( पा० सू०-३।३।१२ ) इत्यणा "तुमन्ण्वुलौ०" ( पा० सू० ३।३।१० ) इति ण्वुलः बाधात् स एव तुर्लभ इति तद्व्यर्थंम् ।

न च वासरूपविधिना ण्वुलपि भविष्यतीति वाच्यम्, तथा सति "ण्वुल्तृचौ" ( पा० सू० ३।१।१३३ ) इत्यनेनैव 'कृष्णं दर्शको याति' इत्यादौ ण्वुल्सिद्ध्या पुनरत्र ण्वुल्ग्रहणस्य वैय्यर्थ्यापत्त्या क्रियार्थोपपदकक्रियाविषये वासरूपविधेरभावज्ञापनात् ।

न च "तुमन्ण्वुलौ०" ( पा० सू० ३।३।१० ) इति सूत्रस्थण्वुल्ग्रहणस्य न वैयर्थ्यम्, "भविष्यति गम्यादयः" ( पा० सू० ३।३।३ ) इत्यधिकारविहितण्वुल एव "अकेनोः०" ( पा० सू० २।३।७० ) इति सूत्रे ग्रहणार्थं तस्यावश्यकत्वात् । अन्यथा 'वर्षशतस्य पूरकः' इत्यादावपि निषेधापत्तेरिति वाच्यम्, 'पाचकः' "याजकः" इत्यादौ "ण्वुल्तृचौ" ( पा० सू० ३।१।१३३ ) इति विहितण्वुल्विषये

---

१. 'अनोऽपि' इति पाठः क० पु० ।

**तत्र हि 'अणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थम्' 'गोदायो व्रजति' इत्याद्युक्तम् ।**

---

शब्दशक्तिस्वभावाद् भूतकालविषयताया एव "तुमुन्ण्वुलौ०" (पा० सू० ३।३।१०) इति सूत्रे भाष्यकैय्यटयोरुक्तत्वेन क्वचिद् भविष्यतीत्यादिपदान्तरसमभिव्याहाराद् भविष्यत्वस्य प्रतीतावप्यकान्तेन तदप्रतीत्या तत्रैतन्निषेधाप्रवृत्तेः । क्रियार्थोपपदकण्वुल्विषये तु हेतुहेतुमद्भावापन्नक्रियावाचकसमभिव्याहारेण फलभूतक्रियाया भविष्यत्वेन तादृश्या एवाकप्रत्ययान्तेन शब्दशक्तिस्वभावात्प्रतीत्या[1] तत्रैवेतन्निषेधप्रवृत्त्याऽदोषात् ।

वस्तुतस्तु—"लृट् शेषे च" ( पा० सू० ३।३।१३ ) इति सूत्रस्थशेषग्रहणमेवोक्तार्थे ज्ञापकम् । तद्धि "तुमन्ण्वुलौ०" ( पा० सू० ३।३।१० ) इत्येतद्विषये लृडर्थम् । यद्यत्र वासरूपविधिस्स्यात्तदा लृडित्यत्रैव क्रियार्थायामित्यस्य निवृत्त्या भविष्यत्सामान्ये तद्विधानेऽपि क्रियार्थोपपदे वासरूपविधिना लृटस्समावेशसम्भवेन तद्वैय्यर्थ्यं स्पष्टमेव । तस्मादकग्रहणमुक्त[2]—परिभाषायां ज्ञापकमेवेति तदुक्तं सर्वमसङ्गतमिति ध्वनयन्नाह—**तत्रेति** ।

**इत्याद्युक्तमिति** । तद्धि क्रियार्थोपपादके ण्वुल्विषये 'काण्डलावो व्रजति' 'गोदायो व्रजति' इत्यादावणर्थम् । त्वन्मते 'अपवादविषये' इति परिभाषयैवोभयत्र "कर्मण्यण्" (पा० सू० ३।२।१) इत्यनेनाण्सिद्ध्या सूत्रभाष्ययोरसङ्गतिः स्पष्टैव ।

न च काञ्चनशब्दादण्मयटोरिव 'क्वचिदपवाद०' ( परि० ५९ ) इति परिभाषया काणोस्समावेशापत्त्या "गोदो व्रजति' इत्यपि स्यात् । "अण् कर्मणि च" ( पा० सू० ३।३।१२ ) इति सूत्रे सति तु कविषयेऽप्यणो विधानात्, कस्य निवृत्त्या 'गोदो व्रजति' इति न भवति ।

एवञ्च **'अणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थम्'** इति भाष्यमपि न विरुद्धमिति वाच्यम्, तथा सति सूत्रस्य 'गोदो व्रजति' इत्यनिष्टवारणफलकत्वेनाणः पुनर्वचनमपवादनिवृत्त्यर्थम्, 'गोदो व्रजति' इति मा भूदित्येव वदेत् । किञ्च 'काञ्चनी' इत्यादेरन्यथासिद्ध्योक्तपरिभाषायाः फलाभावः ।

न च 'शायको व्रजति' इत्यादावकर्मके "तुमुन्ण्वुलौ०" (पा० सू० ३।३।१०) इति ण्वुलः चारितार्थ्येनापवादत्वासम्भवात्, 'काण्डलावो व्रजति' गोदायो व्रजति' इत्यादावण्कयोः परत्वात् ण्वुला बाधे प्राप्ते ण्वुलमपि बाधित्वाऽण्प्रवृत्त्यर्थमिदमावश्यकं सूत्रम् । तथा च "क्वचिदपवादविषये०" ( परि० ५९ ) इति परिभाषयोक्ताण्विषये ण्वुलोऽपि प्रवृत्त्या 'कृष्णं दर्शको याति' इत्यपि सिद्ध्यति ।

एवञ्चापवादविषयेऽनिवृत्त्यर्थमिति भाष्यस्य कर्मण्यणोऽपवादभूतकप्रत्ययविषये परत्वाण्ण्वुला बाधे प्राप्ते अणः पुनः प्रवृत्त्यर्थम् "अण् कर्मणि च"

---

१. 'स्वभावाप्रतीत्या' इति पाठः क० पु० । २. 'उक्त' इति नास्ति क० पु० ।

( पा० सू० ३।३।१२ ) इति सूत्रमित्याशय इति वाच्यम्, 'शायको व्रजति' इत्याद्यकर्मकेषु "ण्वुलतृचौ" ( पा० सू० ३।१।१३३ ) इति ण्वुलः सिद्धत्वेनाकर्मकेष्वेतत्प्रवृत्तौ फलाभावात् ।

न चाकर्मकेषु परत्वादपवादत्वाद्वानेन ण्वुलि वासरूपेण तृजादयो न भवन्ति । तथा च 'शयिता व्रजति' इति प्रयोगोऽपि नेति फलभेदादकर्मकेऽस्य प्रवृत्तिरावश्यकीति वाच्यम्, "तुमन्ण्वुलौ०" (पा० सू० ३।३।१०) इति ण्वुल्विषये कर्मोपपदस्थलेऽण्कयोः प्राप्त्याऽकर्मकेषु तृजादेः प्राप्त्या तत्र तस्य चारितार्थ्यासम्भवेन[1] विप्रतिषेधायोगेन बाध्यसामान्यचिन्तया सर्वापवादत्वस्य सुवचत्वात् ।

न चैवं 'क्वचिदपवादविषये' ( परि० ५९ ) इति परिभाषानङ्गीकारे "कृष्णं दर्शको यति' इत्यादावण्विषये ण्वुलोऽप्राप्त्या "अकेनोः०" ( पा० सू०-२।३।७० ) इति सूत्रेऽकग्रहणस्य वैयर्थ्यापत्तिरिति वाच्यम्, अकग्रहणेन क्रियार्थोपपदकण्वुल्विषये 'काण्डलावो व्रजति' इत्यादौ ज्ञापकसिद्धवासरूपनिषेधस्याप्रवृत्तिमात्रकल्पनेन वासरूपाभ्यनुज्ञानद्वारा ण्वुल्विषये "अण् कर्मणि च" (पा० सू०-३।३।१२ ) इत्यस्य प्रतिप्रसवार्थत्वे लाघवात्, "कर्मण्यण्" ( पा० सू० ३।२।१ ) इत्यस्यैव प्रवृत्त्यङ्गीकारेण[2] पक्षे 'काण्डान् लावको व्रजति' इत्यस्यापि सिद्ध्या अकग्रहणस्य चारितार्थ्यसम्भवेन त्वदुक्तपरिभाषाज्ञापकत्वे मानाभावात्, "अण् कर्मणि च" ( पा० सू० ३।३।१२ ) इत्यस्य त्वन्मतेऽपूर्वविधित्वापत्त्या गौरवाच्च ।

नन्वेवम्, 'गोदायो व्रजति' इत्यादावण् दुर्लभः । ण्वुल्विषयेऽणो वासरूपाभ्यनुज्ञानेऽपि काणोस्सारूप्याद्वा सरूपाप्राप्त्या केन तद्बाधात् । न च कस्यापि "अण् कर्मणि च" ( पा० सू० ३।३।१२ ) इत्यनेन परत्वाद् बाधः । अस्यानुवादकत्वपक्षे वासरूपसिद्धचभ्यनुज्ञानेन "कर्मण्यण्०" ( पा० सू० ३।२।१ ) इत्यनेनैवाण्प्रवृत्त्यास्य "ह्वावामश्च" ( पा० सू० ३।२।२ ) इत्यादिवत् स्वातन्त्र्येणाण्विधायकत्वानङ्गीकारेणात्र विप्रतिषेधाप्राप्तेरिति चेत्, न; "अण् कर्मणि०" ( पा० सू० ३।३।१२ ) इत्यस्यावृत्त्याऽपूर्वविध्यर्थत्वस्याप्यङ्गीकारेणादोषात् ।

वस्तुतः "ह्वावामश्च" ( पा० सू० ३।२।२ ) इत्यादिवत् प्रतिप्रसवविधित्वमेव युक्तम् । अकग्रहणेन "अण् कर्मणि च" (पा० सू० ३।३।१२) इत्यण्विषये ण्वुलः वासरूपविध्यभ्यनुज्ञानेन पक्षे ण्वुलोऽपि प्रवृत्तिकल्पनेन 'कृष्णं दर्शको याति' इत्यस्य सिद्धिः । 'गोदायः' इत्यादौ परत्वात् कस्यापि बाध इति सूत्रावृत्त्या प्रतिप्रसवपक्षाश्रयणं व्यर्थमिति दिक् ।

---

१. 'चारितार्थ्यसम्भवेन' इति पाठः क० पु० ।

२. 'प्रतिप्रसवाङ्गीकारेण' इति पाठः क० पु० ।

**'काञ्चनी' इत्यादौ काञ्चनेन निर्मितेत्यर्थे शैषिकोऽण् बोध्यः ।**

---

न चैवम् "अग्रादिपश्चाड्डिमच्" ( का० वा० ४।३।२३ ) इति डिमज्विषये कालाधिकारस्थ—"सायंचिरम्०" ( पा० सू० ४।३।२३ ) इति ट्युप्रत्ययस्य पश्चाच्छब्दात्प्रवृत्तिः फलम्, अत एव[1]—

नृपः पुरस्थैः प्रतिरुद्धवर्त्मा पश्चात्तनैः कैश्चन रुध्यमानः ।
यंत्रस्थसिद्धार्थपदाभिषेकं लब्धाप्यसिद्धार्थममन्यत स्वम् ॥

इत्यादि प्रयोगः सङ्गच्छते[2] इति वाच्यम्, देशवाचिनि पश्चाच्छब्दे डिमचश्चारितार्थ्येन तस्य तदपवादत्वायोगात् । "दक्षिणापश्चात्०" ( पा० सू० ४।२।९८ ) इति त्यगपि दिग्देशयोरेव प्रवर्त्तते । "अग्रादि०" ( का० वा० ४।३।२३ ) इति वार्त्तिकेऽपि कालादित्यस्य सम्बन्धे 'पश्चिमदेशः, पश्चिमा दिक्' इत्यस्यानापत्तिः । तस्मात्पश्चात्तन्वन्तीति 'पश्चात्तनाः' इति तत्समर्थनमुचितमिति दिक् ।

**काञ्चनीत्यादाविति** । 'भ्रमन्तीं काञ्चनीं कोटिम्' इति रामायणप्रयोगे, 'धारयंश्चाग्निसदृशीं शिरसा काञ्चनीं स्रजम्' इति भारतप्रयोगे चेत्यर्थः । **शैषिकोऽणिति** । ननु शैषिकोऽण "तस्येदम्" ( पा० सू० ४।३।१२० ) इति विवक्षितः, निर्माणस्यापीदमर्थव्याप्यत्वात् ? उत "शेषे" ( पा० सू० ४।२।९२ ) इत्यस्य स्वातन्त्र्येण विधायकत्वात् ? नाद्यः, छेन[3] बाधात् । न द्वितीयः, तस्य भाष्ये प्रत्याख्यानात् । तथाहि 'चाक्षुषं रूपम्' इत्यादौ "तस्येदम्" ( पा० सू० ४।३।१२० ) इति 'दार्षदाः' इत्यत्र "संस्कृतं भक्षाः" ( पा० सू० ४।२।१६ ) इत्यणः सिद्धेः ।

न चाधिकारार्थं तत्, अधिकारं विनापि घादीनां ट्युट्युलन्तानामपत्यादिचतुरर्थीपर्यन्तेष्वर्थेषु ज्ञापकेनाप्रवृत्तेः साधितत्वात् । तथा हि "गोत्रोक्षोष्ट्र०" ( पा० सू० ४।२।३९ ) इति गोत्राद् वुन्विधानमत्र ज्ञापकम् । तद्धि ग्लुचुकायनीनां समूहः 'ग्लौचुकायनकम्' इत्यादिसिद्धये यदि घादीनां पूर्वेष्वर्थेष्वपि प्रवृत्तिस्तदा समूहस्यापीदमर्थतया "गोत्रचरणाद् वुञ्" ( पा० सू० ४।३।१२६ ) इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव ।

न च समूहपदवत्समूहत्वेन बोधार्थं[4] तदावश्यकम्, प्रकारभेदेऽपि धर्मिण्यभेदेन तादृशबोधाभावेऽप्यदोषात् । न चापत्यादीनामिदन्तत्वेन विवक्षायामणादिव्यावृत्त्यर्थं शेषाधिकार इति वाच्यम्, उक्तज्ञापकेन समूहत्वादिविशेषरूपेणेदन्त्वादिसामान्यरूपेण वा समूहादिपूर्वोक्तार्थकबोधविवक्षायां घादयो नेति ज्ञापकेनादोषात् ।

---

१. 'पश्चाच्छब्दात्प्रवृत्त्यनापत्तिः । तथा च' इति पाठः क० पु० ।
२. 'प्रयोगसङ्गतिः' इति पाठः क० पु० ।
३. 'घेन' इति पाठः क० पु० ।
४ 'बोधार्थकम्' इति पाठः क० पु० ।

न चार्थसाकल्यार्थः शेषाधिकारः, अन्यथा सन्निहिते जाते एव स्युर्न भवादिषु घादय इति वाच्यम् "तत्र जातः" ( पा० सू० ४।३।२५ ) इत्युत्तरत्र पठिते "प्रावृषष्ठप्" ( पा० सू० ४।३।२६ ) इत्यत्रैव एण्यग्रहणेन "प्रावृष एण्यः" ( पा० सू० ४।३।१७ ) इत्यत्रेव टब्ग्रहणेन वा, उभयोः प्रत्यययोर्जातार्थे समावेशे सिद्धे पुनः "प्रावृष एण्यः" ( पा० सू० ४।३।१७ ) इत्यत्र प्रावृड्ग्रहणस्य वैय्यर्थ्यापत्त्या जाताधिकारे एव एषां पाठे कर्त्तव्ये, ततः प्रागनारभ्य, प्रकरणे पाठेन घादीनां वक्ष्यमाणयावदर्थेष्वपि सम्बन्धज्ञापनेनादोषात् ।

न च घादीनां स्वार्थिकत्वव्यावृत्तिरेवाधिकारफलम्, घादिविधावर्थनिर्देशाभावेन "तत्र जातः" ( पा० सू० ४।३।२५ ) इत्यादिषु प्रत्ययविशेषानुपादानेन ऐतैरेकवाक्यतया स्वतन्त्रविधित्वाद् अणश्च विधानेन व्यवस्थोपपत्तेः ।

तस्माल्लक्षणत्वेऽधिकारत्वे[1] च प्रयोजनाभावात् सूत्रस्य प्रत्याख्यातत्वात्, कश्चनीत्यादावण् दुर्लभ इति चेत्, न; ज्ञापकसिद्धवचनकल्पनापेक्षयाऽधिकारस्यैव लघुत्वात् । 'चाक्षुषम्' इत्याद्यवृद्धेषु "तस्येदम्" ( पा० सू० ४।३।१२० ) इत्यणा निर्वाहेऽपि काश्चनीत्यादि वृद्धेषु छेन बाधेन "तस्येदम्" ( पा० सू० ४।३।१२० ) इत्यस्याप्राप्त्या तत्राण्सिद्ध्यै तस्मिन् लक्षणत्वस्वीकारस्यावश्यकत्वात् ।

न चानिर्दिष्टार्थे विधीयमानशेषलक्षणाणोऽपि छेन बाधः शङ्क्यः, 'राष्ट्रे आस्ते, राष्ट्रे शेते' इत्याद्यनिर्दिष्टार्थेषु घप्रत्ययव्यावृत्तये "तत्र जातः" ( पा० सू० ४।३।२५ ) इत्याद्यर्थनिर्देशेनैकवाक्यताया घादिविधावङ्गीकारादनिर्दिष्टार्थे घादीनामप्राप्तेः ।

अत एव "शेषे" ( पा० सू० ४।२।९२ ) इत्यस्याधिकारत्वपक्षे शेषपदेनोपयुक्तादन्यस्योपयुक्तसजातीयस्य निर्दिष्टार्थस्य ग्रहणमिति 'राष्ट्रे आस्ते, शेते' इत्यनिर्दिष्टार्थे न घादिरिति सङ्गच्छते, अन्यथा फलभेदापत्तेः ।

न चैवम् "तस्येदमित्यपत्येऽपि०"[2] (का० वा० ४।१।९२) इति वार्त्तिकासङ्गतिः, तस्यापत्यमिति योगविभागाभावेऽपि भानोरपत्यम् 'भानवः' इत्यादौ "शेषे" ( पा० सू० ४।२।९२ ) इत्यण्सिद्धेः ।

न च 'तस्यापत्यमत इञ्' इति न्यासेऽपि अपत्यस्योक्तत्वात्तदर्थे "शेषे" ( पा० सू० ४।२।९२ ) इत्यणः प्राप्तिरेव नेति वाच्यम्, अदन्तप्रकृतिसम्बन्ध्यपत्यार्थस्योक्तत्वेऽप्यदन्तेतरप्रकृतिसम्बन्ध्यपत्यार्थस्यानुपयुक्तत्वेन शेषत्वोपपत्तेरिति चेत्, न; तस्यापत्यमिति योगविभागाभावे भानोरपत्यम् 'भानवः' इत्यस्य

---

१. 'लाक्षणत्वे' इति पाठः क० पु० ।

२. 'तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत् ।
उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम् ॥ इति वार्त्तिकस्वरूपम् ।

**अत्रेदं बोध्यम्—'येन नाप्राप्ते' इत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थः, तदा स्वविषये स्वेतरद्यद्यत् प्राप्नोति तद् बाध्यम्, विध्यन्तराप्राप्तविषयाभावात् ।**

**इयमेव बाध्यसामान्यचिन्तेति व्यवह्रियते । अनवकाशत्वेन बाधेऽप्येषा वक्तुं शक्या यद्युदाहरणमस्ति, विनिगमनाविरहात् ।**

---

शेषलक्षणाणा सिद्धावपि, उपगोर्भानोश्चापत्यस्येदन्तत्वेन विवक्षायामपत्यधर्मिकाणश्छस्य चापत्तेः ।

न च योगविभागाङ्गीकारेऽपि तद् दुर्वारम्, अदन्तप्रकृतिसम्बद्धापत्यार्थस्योपयोगेऽपि तदितरप्रकृतिसम्बद्धापत्यार्थस्यानुपयुक्तत्वेन शेषत्ववदपत्यत्वेनापत्यस्योपयोगेऽपीदन्तत्वेनानुपयोगाच्छेषत्वमक्षतमेवेति वाच्यम्, अपत्यनिवाससमूहादेस्तत्त्वेनोपयोगेनेदन्तत्वेनानुपयुक्तत्वेन तेष्विदन्तत्वविवक्षायां शेषत्वस्याक्षतत्वेन पुनः "शेषे" ( पा० सू० ४।२।९२ ) इत्यधिकृत्य शेषभूतेदमर्थे इति विशेषणसामर्थ्यादुपयुक्तार्थभिन्नस्यैवार्थजातस्य विशेष्यभूतस्येदन्तत्वेन विवक्षेत्यङ्गीकारेणोक्तविषयेऽपत्यधर्मिकाणः, छस्य चाप्रवृत्तेरदोषात् ।

अत एव छस्याप्राप्तिलक्षणबाधनार्थत्वं योगविभागस्य भाष्यवार्त्तिकाद्युक्तं सङ्गच्छते । एवञ्च "औपगवः' 'भानवः' इत्यादावपत्यार्थस्य योगविभागसत्त्वे शेषत्वाभावाद्दोष इत्यणोऽप्राप्तौ 'तस्यापत्यम्' ( पा० सू० ४।१।९२ ) इत्यणिति सर्वं सुस्थमिति दिक् ।

**स्वेतरेणेति** । स्वपदमपवादपरम् । अपवादेतरत्वावच्छिन्नेनेत्यर्थः । **विध्यन्तराप्राप्तेति** । प्रसक्तार्थकप्राप्तपदेन समानाधिकरणो बहुव्रीहिः । आहिताग्न्यादित्वात् परनिपातः । तदव्याप्त्यलक्षणाभावादिति[1] तदर्थः । यद्वा कर्मणि क्तः । शास्त्रेणासम्बद्धो यो विषयस्तस्याभावादित्यर्थः ।

**इयमेवेति** । स्वेतरसकलबाध्यत्वविवक्षयेत्यर्थः[2] । बाध्यसामान्यचिन्ताया विषयमाह—**अनवकाशेति** । अपिना "येन ना०" (परि० ५८) इत्यस्य परिग्रहः । **यद्युदाहरणमिति** । इदम् "येन ना०" ( परि० ५८ ) इत्येतदभिप्रायेण । "येन ना०" ( परि० ५८ ) इति न्यायेन बाध्यसामान्यचिन्तयानेकं शास्त्रबाधे उदाहरणं मृग्यम् । तस्य चरितार्थविषयताया उक्तत्वात्[3] । रहाभ्यामिति निमित्तत्वेन कार्यित्वसामान्यबाधस्तु जातिपक्षेणेत्यावेदितमधस्तात्[4] ।

---

१. 'तदव्याप्त्यविषयाभावादिति' इति पाठः क० पु० ।
२. 'स्वेतरसकलबाधेनेत्यर्थः' इति पाठः क पु० ।
३. 'वस्तुतः' इत्यधिकः, पाठः क० पु० ।
४. 'कार्यित्व सामान्यस्य वाध्यसामान्यचिन्तया बाध इत्यावेदितमधस्तात्' इति पाठः क० पु० ।

**यदि तु येनेत्यस्य लक्षणेनेत्यर्थः, कार्येणेत्यर्थो वा, तदा बाध्यविशेषचिन्ता। अनवकाशत्वेन बाधेऽप्येतद्बाधेन सार्थक्यम्, उत तद्बाधनेत्येवं विशेषचिन्ता सम्भवति, यद्युदाहरणमस्ति ॥ ५९ ॥**

**तत्र कार्येणेत्यर्थे पररूपत्वावच्छिन्ने कार्ये आरभ्यमाणाया वृद्धेस्तद्बाधकत्वे निर्णीते किं शास्त्रविहितस्येत्येवं तद्विशेषचिन्तायामाहः—**

**पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते, नोत्तरान् ॥ ६० ॥**

**अवश्यं स्वपरस्मिन् बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभाव अकाङ्क्षाया निवृत्तेर्विप्रतिषेधशास्त्रबाधे मानाभावाच्चेत्येतस्य बीजम् ॥ ६० ॥**

**"नासिकोदरौष्ठजङ्घादन्ते" इत्यस्यौष्ठाद्यंशे ङीष्निषेधत्वावच्छिन्नबाधकत्वे निर्णीते किं विहितस्येत्याकाङ्क्षायामाहः —**

**मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते, नोत्तरान् ॥ ६१ ॥**

---

एतत्परिभाषाफलं तु "स्यतासी०" (पा० सू० ३।१।३३) "अचि र ऋतः" (पा० सू० ७।२।१००) "उऋत्" (पा० सू० ७।४।७) "ओमाङोश्च" ( पा० सू० ६।१।९५) इत्यादिः। यदा यत्पदेन बुद्धिस्थशास्त्रविशेषस्य परामर्शस्तदाहः— **लक्षणेन**—शास्त्रेणेत्यर्थः।

प्राधान्यादाहः – **कार्येणेति । अनवकाशत्वेनेति** । यथा "ह्वावामश्च" (पा० सू० ३।२।२ ) इत्यण् आदन्तलक्षणं कं बाधते ? उत 'सर्गह्वायी' इत्यत्र ताच्छिलिकणिनिं बाधत इति विषयेऽनेन कस्यैव बाधः, णिनिस्तु परत्वादणं बाधत इति सिद्धान्तः। "एत्येधति०" ( पा० सू० ६।१।८९ ) इति वृद्धिः "एङि पररूपम्" ( पा० सू० ६।१।९४ ) इत्यस्यैव बाधिका, न तु "ओमाङोश्च" ( पा० सू० ६।१।९५ ) इत्यस्य। **यद्युदाहरणमिति**। इदमपि पूर्ववद् "येन नाप्राप्तिन्याय०" ( परि० ५८ ) विषय इति बोध्यम् ॥ ५९ ॥

**तत्रेति**। द्वयोर्मध्ये इत्यर्थः। ननु-**कार्येणेत्यस्य**-कार्यविशेषेणेत्यर्थेऽपि कार्यतावच्छेदको यो विशेषधर्मस्तद्धर्मावच्छिन्नसर्वकार्यग्रहणसम्भवादुभयोरपि बाधापत्तिरत आहः—**किं शास्त्रेति**। नन्वाकाङ्क्षापि कल्प्यतामत आहः—**विप्रेति** ॥६०॥

मध्येऽपवादन्यायेऽपि येन कार्येणेत्यर्थाभिप्रायेणैवेति तात्पर्येणावतारयति- **"नासिका०" ( पा० सू० ४।१।५५ ) इति**। ननु ओष्ठाद्यंशे "असंयोगोपधात्०" ( पा० सू० ४।१।५४ ) इति पर्युदासेन पूर्वसूत्रस्य निषेधात्तस्य तत्राप्राप्त्येयमप्राप्तविभाषेति कथमस्या अपवादत्वम्, एतद्विषये कस्याप्युत्सर्गस्याप्राप्तेः।

तस्मादस्यापूर्वविधित्वेन 'अनोष्ठा' इत्यादौ प्रतियोगिप्रसक्तेरेवाभावेन "सहनञ्०" ( पा० सू० ४।१।५७ ) इति निषेधस्यैवाप्राप्त्या कथं परस्य

**तेनौष्ठादिषु पञ्चसु "असंयोगोपधात्" इति प्रतिषेध एव बाध्यते, न तु सहनञ्विद्यमानलक्षण इति "नासिकोदर" इत्यत्र भाष्ये स्पष्टम्। पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्या बीजम् ॥ ६१ ॥**

**ननु "वा छन्दसि" इत्यनेन "सेह्यपिच्च" इत्यनन्तरस्यापित्त्वस्येव हेरपि विकल्पः स्यात्। तथा "नेट्" इति निषेधोऽनन्तरहलन्तलक्षणाया इव सिचि-वृद्धिमृजिवृद्धयोरपि स्यात्, अत उक्तन्यायमूलकमेवाह:—**

**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ ६२ ॥**

**अत एव "संख्याव्ययादेः" इति ङीब्ग्रहणं चरितार्थम्। तद्धचनन्तरस्य ङीषो विध्यभावाय। "न क्तिचि" इति सूत्रे दीर्घग्रहणं च—**

---

"सहनञ्०" ( पा० सू० ४।१।५७ ) लक्षणस्य बाधप्रसक्तिः, "असंयोगोपधात्०" ( पा० सू० ४।१।५४ ) इति निषेधस्य बाध इत्यपि न युक्तम्, तस्य निषेधस्य पर्युदासत्वेन पूर्वसूत्रविषयकत्वेनानेन विकल्पविषये तन्निषेधाप्राप्तेरिति चेत्, न; "असंयोगोपधात्०" (पा० सू० ४।१।५४) इत्यस्य प्रसज्यप्रतिषेधपक्षे निषेधविषये एवारम्भेणोत्सर्गापवादयोरेकवाक्यत्वेन संयोगोपधभिन्नात्, सहनञ्विद्यमानपूर्वभिन्नात्, स्वाङ्गादित्यर्थेनास्य तद्विषये प्रतिप्रसवविधित्वेन नाप्राप्तसंयोगोपधलक्षणनिषेधस्यैवापवादस्यापि तन्निषेधस्यानेन बाधसम्भावनया बाधमाशङ्क्य, एतत्परिभाषया वारणस्य भाष्ये कृतत्वेनादोषात्।

अत्र मानमाहः - **पूर्वोपेति**। उत्तरस्याननुभवात् स्मृत्ययोग इति भावः। **बाधेन** इत्यस्य चारितार्थ्यसम्भवादिति शेषः। एवम् "इणो यण्" ( पा० सू० ६।४।८१ ) इति यण् इयङो बाधको न तु गुणवृद्धयोः, 'अयनम्' आयकः' इत्यादौ ॥ ६१ ॥

**उक्तन्यायमूलेति**। अनन्तरस्य विधानेन बाधेन वा साफल्ये व्यवहितस्य पश्चादुपस्थितस्य विधौ निषेधे वा मानाभाव इत्येवमुक्तन्यायमूलकमित्यर्थः। **विध्यभावायेति**। ननु ज्ञापितेऽपि चारितार्थ्यं दुर्वचम्। अनेन 'ङीप्' विधाने सूत्रस्य वैयर्थ्यापत्तेः।

न च "अन उपधा०" ( पा० सू० ४।१।२८ ) इति सूत्रस्य वैकल्पिकत्वेन तदभावपक्षे ङीषश्चारितार्थ्यात्पक्षे प्राप्तस्य परस्य ङीपो बाधनार्थं तत्। 'कुण्डोध्नी' इत्यत्र ङीपो बाधनाय "अन उपधा०" ( पा० सू० ४।१।२८ ) इत्यत्र "बहुव्रीहेरुधसः" ( पा० सू० ४।१।२५ ) इत्यनुवृत्त्य वाक्यभेदेन पुनर्विधानेनैव संख्यादिष्वपि तन्निवृत्त्या फलाभावात्[1] इति चेत्, न; संख्यादेर्बहुव्रीहेर्ङीष् भवति

---

१. 'वस्तुतोऽस्यामवस्थायाम् "अन उपधा०" ( पा० सू० ४।१।२८ ) इत्यनेन ङीपो विधानासम्भवेन ङीष्विधानेनास्य तद्बाधनार्थत्वासम्भवाच्च' इत्यधिकः पाठः क० पु०।

**चरितार्थम् । तद्ध्यनन्तरस्यानुदात्तोपदेशेत्यस्यैव निषेधाभावाय ।**

**मध्येऽपवादन्यायाद्यपेक्षयाऽनन्तरस्येति न्यायः प्रबल इति "अष्टाभ्यः" इति सूत्रे कैयटः ।**

**प्रत्यासत्तिमूलकोऽयम् । लक्ष्यानुरोधाच्च व्यवस्थेत्यपि पक्षान्तरम् । तत्र-तत्र क्वचित स्वरितत्वप्रतिज्ञानात्, सामर्थ्येन वा बाध्यतेऽयं न्यायः । यथा "टिड्ढा०" इति सूत्रेण डापा व्यवहितस्यापि ङीपो विधिः । "न षट्" इत्यादिना द्वयोरपि टाब्ङीपोः प्रतिषेधः । इयञ्च "शि सर्वनामस्थानम्" इत्यादौ भाष्ये स्पष्टेत्यन्त्र विस्तरः ॥ ६२ ॥**

**ननु दधतीत्यादावन्तरङ्गत्वादन्तादेशेऽल्विधौ, स्थानिवत्त्वाभावादादेशो न स्यादिति तद्वैयर्थ्यापत्तिः, अत आह—**

## पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ॥ ६३ ॥

---

चेत्, 'उधोऽन्तादेव' इति नियमेन 'द्विमुखी' इत्यादौ "स्वाङ्गा०" (पा० सू० ४।१।५४) इति' ङीषनिवृत्त्या चारितार्थ्यसम्भवात् ।

**चरितार्थमिति** । तनुधातोः "क्तिच्क्तौ च संज्ञायाम्" (पा० सू० ३।३।१७४) इति क्तिचि "अनुदात्तोपदेश०" ( पा० सू० ६।४।३७ ) इत्यनुनासिकलोपे प्राप्ते, क्तिचि परतस्तस्य निषेधे, ततः "अनुनासिकस्य०" ( पा० सू० ६।४।१५ ) इति दीर्घे प्राप्ते, तस्यापि निषेधार्थं दीर्घग्रहणम् ।

यदीयं न स्यात्तदोभयोर्निषेधे दीर्घग्रहणं व्यर्थमेवेत्याहः— **तद्धीति** । अपवादस्यापि प्रतिषेधफलकत्वात् "अनन्तरस्य०" ( परि० ६२ ) इति न्यायेनैव निर्वाहे "पुरस्तादपवादाः" ( परि० ६० ) इति व्यर्थमिति केचित् ।

**कैयट इति** । तत्र हि "औशादेशेन "सुपो धातु०" ( पा० सू० २।४।७१ ) इति लुको मध्येऽपवादन्यायेन बाधो वा, अनन्तरस्येति न्यायेन षड्भ्यो लुको बाधो वेत्याशङ्क्य, यत्र द्वावपि व्यवहितौ पूर्वोत्तरौ तत्र पूर्वानुभवाहितसंस्कारजनित-स्मृत्युपारूढस्य युक्तो बाधः । इह त्वौत्वेनैकाध्यायव्यवहितो द्वितीयाध्यायविहितो लुक् महता यत्नेन स्मरणीयः । अनन्तरस्त्वनुभवनीय इति स एव बाध्यते" इति तेनोक्तम् । **प्रतिज्ञानादिति** । क्वचिद् योगविभागसमर्थ्यादित्यपि बोध्यम् । **न षडिति** । आदिना योगविभागसामर्थ्येत्यस्य परिग्रहः ॥ ६२ ॥

**दधतीत्यादाविति** । आदिना अतुसादौ सकारस्येत्संज्ञापरिग्रहः । **अन्तरङ्गत्वादिति** । विकरणद्वित्वादिति शेषः । पूर्वोपस्थितनिमित्तकत्वेनापरनिमित्तकत्वेना-न्तरङ्गत्वमिति भावः ।

"प्रातिपदिकार्थ०" ( पा० सू० २।३।४६ ) इति सूत्रे 'तिङ्समानाधिकरणे प्रथमा' इति न्यासे 'देवदत्त पच ल्' इति स्थिते तिङ्सामानाधिकरण्याभावात्प्र-

**लक्षणैकचक्षुष्को ह्यपवादविषयं पर्यालोच्य तद्विषयत्वाभावनिश्चय उत्सर्गेण तत्तल्लक्ष्यं संस्करोति । अन्यथा विकल्पापत्तिरित्यर्थः ।**

---

थमाया अप्राप्त्या शतृशानचौ प्राप्नुतो न तु तिङः' तेषां लडादौ[1] चारितार्थ्या-दित्याशयेन "शतृशानचौ तिङपवादौ । न च "अपवादविषये उत्सर्गोऽभिनिवि-शते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य चापवाविषयं तत उत्सर्गोऽभिनिविशते । न तावदत्र कदाचित्तिङादेशो भवति । अपवादौ तावच्छतृ-शानचौ प्रतीक्षते" इत्युक्तं भाष्ये ।

इदं वचनद्वयं जातिव्यक्तिपक्षयोः फलभूतमित्याशयेन 'पूर्वं ह्यपवादाः' इति प्रतीकमादाय कैयटेन व्याख्यातम् । इह दर्शनद्वयम् । सर्वव्यक्तिविशेषस्वी-कारेणोत्सर्गप्रवृत्तिः, कतिपयविशेषावगाहनेन वा । तत्र पूर्वस्मिन् दर्शने उत्सर्गस्य विषयविभागाय पूर्वमपवादः प्रवर्त्तते, पश्चात्तद्विमुक्ते विषये उत्सर्गः प्रवर्त्तते । द्वितीये दर्शने तु अपवादविषयं प्रकल्प्योत्सर्गः प्रवर्त्तते' इति तदयुक्तमिति "सकृद्गति०" ( परि० ४० ) न्यायावसरे दूषितत्वात् ।

दर्शनद्वयस्य प्रकारान्तरेणोपपत्तिमाहः—**लक्षणैकेति । निश्चये इति ।** यद्यपि तद्विषयत्वं तदुद्देश्यतावच्छेदकाक्रान्तत्वरूपम् । तस्य चोत्सर्गप्रवृत्तिकाले तदुत्तर-काले चाभावाद् दधतीत्यादावुत्सर्गप्रवृत्तिर्दुर्वारा, तथापि यद्यत्रान्तादेशो न स्यात्तर्हि विकरणादिषु कृतेष्वपवादः स्यादिति सम्भावनायाः सत्त्वेनात्र नापवाद-विषयत्वाभावनिश्चय इत्यर्थः । **उत्सर्गाः**—इत्यस्य प्रवर्त्तन्त इति शेषः । तदाहः—**उत्सर्गेणेति । अन्यथेति ।** साम्भावनिकापवादात्पूर्वमुत्सर्गेण संस्कार इति भावः ।

एवञ्चेत्संज्ञाविषयेऽप्यपवादशास्त्रीयपदार्थज्ञानमात्रेणापाततोऽपवादविषय-ज्ञानेन तदविषये उत्सर्गप्रवृत्त्या विभक्तिपदार्थज्ञाने सति ततोऽपवादशास्त्रबोधे तद्विषयपरिहारेणोत्सर्गकृतलक्ष्यसंस्कार इति भावः ।

ननूत्सर्गस्य विभक्तिभिन्नेषु तवर्गादिषु प्रवृत्तये "हलन्त्यम्" ( पा० सू० १।३।३ ) इत्यस्य पुनर्बोधेऽपि तत्र तत्प्रवृत्तिकाले सुप्तिङ्घटकेष्वेवापवादविषय-त्वज्ञानेन तद्भिन्ने तासादिसकारेऽप्रवृत्तिवदतुसादिसकारेष्वपि तत्प्रवृत्तिर्दुर्वारा । निषेधस्य तसादिविषये चारितार्थ्येन तन्निषेधवैय्यर्थ्याभावेनैतत्परिभाषया वारणासम्भवादिति चेत्, न; तथा सति तत्र 'तु' ग्रहणस्य वैय्यर्थ्यापत्त्या साम्भाव-निकापवादविषयेऽप्युत्सर्गप्रवृत्त्याऽदोषात् ।

**विकल्पापत्तिरिति ।** लक्षणैकचक्षुष्काणां लक्ष्यस्वरूपनिर्णयस्य लक्षणार्थ-ज्ञानाधीनत्वेनापवादविषये उभयथापि साधुत्वज्ञापकवचनस्योपलम्भेन वचनद्वय-प्रामाण्याद् विकल्पापत्तिः । सिद्धान्ते तु 'पूर्वं ह्यपवादाः' इति वचनेनापवादविषय-

---

१. 'लिडादौ' इति पाठः क० पु० ।

निर्णयात् पूर्वमप्रामाण्यज्ञानानास्कन्दितोत्सर्गबुद्धेरनङ्गीकारेण निर्विकल्पप्रसक्ति-रिति बोध्यम् ।

नन्वपवादविषये तज्ज्ञानात्पूर्वमुत्सर्गकृतसंस्कारबुद्धावपि विशेषशास्त्र-ज्ञानोत्तरं तस्मिन्नुत्सर्गविषयत्वाभावे ग्रहेण 'अष्टाश्रीर्यूपो भवति वाजपेयस्य, चतुरश्रीः' इत्यादौ विशेषशास्त्रज्ञानात्प्राक् वाजपेयादावष्टाश्र्यनुष्ठानस्येव तस्मिन्न-साधुत्वग्रहसम्भवात्, तुल्यबलत्वाभावेन विकल्पापत्तेरयोगादिति चेत्, न; अवच्छे-दकावच्छेदेन विधेयान्वयः, सामानाधिकरण्येन चेति द्वयी गतिः । तत्र सामर्थ्यात् तद्विषये शास्त्रस्यात्यन्तिकसङ्कोचकल्पनापेक्षयोभयत्रापि द्वितीयकल्पाश्रयणे प्रयोगभेदेन तत्प्रवृत्त्या 'गोदः'[1] इत्यत्रापि कदाचिदणापत्त्या विकल्पापत्तिरित्या-शयात् ।

न च तुल्यबलयोरचरितार्थयोश्चरितार्थयोर्वा विरोधे विकल्पेन प्रवृत्त्यङ्गी-कारेऽप्यतुल्यबलयोर्विरोधे विकल्पे न मानम्, अन्यथा वाजपेयेऽष्टाश्रिचतुरश्रियू-पयोर्विकल्पापत्तेरिति वाच्यम् तुल्यबलयोरिवातुल्यबलयोरपि प्रामाण्याङ्गीकारे विकल्पापत्तिरित्याशयात् ।

ननु 'रमायाम्' इत्यादावामः स्थानिवत्त्वेन ङित्त्वेनापदवादशास्त्रोद्देश्यता-वच्छेदकावच्छिन्नत्वात् तद्विषयत्वाभावनिश्चयस्य तत्र सम्भवेन तत्र याडनापत्तिः । किञ्च 'पूर्वस्मात्' 'पूर्वात्' इत्यत्र "टाङसि०" ( पा० सू० ७।१।१२ ) इत्यादेशो दुर्लभः, पूर्वं ङसीत्यस्य तदुद्देश्यतावच्छेदकावच्छिन्नत्वात् । एवम् "वामि" (पा० सू० १।४।५ ) "वा नपुंसकस्य" ( पा० सू० ७।१।७९ ) इत्यादिनिषेधविकल्पेऽपीति चेत्, न; फलोपहितापवादविषयत्वाभावनिश्चयस्य कारणतयोक्तस्थले फलोपहित-त्वरूपविशेषणांशस्य वैकल्येन विशिष्टविषयत्वाभावग्रहस्य सुवचत्वात् ।

फलोपहितत्वञ्च प्रतिबन्धकरहितत्वम् । प्रतिबन्धकं क्वचिदपवादस्य निषेध-रूपम्, क्वचित्पाक्षिकप्रवृत्तिबोधकं वा शब्दरूपम्, क्वचिल्लक्ष्ये लक्षणस्येति न्यायरूपम्, क्वचिदसिद्धत्वरूपमिति यथा लक्ष्यमूहनीयमिति दिक् ।

न च "येन ना०" ( परि० ५८ ) इति न्यायविषयेऽप्यपवादप्रवृत्त्यनन्तर-मुत्सर्गस्य प्रवृत्त्यापत्तिः । लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्त्या फलोपहिताप-वादविषयत्वाभावादिति वाच्यम्, एतन्न्यायस्यापवादवैय्यर्थ्यमूलकत्वेनैतद्विषये तथाङ्गीकारेऽपि लोकन्यायमूलकबाधविषये उक्तरीतेरनङ्गीकारात् । **पूर्वम्—** इत्यस्योत्सर्गेण लक्ष्यसंकारात्पूर्वमित्यर्थः ।

**इत्यर्थ इति** । तथा चापवादशास्त्रस्य पूर्वं बुद्धिस्थत्वे उत्सर्गस्य तदतिरिक्त-विषयकत्वेन तात्पर्यसङ्कोचेन तद्विषयातिरिक्तविषयकत्वसिद्ध्या "कर्मण्यण्"

---

१. 'गोदा' इति पाठः क० पु० ।

**अभिनिविशन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः। 'अपवादो यद्यन्यत्र चरितार्थः' इति न्यायस्य तु नात्र प्राप्तिः, अन्तादेशाप्राप्तिविषये चारितार्थ्याभावात् ॥ ६३ ॥**

**लक्ष्यैकचक्षुष्कस्तु तच्छास्त्रपर्यालोचनं विनाप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्करोति, तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः, तदाहुः—**

---

( पा० सू० ३।२।१ ) इत्यादौ धात्वादिपदस्य धातुत्वेन रूपेणैवापवादविषयतानवच्छिन्नतद्धर्मावच्छिन्नबोधकतया तस्यैव लक्ष्यसंस्कारकत्वेन 'गोदः' इत्यादौ नाणापत्तिः।

लोकेऽपि 'मृदस्ति पात्रं करिष्यति' इत्यादौ पात्रत्वेन रूपेण मृत्पात्रस्यैव[1] बोधवत्, उत्सर्गशास्त्रस्थसामान्यधर्मावच्छिन्नबोधकपदस्य विशेषपरत्वे बाधकाभावात्। उत्सर्गापवादयोरेकवाक्यतेति पक्षेऽपि यत आदन्तात्कप्रत्ययोऽतस्तदतिरिक्तेभ्योऽण् भवतीत्यर्थो बोध्यः।

एतेनोत्सर्गवाक्यस्थधातुपदस्यादन्तातिरिक्तधातौ लक्षणा[2]। एवं सर्वत्रोत्सर्गवाक्यस्य लक्षणयैव लक्ष्यसंस्कारकबोधजनकत्वमित्यपास्तम्। अपवादशास्त्रीययावद्विषयातिरिक्तविषये तद्बाधकविषयातिरिक्तविषये च लक्षणायां महागौरवापत्तेः।

ननु **'अभिनिविशन्ते'** इत्यस्य प्रवर्त्तन्ते इत्यर्थ एव युक्तः, तत्रैव स्वारस्यात्। न च कप्रत्ययादिरूपापवादानां पूर्वं प्रवृत्तिसम्भवेऽपि निषेधविषये पूर्वं प्रवृत्तिर्न सम्भवतीति वाच्यम्, **पूर्वम्**—इत्यस्योत्सर्गेण लक्ष्यसंस्कारात्पूर्वमित्यर्थस्य कृतत्वेन, ततः पूर्वं निषेधस्य स्वविषये प्रवृत्त्युपपत्तेरिति चेत्, न; सामान्यशास्त्रे तात्पर्यसङ्कोचरूपबाधस्य विशेषशास्त्रीयपदार्थज्ञानाधीनत्वेऽपि विशेषशास्त्रस्य लक्ष्ये प्रवृत्त्यधीनत्वाभावेन तस्य प्रकृते अनुपयोग इत्याशयात्।

ननु 'जक्षति' इत्यादावदादेशस्य चारितार्थ्यसम्भवात् "अपवादो यद्यन्यत्र०" ( परि० ६६ ) इति न्यायेन 'दधति' इत्यादावन्तरङ्गत्वादन्तादेशो दुर्वारोऽत आह—**अपवादो यदीति। चारितार्थ्याभावादिति**। 'जक्षति' इत्यादावपि नित्यत्वाद् विकरणे लुकि च कृते "अदभ्यस्तात्" ( पा० सू० ७।१।४ ) इत्यस्य प्रवृत्तिः। यद्वाऽऽयन्नादिषूपदेशिवद्वचनेनान्तादेशस्योपदेशसन्नियोगशिष्टकार्यादपि पूर्वं प्रवृत्तये 'झ'प्रत्ययविध्येकवाक्यतया कृतादेशस्यैव झस्य प्रवृत्त्या तत्राप्यन्तादेशस्यान्तरङ्गत्वेन समानविषये चारितार्थ्यसम्भव इत्याशयात् ॥ ६३ ॥

द्वितीयपरिभाषामवतारयतिः - **लक्ष्यैकेति**। ननु तस्य लक्षणापेक्षैव न, लक्ष्यज्ञानस्य सत्त्वादत आह—**तस्यापीति। धर्मोत्पत्तेरिति**। ननु शास्त्रं त्वस्म-

---

१. 'मृत्त्वात्तस्यैव' इति पाठः क० पु०। २. 'लक्ष्याणा' इत्यपपाठः क० पु०।

**प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते ॥ ६४ ॥**

**तत इत्यस्यापवादशास्त्रपर्यालोचनात् प्रागपीत्यर्थः । प्रकल्प्येत्यस्य परित्यज्येत्यर्थः । अत एव प्रातिपदिकार्थसूत्रे भाष्ये "इदं द्वयमप्युक्त्वा न कदाचित्तावदुत्सर्गो भवति, अपवादं तावत्प्रतीक्षते" इत्यर्थकमुक्तम् ॥ ६४ ॥**

**एतन्मूलकमेव नवीनाः पठन्तिः—**

**उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधत इति ॥ ६५ ॥**

**यत्त्वभ्यस्तसंज्ञासूत्रे कैयटेन प्रकल्प्य चेति प्रतीकमुपादाय यथा 'न सम्प्रसारण इति परस्य यणः पूर्वं सम्प्रसारणम्, पूर्वस्य तु तन्निमित्तकः प्रतिषेधः' इत्युक्तम्,**

---

दाद्युद्देशेनैव प्रवृत्तमित्यनेनेदं विरुद्धमिति चेत्, न; तस्य शक्तिग्राहकशास्त्रमात्राभिप्रायकत्वेनादोषात् ।

न च शास्त्रस्य धर्मजनकत्वे "रक्षोहागम०" ( म० भा० पस्पशा० ) इति वार्त्तिके एतदनुक्त्या न्यूनतेति वाच्यम्, प्रक्रियास्मरणपूर्वकप्रयोगस्य धर्मजनकत्वेऽपि शास्त्रे तदनङ्गीकारेणादोषात् । प्रकल्प्य वेति पाठः । वा शब्दः पक्षविकल्पे ।

नन्वपवादविषयं परित्यज्य तदनन्तरमुत्सर्गः स्वविषयं संस्करोतीत्यर्थे पूर्वतो भेदो न स्यात् । इष्टापत्तौ वा शब्दासङ्गतिरत आहः—**तत इत्यस्येति** । तच्छब्दस्य प्रकारान्तपरामर्शितया पूर्वपरिभाषोक्तापवादशास्त्रपर्यालोचनस्य ग्रहणम् । तदाहः—**अपवादेति** । तत इत्यस्य प्रागपीति शेषः । **'अभिनिविशते'** इत्यस्य प्रवर्त्तत इत्यर्थः । **अत एवेति** । उभयोर्लक्षणैकचक्षुष्कलक्ष्यैकचक्षुष्कपरत्वाङ्गीकारादेवेत्यर्थः । **प्रतीक्षत** इति । लक्ष्यैकचक्षुष्कमतेऽपवादविषम्, अपवादशास्त्रपर्यालोचनमन्तरापि प्रतीक्षते, पश्यतीत्यर्थः । **इत्यर्थकमिति** । वाक्यमिति शेषः ॥ ६४ ॥

**प्रतिषेध इत्युक्तमिति** । कांणोर्विषय इव "न विभक्तौ०" (पा० सू० १।३।४) "न सम्प्र०" ( पा० सू० ६।१।३७ ) इत्यादावुत्सर्गस्य लक्ष्ये प्रवृत्तिमन्तरापवादविषयत्वाविषयत्वनिर्णयासम्भवेनापवादविषयत्वाभावनिश्चयात् पूर्वमुत्सर्गेण लक्ष्यसंस्कारासम्भवेनान्योन्याश्रयापत्त्या पूर्वया न गतार्थतेति द्वितीयवचनम् । सति तु तस्मिन् युवन्शब्दे निषेधविषयं यकारं परित्यज्येत्यर्थः ।

यद्वा यद्यत्र परस्य सम्प्रसारणं स्यात्तर्ह्यपवादविषयता स्यादित्येवमपवादविषयं मनसा परिकल्प्य, उत्पाद्य उत्सर्गः प्रवर्त्तत इत्यर्थः । अपवादस्य विषयो

**तत्तु तत उत्सर्ग इत्याद्यक्षरार्थाननुगुणम् ।**

**यत्त्वपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थं इति तदर्थं इति, तन्न, 'अभिनिविशतेऽपवादविषयम्' इत्यादिपदस्वारस्यभङ्गापत्तेः पदजन्यपदार्थोपस्थितौ वाक्यार्थबोधाभावे कारणाभावाच्च ।**

**यत्र त्वपवादो निषिद्धः, तत्रापवादविषयेऽप्युत्सर्गः प्रवर्त्तत एव । यथा 'वृक्षौ' इत्यत्र "नादिचि" इति पूर्वसवर्णदीर्घनिषेधादप्रवर्त्तमानस्य वृद्धिबाधकत्वाभावाद् वृद्धिः प्रवर्त्तते । अत एव "तौ सत्" इत्यादि सङ्गच्छते । अत एव निर्देशाद् भ्रष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रयणम् । ध्वनितं चेदम् "इको गुण०" इति सूत्रे भाष्य इति भाष्यप्रदीपोद्द्योते निरूपितम् ।**

---

यथा भवेत्तथोत्सर्गः प्रवर्त्तते, नत्वपवादविषयेऽपीति यावत् । एवञ्चायमपि लक्षणैकचक्षुष्कमते पूर्वप्राप्तोत्सर्गविषय इति तदाशयः[१] ।

**अननुगुणमिति**—कैयटोक्तार्थे **तत** इत्यस्य परिभाषायां फलाभावः । तत इत्यनेन प्रकल्पने पूर्वकालत्वस्योत्सर्गप्रवृत्तावुतरकालत्वस्य च द्योतितत्वेन क्त्वा—प्रत्ययानापत्त्याक्षराननुगुण्यमित्यपि बोध्यम् ।

वस्तुतो लक्ष्यैकचक्षुष्काभिप्रायकत्वे इदं वचनं व्यर्थमेव, लक्ष्यैकचक्षुष्कस्य संज्ञापरिभाषस्यापेक्षाभावेनानया विधिसंस्काराभावेन फलाभावात् । किञ्च **तत** इत्यत्र द्वितीयान्तात्तसिस्तल्लक्ष्यमित्यर्थः[२] । किञ्च "इदं द्वयमप्युक्त्वा न कदाचित्तावदत्रोत्सर्गो भवति, अपवादौ शतृशानचौ प्रतीक्षते' इत्युभयोरुपसंहारभाष्याक्षरस्वारस्यासङ्गतिः । ( त्वन्मतेऽनयोर्भिन्नविषयत्वेनैकरूपेण तथा वक्तुमशक्यत्वात् । कदाचिदित्यस्य पूर्वं समकालं वेत्यर्थः[३] ) इति बोध्यम् ।

**वाक्यार्थ इति** । ननु पदपदार्थोपस्थितावपि लक्ष्यसंस्कारकवाक्यार्थो नेति तदर्थं इति न दोषोऽत आहः—**पदस्वारस्येति** । न चैवम् 'रामौ' इत्यादौ वृद्ध्यनापत्तिः । पूर्वसवर्णदीर्घस्य वृद्ध्यपवादत्वेन तद्विषये तदप्रवृत्तेरत आह—**यत्र त्विति** ।

**निरूपितमिति** । तत्र हि "व्यञ्जनस्य वृद्धिवारणार्थमिग्ग्रहणम् 'अभैत्सीत्' । हलन्तलक्षणवृद्ध्या सिचिवृद्धेर्बाधान्न दोषः । तत्र तर्हि सा "नेटि" ( पा० सू०-७।२।४ ) इति प्रतिषिद्ध्यते । 'अकोषीत्' सिचिवृद्धेरप्येष प्रतिषेधः । अस्ति पुनः क्वचिदपवादे निषिद्धे उत्सर्गो न भवति । अस्तीत्याह । सुजाते अश्वसूनृते अध्वर्यो

---

१. 'एवञ्च' इत्यादितः 'तदाशयः' इत्यन्तं क० पु० नास्ति ।

२. 'किञ्च' इत्यादितः 'इत्यर्थः' इत्यन्तं क० पु० नास्ति ।

३. कोष्ठकान्तरितो नास्ति क० पु० ।

अद्रिभिस्सुतं शुक्रं ते अन्यदिति पूर्वरूपत्वे प्रतिसिद्धेऽयादयोऽपि न भवन्ति'' इति भाष्ये उक्तम् ।

यदि भ्रष्टावसरन्यायो नास्ति तर्हि भाष्यासङ्गतिः स्पष्टैव । भ्रष्टावसरन्यायश्च लोके—

आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥

इत्युक्तैर्यथा विवाहादावश्यके बन्धुसत्कारे स्वकाले अकृते सति पुनर्न करोति, कर्मण्यङ्गानुष्ठानकालेऽङ्गभूतप्रोक्षणादेः कर्मणोऽभ्रेषेऽपि न पुनस्तस्यानुष्ठानमिति 'किमनर्घ्यं यदवसरे दत्तम्' इत्यभियुक्तोक्त इति स्पष्टं तद्विदाम् । इदञ्च भाष्यमेकदेशिनः । अत एव ''नान्तः पादम्'' ( पा० सू० ६।१।११५ ) इति सूत्रे एङोऽतीत्यनुवर्त्तते, एङोऽति यद्यत्प्राप्नोति तस्य निषेध इत्यर्थमाश्रित्य सर्वनिषेधकत्वं भाष्ये उक्तम् ।

नन्वेतन्न्यायानाश्रयणे 'युष्माकम्' इत्यादौ ससुट्कनिर्देशेन सुटो निवृत्तौ नुट् दुर्वार इति चेत्, न; ''सामः०'' ( पा० सू० ७।१।३३ ) इति निर्देशेन शास्त्रप्रामाण्येनाम्येव साम्त्वस्यारोपेणाम्त्वबुद्धेर्निवृत्त्याऽऽम्त्वस्य स्थानिधर्मत्वाभावेन स्थानिवत्त्वेनाम्त्वातिदेशासम्भवान्नुटः प्राप्त्यभावेनादोषात् ।

ननु 'सर्वेषाम्' इत्यादौ सुड्विशिष्टे 'यदागम' न्यायेनाम्त्वस्यातिदेशेनाम्त्वसाम्त्वयोरविरोधात् साम्त्वस्याम्त्वव्याप्यतया साम्त्वारोपेणाम्त्वनिवृत्तिर्दुर्लभा ।

न च 'सर्वेषाम्'—इत्यादाववयवावयविभावापन्नसकारघटितसमुदायवृत्तिसाम्त्वस्य तदविरुद्धत्वेऽपि सामुशब्दैकदेशभूताखण्डसाम्त्वस्य तत्सामानाधिकरण्याभावात्तादृशसाम्त्वस्यैवारोपेण तस्याम्त्वविरुद्धत्वेनातिदिश्यमानधर्मविरुद्धस्वाश्रयाम्त्वप्रयुक्तकार्यप्रवृत्त्या न दोष इति वाच्यम् ।

तथा सति प्रत्ययत्वसुप्त्वविभक्तित्वस्याप्यतिदेशानापत्तेरिति चेत्, न; अतिदिश्यमानधर्मप्रयोज्यकार्यविरुद्धस्वाश्रयधर्मप्रयुक्तकार्यस्यैव निवृत्तिर्न तु तदविरुद्धकार्यस्यापि । सखण्डस्य सुड्विशिष्टाम्त्वरूपसाम्त्वस्य 'लक्ष्ये लक्षणस्य' इति न्यायानुसन्धानद्वारा सुण्निवृत्तिफलकत्वेन निरुक्तसाम्त्वस्याम्त्वविरुद्धकार्यारम्भकत्वेन सिद्धत्वासिद्धत्वयोरिव तयोर्विरुद्धत्वादतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मस्यातिदेशस्थलेऽविवक्षितत्वेनाम्त्वातिदेशासम्भवेनात्र विषये सुट्नुटोरप्रवृत्त्याऽदोषात् ।

नन्वामि साम्त्वारोपो व्यर्थः, ससुट्कनिर्देशेनैव भाविनस्सुटो निवृत्तिसम्भवात् । तथाहि—'युष्मद् आम्' इत्यत्रानादेशेऽजादावामि परतः भत्वेन

**एव नास्ति । हते देवदत्त उन्मज्जनं न देवदत्तहननोद्यतस्य, हनने तु भवत्येवोन्म-**

बाधाच्छेषे लोपाप्राप्तावपि सम्प्रति आकमादेशोत्तरं शेषे लोपेऽदन्तत्वेन प्रसङ्क्ष्य-माणस्य सुटः साम्प्रतिकस्यामश्च सामः प्रसङ्गे 'आकम्' भवतीति वाक्येन एकयैव प्रवृत्त्याकमादेशेन सुडामोरत्र विषयेऽत्यन्तमप्रयोगबोधनेन तन्निवृत्तेः सूपपादत्वात् ।

न चाकमादेशोत्तरं तेनापहृतत्वादाम एवाभावात्कस्य सुट् प्रसक्त इति वाच्यम्, आकम एव स्थानिवद्भावेनाम्त्वेन तत्सप्रसक्तेः सूपपादत्वात् । न चैवमप्याकमेव दुर्लभः, आमः ससुट्कस्य प्रसङ्गे एवाकमो विधानेनाकमादेशात्पूर्वं ससुट्कस्यामः प्रसङ्गाभावादिति वाच्यम्, साम्प्रतिकस्यामः आकमादेशे, शेषे लोपे च सति सुट् स्यादित्येवमौत्प्रेक्षिकस्य सुटश्च एकबुद्धावुपारोहेण बुद्धिविषयीभूतयो-स्तयोरेकस्मिन्नादेशे, उद्देश्यत्वेन सम्बन्धसम्भवात् ।

यथा "अस्तेर्भूः" ( पा० सू० २।४।५२ ) इत्यादौ गणे,[1] अस्धातोरुप-देशात् सर्वत्रास्बुद्धौ प्रसक्तायाम् "अस्तेर्भूः" ( पा० सू० २।४।५२ ) इति शास्त्रेण तद्बुद्धिनिवृत्तये आर्धधातुके विषये अस्बुद्धिप्रसङ्गे भूबुद्धिः कर्त्तव्येति भूबुद्धिप्रति-पादनेन स्थानिविषयकप्रसक्तबुद्धिरेव निवर्त्यते न तु लक्ष्ये वस्तुगत्यासतश्शब्दस्य निवृत्तिः क्रियते । तद्वत्प्रकृतेऽपि वर्त्तमानाम्विषयिण्याः, पूर्वोक्तरीत्यौत्प्रेक्षिकसुड्-विषयिण्याश्चैकबुद्धेः सम्भवेन तादृशोभयविषयकैकबुद्ध्यापादनरूपतत्प्रसक्तेराकम्-प्रवृत्तिकालेऽपि सम्भवेनाकमादेशप्रवृत्तेः सूपपादत्वात्

न चैवमपि "अस्तेर्भूः" ( पा० सू० २।४।५२ ) इत्यादौ यद्यत्रादेशो न स्यात्तर्हि स्थानिकर्मकोच्चारणविषयिणी बुद्धिः स्यादिति स्थानिकर्मकोच्चारण-विषयकबुद्ध्यापादनवत्, यद्यत्राकम्, न स्यात्तर्हि युष्मच्छब्दात्परसकार आम् च श्रूयेतेति स्थानिविषयकश्रुत्यापादनस्यासम्भवेन[2] तादृशापत्तिरूपस्थानपदार्थ-निरूपितसम्बन्धप्रतियोगित्वरूपस्थानित्वमेव सामो दुर्वचम्[3], इति तादृशस्थानिप्र-सक्तिप्रयोज्याकम्—प्रवृत्तेरेव 'युष्मद् आम्' इत्यत्रासम्भवेन तेन सुण्निवृत्तेः[4] सुत-रामसम्भवात् ।

किञ्च सर्वत्रादेशप्रवृत्तिस्थानिविषयकबुद्ध्यापत्तिप्रयोज्या प्रकृतत्वादेशप्रवृत्ति-रेव स्थानिविषयकबुद्ध्यापत्तिप्रयोजिकेति, तस्यास्तदुत्तरभावित्वान्निवर्त्यस्थानि-विषयकबुद्ध्या निवर्त्तकादेशबुद्ध्यपेक्षया पूर्वभावित्वाभावेन बुद्ध्योर्निवर्त्यनिवर्त्त-कत्वमूलकस्थान्यादेशयोर्निवर्त्यनिवर्त्तकत्वमप्येतादृशे विषये दुर्वचमिति वाच्यम्, "अस्तेर्भूः" ( पा० सू० २।४।५२ ) इत्यत्रेवात्रापि स्थान्यापादनस्य सुवचत्वात् ।

---

१. 'गुणे' इति पाठः क० पु० । २. 'आपादनस्य सम्भवेन' इति पाठः क० पु० ।
३. 'दुर्वचत्वम्' इति पाठः क० पु० । ४. 'सुट् प्रवृत्तेः' इति पाठः क० पु० ।

ज्जनम्। प्रकृतेऽपि न पूर्वसवर्णदीर्घेण वृद्धेर्हननम्, किन्तु हननोद्यमसजातीयं

तथाहि "सामः०" ( पा० सू० ७।१।३३ ) इत्यत्र समाहारद्वन्द्वः। सकारस्य मश्च प्रसङ्गे 'आकम्' इति वाक्यार्थः। तत्र यथा "एकः पूर्वपरयोः" ( पा० सू० ६।१।८४ ) इत्यत्र अन्यतरस्यानिर्देशेन पूर्वस्य परस्य वा स्थाने यद्येकादेशो न विधीयेत तर्हि पूर्वस्य परस्य वा श्रवणं स्यादित्यादेशविध्यभावः स्थान्यापत्तिप्रयोजकः।

एवमत्रापि ससुट्कनिर्देशमकृत्वा सकारस्य स्थाने आकमादेशो न क्रियेत, तर्हि सकारस्य श्रवणं स्यात्, तथा आमः स्थाने यद्याकमादेशो न क्रियेत, तर्हि 'आम्' श्रूयेतेत्येवं परिनिष्ठितप्रयोगे स्थानिश्रवणापत्तिरूपानिष्टापादनस्य सूपपादत्वेन सकारस्यामश्च स्थानिवत्त्वोपपत्तेः।

तत्रादेशबुद्धिः स्थान्यापत्तिनिर्वर्त्तिका। ज्ञानयोर्निवर्त्यनिवर्त्तकत्वञ्च द्विविधम्। तदनुत्पत्तिप्रयोजकत्वरूपम्, तस्मिन्नप्रामाण्यग्राहकत्वरूपञ्च। तत्र पूर्वमेव यत्र निवर्त्तकज्ञानं तत्र निवर्त्यविषयकज्ञानस्यानुत्पत्तिरूपं निवर्त्यत्वम्। यत्र पश्चादेव तज्ज्ञानं तत्र द्वितीयम्।

एवञ्चामंशे साम्प्रतिक्यनिष्टापत्तिः, सकारांशे उत्तरकालिकीति चेन्नैवम्, सामः प्रसङ्गे आकमिति वाक्ये साम इत्यखण्डविषयिण्येकापत्तिरुत सकारविषणी, आम्विषयिणी च भिन्ना।

नाद्यः, यद्यत्राकम्—न स्यात्तर्हि युष्मच्छब्दाव्यवहितोत्तरं सामः श्रवणं स्यादित्येवं समुदायविषयकानिष्टापादनरूपापत्तेः, साम्प्रतिक्या भाविन्याश्चासम्भवेन तदापत्तिरूपप्रसक्तिप्रयोज्यस्यादेशस्याप्यप्रवृत्त्यापत्तेः।

न द्वितीयः। युष्मच्छब्दात्परस्य सकारस्यामश्च प्रसङ्गे 'आकम्' भवतीति सूत्रार्थे विज्ञायमाने "एकः पूर्वपरयोः" ( पा० सू० ६।१।८४ ), रोपधयोरुपधावकायोरित्यादाविव युष्मच्छब्दाव्यवहितपरत्वेन सकारस्यामश्च 'आकम्'प्रवृत्तिकाले तयोः युगपत्प्रसक्त्यसम्भवेन शुक्तिकाशकलद्वये युगपत्प्रसक्तभ्रमस्य सकृदुपदेशेन निवृत्तावप्यत्र कालभेदेन प्रसक्तभ्रमस्य तेन निवृत्त्यसम्भवादत्रापि कालभेदेन शास्त्रबोध्यप्रसक्तेः, पुनः शास्त्रव्यापारमन्तरा तयोर्निवृत्त्यसम्भवेन क्रमेण द्वयोः प्रसक्तेरपि 'अतित्वाकम्' इत्यादावसम्भवेन तन्निवृत्तये "इरयो रे" ( पा० सू० ६।४।७६ ) इत्यादाविव द्विबारं प्रवृत्त्या स्थानिभेदेनाकमादेशद्वयस्याश्रवणापत्तिः। पूर्वोक्तरीत्याम्येव साम्त्वारोपे तु न किञ्चदनिष्टमिति दिक्।

केचित्तु "सामः०" ( पा० सू० ७।१।३३ ) इत्यत्र 'सपुत्रः' इतिवद् बहुव्रीहिः। तेन केवलस्यामो व्यपदेशिवद्भावेन साम्त्वादाकमि तस्य स्थानिवत्त्वेनाम्त्वात्सुटि "सामः०" ( पा० सू० ७।१।३३ ) इति बहुव्रीहिनिर्देशबलाल्लक्ष्ये लणस्येति न्यायाप्रवृत्त्या पुनराकमि न दोषः। 'अतित्वाकम्' इत्यादौ नुडविशि-

**प्रसक्तिमात्रम्, प्रसक्तस्यैव निषेधात् ।**

ष्टस्याप्यादेशेन निर्वाह इत्याहुः । ''शेषे०'' ( पा० सू० ७।२।९० ) इत्यत्र विषयसप्तम्याश्रयणेन पूर्वमेवान्त्यलोपे, ततः सुटि, नुटि, वा प्राप्ते तदपवादतयाऽऽकमि कृते इष्टं सिद्ध्यतीति सकारनिर्देशो व्यर्थ इति कश्चित्[1] ।

ननु भ्रष्टावसरन्यायानाश्रयणे 'उवोख' इत्यादौ द्वित्वकर्त्तव्यतायां गुणनिषेधेऽपि द्वित्वोत्तरं गुणप्रवृत्तिवद् राजन्शब्दस्य हलन्तत्वाद् हल्ङ्यादिसूत्रेण ततः परस्य सोर्लोपेनानुत्पत्त्यन्वाख्यानेऽपि प्रत्ययलक्षणेन पदत्वान्नलोपे कृते, ततो हलन्तत्वाभावेन सूत्पत्त्या विसर्गश्रवणापत्तिः[2] ।

न च नलोपस्य हल्ङ्यादिसूत्रं प्रत्यसिद्धत्वेन हलन्तत्वानपायाल्लोपविषयत्वेन 'चितम्' 'स्तुतम्' इत्यादौ पुनर्गुणाप्रवृत्तिवदत्रापि पुनः सुबुत्पत्तिर्न सम्भवतीति वाच्यम्, ''ङ्याप्प्रातिपदिकात्०'' ( पा० सू० ४।१।१ ) इति सूत्रदृष्ट्या नलोपस्य सिद्धत्वेनापवादशास्त्रोद्देश्यतावच्छेदकीभूतहलन्तत्वरूपधर्मावच्छिन्नत्वाभावेनोत्सर्गप्रवृत्तेर्दुर्वारत्वात् ।

न चोत्सर्गस्य स्वदृष्ट्या 'इदं हलन्तम्' इति ज्ञानाभावेऽपि हल्ङ्यादिसूत्रस्य 'इदं हलन्तम्' इति ज्ञानमक्षतमिति, तेन तत्र सोरुत्पत्तिर्निवार्यते ।

न च नलोपस्य सिद्धत्वेनाकारान्त एव हलन्तत्वज्ञानमक्षतमिति, अकारान्तात्परस्मिन् हलन्तात्परत्वं सुलभमिति वाच्यम्, नकारात्पूर्वमेवोत्सर्गदृष्ट्या नलोपस्य सिद्धत्वेनाकारान्तादव्यवहितत्वेनैव तस्य विधानेन हलन्तात्परत्वेन तत्प्रसक्तेरसम्भवात् । तेन लोपस्य दुर्वचत्वात् । उत्सर्गापवादन्यायेन तयोरेकवाक्यतया हलन्तभिन्नात्प्रातिपदिकात् सुर्भवतीत्यर्थेन सोर्दुर्वारत्वात् ।

किञ्चोत्सर्गशास्त्रस्य स्वदृष्ट्याऽपवादशास्त्रोद्देश्यतावच्छेदकधर्मावच्छिन्नत्वज्ञानस्य स्वप्रवृत्तौ प्रतिबन्धकत्वेऽप्यपवादशास्त्रदृष्ट्याऽपवादशास्त्रोद्देश्यतावच्छेदकरूपावच्छिन्नत्वज्ञानस्यापि स्वप्रवृत्तौ प्रतिबन्धकत्वकल्पने मानाभावात् । न च पुनर्लोपेन निर्वाहः, लक्ष्ये लक्षणस्येति न्यायेन तदप्रवृत्तेः । न च सूत्पत्तिरपि तेन न्यायेन न भविष्यतीति वाच्यम्, पूर्वं लक्ष्ये प्रसक्तस्यैव निषेधेन 'उवोख' इत्यादौ गुणवत्प्रवृत्तेर्दुर्वारत्वात् ।

अत एव तस्य न्यायस्यानित्यत्वात् 'सः' इत्यत्र विसर्गश्रवणम् । अन्यथा तदित्यवस्थायां हलन्तत्वात्सोरनुत्पत्तौ प्रत्ययलक्षणेन त्यदाद्यत्वेऽपि विसर्गश्रवणानापत्तेरिति चेत्, न; 'सुराजा' इत्यादौ टजादिसमासान्तनिषेधविषये लोपसंज्ञाया अप्रवृत्तये उत्सर्गापवादयोरेकवाक्यतया महावाक्यार्थबोधेन, निषेधविषये उत्सर्गशास्त्रस्य सङ्कोचेन, तद्विषये पूर्वमुत्सर्गशास्त्रव्यापाराभावेन, तद्बोध्यकार्यस्य

१. ''शेषे' इत्यादितः 'कश्चित्' इत्यन्तं नास्ति क० पु० ।
२. 'विसर्गाश्रवणापत्तिः' इति पाठः क० पु० ।

लक्ष्ये प्रसक्त्यभावेन, तत्प्रसक्तिपूर्वकतन्निवृत्त्यभावेन लोपसंज्ञाया अप्रवृत्तिवत्—'उवोख' इत्यादौ पूर्वमुत्सर्गशास्त्रव्यापाराभावेन, लक्ष्ये लक्षणस्येति न्यायाप्राप्त्या पुनर्गुणवृद्धिसम्भवेऽपि 'रामाय' इत्यादौ भावादेशस्थले स्थानिविधायकशास्त्रव्यापारमन्तरेण लक्ष्ये स्थानिविषयकबुद्धेरेवानुदयेन तत्र प्रसक्तिमुपजीव्य विधीयमानादेशबुद्धेरप्यसम्भवेन स्थान्यादेशबुद्ध्योर्निवर्त्यनिवर्त्तकभावमूलकस्य तद्विषयीभूतस्थान्यादेशयोर्निवर्त्यनिवर्त्तकभावस्याप्यनापत्त्या तद्व्यावृत्तये स्थान्यादेशविधायकयोरेकवाक्यतानङ्गीकारेण, स्थानिविधायकवाक्यस्य तद्विषये सङ्कोचाभावेनादेशविषयेऽपि स्थानिविधायकशास्त्रव्यापारेण पूर्वं स्थानिनः प्रसक्तिमुपजीव्य विधीयमानादेशबुद्ध्या स्थानिविषयकबुद्धेर्निवृत्त्या स्थानिनो निवृत्तिवत्, अभावमात्रविधायकलोपरूपादेशस्थलेऽपि पूर्वं स्थानिविधायकशास्त्रव्यापारस्य जातत्वेन पुनस्तल्लक्ष्ये, लक्ष्ये लक्षणस्येति न्यायेन पुनः स्थानिविधानाभावेन तत्र स्थानिभूतसूत्पत्तेरप्ययोगेन राजेत्यस्य सिद्धेर्निष्प्रत्यूहत्वात् ।

एतेन स्थान्यादेशविषये प्रसङ्गवत एव स्थानिनो निवृत्तिर्न तु सत इति "साम आकम्" ( पा० सू० ७।१।३३ ) इति सूत्रस्थशेखररीत्या सतः क्वापि निवृत्त्यनङ्गीकाराद् देवदत्तहन्तृहतन्यायाप्राप्त्या 'रामौ' इत्यत्र वृद्धेरुज्जीवनवत् 'अभूत' 'भव' इत्यादौ प्रसङ्गवतः च्लेर्निवर्त्तकसिज्बुद्धिप्रसङ्गे तस्य "गातिस्था०" ( पा० सू० २।४।७७ ) इति लुकानुत्पत्त्यान्वाख्यानेऽपि पुनः स्थानिभूतच्लेरुन्मज्जनप्रसङ्ग इत्यपास्तम् ।

आदेशविधौ सर्वत्र स्थानिप्रसक्तेरुपजीव्यत्वेन तत्सिद्धये तल्लक्ष्ये स्थानिबोधकशास्त्रव्यापारस्यावश्यकतया तेन स्थानिविषयकबुद्ध्युदयोत्तरमादेशविधायकशास्त्रव्यापारेणादेशबुद्ध्या स्थानिबुद्धेर्निवृत्त्यनन्तरं पुनस्तल्लक्ष्ये तत्कार्यस्य शास्त्रव्यापारमन्तरा प्रसक्त्यसम्भवेन पूर्वं तल्लक्ष्ये तस्य शास्त्रस्य सकृत्प्रवृत्तत्वेन लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्त्या पूर्वं प्रसक्तस्यादेशबुद्ध्या निवृत्तत्वेन देवदत्तहन्तृहतन्यायेन पुनरुन्मज्जनासम्भवात् ।

'रामौ' इत्यादौ तु "नादिचि" ( पा० सू० ६।१।१०४ ) इति निषेधैकवाक्यतया वृद्धिबाधकपूर्वसवर्णदीर्घस्य तद्विषये सङ्कोचेन पूर्वं प्रसक्तवुद्धेरनिवृत्त्या तत्र तत्प्रवृत्तिसम्भवेऽपि 'अभूत्' 'भव' इत्यादौ पूर्वं प्रसक्तस्थानिन आदेशेन निवृत्ततया चरमादेशस्य लोपेन निवृत्त्या देवदत्तहन्तृहतन्यायेन तदुन्मज्जनाभावेनाऽदोषात् । 'सः' इत्यादौ तु न दोषः । अत्वविधौ विभक्तावित्यस्य विषयसप्तमीत्वेन विभक्त्युत्पत्तेः पूर्वमेवात्वप्रवृत्तेः, सूत्पत्तिकाले "हल्ङ्याप्०" (पा० सू० ६।१।६८) इति शास्त्राप्राप्त्या न दोष इत्यलम् ।

**प्रतिपदोक्तत्वमपि निरवकाशत्वे सत्येव बाधप्रयोजकम् । स्पष्टञ्चेदम् "शेषाद् विभाषा" इति सूत्रे भाष्ये । तत्र हि 'शेषग्रहणमनर्थकम्, ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्ति' इत्याशङ्क्य, 'अनवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशाः' इत्युक्तम् ।**

**क्वचिदनवकाशत्वाभावेऽपि परनित्यादिसमवधाने शीघ्रोपस्थितिकत्वेन पूर्वप्रवृत्तिप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि, परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति "प्रत्ययोत्तरपदयोश्च"**

---

**निरवकाशत्वे इति** । अत एव 'स्त्रीणाम्' इत्यत्र "स्त्रियाः" ( पा० सू० ६।४।७९ ) इति इयङ् न । **बाधका भविष्यन्तीति** । "बहुव्रीहौ सक्थ्यक्ष्णोः०" ( पा० सू० ५।४।११३ ) इत्यादिना विहिताः षजादयः ।

**सावकाशा इति** । न च 'जलजाक्षी' इत्यादौ षच्कपोः प्राप्तौ षचोऽनवकाशत्वेन तद्विषये पूर्वं कपोऽप्रवृत्त्या तस्य सावकाशत्वाय पूर्वं तस्य लक्ष्ये प्रवृत्तेरावश्यकतया स्वोद्देश्यतावच्छेदकाक्रान्ते स्वस्य पूर्वं प्रवृत्त्या तस्य नित्यत्वेन जातस्य निवृत्त्ययोगात् । 'ब्रीहिमायः' इत्यादौ चरितार्थस्य "ह्वावामश्च" ( पा० सू० ३।२।२ ) इत्यणः 'धान्यमायः' इति प्रयोगान्तरे आदन्तलक्षणेन केन परत्वाद् बाधाभाववत्, अत्रापि बाधासम्भवाच्छेषग्रहणं व्यर्थमेवेति वाच्यम्, कपो वैकल्पिकत्वेन कप्प्रवृत्तिपक्षेऽत्रैव लक्ष्ये इदं चरितार्थं भवेदिति वैज्ञानिकं चारितार्थ्यमादाय "विप्र०" ( पा० सू० १।४।२ ) इति सूत्रेण कपः प्रवृत्त्यापत्त्या तद्वारणाय शेषग्रहणस्यावश्यकत्वमित्याशयात् ।

अत एव "उगवादिभ्यः०" ( पा० सू० ५।१।२ ) इति सूत्रे 'छादिषेयं चर्म' इत्यत्र "चर्मणोऽञ्" ( पा० सू० ५।१।१५ ) इति बाधित्वा पूर्वविप्रतिषेधाड्ढञिति भाष्ये उक्तम् । अन्यथा प्रतिपदोक्तत्वादेव ढञा बाधसिद्धेः, किं तेन । छदिः—छादनवाचि चर्मविकारेऽपि 'छादिषेयं तृणम्' इत्यत्र ढञ् 'वार्ध्रं चर्म' इत्यत्राञ् च चरितार्थं इति चर्मविकारवाचकात्तूभयप्राप्तौ पूर्वविप्रतिषेधः, तत्र महाविभाषया ढञभावपक्षे चरितार्थेन ढञा प्रतिपदोक्तत्वे बाधे पूर्वविप्रतिषेधासङ्गतिः । तस्मान्निरवकाशस्यैव प्रतिपदोक्तस्य बलवत्त्वं भाष्यसम्मतमिति[1] प्राचामाशयः ।

ननु प्रतिपदविधेर्निरवकाशस्यैव बलवत्त्वे शास्त्रे प्रतिपदविधेर्बलवत्त्वेनोल्लेखो व्यर्थः । सर्वत्रानवकाशत्वेनैव बाधसिद्धेरत आह—**क्वचिदिति** । तेन 'इयाय' इत्यादाविणो यण् प्रतिपदविधित्वान्नेति बोध्यम् ।

अत्र मानमाह—**परेति** । **सन्निपाते इति** । विरुद्धयोः शास्त्रयोरेकस्मिन् लक्ष्ये प्रसङ्गे सति, एतत्प्रतिद्वन्द्विभूतपूर्वानित्यबहिरङ्गसावकाशान् बाधित्वा यत्पराद्यन्यतमं तद्भवतीत्यर्थः । **तेषामिति** । परनित्यादीनां मध्ये मिथः प्रसङ्गे,

---

१. 'भाष्यासम्मतम्' इति पाठः क० पु० ।

**इति सूत्रे कैयटेन पाठात् ।**

**अत एव 'रमे' इत्यादौ प्रतिपदोक्तत्वात् पूर्वमेत्व आकारप्रश्लेषाद्धल्ङ्यादिलोपो न प्राप्नोतीत्याशङ्क्य "एङ्ह्रस्वात्" इति लोपेन समाहितम् ।। ६५ ।।**

**ननु 'अयजे इन्द्रम्' इत्यादावन्तरङ्गस्यापि गुणस्यापवादेन सवर्णदीर्घेण बाधः स्यात्, अत आह:—**

**अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ।। ६६ ।।**

**निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावात् । एवञ्च प्रकृतेऽन्तरङ्गेण**

---

परस्परविरुद्धकार्यद्वयप्रसङ्गे उपात्तक्रमेण यत्परं तद्बलवदिति तदाशयः । **पाठादिति** । अनवकाश इत्यनुक्त्वा सामान्यतः प्रतिपदविधय इति पाठादिति भावः । प्रमाणान्तरमाह:—अत **एवेति** । समाहितमिति । हल्ङ्यादिलोपोत्तरमेत्वस्य चारितार्थ्यसम्भवान्न निरवकाशत्वमिति भावः ।

ननु तदप्राप्तियोग्यविषयाभाववत्त्वरूपानवकाशत्वस्य एत्वेऽपि सत्त्वेन निरवकाशं प्रतिपदोक्तं बलवदिति प्राचीनोक्तरीत्याप्यस्य ग्रन्थस्य लापनसम्भवेन त्वदुक्तौ नैतद् दृढतरं प्रमाणम् । किञ्च सामान्यतः प्रतिपदोक्तस्य बलवत्त्वे शेषग्रहणस्य पूर्वविप्रतिषेधाश्रयणपरवार्त्तिकस्य चासङ्गतिरिति चेत्, न; तक्रन्यायेन बाधविषये उक्तनिरवकाशत्वस्याङ्गीकारेऽपि केवलनिरवकाशत्वेन बाधविषये एतादृशनिरवकाशत्वस्यानङ्गीकारात् । अन्यथा पूर्वोक्तसमासान्तेष्वप्यस्य सम्भवेन तेष्वनवकाशत्वाभावप्रतिपादनपरभाष्यासङ्गतिः ।

किञ्च शेषग्रहणस्यापि न वैय्यर्थ्यम् 'नञ्दुस्सुभ्यो हलि" ( पा० सू०-५।४।१२१ ) इति पाक्षिकाजभावे अहलिरित्यादौ प्राप्त'क'वारणार्थं शेषग्रहणस्यावश्यकत्वात् । अन्यथा "बहुव्रीहौ सक्थ्यक्ष्णोः०" ( पा० सू० ५।४।११३ ) इत्यतः पूर्वमेव कप्रकरणपाठेन विशेषविधिभिः परत्वाद् बाधेनैव सिद्धे तद्वैय्यर्थ्यं स्पष्टमेव । सिद्धान्ते त्वनुक्तसमासान्ताधिकारकार्यलाभार्थं शेषग्रहणमिति बोध्यम् ।

अत एव अकृतसमासान्तादिति न व्याख्यातम् । अत एव "विभाषा श्यावारोकाभ्याम्" ( पा० सू० ५।४।११४ ) इत्येतद्विषये कप् न । 'छादिषेयम्' इत्यत्र ढञः प्रतिपदविधित्वादेव सिद्धे, पूर्वविप्रतिषेधाश्रयणपरभाष्यं चिन्त्यमिति कैयटेनैव तस्यैकदेशित्वोक्तेर्न तद्भाष्यविरोधोऽपीति बोध्यम् ।। ६५ ।।

**बीजस्याभावादिति** । यत्र "शिवायों नमः" इत्यादावन्तरङ्गशास्त्रस्य बाधं विना अपवादस्य चारितार्थ्यासम्भवः, तत्रापवादेनान्तरङ्गस्य बाधेऽपि प्रकृते

गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यण्गुणयोरपवादोऽपि बाध्यते। पूर्वोपस्थितनिमित्तत्वरूपान्तरङ्गत्वविषय इदम् ।

यत्त्वागमादेशयोर्न बाध्यबाधकभावः, भिन्नफलत्वात, अत एव 'ब्राह्मणेभ्यो दधि दीयताम्, कम्बलः कौण्डिन्याय' इत्यादौ कम्बलदानेन न दधिदानबाध इति "च्छ्वोः" इति सूत्रे कैयटः । तन्न, 'अपवादो नुग्दीर्घत्वस्य' इति "दीर्घोऽकितः" इति सूत्रभाष्यविरोधात् ॥ ६६ ॥

ननु 'अजीगणत्' इत्यादौ गणेरीत्वं निरवकाशत्वाद्धलादिःशेषं बाधेत, तत्राहः—

**अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ६७ ॥**

"दीर्घोऽकितः" इत्यकिद्ग्रहणमस्या ज्ञापकम् । अन्यथा 'यंयम्यते' इत्यत्र नुकि कृतेऽनजन्तत्वाद् दीर्घाप्राप्त्या तद्वयर्थ्यं स्पष्टमेव ।

---

समानाश्रये वचनस्य चारितार्थ्येन बलवतोऽप्यन्तरङ्गस्य बाधेऽनवकाशत्वरूपबीजस्याभावादिति भावः ।

**कयट इति** । अत्र हि "च्छ्वोः०" ( पा० सू० ६।४।१९ ) इति सूत्रेणोडागम एव विधीयत इति पक्षे वकारस्य पूर्वावयव ऊकारे, वस्य "लोपो व्योः०" ( पा० सू० ६।१।६६ ) इति लोपे, सिद्धमिति भाष्यव्याख्यानावसरे लोपस्योडागमेनापवादत्वाद् बाधमाशङ्क्य कैयटेनेदमुक्तम् ।

**विरोधादिति** । न च दीर्घनुकोः परस्परप्रवृत्तिप्रतिबन्धकत्वेनानवकाशत्वाद् बाधेऽपि "येन ना०" (परि० ५८) इति न्यायाप्रवृत्त्या न भाष्यविरोध इति वाच्यम्, वक्ष्यमाणरीत्यात्रापि न्यायप्रवृत्त्या विरोधस्य दुर्वारत्वात् ॥ ६६ ॥

**ज्ञापकमिति** । ( न च हाकः कित्त्वसामर्थ्यात्-जहाति, तत्राभ्यासे दीर्घव्यावृत्त्या किद्ग्रहणं चरितार्थमिति वाच्यम्, "हश्च व्रीहिकालयोः" ( पा० सू०-३।१।१४८ ) इत्यत्र सामान्यग्रहणसम्पादकत्वेन चारितार्थ्यादित्यभ्यासस्यार्थवत्त्वकित्वे मानाभावात् । किञ्च न विद्यते किद् यस्मिन्निति बहुव्रीहिगर्भबहुव्रीह्याश्रयणसामर्थ्येन व्यपदेशिवद्भावानाश्रयणेन[1] ) तद्धि 'यंयम्यते'[2] इत्यत्र दीर्घवारणार्थम् । तत्र दीर्घनुकोः प्राप्तावपवादत्वात्पूर्वं नुकि, अनजन्तत्वात् तदप्राप्त्या व्यर्थमिति भावः ।

ननु ज्ञापितेष्वभ्यासकार्येषु बाध्यबाधकयोः सति सम्भवे समावेशस्यानया बोधनेन निरवकाशविषये पूर्वमुत्सर्गप्रवृत्तावपवादवैय्यर्थ्यापत्त्या तत्रानया पूर्वमुत्स-

---

१. 'न च' इत्यादितः 'व्यपदेशिवद्भावानाश्रयणेन' इत्यन्तं नास्ति क० पु० ।

२. 'यंयाम्यते' इति पाठः क० पु० ।

**इयं परान्तरङ्गादिबाधकानामप्यबाधकत्वबोधिका । तेन 'अचीकरत्' 'मीमांसते' इत्यादि सिद्धम् ।**

---

र्घाप्रवृत्त्या पूर्वं नुकि, नुगुत्तरमनजन्तत्वादेव दीर्घाप्राप्त्या 'यंयम्यते' इत्यस्य सिद्ध्या स्वांशे चारितार्थ्यं दुर्वचमिति चेत्, न; 'अजीगणत्' इत्यादौ हलादिश्शेषोत्तरं सामर्थ्याच्छिष्टान्त्यस्य प्रवृत्तिवत् तपरकरणेऽपि समावेशापत्त्या तद्वारणाय नुग्विधानसामर्थ्याद् भूतपूर्वह्रस्वत्वं दीर्घोत्तरमादायात्रापि नुक्प्रवृत्तिसम्भवेन ह्रस्वे कृते किद्विषयत्वात् । "प्रकल्प्य०" ( परि० ६४ ) इति न्यायेन पूर्वं दीर्घाप्रवृत्तयेऽकिद्ग्रहणस्यावश्यकत्वेनादोषादिति प्राचामाशयात् ।

न च 'बाभाम्यते' इत्यत्र[1] नुग्विषयत्वेन दीर्घाप्रवृत्त्या नुक् दुर्वार इति वाच्यम्, अभ्यासे सर्वत्र ह्रस्वस्य दुर्वारत्वेन तपरकरणस्य व्यावर्त्याभावेन तत्सामर्थ्यात्स्वाभाविकह्रस्वस्यैव परिग्रहेण 'बाभाम्यते' इत्यत्र नुकोऽप्राप्त्या किद्विषयत्वाभात् दीर्घप्रवृत्त्या तत्सिद्धेः ।

ननु अभ्यासकार्येषु वैय्यधिकरण्येनान्वयमात्रज्ञापनेन 'यंयम्यते' इत्यत्र नुगुत्तरं प्राप्तदीर्घवारणाय तस्य चारितार्थ्येन परिभाषाज्ञापकत्वं न युक्तम् । न च "येन ना०" ( परि० ५८ ) इति न्यायेन नुका दीर्घस्य बाधान्नुगुत्तरं दीर्घाप्रवृत्त्याऽकिद्ग्रहणेन वैय्यधिकरण्यान्वयमात्रस्य ज्ञापनेऽपि न चारितार्थ्यमिति वाच्यम्, नुग्विधौ तपरकरणेन दीर्घोत्तरं तदप्राप्त्या तन्न्यायविषयत्वासम्भवात् ।

न चाभ्यासे सर्वत्र ह्रस्वप्रवृत्त्या व्यावर्त्यासम्भवात्तकारस्य मुखसुखार्थत्वेन दीर्घोत्तरमपि तत्प्राप्तिः सुवचेति वाच्यम्, 'बाभाम्यते'[2] इत्यत्र तपरकरणाभावे "येन ना०" (परि० ५८) इति न्यायेन ह्रस्वादीन् बाधित्वा नुकि 'बांभाम्यते'[3] इत्यापद्येत, सति तु तपरकरणे ह्रस्वात्पूर्वं नुकोऽप्राप्त्या "येन ना०" (परि० ५८ ) इति न्यायेन तेषां बाधासम्भवात्, ह्रस्वं बाधित्वा "दीर्घोऽकितः" ( पा० सू० ७।४।८३ ) इति दीर्घे ह्रस्वाभावान्नुकोऽप्राप्त्या 'बाभाम्यते' इति सिद्ध्यतीति फले विशेषेण तपरकरणस्य मुखसुखार्थत्वासम्भवादिति चेत्, न; कृतेऽपि तकारे दीर्घेण ह्रस्वस्यैव हलादिःशेषस्यापि तक्रन्यायेन बाधात् 'बांभाम्यते' इत्यस्य दुर्वारत्वेन तपरकरणस्य त्वदुक्तफलासम्भवात् ।

न च तपरकरणाभावे नुकि मकारस्यानुस्वारे तस्य झल्त्वान्नकारस्याप्यनुस्वारेऽनुस्वारद्वयश्रवणम्, सति तपरकरणे मकारस्यैवानुस्वारेणैकानुस्वारस्य श्रवणमिति फलभेद इति वाच्यम्, उभयोरनुस्वारयोः परसवर्णेनैकस्मिन्मकारे विशेषाभावात् ।

---

१. 'ह्रस्वे कृते' इत्यधिकः पाठः क० पु० ।　　२. 'ह्रस्वे' इत्यधिकः पाठः क० पु० ।
३. 'बभाम्यत' इति पाठः क० पु० ।　　४. 'बांभम्यते' इति पाठः क० पु० ।

**आद्ये सन्वद्भावस्य परत्वाद्दीर्घेण बाधः प्राप्नोति। अन्त्ये "मान्बध" इति दीर्घेणान्तरङ्गत्वादित्वस्य बाधः प्राप्तः।**

**यत्तु यत्रैकैकप्रवृत्त्युत्तरमपि सर्वेषां प्रवृत्तिस्तत्रैवेदमित्यतः "एक०" इति सूत्रे कैयटः, तन्न; नुकि कृते दीर्घाप्राप्त्या धर्मिग्राहकमानविरोधान्मान्बधादीनां दीर्घे कृते इत्वाप्राप्त्या "गुणो यङ्लुकोः" इति सूत्रस्थभाष्योक्ततदुदाहरणासङ्गतेश्चेत्यन्यत्र विस्तरः॥ ६७॥**

---

एवञ्च तपरकरणस्य मुखसुखार्थत्वेन तक्रन्यायेनैव नुगुत्तरं दीर्घाप्राप्त्या तद्व्यर्थमेवेति यावता विनेति न्यायेन परिभाषाज्ञापकत्वम्, अपि सत्यां त्वस्यां नुगुत्तरमपि दीर्घप्राप्त्या तद्वारणार्थमकिद्ग्रहणं चरितार्थम्।

न च परिभाषाज्ञापकत्वेनैव तस्य चारितार्थ्यसम्भवाद् वैय्यधिकरण्यान्वयकल्पने मानाभावः। वैय्यधिकरण्यान्वयस्य लक्ष्यानुरोधेन वात्राङ्गीकारेणादोषात्। 'बाभाम्यते' इत्यस्य सिद्धिस्तु अत्र पक्षे विभावनीया।

**सन्वद्भावस्येति**। तत्प्रयोज्येत्वस्येत्यर्थः। इत्वम् 'चिकीर्षति' इत्यादौ चरितार्थम्। दीर्घस्तु 'अजूहवत्' इत्यादौ चरितार्थ इति विप्रतिषेधप्रसङ्ग इति भावः।

**कैयट इति**। तत्र हि लिटीत्यस्याभावे 'पापच्यते' इत्यत्रैत्वाभ्यासलोपस्य दीर्घस्य च प्रसङ्गे 'परत्वाद्दीर्घेण सिद्धमिति' भाष्यमुपादाय लिट्येत्वाभ्यासलोपस्य, 'तात्सर्यते' इत्यादौ दीर्घस्य चारितार्थ्याद् विप्रतिषेधमुक्त्वा पश्चादेतन्न्यायप्रवृत्त्या प्रतिषेधासम्भवमाशङ्क्याभ्यासविकार इत्येतत्तु यत्र सर्वेषां प्रवृत्तिस्तत्राश्रीयते। यद्यपि कृते दीर्घत्वे एत्वाभ्यासलोपप्रसङ्गः, तथापि तयोः कृतयोर्दीर्घाप्रसङ्ग इति विरुद्धत्वादनया बाधकत्वाभाव इति तेनोक्तम्—**एकैकप्रवृत्त्युत्तरमिति**। इदं कैयटतात्पर्यवर्णनं न तु कैयटे एवमुपलभ्यते।

ननु वैय्यधिकरण्यस्याङ्गीकृतत्वान्नायं दोष इत्यरुचेराहः—**मान्बधेति**। न च बाध्यप्रवृत्त्यन्तरं यत्र बाधकाभ्यासकार्यस्य प्रवृत्तियोग्यता तद्विषयोऽयं न्यायः। 'पापच्यते' इत्यत्र तु बाध्येत्वाभ्यासलोपानन्तरं न दीर्घप्राप्तिरिति नात्रैतन्न्यायप्रवृत्तिरिति कैय्यटाशय इति वाच्यम्, तथा सति यत्र सर्वेषां प्रवृत्तिरित्यक्षरस्वारस्यभङ्गापत्तेः। बाध्यप्रवृत्त्यनन्तरं बाधकप्रवृत्तियोग्यतेत्येव वक्तुमुचितत्वात्। ज्ञापकसिद्धस्यासार्वत्रिकत्वमिति भाष्याशय इति तत्त्वम्।

अत्रेदं बोध्यम्—अभ्यासकार्याणां यौगपद्येन सति सम्भवे समावेशो बोध्यते। यौगपद्यासम्भवे क्रमेण तत्रान्यत्र बाधकप्रवृत्त्यनन्तरं बाध्यस्य प्रवृत्त्ययोग्यत्वे पूर्वमेव बाध्यस्य प्रवृत्त्यभावः[1]। अभ्यासकार्ये[2] तु तस्मिन् कृतेऽपि प्राप्तियोग्यं

---

१. 'प्रवृत्तिरिति' इति पाठः क० पु०।

२. 'अभ्यासकार्ये' इत्यादितः 'दिक्' इत्यन्तं नास्ति क० पु०।

**ननु तच्छोलादितृन्विषये ण्वुलपि स्यात् । न च तृन्नपवादः, असरूपापवादस्य विकल्पेन बाधकत्वात् । अत आहः—**

**ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति ।। ६८ ।।**

**ण्वुलि सिद्धे "निन्दहिंस" आदिसूत्रेणैकाज्भ्यो वुञ्विधानमत्र**

---

बाध्यं प्रवर्तत एव । किञ्च यत्र बाधकप्रवृत्त्यनन्तरं बाध्यस्य प्रवृत्त्ययोग्यता, तत्त्वे पूर्वमेव बाधस्य प्रवृत्तिरिति स्पष्टं बृहच्छेखरे ।

न च विव्यथेत्यादावुभयेषां ग्रहणसामर्थ्येन हलादिःशेषसम्प्रसारणविषये एतन्न्यायाप्रवृत्तिज्ञापनेऽस्य "व्यथो लिटि" ( पा० सू० ७।४।६८ ) इति सूत्रे-शेखर उक्तत्वेन "येन ना०" ( परि० ५८ ) इति न्यायेन हलादिःशेषानापत्तिरिति वाच्यम, अन्यथोत्सर्गापवादयोः प्रसक्तयुगपत्प्रवृत्तये उभयेषां ग्रहणसामर्थ्येन वारणेऽपि, अपवादप्रवृत्त्यनन्तरमनया प्राप्तोत्सर्गसमावेशस्यापि निवृत्त्यङ्गीकारे मानाभावात् । 'अववेष्टत्' इत्यादौ तु अत्वहलादिःशेषयोः प्राप्तयोः, पूर्वमत्वे, हलादिःशेषस्य बाधापत्त्याऽनया पूर्वमुत्सर्गप्रवृत्त्या ततोऽत्वप्रवृत्तिरिति न दोषः ।

एवम् "गुणो यङ्लुकोः" (पा० सू० ७।४।८२) इत्यत्रेक्परिभाषोपस्थित्या 'डोढौक्यते' इत्यत्र पूर्वं ह्रस्वे गुणस्य चरितार्थत्वेन 'लोलूयते' इत्यादौ परत्वाद् गुणेऽनया ह्रस्वापत्तिस्तु न, अस्य निरुक्तान्यतमविषयत्वाभावेनास्याप्रवृत्त्या "सकृद्गति०" ( परि० ४० ) न्यायेन ह्रस्वाप्रवृत्त्या न दोष इति दिक् ।

वस्तुतस्तु "अत एक०" ( पा० सू० ६।४।१२० ) इति सूत्रस्थभाष्येणाभ्यासैकदेशविकार एवायं न्यायो न तु सर्वलोपे । तत्र कस्याप्यभ्यासावयवस्याभावेन विकारस्य दुर्लभत्वात् ।। ६७ ।।

**तच्छीलादितृन्विषय इति** । आदिना "आक्वेः०" ( पा० सू० ३।२।१३४ ) इति सूत्रोक्ततद्धर्मतत्साधुकार्यर्थियोर्ग्रहणम् । फलानपेक्षया प्रवृत्तिस्ताच्छील्यम्, कुलक्रमादागत आचारो धर्मः, तौ विना यः साधुकरोति स साधुकारी । एषु कर्त्तृषु धातोस्तृन् इत्यर्थः ।

**ण्वुलपि स्यादिति** । ननु तृन्विषये ण्वुलापादनमसङ्गतम्, ताच्छील्यविशिष्टे कर्त्तरि ण्वुलोऽनुशासनाभावात् । न च तच्छीलकर्त्तुरपि कर्त्तृत्वाविशेषात् कर्त्तृसामान्येऽनुशिष्टस्य तच्छीलकर्त्तर्यपि प्राप्तिः सुवचेति वाच्यम, घटपदेन वस्तुतो नीलघटव्यक्तेर्बोधेऽपि नैल्यघटत्वोभयप्रकारकबोधाभाववत्, ण्वुला ताच्छील्यप्रकारकबोधासम्भवेन तयोः समानार्थत्वाभावेन तदर्थबोधनेच्छायां तदबोधकशब्दप्रयोगाप्रसक्तेरिति चेत्, न; मानान्तरेण स्वतो वा गृहीतताच्छील्यकव्यक्तेर्विशेष्यत्वविवक्षायां तृन इव ण्वुलोऽपि प्राप्तेः सुवचत्वात् ।

**ज्ञापकम् । तत्र ण्वुल्वुञोः स्वरे विशेषाभावात् ।**

**ताच्छीलिकेष्विति विषयसप्तमी । तेन ताच्छीलिकैरताच्छीलिकैश्च वाऽसरूपविधिर्नेति बोध्यम् ।**

---

न चागृहीतताच्छील्यकव्यक्तेरिव गृहीतताच्छील्यकव्यक्तेरपि केवलकर्त्तृत्वप्रकारकबुबोधयिषायां ण्वुल् इष्ट एवेति वाच्यम्, दाशरथायेत्यादाविदन्तत्वेनापत्यस्य बोधेऽणोऽसाधुत्ववत्, कर्त्तृत्वेन गृहीतताच्छील्यविशिष्टकर्त्तृबोधे ण्वुलोऽपि प्राप्तेः सम्भवेन तत्र तस्यासाधुत्वार्थमस्यारम्भात् ।

न च 'ब्राह्मणेभ्यो धेनुं देहि' 'ब्राह्मणेभ्यो गां देहि' इत्यादौ विधेयतावच्छेदकधर्मयोर्व्याप्यव्यापकभावापन्नत्वेऽप्युद्देश्यतावच्छेदकधर्मयोर्व्याप्यव्यापकभावानापन्नत्वेनोत्सर्गापवादाभाववत्, ण्वुल्तृचोरप्युत्सर्गापवादभावो दुर्वच इति वाच्यम्, फलानभिसन्धिमन्निष्ठव्यापारवाचकाद्धातोः कर्त्तरि तृन्, इत्यर्थेनोद्देश्यतावच्छेदकीभूतफलानभिसन्धिमन्निष्ठव्यापारवाचकधातुत्वस्य केवलधातुत्वस्य च व्याप्यव्यापकभावापन्नत्वेनापवादत्वोपपत्तेः । तथा च तच्छीलकर्त्तरि 'कटान् कर्त्ता' इतिवत् 'कटानां कारकः' इत्यपि स्यात् । 'कन्यामलङ्करिष्णुः' इत्यत्र कन्याया अलङ्कर्त्तेति तृजपि स्यात् । ताल्छील्याविवक्षायां त्वयं साधुरेवेति बोध्यम् ।

**ज्ञापकमिति ।** असूयति व्यक्तिरिक्तेभ्यो वुञ्विधानं व्यर्थं सज्ज्ञापकमिति भावः । 'असूयकः' इत्यत्र स्वरे विशेषाद् वुञ् सार्थकः । न च 'निन्दकः' इत्यत्र ण्वुलि ताच्छील्याप्रतीतिः, वुञि तु तत्प्रतीतिरिति विशेष इति वाच्यम्, 'स्थूलपृषती' इत्यादाविवार्थविशेषप्रतीतौ नियामकस्य स्वरविशेषस्यात्रासम्भवेन सूत्रारम्भेऽपि ताच्छील्यादिविवक्षायां ण्वुलि 'निन्दकः' इत्यस्य दुर्वारत्वेन प्रकरणादिनैव ताच्छील्यादिविशेषस्य ज्ञातव्यतया सूत्रारम्भेऽपि प्रकरणादिनैव तज्ज्ञानस्य सुलभत्वेन त्वदुक्तफलासम्भवात् ।

न च सत्यपि प्रकरणे शब्देनार्थविशेषोपस्थितौ शक्तिज्ञानं तन्त्रम् । अन्यथा प्रकरणाद् घटपदेन सैन्धवस्याप्युपस्थित्यापत्तेः । तस्मात् सत्यपि प्रकरणे ण्वुलन्तस्य ताच्छील्ये शक्त्यभावेन ताच्छील्यप्रतीत्यनापत्तिः । सति तु वुञि न दोषः, तस्य तत्र शक्तत्वादिति वाच्यम्, ण्वुलन्तेन प्रकरणादिसहकारेण लक्षणयापि ताच्छील्यस्य बोधसम्भवेन सूत्रस्य तादर्थ्येनाश्रयणमनावश्यकमित्याशयात् ।

**विषयसप्तमीति ।** अधिकरणसप्तमीत्वे ण्वुलोऽताच्छीलिकत्वेन ज्ञापकासङ्गतिरिति भावः । **अताच्छीलिकैश्चेति ।** चकारस्ताच्छीलिकाताच्छीलिकयोरिव ताच्छीलिकयोरपि परस्परं वासरूपविध्यभावः परिभाषयाः फलमिति सूचयितुम् ।

**नन्वेवम् 'कम्रा, कमना' इत्याद्यसिद्धिः "नमिकम्पि" इति रेण "अनुदात्तेतश्च हलादेः" इति युचो बाधादिति चेत्, न; "सूददीपदीक्षश्च" इत्यनेन दीपेर्युज्निषेधेनोक्तार्थस्यानित्यत्वात् ॥ ६८ ॥**

**नन्वेवम् 'हसितं छात्रस्य हसनम्' इत्यादौ घञ्, 'इच्छति भोक्तुम्' इत्यत्र**

---

ज्ञापकश्चात्र "लषपतपद०" ( पा० सू० ३।२।१५४ ) इत्युकञ्विषये "जुचङ्क्रम्य०"( पा० सू० ३।२।१५० ) इत्यनेन पदधातौ युज्विधानम् । तेनोकञ्विषये "अनुदात्तेतश्च" ( पा० सू० ३।२।१४९ ) इति युचोऽप्रवृत्तेस्तत्सार्थकम् । एतत्फलं तु 'कन्यामलङ्करिष्णुः' इत्येव न तु तत्[1] ।

न च युज्विधौ पदग्रहणं सकर्मकार्थम्, "अनुदात्तेतश्च" (पा०सू० ३।२।१४९) इति सूत्रेऽकर्मकादित्यनुवृत्त्या तस्याप्राप्तिरिति वाच्यम्, तस्यानभिधानेनादोष इत्याशयात् ॥ ६८ ॥

**घञिति** । ननु "नपुंसके भावे क्तः" ( पा० सू० ३।३।११४ ) "ल्युट् च" ( पा० सू० ३।३।११५ ) इत्यनुशासनेन तयोर्नपुंसकत्वेऽपि घञन्तस्य नपुंसकभावेऽनुशासनाभावेन हासमिति नपुंसके भावे प्रयोगो न प्राप्नोति प्रत्युत "घञबन्तः" ( लिङ्गा० पुंल्लिङ्गा० सू० ३६ ) इति लिङ्गानुशासनसूत्रेण पुंस्त्वस्यैवानुशासनादिष्टस्य हासः' इत्यस्यैव सिद्धेरिति चेत्, न; "भावे" ( पा० सू० ३।३।१८ ) इति सूत्रे सिद्धभावस्यैव भावपदार्थतया तस्य लिङ्गसङ्ख्यान्वितत्वनियमात्, नपुंसकभावेऽपि घञः वासरूपविधिना प्राप्तिसम्भवात् ।

उक्तलिङ्गानुशासनसूत्रं तु नपुंसके भावे क्तल्युड्भ्याम्, स्त्रियां क्तिना बाधात्, परिशेषाद्घञः पुंस्त्वमित्यर्थानुवादकम् । अत एव कर्मघञन्तस्य नपुंसकत्वम् 'शेषं पुंवत्' इत्यादौ । **'इच्छति भोक्तुम्' इति** । 'इच्छामि भुञ्जीत भवान्' इत्यसमानकर्तृके, समानकर्तृकेऽपि भविष्यति कर्तरि कर्मणि च लिङ्लोटोश्चारितार्थ्येन समानकर्तृकेच्छार्थोपपदकात् तुमुना वासरूपविधिना भावे पक्षे लिङ्लोटोर्बाधापत्तिरिति भावः ।

ननु "कामप्रवेदन इति वक्तव्यम्" (का० वा० ३।३।१५७) इति वार्त्तिकेन लिङ्लोटोः कामप्रवेदने एव प्रवृत्त्या तदभावे तुमुनोऽपि चारितार्थ्यात्कथमपवादत्वं भाष्योक्तं सङ्गच्छते । न च तुमुना परत्वाद् बाधे प्राप्ते एव वासरूपविधिरस्त्विति वाच्यम्, "अजब्भ्यां स्त्रीखलनाः, स्त्रियाः खलनौ विप्रतिषेधेन" ( का० वा० ३।३।१२६ ) इति वार्त्तिकेन विप्रतिषेधविषये वासरूपविधेरभावबोधनात् ।

न च तुमुनोऽपि कामप्रवेदन एव प्रवृत्तिरिति वाच्यम्, **'इच्छति भोक्तुम्'**

---

१. 'तृन्' इति पाठः क० पु० ।

**लिङ्लोटौ, 'ईषत्पानः सोमो भवता' इत्यत्र खल् प्राप्नोतीत्यत आहः—**

---

इति प्रथमपुरुषोदाहरणासङ्गतेः। वक्त्रभिप्रायाविष्करणमेव हि कामप्रवेदनमिति चेत्, न; उक्तभाष्यप्रामाण्येन तुमुनोऽपि कामप्रवेदने एव प्रवृत्त्यङ्गीकारात्। **'इच्छति भोक्तुम्'** इत्यत्रापि कथञ्चिदयं जन इत्यध्याहारादिना स्वाभिप्रायाविष्करणस्य सूपपादत्वात्[1]।

ननु **'लिङ्लोटौ'** इत्यसङ्गतम्, समानकर्त्तृकेष्विच्छार्थेषूपपदेषु धातोर्लिङित्यर्थकेन "लिङ् च" ( पा० सू० ३।३।१५९ ) इत्युत्तरसूत्रेण तुमुन्विषये लिङः पुनर्विधानेन तस्य तुमुना सह समावेशाङ्गीकारात्।

न च "इच्छार्थेषु लिङ्लोटौ" ( पा० सू० ३।३।१५७ ) इत्यस्य कामप्रवेदन एव प्रवृत्त्या तदभावे कर्त्तरि कर्मणि च लिङर्थम् "लिङ् च" (पा० सू० ३।३।१५९) इत्युत्तरसूत्रं न तु भावतुमुना सह समावेशार्थमिति वाच्यम्, भावे तुमुना सह लिङः समावेशानङ्गीकारे "लिङ् च" ( पा० सू० ३।३।१५९ ) इत्युत्तरसूत्रस्य वैय्यर्थ्यापत्तेः।

तथाहि "इच्छार्थेषु लिङ्लोटौ" ( पा० सू० ३।३।१५७ ) इति सूत्रे लिङ्ग्रहणस्य योगविभागेन विभक्तेन "लिङ् च" ( पा० सू० ३।३।१५९ ) इति सूत्रेण कामप्रवेदनाकामप्रवेदनसाधारण्येन समानकर्त्तृकासमानकर्त्तृकसाधारण्येनेच्छार्थेषूपपदेषु धातोर्लिङ्विधानेन तस्य कर्त्तरि कर्मणि चारितार्थ्येन भावे तुमुनापवादत्वाद् बाधेन इष्टसिद्ध्या[2] पुनरुत्तरत्रारभ्यमाणस्य "लिङ् च" ( पा० सू० ३।३।१५९ ) इत्यस्य भावे तुमुना समावेशमन्तरा कर्मणि चारितार्थ्येन[3] फलाभावात्।

अत एव लिङ्लोटाविति प्रतीकमुपादाय "लिङ् च" (पा० सू० ३।३।१५९) इति लिङ् भवत्येव। "इत्छार्थेषु लिङ्लोटौ" ( पा० सू० ३।३।१५७ ) इत्यत्र लिङ्लोटोः सहनिर्देशादत्रापि सहनिर्देशः कृत इति कैयटेन व्याख्यातम्।

एवञ्चात्र तुमुन्ग्रहणं व्यर्थम्, "लिङ् च" ( पा० सू० ३।३।१५९ ) इत्यस्य भावे तुमुन्विषये लिङोऽभ्यनुज्ञानार्थत्वेन तस्य वासरूपेणैव सिद्ध्या पुनर्लिङ्विधानस्य वासरूपविधिना तुमुन्विषये उत्सर्गो यदि भवेत्तर्हि लिङेवेति नियमेन लोडव्यावृत्तिसिद्धेरिति चेत्, न; त्वदुक्तयोगविभागस्याकामप्रवेदनविषयेऽसमानकर्त्तृकेऽपि लिङापत्त्या दुष्टत्वात् सूत्रद्वयस्यावश्यकतया वैयर्थ्याभावेन तुमुना समावेशकल्पने मानाभावात्। तस्माद् भावे तुमुना वासरूपे प्राप्ते तद्वारणाय

---

१. 'न चैवमकामप्रवेदने भोक्तुमिच्छतीति प्रयोगानापत्तिः' इत्यधिकः पाठः क० पु०।

२. 'इष्टासिद्ध्या' इति पाठः क० पु०। ३. 'कर्मणि चारितार्थ्येन' इति नास्ति क० पु०।

**क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति ॥ ६९ ॥**

**इदञ्च वाऽसरूपविधेरनित्यत्वात् सिद्धम् । तदनित्यत्वे ज्ञापकं च 'अर्हे कृत्यतृचश्च' इति ।**

---

तुमन्ग्रहणमपि परिभाषायामावश्यकमेवेति विवरणे स्पष्टम् । अत्राकामप्रवेदने 'इच्छति भोक्तुम्' इति प्रयोगोपपत्तिः कथमिति सुधीभिर्विभावनीयम्[१] ।

**खलर्थेति** । अर्थग्रहणफलं तु 'दुर्ज्ञानम्' इत्यत्र "अचो यत्" ( पा० सू०-३।१।९७ ) इति यन्नेत्याहुः । **नास्तीति** । 'ज्ञायते 'मेद्यति' इत्यादौ "मतिबुद्धि-पूजार्थेभ्यश्च" ( पा० सू० ३।२।१८८ ) "ञीतः क्तः" ( पा० सू० ३।२।१८७ ) इति विहितक्तेन लटो बाधाभावायात्र क्तपदेन "नपुंसके भावे क्तः" ( पा० सू०-३।३।११४ ) इति 'क्तः' एव गृह्यते, न तु सर्वोपि, भाष्यसम्मतफलाभावात्, परस्य साहचर्याच्च ।

न च "क्तोऽधिकरणे०" ( पा० सू० ३।४।७६ ) इति क्तस्य "करणा-धिकरणयोश्च" ( पा० सू० ३।३।११७ ) इत्यधिकरणे विहितल्युटश्च परस्पर-साहचर्यस्य सम्भवात् तयोरेव ग्रहणं स्यादिति वाच्यम्, नपुंसके भावे क्तल्युट् च' इति संश्लिष्टतया पाठेनानयोरेव ग्रहणात् ।

न च "तयोरेव०" ( पा० सू० ३।४।७० ) इति नियमात् क्तस्य कर्त्तर्य-प्राप्त्या कथं क्तेन 'मेद्यति' इत्यादौ लटो बाध इति वाच्यम् "कर्तरि चर्षि०" ( पा० सू० ३।२।१८६ ) इति सूत्रात् कर्त्तृग्रहणानुवृत्त्यास्य क्तस्य कर्त्तर्येव प्रवृत्तेः ।

न चैवम् 'हसितम्' इत्यादौ वासरूपाभावाय भावार्थकक्तग्रहणं व्यर्थम्, 'हसनम्' इत्यर्थे 'हासम्' इत्यस्य वारणार्थं कृतेन ल्युड्ग्रहणेनैव तत्र तद्वारणादिति वाच्यम्, "एरच्" ( पा० सू० ३।३।५६ ) इत्यस्य पुंसि चारितार्थ्येन 'हसनम्' 'हसितम्'इत्यादौ सावकाशाभ्यां क्तल्युड्भ्याम्[२] परत्वाद् बाधे प्राप्ते तदपवादत्वेन "एरच्" (पा० सू० ३।३।५६ ) इति सूत्रे "भयादीनामुपसंख्यानं नपुंसके क्तादिनि-वृत्त्यर्थम्" ( का० वा० ३।३।५६ ) इति वार्त्तिकोक्त्या तद्विषये 'भीतम्' इति प्रयोगवारणार्थं तस्यावश्यकत्वात् ।

न चैवं ल्युड्ग्रहणं व्यर्थम्, 'भयनम्' इति व्यावृत्तये तस्यावश्यकत्वात् । न चैवं ल्युडंशे पूर्वोतरसाहचर्याद् भावार्थकस्यैव ग्रहणं स्यान्न तु सर्वस्य, तथा च[३] "उपदेशेऽजनुनासिक०" ( पा० सू० १।३।२ ) इति सूत्रस्थस्य 'उपदेशपदे बाहुल-कात्करणे घञ्' इति भाष्यस्यासङ्गतिः । एतद्भाष्यप्रामाण्येन ल्युडंशे सर्वस्यापि ग्रहणात् ।

---

१. 'अत्राकामप्रवेदने 'इच्छति भोक्तुम्' इति प्रयोगोपपत्तिः कथमिति सुधीभिर्विभावनीयम्' इति नास्ति क० पु० ।　　२. 'क्तल्युड्भ्याम्' इति नास्ति क० पु० ।

३. 'स्यान्न तु सर्वस्य, तथा च' इति नास्ति क० पु० ।

**तत्र हि चकारसमुच्चितलिङा कृत्यतृचोर्बाधो मा भूदिति कृत्यतृज्ग्रहणं क्रियत इत्यन्यत्र विस्तरः । "वाऽसरूप"सूत्रे भाष्ये स्पष्टा ।। ६९ ।।**

**ननु 'श्वः पक्ता' इत्यत्र वाऽसरूपविधिना लुडपि प्राप्नोति, कृते आदेशे वैरूप्यादत आहः—**

**लादेशेषु वाऽसरूपविधिर्नास्ति ।। ७० ।।**

**आदेशकृतवैरूप्यवत्सु लकारेषु स नास्तीत्यर्थः । अत्र च "हृशश्वतोर्लङ्च" इति लङ्विधानं ज्ञापकम् । अन्यथा "परोक्षे लिट्"इति लिटा लङः समावेशोऽसारूप्यात् सिद्ध इति किं लङ्विधानेन ? शत्रादिभिस्तिङां समावेशार्थं शतृविधायके विभाषाग्रहणानुवृत्तिः "लिटः कानज्वा" इति वाग्रहणं च कृतम् । तज्ज्ञापयति "वाऽसरूप" सूत्रेऽपवाद आदेशत्वानाक्रान्तः प्रत्यय एव गृह्यत इति कैयटादौ**

---

ननु 'वर्षणम्' इति पस्पशास्थभाष्यप्रयोगे ल्युडनापत्तिः "एरच्" ( पा० सू० ३।३।५६ ) इत्यत्रोपसंख्यातेनाचा 'भीतम'इत्यत्र क्तस्येव ल्युटोऽपि बाधस्य न्याय्यत्वात् । न च क्तल्युडादयो यत्रापवादभूतास्तत्रैवेयं प्रवर्तत इति न 'वर्षणम्' इत्यत्र ल्युडनुपपत्तिः, नाप्युपदेशपदे बाहुलकाश्रयणपरभाष्यविरोधः । अत एव "आशिते भुवः" ( पा० सू० ३।२।४५ ) इति खज्विषये पक्षे ल्युडपीति कौस्तुभादिग्रन्थकृदुक्तिः सङ्गच्छत इति वाच्यम्, तथा सति 'भीतम्' इत्यत्र नपुंसके क्तस्याप्यापत्त्या "भयादीनामुपसंख्यानम्, नपुंसके क्तादिनिवृत्त्यर्थम्" ( का० वा० ३।३।५६ ) इति वाक्यशेषासङ्गतेः । पूर्वोक्तरीत्या परिभाषायां क्तग्रहणस्य वैय्यर्थ्यापत्तेश्च ।

न च "पुरस्तादपवाद०" ( परि० ६० ) न्यायेनाच्प्रत्ययः क्तमेव बाधते न तु ल्युटमिति न 'वर्षणम्' इत्यादेरसङ्गतिरिति वाच्यम्, स्वविषये क्तप्रत्ययस्येव ल्युटोऽपि नाप्राप्त्या तद्बाधनमन्तरा तस्य चारितार्थ्यासम्भवात् । तद्विषये बाध्यसामान्यचिन्ताया आवश्यकत्वादिति चेत्, न; अचः पुंसि चरितार्थस्य नपुंसके भावे क्तल्युड्भ्यां परत्वाद् बाधे प्राप्ते, इवर्णान्तधातुविषये पूर्वविप्रतिषेधार्थतयोपन्यस्तस्य "भयादीनाम्०" ( का० वा० ३।३।५६ ) इति वार्त्तिकस्येवर्णान्तधातुभिन्नेष्वपूर्वविधित्वेनापवादत्वाद् वासरूपविधिप्रवृत्त्या तत्र पक्षे ल्युटोऽपि सम्भवेन 'वर्षणम्' इत्याद्युपपत्तेः । क्तादिनिवृत्त्यर्थमिति वाक्यशेषस्त्विवर्णान्तधातुविषयकः । अन्यथा तत्र परत्वान्नित्यमेव बाधः स्यात् । एवञ्च क्तल्युडादयो यत्रापवादभूतास्तत्रैवेयं प्रवर्तते इति न काप्यनुपपत्तिः ।। ६९ ।।

**वैरूप्यादिति** । प्रयोगे 'असरूपाणां वा विधिर्न्याय्यः' इति वार्त्तिकमतेऽयं दोष इति बोध्यम् । **लादेशेष्विति** । असरूपेषु सत्स्विति शेषः । प्रयोगेऽसारूप्यमादाय लकारयोर्वासरूपविधिर्नेत्यर्थः ।

ध्वनितम् । तत्फलं तु सदादिभ्यो भूतसामान्ये लिटः क्वसुरेव, न तु पक्षे तिङिति बोध्यम् ।। ७० ।।

ननु "ङमो ह्रस्वात्" इत्यादौ ङमः परस्याचोऽचि परतो ङम इति वेति सन्देहः स्यात्, अत आह:—

**उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ।। ७१ ।।**

अचीति सप्तमीनिर्देशस्य "मय उञो" इत्युत्तरत्र चारितार्थ्यात् पञ्चमीनिर्देशोऽनवकाश इति "तस्मादित्युत्तरस्य" इत्यस्यैव प्रवृत्तिः । यत्र तु "ङः सि धुट्" इत्यादावुभयोरप्यचारितार्थ्यम्, तत्र "तस्मिन्" इति सूत्रापेक्षया "तस्मादित्युत्तरस्य" इत्यस्य परत्वात् तेनैव व्यवस्था ।

एवमुभयोश्चारितार्थ्येऽपि । यथा "आमि सर्वनाम्नः" इत्यादौ । तत्राऽऽमीति सप्तमी 'त्रेस्त्रयः" इत्यत्र चरितार्था । आदिति पञ्चमी "आज्जसेरसुक्" इत्यत्र चरितार्थेति स्पष्टम् "तस्मिन्निति" इति सूत्रे भाष्ये कैयटे च ।। ७१ ।।

इति श्रीनागेशभट्टविरचिते परिभाषेन्दुशेखरे
बाधबीजनामकं द्वितीयं प्रकरणम् ।

---

ननु प्रायोगिकासारूप्यग्रहणवादिमते प्रयोगत्वावच्छेदेनोत्सर्गनिरूपितसारूप्यं विवक्षितमुत क्वचित् ? 'आध्ये' 'सेध्ये' शब्दयोः लुट्लटोर्विषयेऽसारूप्याभावाद् वासरूपाप्राप्त्या, परिभाषारम्भस्य वैफल्यात् ।

द्वितीये काणोरपि लकारवत् स्वस्थानिकादेशद्वारा क्वचिदसारूप्यसम्भवेन दोषापत्तेरिति चेत्, न; अस्य पक्षस्यास्थिरत्वेनादोषात् ।

अत एवास्या अर्थान्तरं लकारस्थानिकादेशेषु शतृतिवादिषु परस्परमसारूप्याद् वासरूपविधिर्नेति वर्णितम् । तत्र ज्ञापकं फलञ्च मूल एव स्पष्टम् । वस्तुतस्तु स्यलिटश्रद्धान्दसत्वात्तत्र तेनैव सर्वेष्टसिद्धिरिति बोध्यम् ।। ७० ।।

**चारितार्थ्यादिति ।** परिभाषायां निर्देशस्यैव बलीयस्त्वोक्तेर्निर्देशयोरेव चारितार्थ्यप्रदर्शनं कृतं न तु परिभाषयोरिति बोध्यम् ।

**तेनैव व्यवस्थेति ।** अत्र सूत्रयोश्चारितार्थ्यमादाय विप्रतिषेधप्रवृत्तिर्न तु लिङ्गभूतनिर्देशयोरिति बोध्यम् । "आने मुक्" ( पा० सू० ७।२।८२ ) इत्यत्र तु "अतो येयः" ( पा० सू० ७।२।८० ) इत्यत्र पञ्चम्याश्चारितार्थ्यात् 'आने' इति सप्तम्या अनवकाशत्वात् "तस्मिन्०" ( पा० सू० १।१।६६ ) इत्यस्यैव प्रवृत्तिरिति भावः ।। ७१ ।।

इति श्रीमदद्वैतविद्यापारावारीणसुब्रह्मण्यसूरितनूजशेषशर्मसूरिविरचितायां
सर्वमङ्गलाख्यपरिभाषेन्दुशेखरव्याख्यायां बाधबीजनामकं
द्वितीयं प्रकरणम् ।



## । अथ शास्त्रशेषनामकं तृतीयं प्रकरणम् ।

ननु "अतः कृकमि" इति सत्वम् 'अयस्कुम्भी' इत्यत्र न स्यात् कुम्भशब्दस्यैवोपादानात्, अत आहः—

**प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥ ७२ ॥**

**सामान्यरूपेण शिशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सति**

---

**न स्यादिति ।** अतः "कृकमि०" ( पा० सू० ८।३।४६ ) इति सूत्रे समास इत्यस्यानुवृत्त्या तदाक्षिप्तोत्तरपदस्य प्रत्यासत्त्या कंसादिरूपस्यैव[1] ग्रहणेनात्र सत्वं न प्राप्नोतीति भावः ।

**सामान्यरूपेणेति ।** 'कुमारीमाचष्टे' इत्यत्र प्रातिपदिकाद्धात्वर्थ इति णिचि, टिलोपे, पुंवद्भावे वा 'कुमारयति' इति सिद्धिः । गौरीवाचरति 'गौरयति' इत्यत्र "सर्वप्रातिपदिक०" ( का० वा० ३।१।११ ) इति क्विप्सिद्धिश्च फलं बोध्यम् ।

**विशेषरूपेणेति ।** "सर्वनाम्नस्तृतीया च" (पा० सू० २।३।२७) इति संज्ञया साक्षाद्वेत्यर्थः । तेन 'भवत्या' इत्यत्रापि "सर्वनाम्नस्तृतीया च" ( पा० सू० २।३।२७ ) इति तृतीयासिद्धिः । यद्वा सर्वादिगणे भवच्छब्देन भवतीशब्दस्यापि ग्रहणान्न दोषः । प्रातिपदिकग्रहण इत्यस्य प्रातिपदिकत्ववदुपस्थापकपदग्रहणे इत्यर्थः । तदाहः - **प्रातिपदिकबोधकशब्दग्रहणे सतीति ।** तेनासखीति पर्युदासवाक्ये नास्याः प्रवृत्तिः । तत्र सखिशब्दस्य लक्षणया सख्यवयवपरत्वेन प्रातिपदिकत्ववदुपस्थापकत्वाभावात् ।

ननु सिद्धान्ते तत्तत्पदत्वेनोपस्थितौ तत्तदानुपूर्व्यवच्छिन्नस्य तत्तत्पदस्यापि विषयत्वाङ्गीकारेण प्रातिपदिकत्ववदुपस्थापकत्वमस्त्येव । न च तस्य प्रकारतयोपस्थितावपि न विशेष्यतयोपस्थितिरिति वाच्यम्, 'दण्डी पुरुषः' इत्यादौ दण्डस्य विशेषणत्वेऽपि दण्डत्वनिरूपितविशेष्यताया अनपायादभेदानुपूर्वीनिरूपितविशेष्यतायाः सत्त्वेन दोषस्य दुर्वारत्वादिति चेत्, न; शब्दपरेषु शब्देषु शब्दनिष्ठजातेरानुपूर्व्या वा प्रवृत्तिनिमित्तत्वेन लक्षणास्थले निरुक्तशक्यतावच्छेदकारोपेऽपि निरुक्तधर्मस्यावयवस्य वा प्रातिपदिकत्वाभावेन[2] प्रातिपदिकत्ववदुपस्थापकत्वासम्भवात् ।

---

१. 'ववंसादिरूपस्यैव' इति पाठः क० पु० ।

२. 'निरुक्तधर्मस्यावयवस्य वा प्रापितदिकत्वाभावेन' इति नास्ति क० पु० ।

**लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम् । अपिना केवलस्यापीत्यर्थः ।**

---

एवञ्चासखीत्यत्र लक्षणया तज्जन्योपस्थितौ प्रकारीभूतायाः शब्दनिष्ठजातेरानुपूर्व्या वा विशेष्यतयोपस्थितस्य सख्यवयवस्य चाप्रातिपदिकत्वान्न प्रातिपदिकत्ववदुपस्थापकत्वमिति नातिप्रसङ्गः। यथाकथञ्चित् प्रातिपदिकत्ववदुपस्थापकशब्दग्रहणे एषोपतिष्ठते, न तु विशिष्यग्रहणे एवेति नियमः।

अत एवानेन सिद्धवध्नादिषु "तृजकाभ्याम्०" ( पा० सू० २।२।१५ ) इत्यादेः 'स्थण्डिलशायिनी' 'अपां स्रष्टा' इत्युदाहरणयोः फलत्वेन, दाक्षिरित्यत्रेव दाक्षीत्यत्रापि "ञ्नित्यादेः०" ( पा० सू० ६।१।१९७ ) इत्यस्यापत्तिरिति दोषत्वेनोक्तिश्च सङ्गच्छते।

ननु प्रातिपदिकग्रहणेषु "स्वं रूपम्०" ( पा० सू० १।१।६८ ) इति परिभाषया लिङ्गस्यार्थरूपत्वेनार्थवच्छब्दस्य ग्रहणेनैव लिङ्गविशिष्टस्य ग्रहणसिद्धे वचनवैय्यर्थ्यमत आहः—**लिङ्गबोधकेति**। अभिधेयलिङ्गबोधकलिङ्गपदेन तदभिधायकप्रत्यय उच्यते, उपचारादिति भावः।

**केवलस्यापीति**। "स्वं रूपम्०" ( पा० सू० १।१।६८ ) इति शास्त्रेण गृहीतस्वरूपस्य समुच्चय इति भावः। अन्यथा प्रातिपदिकग्रहणे सावकाशया तया धातुप्रत्ययग्रहणेषु सावकाशस्य "स्वं रूपम्०" ( पा० सू० १।१।६८ ) इत्यस्य परत्वाद् बाध एव स्यादिति बोध्यम्।

ननु "कुमारः श्रमणादिभिः" ( पा० सू० २।१।७० ) इति सूत्रे पूर्वोत्तरपदयोस्तत्प्रकृतिकसुबन्ते लक्षणया तत्रापि प्रातिपदिकोपस्थापकत्वाभावात् ज्ञापकभूम्युच्छेदः। न च लुकानुत्पत्तेरेवान्वाख्यानेन प्रातिपदिकस्यैव सुबन्तत्वेन सूत्रस्थकुमारपदस्य प्रातिपदिकबोधकत्वानपायान्न दोष इति वाच्यम् 'वारि' इत्यादौ लुग्विषये लुकानुत्पत्त्यन्वाख्यानसम्भवेऽपि प्रकृते समाससंज्ञाप्रवृत्तिकालेऽप्रातिपदिकत्वेन लुग्विषयताया एवासम्भवेन तेनानुत्पत्त्यन्वाख्यानस्य तदानीमसम्भवात्।

किञ्च समासोत्तरं लुकि प्रत्ययलक्षणेन सुबन्तत्वं प्रातिपदिकत्ववतः सुबन्तत्वोत्तरं समास इति परस्पराश्रय इति चेत्, न; श्रमणादीनां तत्प्रकृतिकसुबन्ते लक्षणायामपि श्रमणात्वेन रूपेण 'श्रमणा सु' इति प्रातिपदिकविशिष्टस्यैवोपस्थित्या यथाकथञ्चित् प्रातिपदिकविषयकोपस्थितिजनकत्वेन प्रातिपदिकबोधकत्वेन परिभाषाप्रवृत्त्यादोष इत्याशयात्।

नन्वेवमप्यसखीति व्यर्थम्, सखिपदस्य सख्यवयवे लक्षणायामपि सख्यवयवीभूतवर्णस्य 'शक्यतावच्छेदकारोपो लक्षणा' इति मते सखित्वेनैवोपस्थित्या नञ्सम-

**अस्याश्च ज्ञापकं समानाधिकरणाधिकारस्थे "कुमारः श्रमणादिभिः" इति सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः। स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारी-शब्दस्यैव सामानाधिकरण्यम्, न तु कुमारशब्दस्येति तदेतज्ज्ञापकम्।**

---

भिव्याहारे उत्तरपदार्थे प्रकारीभूतस्य धर्मस्येवारोपेणासखिपदेनाप्यारोपितसखि-त्वाश्रय इत्येव बोध इति सख्यसखिपदयोः पर्यायतया सखिशब्दे सुसखिशब्दे च, इकारस्य घिसंज्ञा दुर्वारा।

न च सखिपदेन सख्यवयवस्योपस्थितया नञ्समभिव्याहारे "नञिवयुक्त०" ( परि० ७५ ) न्यायेन न तद्भिन्नस्य तत्सदृशस्यैवारोपितसखित्ववतो ग्रहणेन सखिशब्दे नातिप्रसङ्ग इति वाच्यम्, भेदे आरोपविषयीभूतसखित्वस्यैव प्रतियोगि-तावच्छेदकतया 'अब्राह्मणभिन्नः' इत्यादावब्राह्मणभेदस्य शूद्रादाविवारोपविषयी-भूतसखित्वावच्छिन्ने वर्णभेदस्य पत्यवयवेकारेऽपि दुर्लभत्वादिति चेत्, न; 'अब्राह्मणः' इत्यादौ प्रतियोगिभिन्ने तत्सदृशे प्रतियोगितावच्छेदकारोपाङ्गीकारेऽपि लक्षणास्थले शक्यसम्बन्धिन्येवारोपाङ्गीकारेण 'गङ्गायां घोषः' इत्यादौ गङ्गातीर-निष्ठारोपितगङ्गात्वस्य नञ्समभिव्याहारस्थले गङ्गातीरभिन्नतत्सदृशे तीर एवारोपेणारोपसम्बन्धिन्यारोपितगङ्गात्वप्रकारकतीरविशेष्यकोपस्थितिवत् पत्यव-यवेकारे शक्यसम्बन्धाभावेन सखित्वारोपाभावात् तस्य लक्ष्यतया लक्ष्यभिन्ने तत्सदृशे पतिशब्देकारे सख्यवयवे आरोपितसखित्वस्यारोपसम्भवेनादोषादिति दिक्।

**ज्ञापकमिति।** न च 'महाशूद्रा' इत्यादौ जातिमात्रविवक्षया समासवत् कुमारपदेऽपि प्रवृत्तिनिमित्तमात्रविवक्षया सामानाधिकरण्यं सूपपादम्। श्रमणा-शब्दस्य स्त्रीत्वविशिष्टार्थबोधकतया तत्सामानाधिकरण्यज्ञानेनात्रापि स्त्रीत्वविशि-ष्टव्यक्तेरेवोपस्थितया ङीपो दुर्वारत्वेन कुमारशब्देन सामानाधिकरण्यासम्भवात्।

न चापत्यमक्षिकादिपदवद् गणपठितश्रमणापदस्यापि नियतलिङ्गतया स्त्र्यपत्यम्, पुमपत्यम्, इत्यादाविव कुमारशब्देनापि सामानाधिकरण्यं सुवचमिति वाच्यम्, दृष्टान्ते उभयोर्नियतलिङ्गत्वेनैकलिङ्गत्वासम्भवेऽपि प्रकृते तदभावात्।

न च 'कुमारः श्रमणेव' इत्यर्थे 'पुरुषो व्याघ्र इव' इत्यादाविव कुमारश्रम-णयोः सामानाधिकरण्यं सूपपादम्, तथा विवक्षायामस्य सूत्रस्यैव वैयर्थ्यापत्तेः। "उपमितं व्याघ्रादिभिः" ( पा० सू० २।१।५६ ) इत्येव समाससिद्धेः।

न च 'युवजरती' इत्यादौ युवत्यामेव जरतीत्वारोपेण सामानाधिकरण्येन समासवत् पुंस्येव कुमारश्रमणात्वारोपेण सामानाधिकरण्यं सूपपादम्। तथा सति भिन्नलिङ्गानामेवंरीत्या सामानाधिकरण्यमादाय कर्मधारयापत्तेः। न चेष्टापत्तिः, 'युवा खलति०" ( पा० सू० २।१।६७ ) इति सूत्रे 'अयुक्तोऽयं निर्देशः' इत्यादिना

इयञ्च "द्विषत्परयोः" इत्याद्युपपदविधौ, समासान्तविधौ, महदात्त्वे, ञ्नित्स्वरे, राजस्वरे ब्राह्मणकुमारयोः "बहोर्नञ्वदुत्तरपदभूम्नि" इत्यादौ,

---

समानाधिकरणाधिकारे भिन्नलिङ्गानां सामानाधिकरण्यासम्भवात्, समासविधानमसङ्गतमित्याशङ्क्य तेनैव निर्देशेनैषा परिभाषा ज्ञाप्यते इत्युक्तम्। भिन्नलिङ्गयोरारोपेण सामानाधिकरण्याश्रयणे तु एतदसङ्गतिः स्पष्टैव।

न च लिङ्गबोधकप्रत्ययविशिष्टग्रहणे प्रातिपदिकग्रहणमित्येव ज्ञाप्यताम्, तत्फलं तु "रेवतीजगतीहविष्याभ्यः प्रशस्ये" ( पा० सू० ४।४।१२२ ) इत्यनेन प्रशंसार्थे यत्प्रत्यये 'जगत्यम्' इतिवद् जगच्छब्दस्यापि 'जगत्यम्'इति। यदि रूपे न विशेष इत्युच्यते, तर्हि "एण्या ढञ्" ( पा० सू० ४।३।१५९ ) इति ढञ् एणशब्दादपि सिद्ध्यतीति वाच्यम्, तथा सति सर्वत्र स्त्रीलिङ्गनिर्देशेषु 'एणाढ्ढञ्' इत्येव प्रातिपदिकनिर्देशेनोक्तपरिभाषया निर्वाहे तथा निर्देशेन तत्रास्याः प्रवृत्तेरनिष्टत्वबोधनात्। श्रमणादिषु नित्यस्त्रीलिङ्गानाम् 'कुलटा' 'वर्द्धकी' 'गर्भिणी' इत्यादिपाठस्य वैय्यर्थ्यापत्तेश्चेति दिक्।

**विधाविति।** "द्विषतीतापः" 'मद्रराज्ञी' इत्यत्र न दोषः "द्विषत्परयोस्तापे" ( पा० सू० ३।२।३९ ) इत्यत्र तकारप्रश्लेषेण तकारान्ते उपपदे एव खजङ्गीकारात्। एवम् "राजाहः०" ( पा० सू० ५।४।९१ ) इत्यादौ 'अहन्' शब्दस्य लघ्वक्षरत्वात्तस्यैव पूर्वनिपाते कर्त्तव्ये तदकरणेन सवर्णदीर्घनिर्देशाद् यत्राकारस्य सवर्णदीर्घयोग्यता तस्य 'राजन्'शब्दस्यैव टजिति न दोष इति वृत्तावुक्तम्।

**महदात्त्वे इति।** न च निर्दिश्यमानस्योत्तरपदपरत्वाभावान्न दोषः। अनया महत्त्वस्यातिदेशेन स्थानिवद्भावविषये इव तद्बुद्ध्यैव कार्यप्रवृत्त्या निर्दिश्यमानपरिभाषया वारणासम्भव इत्याशयात्।

**ञ्नित्स्वरविधाविति।** "इतो मनुष्यजातेः" ( पा० सू० ४।१।६५ ) इति ङीषः पूर्वमेवान्तरङ्गत्वात्स्वरे कृते पुनः स्वरो न भवति, लक्ष्ये लक्षणस्येति न्यायात्। तस्मान्नेदमुदाहरणम्।

**राजस्वरे इति।** "राजा च" ( पा० सू० ६।२।५९ ) इति सूत्रे "आर्यो ब्राह्मणकुमारयोः" ( पा० सू० ६।२।५८ ) इति सूत्राद् ब्राह्मणकुमारयोरिति वर्तते। तेन तत्र पूर्वपदप्रकृतिस्वरो न।

**इत्यादाविति।** समासत्वस्य प्रातिपदिकत्वव्याप्यत्वादिति भावः। उत्तरपदभूयस्त्वे वर्त्तमानाद् बहुशब्दात्परं यत्तदन्तस्य समासस्य नञ इव स्वरो भवतीत्यर्थेकेन "बहोर्नञ्वत्०" ( पा० सू० ६।२।१७५ ) इत्यतिदेशेन 'बहुगोमान्' इत्यत्र "नञ्सुभ्याम्" ( पा० सू० ६।२।१७२ ) इत्यन्तोदात्तत्वं समासरूपसङ्घातोद्देश्यकं यथा भवति, एवम् 'बहुगोमती' इत्यत्रापि प्राप्तं न भवति।

**समाससङ्घातग्रहणेषु च न प्रवर्तत इति ङ्याप्सूत्रे भाष्ये स्पष्टम् । विभक्तिनिमित्त-ककार्ये च नेत्यपि तत्रैव ।**

**तत्र समासान्तविधाववयवग्रहण एव न, समाससङ्घातग्रहणे तु प्रवर्तत एव, स्वरविधावेव समाससङ्घातग्रहणे तत्र दोषोक्तेः, "बहुव्रीहेरूधसः" इति सूत्रस्थभाष्याच्च, 'एतावत्स्वेवानित्यत्वादप्रवृत्तिः, दोषाः खल्वपि साकल्येन परिगणिताः' इति भाष्योक्तेः ।**

---

**समाससङ्घातग्रहणेषु चेति ।** अस्य पूर्वेणेत्यादावित्यनेनाभेदेनान्वयः । अत एव भाष्ये "समाससङ्घातग्रहणेषु चातिप्रसङ्गो भवति । "बहोर्नञ्वदुत्तरपद-भूम्नि" ( पा० सू० ६।२।१७५) इति, यथेह भवति 'बहुगोमान्' एवम् 'बहुगोमती' इत्यत्रापि स्यात्" इति तस्योदाहरणत्वेन "बहोर्नञ्वत्०" (पा० सू० ६।२।१७५) इत्युपन्यस्तम् । सामान्यतः समासस्वरविधावित्यनुक्त्वा "बहोर्नञ्वत्०" (पा० सू० ६।२।१७५) इत्यादिसमाससङ्घातग्रहणे इत्यस्य फलं तु 'कुसूलीबिलम्' इत्यत्रापि "कुसूलकूपकुम्भशालं बिले" ( पा० सू० ६।२।१०२ ) इति पूर्वपदा-न्तोदात्तत्वसिद्धिः ।

ननु समासान्तविधौ समाससङ्घातग्रहणेऽवयवग्रहणे च निषेधः स्यादत आह—**समासान्तविधाववयवग्रहणे एवेति ।** "राजाहः०" ( पा० सू० ५।४।९१ ) इत्यादौ । **सङ्घातग्रहणे त्विति ।** "शेषाद् विभाषा" ( पा० सू० ५।४।१५४ ) इत्यादौ । **प्रवर्तत एवेति ।** तत्र मानमाह—**स्वरविधावेवेति ।** ननु 'बहुगोमत्का नगरी' इत्यादावलौकिकवाक्ये समासान्तानां प्रवृत्त्या तदानीमप्रातिपदिकत्वेनोगि-ल्लक्षणङीपोऽप्राप्त्या तत्रैतत्परिभाषाप्रवृत्तौ न फलमिति चेत्, न; सङ्घातग्रहणे एतत्प्रवृत्तावपि दोषाभावेन तदंशे एतदप्रवृत्तिकल्पने न मानमित्याशयात् ।

**भाष्याच्चेति ।** तत्र हि 'महोधाः पर्जन्यः' इत्यादावूधसोऽनङ्वारणाय स्त्र्यधिकारेऽनङ्कर्त्तव्य इति पक्षेऽनङः समासान्तत्वाभावान्ङीषः प्राक् "शेषात्०" ( पा० सू० ५।४।१५४ ) इति कपमाशङ्क्य, नहि ङीष्विभाषेति परिहृत्य, उत्पन्ने ङीषि कप्प्राप्तिमाशङ्क्य, तत्रापि तत् प्राप्नोति, नद्यन्तानां बहुव्रीहिरित्यर्थात् ।

एवं तर्हि ङीषः प्रागेव प्राप्नोति । ननु चोक्तं ङीष्विभाषेति । यद्यपि ङीष् न विभाषा, तथापि कब्विभाषा । यदा न कप्, तदा ङीषोऽवकाशः 'कुण्डोध्नी' । कप्प्रसङ्गे उभयं प्राप्नोति परत्वात्कप् स्यात् ।

तस्मात् सुष्ठूच्यते "समासान्ताधिकारे स्त्रीग्रहणं कर्त्तव्यम्"इति भाष्यम् । अनङः समासान्तप्रकरणे पाठमकृत्वा स्त्रीप्रत्ययेषु पाठेऽनङः समासान्तत्वाभावात् कबपवादत्वानापत्त्या 'कुण्डोध्नी' इत्यत्र पक्षे कबापत्तिरिति सिद्धान्तिनोक्ते, एकदेशिना कपः समासान्तत्वात् 'कुण्ड सु ऊधस् सु' इत्यलौकिके वाक्ये एव कपः

**नन्वेवम् "बहुव्रीहेरूधसो ङीष्' इति सूत्रस्थभाष्यासङ्गतिः। तत्र हि 'कुण्डोध्नी' इत्यत्र "नद्यृतश्च" इति कबापादितो नद्यन्तबहुव्रीहेरित्यर्थात्, नद्यन्तस्य बहुव्रीहित्वाभावात् तदसङ्गतिः। नद्यन्तानां यः समास इत्यर्थेन च परिहृतम्।**

**नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समास इति चेत्, न; अनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेऽपि पर्याप्तत्वमतिदिश्यत इत्याशयात् ॥ ७२ ॥**

---

प्रवृत्तौ ऊधोन्तबहुव्रीहेरसम्भवादनङ्ङीषोरनवकाशत्वेन तद्विषये पूर्वं कपोऽप्रवृत्त्या तयोः सावकाशत्वाय प्रथमं लक्ष्ये प्रवृत्तौ तस्य नित्यत्वाज्जातस्य निवृत्त्ययोगात्, 'कुण्डोध्नी'इति सिद्धमित्यनङः पूर्वं कबापत्तिरूपदोषे परिहृते तत्सिद्धान्त्येकदेशिना, एवमपि नदीलक्षणः कप् दुर्वार इत्युक्तम्।

यद्यपि ङीषि कृते तदन्तस्य बहुव्रीहित्वाभावात्तदर्थकविग्रहवाक्यत्वाभावाच्च नद्यन्तबहुव्रीहेरित्यर्थान्न तस्य प्राप्तिः। न च लिङ्गविशिष्टपरिभाषया स्त्रीप्रत्यय-समभिव्याहारे प्रकृतिगतधर्मस्य "स्वाङ्गाच्चेतः" ( पा० सू० ६।३।४० ) इति सूत्रस्थशेखरोक्तरीत्या तत्पूर्ववृत्तिधर्मस्य वा प्रत्ययविशिष्टेऽतिदेशान्न दोष इति वाच्यम्, समासान्तविधौ सा नेति भाष्योक्त्या तदप्राप्तेः।

तथापि तद्भाष्यप्रामाण्यात् समासान्तविधाववयवग्रहणे एव सा नेति तद्भाष्याशयः कल्पनीयः। समाससमुदायग्रहणे एतत्प्रवृत्त्यप्रवृत्त्योः फले विशेषा-भावादिति विवरणे स्पष्टम्।

एवञ्च नदीलक्षणं कपमापाद्य 'बहु जस् कुमारी जस्' इत्यादावप्यलौकिके विग्रहवाक्ये सुपः सत्त्वेन नद्यन्तोत्तरपदकबहुव्रीहेरसम्भवान्नद्यन्तप्रकृतिकसुबन्तो-त्तरपदकसमासात्कबिति परिहृतम्। ततः पुनः "शेषात्०" (पा० सू० ५।४।१५४) इति कपमेवापाद्य समासान्तप्रकरण एवानङ्विधौ 'स्त्रियामिति वक्तव्यम्'इति सिद्धान्तिनोक्तम्। कबभावपक्षेऽनङश्चारितार्थ्यात् कप्पक्षेऽन्तरङ्गत्वात्कप् स्यादिति तदाशयः।

एवञ्च पीताम्बरस्य स्त्री 'पीताम्बरी' इत्यादौ नद्यन्तबहुव्रीहित्वस्यातिदेशेन 'प्रियतिस्रा' इत्यादौ सम्प्रति ऋदन्तोत्तरपदत्वेन कब्वारणाय तत्र बहुव्रीहिपदस्य तद्विग्रहवाक्ये लक्षणाया आवश्यकत्वात्। 'कुण्डोध्नी' इत्यत्र कबापादनमेकदेशिन एवेति स्पष्टं तद्विदामित्यन्यत्र विस्तरः।

**तद्व्याप्यधर्माणामिति।** ननु 'पञ्चनावप्रियः' इत्यादौ पञ्चनावेत्यस्या-प्रातिपदिकत्वेऽपि समासत्वेन समासत्वपञ्चतद्व्याप्यत्वं[1] दुर्वचमिति चेत्, न; 'गोमती' 'यवमती' इत्यत्रोगिल्लक्षणनुमागमवारणस्य "विभक्तौ लिङ्गविशिष्टा-

---

१. 'समासत्वस्य तद्व्याप्यत्वम्' इति पाठः क० पु०।

**नन्वेवम् 'यूनः पश्य' इत्यत्रेव 'युवतीः पश्य' इत्यत्रापि "श्वयुव" इति सम्प्रसारणं स्यात्, अत आह—**

---

ग्रहण" (परि० ७३) परिभाषाफलत्वेनोपन्यासात्, प्रातिपदिकत्वव्याप्यस्यैवातिदेश इति नियमाङ्गीकारात्[1] प्रायः प्रातिपदिकत्वव्याप्यस्यैवातिदेशादत्रेत्थमुक्तमिति बोध्यम् ॥ ७२ ॥

**'युवतीः पश्य' इति**। ननु 'मघवतः' इत्यादौ "श्वयुव०" (पा. सू. ६।४।१३३) इति सूत्रे "अल्लोपोऽनः" ( पा० सू० ६।४।१३४ ) इत्यतोऽन इत्यपकर्षणात् सम्प्रसारणाप्रवृत्तिवदत्रापि तदप्रवृत्त्या न दोषः। न च 'दाक्षी' इत्यत्र ञिदन्तत्वातिदेशवत्[2] अन्नन्तत्वस्याप्यतिदेशापत्त्या तत्प्राप्तिरिति वाच्यम्, एवं सति 'मघवतः' इत्यत्रापि, "एकदेशविकृत०" ( परि० ३७ ) न्यायेनाच्छब्दोऽप्यन्शब्द एवेति स्थानिवत्त्वेनान्नन्तत्वातिदेशेन वा सम्प्रसारणापत्त्याऽन इत्यपकर्षस्य वैय्यर्थ्यापत्त्या श्रूयमाणान्नन्त एव प्रवृत्त्याऽदोषात्।

न चान्नन्तत्वस्य विशेषधर्मत्वेन मघवन्शब्दातिदेशेऽपि "सामान्यातिदेशे०" ( परि० ११० ) इति न्यायेन तदतिदेशासम्भव इति कैयटोक्तं युक्तमिति वाच्यम्, स्थानिवत्सूत्रेण विशेषातिदेशस्याप्यङ्गीकारेण दोषापत्तेः। अत एव 'राजकीयम्' इत्यत्रालोपमाशङ्क्य नकारान्तग्रहणेन समाहितं भाष्ये। तत्प्रत्याख्याने तु, अन इत्युत्तरं नलोपेन नकारं प्रश्लिष्य नकारान्तस्यैव लोप इत्याहुः।

केचित्तु अङ्गावयवासर्वनामस्थानेति मूलोक्तरीत्या न दोष इत्याहुस्तन्न; "एकदेशविकृत०" ( परि० ३७ ) न्यायेन दोषस्य दुर्वारत्वात्। अत एव 'मघवतः' 'धीवरी' इत्यादौ नाल्लोपः। अथ—अन इत्यपकर्षसामर्थ्याच्छ्रूयमाणान्नन्त एव तत्प्रवृत्त्यङ्गीकारे परत्वाट्टिलोपे मूलोक्तस्य 'शावयति' इत्यस्यानापत्तिः।

न चेष्टवद्भावेन भत्वात् सम्प्रसारणप्राप्तेरत्र वाच्यत्वे तेनैव 'अतद्धिते'[3] इति निषेधात् सम्प्रसारणस्यैवाप्राप्तेः कथम् 'शावयति' इति सिद्ध्यतीति वाच्यम्, णेस्तद्धितत्वाभावादिष्ठनि परतः पूर्वस्य जायमानकार्यातिदेशेऽपि णेस्तद्धितत्वानतिदेशात्।

न चैवम् "नस्तद्धिते" ( पा० सू० ६।४।१४४ ) इति टिलोपस्याप्यनापत्तिः, तद्धितत्वाभावादिति वाच्यम्, सत्यपि तत्त्वे 'ब्रह्मिष्ठः' इत्यादौ तस्य दृष्टत्वमात्रेण प्रकृतेऽप्यतिदेशेनाक्षतेः। न च 'दविष्ठः' इत्यादावोर्गुणस्यापि दृष्टत्वेन तस्याप्यतिदेशः स्यादिति वाच्यम्, तत्र कर्त्तव्ये सम्प्रसारणटिलोपयोराभीयत्वेना-

---

१. 'नियमानङ्गीकारात्' इति पाठः क० पु०।

२. 'इन्नन्तत्वातिदेशवत्' इति पाठः क० पु०।

३. "श्वयुवमघोनामतद्धिते" ( पा० सू० ६।४।१३३ ) इति निषेधादित्यर्थः।

## विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ ७३ ॥

**स्पष्टा चेयम् "युवोरनाकौ" इत्यत्र भाष्ये। घटघटीग्रहणेन लिङ्गविशिष्ट-परिभाषाया अनित्यत्वात् तन्मूलैषेत्यन्ये ॥ ७३ ॥**

---

सिद्धत्वात्, परत्वेन 'अदिष्टादुपदिष्टं बलीयः' इति न्यायेन "अचो ञ्णिति" (पा० सू० ७।२।११५) इति वृद्धया बाधाच्च।

न च श्ववच्छब्दादिष्ठनि मतुपो लुकि "नस्तद्धिते" (पा० सू० ६।४।१४४) इति टिलोपे 'शिवष्ठः' इत्यत्रातद्धित इति निषेधस्यापि दृष्टत्वे सम्भव इति वाच्यम्। लाघवादतद्धित इत्यत्र पर्युदासस्यैवाश्रयणादिष्ठनि परतः पूर्वस्य सम्प्रसारणनिषेधस्याविधानेन तस्याशास्त्रीयत्वेनातिदेशादिति चेत्, उच्यते "श्वयुव०" (पा० सू० ६।४।१३३) इति सूत्रे 'नकारान्तग्रहणं कर्त्तव्यमनकारान्तप्रतिषेधार्थम्' इति वार्त्तिकस्य 'मघवतः' 'युवतीः पश्य' इति प्रयोजनमुक्त्वा 'मघवतः' इत्यस्य छान्दसत्वात्, 'युवतीः' इत्यत्र विभक्तौ लिङ्गविशिष्टाग्रहणादिति दोषं परिहृत्य तत्प्रत्याख्यातम्।

'शावयति' इत्यत्रातद्धित इति प्रसज्यप्रतिषेधाद्दोषो नोद्भावितः, तस्य पर्युदासत्वे 'शावयति' इत्यत्र फलभेदेन तत्प्रत्याख्यानासङ्गतिः।

तस्माड्ङाप्सूत्रे बहुश्चेति भाव्यमिति भाष्यप्रामाण्येन च 'शावयति' इत्यस्यानिष्टत्वेनादोषादिति चेत्, न; मघवन्शब्दस्य छान्दसत्वपक्षे मघशब्दान्मतुपा 'मघवतः' इत्यस्य सिद्धयाऽन इत्युनुवृत्तेः फलाभावात्। युवानमाचष्टे 'युवयति' इत्यत्र भत्वाट्टिलोपे सम्प्रसारणाभावस्तु न फलम्, उक्तरीत्याऽत्र सम्प्रसारणाप्राप्तिरित्याशयात्। मघवन्शब्दस्य लोकेऽपि सत्त्वपक्षेऽस्या अन्यार्थमावश्यकतयाऽत्रापि तयैव वारणसम्भव इत्याशयात्।

अत्र—**विभक्ताविति**—विषयसप्तमी। विभक्तिप्रयोज्यकार्य इत्यर्थः। अत एव 'शून्या' इत्यत्र गौरादित्वान्ङीषि कृते प्राप्तस्य "उदात्तयणो हल्पूर्वात्" (पा० सू० ६।१।१७४) इति विभक्तिस्वरस्य "न गोश्वान्०" (पा० सू० ६।१।१८२) इति न प्रतिषेध इति "युवोरनाकौ" (पा० सू० ७।१।१) इत्यत्र भाष्ये उक्तम्।

ननु 'चित्रगवीणाम्' इत्यादौ णत्वानापत्तिः, कवर्गवदुत्तरपदाक्षिप्तसमासरूपप्रातिपदिकप्रकृतिकविभक्तेरेव तत्र ग्रहणेन ङयन्ते[1] लिङ्गविशिष्टपरिभाषया तदतिदेशे कर्त्तव्येऽनया निषेधप्रसङ्गात् प्रकृतेः समासत्वाभावादिति चेत्, न; समासरूपप्रातिपदिकस्यैव ग्रहणे 'बहुचतुरङ्गेण' इत्यादौ णत्वानापत्त्या त्वदुक्तप्रत्यासत्तेराश्रयितुमशक्यत्वात् ॥ ७३ ॥

---

१. 'ङान्ते' इति पाठः क० पु०।

**ननु "तस्यापत्यम्" इत्येकवचननपुंसकाभ्यां निर्देशात् 'गार्ग्यो गार्ग्यौ' इत्याद्ययुक्तम्, अत आह—**

## सूत्रे लिङ्गवचनमतन्त्रम् ।। ७४ ।।

**"अर्द्धं नपुंसकम्" इति नपुंसकग्रहणमस्या ज्ञापकम् । नित्यनपुंसकत्वार्थं तु न तदित्यन्यत्र निरूपितम् ।**

---

**अयुक्तमिति ।** न च "अपत्यं तोकं तयोः समे"[1] इति कोशादपत्यशब्दस्य स्त्रीपुंससाधारणजन्यचेतनत्वावच्छिन्नवाचकत्वेन पुमपत्यस्याप्यपत्यपदेन बोधसम्भवात्किमयुक्तमिति वाच्यम्, 'पशुना यजेत' इत्यादौ लिङ्गस्यापि बोधे भानवत्, 'पुष्यस्तारकानक्षत्रम्' इत्यादिवच्च, अपत्यपदजन्यबोधे लौकिकलिङ्गस्येव शास्त्रीयलिङ्गस्यापि भानानुभवाद् यञस्तदर्थान्तर्भावेण वृत्तौ नपुंसकत्ववैशिष्ट्येनैव सर्वापत्याभिधानं स्यादिति गार्ग्यशब्दे पुंस्त्वं स्त्रीत्वं चायुक्तमित्याशयात् ।

इदमुपलक्षणम् "कर्मणा यमभिप्रैति०" ( पा० सू० १।४।३२ ) इति सम्प्रदानसंज्ञायामपि पुंल्लिङ्गैकवचननिर्देशात् 'ब्राह्मणेभ्यः' इत्यत्र न स्यात् । यद्यपि तस्येति पुंल्लिङ्गैकवचननिर्देशात् स्त्रीनपुंसकलिङ्गाद् द्विवचनबहुवचनान्ताच्चाण्न स्यादिति भाष्ये उक्तम्, तथापि तदिह नोपन्यस्तम् । "नपुंसकमनपुंसकेन" ( पा० सू० १।२।६९ ) इत्येकशेषणे निर्देशाङ्गीकारेणेष्टसिद्धेः । वृत्तावुपसर्जनपदार्थे संख्याविशेषासम्प्रत्ययादिति भावः ।

न चापत्यमित्येकवचननिर्देशेऽपि 'गार्ग्यौ' इत्यादेरेकशेषेण सिद्धेर्न दोष इति वाच्यम्, गुणगतबहुत्वारोपेण बहुत्वविवक्षायामेकशेषेणानिर्वाहात् ।

**ज्ञापकमिति ।** "अर्द्धम्०" ( पा० सू० २।२।२ ) इति सूत्रे निर्देशादेव नपुंसकत्वलाभे पुनर्नपुंसकग्रहणं व्यर्थं सज्ज्ञापकमिति भावः । ननु समांशवाचिनो नित्यनपुंसकस्य ग्रहणार्थं तदस्तु, इत्यत आह—**नित्येति ।**

**निरूपितमिति ।** 'अवयववाची पुल्लिङ्गः' इति भाष्यान्न तस्य लिङ्गान्तरम्, "भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंशके"[2] इत्यत्र शकलखण्डे—इति रूपभेदात्; प्रायशो रूपभेदेनेति तेन परिभाषितत्वात्, नपुंसकत्वे निर्णीते वा पुंसीतिवचनाच्च पुंस्त्वविकल्पे इदमुभयमस्त्रियामिति फलितम् । वा पुंसीत्यस्यावृत्त्या पूर्वोत्तरान्वयेनार्धशब्दस्य स्त्रीलिङ्गत्वकल्पने उक्तभाष्यस्योपलक्षणत्वापत्तेः । "भित्तमर्धः पुमान् खण्डमस्त्रियां शकलं त्रिषु । अर्धं समेंशके" इति शब्दरत्नाकरविरोधापत्तेश्च ।

---

१. 'अमरकोषः' २।६।२८ ।
२. 'अमरकोषः' १।३।१६ ।

**धान्यपलालन्यायेन नान्तरीयकतया तयोरुपादानमिति "तस्यापत्यम्" इत्यत्र भाष्ये स्पष्टम्। अत एव "आकडार"सूत्रे एकेति चरितार्थमित्यन्यत्र विस्तरः ॥ ७४ ॥**

**ननु "भृशादिभ्यो भुव्यच्वेः" इत्यादौ विधीयमानः क्यङ् 'क्व दिवा भृशा भवन्ति' इत्यत्रापि स्यात्, अत आह—**

**नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥ ७५ ॥**

**नञ्युक्तमिव युक्तं च यत् किञ्चिद् दृश्यते तत्र तस्माद् भिन्ने तत्सदृशेऽधिकरणे द्रव्ये कार्यं विज्ञायते। हि = यतः, तथार्थगतिरस्ति। न हि 'अब्राह्मणमानय' इत्युक्ते लोष्टमानीय कृती भवति। अतश्च्व्यन्तभिन्ने च्व्यन्तसदृशेऽभूततद्भावविषये क्यङिति नोक्तदोषः।**

---

किञ्च "एवोङ्" (शि० सू० ३) इति सूत्रे एचो ह्रस्वशासनेष्वर्धस्यैकारस्य च विधानमाशङ्क्य, "नैव लोके वेदे वा अर्ध एकारोऽस्ति" इति भाष्येण समांशवाचिनोऽपि नित्यनपुंसकत्वाभावबोधनादिति दिक्।

न च श्रमणाशब्दपाठस्य लिङ्गविशिष्टपरिभाषाज्ञापकत्वानुपपत्तिरिति वाच्यम्, लाघवात् प्रातिपदिके एव उच्चारणीये लिङ्गप्रत्ययविशिष्टनिर्देशस्य ज्ञापकत्वमित्याशयात्।

एतेन "बन्धुनि बहुव्रीहौ" (पा० सू० ६।१।१४) इत्यादौ पुंल्लिङ्गस्यापि बन्धुशब्दस्य शब्दस्वरूपपरतया नपुंसकनिर्देशवदत्रापि नपुंसकनिर्देशसम्भवेन निर्देशेन लिङ्गलाभो दुर्लभ इत्यपास्तम्। बन्धुशब्दे नपुंसकत्वान्यथानुपपत्त्या कथञ्चित्तदुपपत्तिकल्पनेऽपि, सम्भवस्थलेऽपि तथा कल्पने प्रमाणाभावात्। शौण्डैरित्यादावाद्यर्थावगतिस्त्वेकस्मिन्नेकवचने एव न्याय्ये बहुवचननिर्देशादिति बोध्यम्। एवञ्चासति यत्ने सूत्रे लिङ्गवचनमतन्त्रमिति फलितमिति भावः ॥७४॥

**नञ्युक्तमिति**। नञ्द्योत्यार्थप्रतिपादकमित्यर्थः। **यत्किञ्चिदिति**। पदमिति विशेष्यम्। **दृश्यत इति**। यत्रेत्यादिः। **तत्र**—शास्त्रे इत्यर्थः। **तस्मादिति**। मुख्यसम्बन्धेन तत्प्रवृत्तिनिमित्ताश्रयात्। **भिन्ने**—आरोपरूपसम्बन्धेन तत्तत्प्रवृत्तिनिमित्ताश्रये। **तत्सदृशे इति**। आरोपस्य भेदसादृश्ययोः सतोरेव सम्भवादिति भावः। तेन क्रियान्वये नेति बोध्यम्।

ननु नञ्युक्तं पदमन्यसदृशाधिकरणे वर्त्तत इत्यर्थाङ्गीकारे तस्य तदर्थान्तर्भावेण वृत्तिरित्यर्थापत्त्या शाब्दबोधेऽपि भेदसादृश्ययोर्विषयत्वापत्तिरित्यत आह—**कार्यं विज्ञायत इति**। इदञ्चाध्याहारलभ्यम्।

अत्र बीजमाह—**यत इत्यादिना—कृती भवतीति**। तथा च 'अब्राह्मणः' इत्यादावारोपितत्वं नञा द्योत्यते। तच्चोत्तरपदप्रवृत्तिनिमित्तनिष्ठम्, ब्राह्मणा-

**"ओषधेश्च विभक्तावप्रथमायाम्" इत्यादौ विभक्तिग्रहणमेतन्न्यायसिद्धार्थानुवाद एव। एतेन विभक्तावित्याद्यस्यानित्यत्वे ज्ञापकमिति वदन्तः परास्ताः, अनित्यत्वे भाष्यसम्मतफलाभावात्। अत एव 'अकर्त्तरि च" इति सूत्रे कारकग्रहणं भाष्ये प्रत्याख्यातमिति बोध्यम्। स्पष्टा चेयम् "भृशादिभ्यः" इति सूत्रे भाष्ये।**

---

दिपदञ्च मुख्यसम्बन्धेन ब्राह्मणत्ववत इवारोपरूपसम्बन्धेन ब्राह्मणत्ववतोऽपि शक्त्यैव[1] बोधकम्[2], नञ् तु स्वविशिष्टस्य तदर्थकत्वे तात्पर्यनिर्णायकः। आरोपितस्य ब्राह्मणत्वरूपविशेषणस्य विशेष्येण संसर्गस्तु आरोप एव। भेदसादृश्यप्रतीतिस्त्वार्थी। एवञ्च समवायेन ब्राह्मणत्वाभाववति कालिकादिसम्बन्धेन ब्राह्मणत्वस्येवारोपसम्बन्धेन ब्राह्मणत्वस्यापि सूपपादतया नास्य भ्रमत्वम्।

आरोपो नञर्थः[3], विषयत्वं संसर्गः, तस्य चोत्तरपदप्रवृत्तिनिमित्तेऽन्वयः। ब्राह्मणादिपदञ्च मुख्यसम्बन्धेन ब्राह्मणत्ववति शक्तमित्यारोपितब्राह्मणत्ववानिति बोध इति न युक्तम्। मुख्यसम्बन्धेन ब्राह्मणत्वविशिष्टब्राह्मणे आरोपविषयब्राह्मणत्वस्य दुर्घटत्वात्। उत्तरपदजन्यप्रतीतिविशेष्यभूते मुख्यब्राह्मणे आरोपित ब्राह्मणत्वस्याभावात्। न च नञ्समभिव्याहारान्मन्त्रेण विषशक्तेरिव तदर्थत्यागः, शब्दार्थसम्बन्धस्यानित्यत्वापत्तेरित्यन्यत्र स्पष्टम्।

अत्र परिभाषायामिवेति दृष्टान्तार्थमुपात्तम्। यथा "शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव" इति वाक्ये इवादीनां निपातत्वेन द्योतकत्वादुस्रपदस्यैवोस्रसदृशपरत्वात् तृतीया। अन्यथोस्राणामिवार्थेऽन्वयेऽप्युस्रपदार्थस्य करणभूतैः शरैरभेदान्वयाभावात्तृतीयानापत्तिः। तस्मादुस्रपदमुस्रभिन्नोस्रसदृशशरपरम्। अत एवोपामानोपमेययोः समानविभक्तिकत्वमिति सिद्धान्तः सङ्गच्छते इति प्राञ्च।

नव्यास्तु—इवादेर्द्योतकत्वाद् द्योत्यार्थस्य सर्वत्र विशेषणत्वस्यैव क्लृप्ततयोस्रसदृशैरित्यर्थो न युक्तः। तस्मादिवादीनां स्वसमभिव्याहृते उपमानताद्योतकत्वमुपमानत्वेन प्रतीतेः सादृश्यधर्मवदुपमेयप्रतीतिं विनानुपपत्त्योभयत्रापि साधारणधर्मसम्बन्धबोधे तात्पर्यग्राहकत्वञ्चोपमानत्वञ्च साधारणधर्मवत्त्वेनेतरपरिच्छेदकत्वम्, तद्धर्मवत्तया परिच्छेद्यत्वञ्चोपमेयत्वम्। एवञ्च 'चन्द्र इव मुखमाह्लादकम्' इत्यादौ आह्लादकोपमानभूतचन्द्राभिन्नमाह्लादकं मुखमित्यादिरीत्या बोध इत्याहुः।

**फलाभावादिति।** वस्तुतः अनञ्समासे इत्यस्य पर्युदासत्वे केवले 'स राज्यम्' इत्यादिप्रयोगे "एतत्तदोः०" (पा० सू० ६।१।१३२) इति सुलोपानापत्त्यास्या

---

१. 'शक्त्येव' इति पाठः क० पु०। २. 'बाधकम्' इति पाठ. क० पु०।
३. 'आरोपो नञर्थः' इत्यादितः 'इत्यन्यत्र स्पष्टम्' इत्यन्तं कोष्ठके वर्तते क० पु०।

**अत्रान्यसदृशेत्युक्त्वा सादृश्यस्य भेदाघटितत्वं सूचयति। निरूपितं चैतन्मञ्जूषायाम्॥ ७५॥**

**ननु 'व्याघ्री, कच्छपी' इत्यादौ सुबन्तेन समासात् ततोऽप्यन्तरङ्गत्वाट्टाप्यदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यात्, अत आह—**

---

अनित्यत्वमावश्यकम्। **सूचयतीति।** नञ्युक्तेऽन्यस्मिन्निवयुक्ते सदृशे इति यथासंख्येनान्वये इति तु न युक्तम्। अच्वेरित्यनेनाभूततद्भाव इत्यर्थालाभापत्तेरिति दिक्॥ ७५॥

**'व्याघ्री' 'कच्छपी' इति।** आङः 'घ्र' शब्देन गतिसमास उपपदसमासो वा, ततो विशब्दस्याघ्रशब्देन समासः। अत्र सुबन्तेन समासे बहिर्भूतसंख्यानिमित्तसुबपेक्षयाऽन्तरङ्गत्वाट्टाप्यदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यात्। पूर्वं तु न ङीष्, घ्रशब्दस्याघ्रशब्दस्य वा जातिवाचकत्वाभावादिति भावः। विशेषेणासमन्ताज्जिघ्रति मार्जारीत्यर्थेऽपि व्याघ्रेति रूपं नेष्यते। संज्ञायायामेव शप्रत्ययनिषेधात्। **कच्छपीति।** "जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः"[1] इति कोशाद्देशविशेषरूढस्य कच्छस्य वस्तुतोऽधिकरणत्वेऽपि तस्य करणत्वविवक्षया तृतीयान्तेनोपपदसमासः। सुपीति[2] योगविभागात्कः।

न च "शूद्रा चामहत्०" ( का० वा० ४।१।४ ) इति सूत्रशेखरोक्तरीत्या पूर्वं स्त्रीत्वाविवक्षया स्त्रीत्वादेः पूर्वं विशिष्याग्रहेण वा कर्त्तृमात्रवाचक'घ्र'शब्देन समासेनेष्टसिद्ध्या न दोष इति वाच्यम्, यत्र पूर्वं स्त्रीत्वविवक्षा तदा टापो दुर्वारत्वापत्तेः। ननु "अन्तरङ्गानपि०" ( परि० ५२ ) इति न्यायेन टापः पूर्वमेव सुबिति न दोषः, अत्र समासे जातेऽप्यवयवाट्टापः प्राप्त्या तस्य तन्निमित्तविनाशकत्वासम्भवेन तदप्राप्तेः।

ननु परिभाषाङ्गीकारेऽपि वक्ष्यमाणज्ञापकेन समर्थेन समासो लब्धः। तच्च यथा कृदन्तमेवं टाबन्तं सुबन्तमपि, तत्र पदद्वयनिमित्तकसमासापेक्षयाऽन्तरङ्गत्वाट्टापि सुपि च सत्येव समासः स्यात्। तथा तत्कुतः सुबुत्पत्तेः प्रागिति परिभाषायां लब्धमिति चेत्, न; प्राचीनवैयाकरणैर्वचनरूपेण पठितायास्तस्या उक्तज्ञापकेनैकदेशानुमत्येहाप्याश्रयणमित्याशयात्।

परिभाषायामुपपदं प्रातिपदिकसंज्ञाप्रयोज्यप्रत्ययोपलक्षणम्। तथा च गतिकारकोपपदानां समर्थेन समासश्चेत्, कृद्भिरेव, स च प्रातिपदिकसंज्ञाप्रयोज्यप्रत्ययोत्पत्तेः प्रागेवेति नियमद्वयम्। द्वितीयस्य फलं तु 'अश्वक्रीती' इत्यादावुत्तरपदे टाबाद्युत्तरं हल्ङ्यादिलोपेन तस्य कृदन्तत्वानपायात्। कृद्भिरेवेति प्रथमनिय-

---

१. अमरकोषः २।१।१०। २. "सुपि स्थः" ( पा० सू० ३।२।४ ) इति सूत्रे इत्यर्थः।

**गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥ ७६ ॥**

---

मेनेष्टासिद्धिरिति तादृशविषये समासव्यावृत्तिः। अत एव 'साङ्कूटिनम्' इत्यस्य सिद्धिः।

नन्वेवम् "गतिकारकोपपदात्०" ( पा० सू० ६।२।१३९ ) इति सूत्रस्थ-भाष्यविरोधः। तत्र हि 'प्रपचतितराम्'इत्यत्र कृत्स्वरसिद्धये कृद्ग्रहणं तत्रत्यं प्रत्याख्यातम्। "कुगति०" ( पा० सू० २।२।१८ ) इति सूत्रे परिभाषया कृद्भि-रेवेति नियमे तु तत्र समासस्यैवाप्राप्त्या तत्र स्वरसिद्धये तत्प्रत्याख्यानभाष्या-सङ्गतिः।

न च "कुगति०" ( पा० सू० २।२।१८ ) इत्यस्याप्राप्तावपि सहेति योगविभागात्समासः, तस्य तिङन्तोत्तरपदे एव प्रवृत्तेः। "तत्पुरुषे शालायां नपुंसके" ( पा० सू० ६।२।१२३ ) इत्यतस्तत्पुरुषग्रहणस्य सिद्धान्तेऽनुवृत्त्यास्य तत्पुरुषत्वाभावाच्च। अत एव "सुप्सुपा[1]" ( पा० सू० २।१।४ ) इति समासोऽपि न।

न च "कुगति प्रादयः" ( पा० सू० २।२।१८ ) इति सूत्रस्थेन "उदात्तवता गतिमता च तिङा गतिः समस्यते" ( का० वा० २।२।१८ ) इति वार्त्तिकेन तत्र समासे तत्पुरुषत्वसिद्धिरिति न दोषः। अत्र प्रत्ययस्वरेण शेषनिघाते तिङन्तस्यो-दात्तत्वाभावेन तेनापि समासस्याप्राप्तेः।

न चैतद्वार्त्तिकस्थतिङ्पदस्य तिङन्तवाच्यक्रियायाः प्राधान्येन बोधकतिङन्त-घटितसमुदाये लक्षणया समासोपपत्तिः। अस्य गतिसमासत्वेऽपि न परिभाषा-विषयता, वार्त्तिकेन तिङन्तेन समासविधानेनात्र समासे कृदन्तेनैकार्थीभावासम्भ-वादिति वाच्यम्, तस्य वार्त्तिकस्य नित्याधिकारे "कुगति०" (पा० सू० २।२।१८) इति सूत्रे पाठेन तेन तत्र नित्यं समासापत्त्या 'प्रपचतितराम्' इति वाक्यस्यासि-द्ध्यापत्त्या "तिङि चोदात्तवति०" ( पा० सू० ८।१।७१ ) इति सूत्रस्थभाष्य-विरोधापत्तेः।

तथाहि—उदात्तवति तिङन्ते पदे गतिर्निहन्यत इति तदर्थः। 'यत्प्रपचति' इत्युदाहरणम्। यच्छब्दयोगे "निपातैर्यद्यत्०" ( पा० सू० ८।१।३० ) इति सूत्रेण "तिङ्ङतिङः" ( पा० सू० ८।१।२८ ) इति निघातनिषेधे पचतीत्यस्य धातुस्वरेणोदात्तत्वात् प्रशब्दस्य निपाताद्युदात्तत्वं बाधित्वा निघातवत्, 'प्रपचति-तराम्' इत्यादौ शेषनिघातेन धातोरुदात्तवत्त्वाभावादस्याप्राप्त्या, प्रशब्दस्य निघातानापत्तिमाशङ्क्य, गत्याक्षिप्तक्रियावाचकस्यैव तिङ्पदेन लक्षणया बोधेन,

---

१. "सह सुपा" ( पा० सू० २।१।४ ) इति भावः।

**"उपपदम्" इति सूत्रेऽतिङ्ग्रहणेन "कुगति" इत्यत्र तदपकर्षणेनातिङन्तश्च समास इत्यर्थात् तयोः सूत्रयोः सुप्सुपेत्यस्य निवृत्त्यैकदेशानुमत्या कारकांशे च**

---

तस्यैवोदात्तवतीति विशेषणेनोदात्तवति क्रियावाचके पदे गतिर्निहन्यत इत्यर्थमङ्गीकृत्य तिङ्ग्रहणप्रत्याख्यानेन वा निघातस्तत्र साधितः।

वार्त्तिकस्य नित्यसमासविधायकत्वेन "गतिकारक०" (पा० सू० ६।२।१३९) इति सूत्रे कृद्ग्रहणप्रत्याख्यानादेव शेषनिघातेन स्वरसिद्ध्या भाष्यकृतोक्तप्रयासस्य नैष्फल्यापत्तेः।

मम तु वाक्ये तत्सिद्धये स यत्न इति न दोष इति चेत्, न; वार्त्तिकस्यनित्याधिकारे पाठेऽप्युक्तसूत्रद्वयभाष्यप्रामाण्येन तत्र नित्यपदासम्बन्धेन तद्विहितसमासस्य वैकल्पिकत्वाङ्गीकारेण सर्वेष्टसिद्धेः।

अत एव "सह सुपा" ( पा० सू० २।१।४ ) इति सूत्रे सहेति योगविभागेन विधीयमानविकल्पसमासस्य 'अनुव्यचलत्' इत्युदाहरणपरं भाष्यं सङ्गच्छते। अन्यथा वार्त्तिकविहितसमास्य नित्यत्वेन तस्याप्युदाहरणत्वेन भाष्योपन्यस्ते तस्मिन्नेव 'अनुव्यचलत्' इति लक्ष्ये नित्यवैकल्पिकयोरेकार्थीभावयोः समावेशसम्भवेन भाष्यासङ्गतिः।

सिद्धान्ते तु वार्त्तिकविहितसमासस्य वैकल्पिकत्वेन 'प्रपचतितराम्' इत्यत्र वार्त्तिकेन समासपक्षे तत्पुरुषत्वात्तत्र स्वरसिद्धये कृद्ग्रहणप्रत्याख्यानम्, सहेति शुद्धसमासे समासाभावपक्षे वा स्वरसिद्धये तिङ्ग्रहणप्रत्याख्यानमिति न कस्यापि भाष्यासङ्गतिरिति[1] दिक्।

**अतिङन्तश्च समास इति।** अत्र प्राञ्चः—अतिङिति प्रसज्यप्रतिषेधः। तत्पुरुषश्चायम्। तत्र तिङ्पदस्य "प्रत्ययग्रहण०" ( परि० २३ ) परिभाषया तदन्ते गृहीतशक्तिकस्य समासविशेषणतया पुनस्तदन्तपरत्वम्। एवञ्चातिङन्तान्तश्च समास इत्यर्थः। अत एवातिङिति तदर्थकस्य प्रतिषेधार्थमित्युपक्रम्योपपदमक्रियेति न्यासः प्रदर्शितः। अतिङ्पदस्य बहुव्रीहित्वे तदर्थकाक्रियापदस्यापि तत्त्वौचित्यात् स्त्रीलिङ्गनिर्देशोऽसङ्गतः स्यात्।

अतिङ्ग्रहणफलं तु 'मा भवान् भूत्' इत्यत्र समासव्यावृत्तिरेव। एवञ्चातिङ्ग्रहणेन सुपेति तृतीयान्तस्यैव निवृत्तिः, न तु प्रथमान्तसुप्पदस्यापीति 'राजयुध्वा' इत्यादौ पूर्वपदेन लोपादिसिद्धिः। 'सुप्सुपेति निवृत्तमिति' इति भाष्यं तु 'एकसत्त्वेऽपि द्वयं नास्ति' इति न्यायेनोभयानुवृत्त्यभावपरम्। अत एव "तत्पुरुषे कृति०" ( पा० सू० ६।३।१४ ) इत्यलुग्विधानं चरितार्थम्। समासस्य पद-

---

१. 'भाष्यस्यासङ्गतिरिति' इति पाठः क० पु०।

**सिद्धेयम्। तेन 'अश्वक्रीती' इति सिद्धा। अन्यथा पूर्वं टाप्यदन्तत्वाभावात् "क्रीतात्करणपूर्वात्" इति ङीष् न स्यात्।**

---

विधित्वात् समर्थपरिभाषोपस्थितिश्चाञ्जस्येन सिद्धा। अत एव 'कर्तुं गतः' 'कारको गतः' इति भाष्यप्रयोगे धातोरुपपदत्वात्तुमुन्प्रवृत्तिवत् समासस्य न प्रवृत्तिः।

न च प्रथमान्तसुप्पदानुवृत्त्यङ्गीकारे "उपपदमतिङ्" ( पा० सू० २।२।१९ ) इत्यत्रोपपदं सुबन्तमित्यर्थः? उत उपपदप्रकृतिकं सुबन्तमिति वा? आद्ये 'स्तम्बेरमः' इत्यादावुपपदस्य सुबन्तत्वाभावेन समासानापत्तेः। द्वितीये "सुप्यजातौ०" ( पा० सू० ३।२।७८ ) इति णिनिविषये उपपदस्यैव सुबन्तत्वेनोपपदप्रकृतिकसुबन्तत्वाभावेन तत्र समासानापत्तेः।

आवृत्त्यार्थद्वयकल्पने न मानमिति वाच्यम्, "विभाषाऽग्रे प्रथमपूर्वेषु" ( पा० सू० ३।४।२४ ) इत्याद्युपपदविधावनेकस्मिन् प्रथमादिषु प्रथमान्तसुप्पदस्य निवृत्तिवादिमते महासंज्ञाकरणेन तत्प्रकृतिकसुबन्ते लक्षणायामतिगौरवापत्त्या, लक्ष्यानुरोधेन व्यक्तिपक्षमाश्रित्यास्यैवार्थद्वयकल्पनस्योचितत्वात्।

न चातिङिति किम् 'कारको व्रजति' इति भाष्योक्तप्रत्युदाहरणासङ्गतिः, प्रथमान्तसुप्पदानुवृत्त्यैव तदप्राप्तेरिति वाच्यम्, तस्य मा भूदित्येतदुपलक्षणत्वेनादोषात्। अन्यथा अतिङित्यस्य तत्पुरुषत्वेन 'व्रजति कारकः' इति समस्तस्यातिङन्तत्वेन कृतेऽप्यतिङ्ग्रहणे तत्र तेन व्यावृत्त्यसम्भवात् भाष्यस्यासङ्गत्यापत्तेः। न चैतद्भाष्यप्रामाण्यादतिङित्यत्र बहुव्रीह्यङ्गीकारान्न दोष इति वाच्यम्, तथा सति 'मा भूत्तराम्' इत्यादौ समासवारणायातिङ्ग्रहणस्य चारितार्थ्यसम्भवेन ज्ञापकपरभाष्यविरोधापत्तेः।

न च "अमैवाव्ययेन" (पा० सू० २।२।२०) इति नियमान्न दोषः। 'कारको व्रजतितराम्' इत्यादौ नियमाप्राप्त्या तस्य चारितार्थ्यसम्भवात्। 'व्रजति कल्पम्' 'व्रजति देश्यम्' इत्यादौ कल्पबाद्यन्तेन[१] समासापत्त्या तद्वारणाय तस्य चारितार्थ्यसम्भवाच्च। किञ्च पूर्वसूत्रविषये 'प्रपचतितराम्' इत्यादौ नित्यसमासव्यावृत्तयेऽतिङ्ग्रहणस्यावश्यकत्वेन गत्यंशेऽपि ज्ञापकत्वानापत्तेः। तस्मादतिङ्पदे तत्पुरुषपक्ष एव युक्त इत्याहुः।

नव्यास्तु—अतिङ्पदे बहुव्रीहिणा तिङन्ताघटितः समास इत्यर्थ एव युक्तः, न तु तिङन्तान्तभिन्न इति। तत्पुरुषत्वेऽपि शब्दमर्यादया तिङन्तभिन्नान्त इत्यर्थस्यैव लाभेन 'मा भूत्' इत्यत्र तिङन्तभिन्नतकारान्तत्वेन समासव्यावृत्त्यनापत्तेः।

---

१. 'कल्पबन्तेन' इति पाठः क० पु०।

न च पर्युदासन्यायेन तिङन्तभिन्नं यत्प्रत्ययान्तं तदन्तमित्यर्थात् तत्र समासवारणमिति वाच्यम्, तथा सति सिद्धान्ते धापूपसर्गयोः समासापादकभाष्येण विरोधापत्तेः।

किञ्च सुप्सुपेत्यनुवर्तते, सुप्सुपेति निवृत्तमिति भाष्येणोभयोर्निवृत्तेरेव स्वरसतः प्रतीत्या तस्य बहुव्रीहिपक्षे एव सम्भवेन तत्पुरुषत्वपक्षस्यायुक्तत्वबोधनात्।

किञ्च तत्पुरुषत्वे 'अक्रियेति' न्यासपक्षे 'मा भूत्तराम्' इत्यत्र समासो न प्राप्नोति, अतिङिति न्यासे समासः प्राप्नोतीति फलभेदापत्तिः। अतिङित्यत्र बहुव्रीहिवादिमते न्यासद्वयेऽपि समासो न प्राप्नोतीति न्यासयोर्न फलभेदः।

न चैवम् 'कारको व्रजतितराम्' 'कारको व्रजति कल्पम्' इत्यादौ समासवारणायातिङ्ग्रहणस्य चारितार्थ्येन ज्ञापकत्वासम्भव इति वाच्यम्, 'अक्रियेति' न्यासेऽपि 'मा भूत्तराम्' इति प्रत्युदाहरणसम्भवेन तदनुपन्यासेन ज्ञापकत्वोपपादनपरभाष्यप्रामाण्येनेदृशानामनभिधानाङ्गीकारात्।

ननु तत्पुरुषे 'मा भूत् कल्पम्' इत्यादेरेवानभिधानमाश्रयणीयम्, न तु कल्पबन्तपूर्वपदकस्य 'कारको व्रजति कल्पम्' इत्यादेरिति विशेष इति वाच्यम्, 'अक्रियेति' न्यासे तद्व्यावर्त्यत्वेन 'कारको गतः' इति प्रदर्शनपरभाष्येणाक्रियेति पदे तत्पुरुषाभावस्य स्पष्टं प्रतीत्याऽदोषात्।

अन्यथा 'गतः' इत्यस्यैवोपपदत्वेन पूर्वनिपातेत्यस्य[1] क्रियावाचकान्तभिन्नत्वात् प्रत्युदाहरणासङ्गतिः। तत्पुरुषत्वेऽपि क्रियाविशेष्यकबोधजनको न भवतीत्यर्थेन तस्य सार्थक्यसम्भवे ज्ञापकत्वानापत्त्या त्वन्मतेऽपि फलैक्याय न्यासयोः 'कारको व्रजति कल्पम्' इत्यादेरनभिधानस्यावश्यकत्वात्।

अत एव "तुमन्ण्वुलौ०" ( पा० सू० ३।३।१० ) इति सूत्रे वासरूपेण[2] तद्विषये तृजादीनाशङ्क्य "ण्वुल्तृचौ" ( पा० सू० ३।१।१३३ ) इति ण्वुलि सिद्धे पुनर्ण्वुल्ग्रहणं वासरूपन्यायेन तद्विषये तृजादयो नेति ज्ञापनार्थमित्युक्तम्। 'कारको व्रजति कल्पम्' इत्यस्य सत्यभिधानेऽत्रोपपदसंज्ञाप्रयुक्तकार्यार्थं तस्यावश्यकत्वेन ज्ञापकत्वासङ्गतिः।

किञ्च "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" ( पा० सू० ३।३।१४५ ) इति सूत्रे अकिंवृत्तग्रहणानर्थक्यम्, किम्वृत्तस्यानधिकारादित्युक्त्वा, उपपदसंज्ञार्थं तर्हि भविष्यतीत्याशङ्क्य, अतिङिति प्रतिषेधान्नेत्युक्तम्। तत्पुरुषपक्षे 'भवान् निन्देत्कल्पम्' इत्यादौ समासरूपफलसम्भवेन भाष्यासङ्गतिः। किञ्च "गर्हायां

---

१. 'पूर्वनिपाते समासस्य' इति पाठः क० पु०।

२. 'सूत्रे वासरूपेण' इत्यस्य स्थाने 'सूत्रेण' इति पाठः क० पु०।

लडपि०" ( पा० सू० ३।३।१४२ ) इत्यत्र लड्वचनानर्थक्यम्, क्रियासमाप्तेर्विवक्षितत्वात्। क्रियाया असमाप्तिरेव हि वर्त्तमानत्वम्, तत्र वर्त्तमाने लटा सिद्धम्।

न चैवं शतृशानचौ स्याताम्। इष्यत एव शतृशानचाविति तत्प्रत्याख्यातम्। कल्पबन्तस्य सत्यभिधाने 'जायामपि त्यजसि कल्पम्' 'गर्हितमेतत्'इत्यत्र निषेधाप्राप्त्योपपदसमासरूपफलस्य सम्भवेन प्रत्याख्यानासङ्गतिः।

एतेन 'पचति कल्पं करोतीति' 'पचति कल्पं कारकः' इत्यत्र समासवारणायातिङ्ग्रहणस्य चारितार्थ्यात्, ज्ञापकत्वासङ्गतिरित्यपास्तम्। उपपदसमासयोग्यकल्पबन्तस्यानभिधानात्, 'अक्रियेति' न्यासपक्षे 'कारको गतः' इत्याद्युपन्यस्य, नैतत्क्रियावाचीत्यादिना तदुदाहरणासम्भवप्रदर्शनभाष्येणेदृशानामनभिधानस्य तत्पुरुषवादिमतेऽप्यावश्यकत्वाच्च।

नन्वेवं प्रथमान्तसुप्पदाननुवृत्तौ 'कर्तुं गतः' 'कारको गतः' इति भाष्यासङ्गतिः। अत्र 'गम्' धातोरुपपदत्वेन तुमुन्ण्वुलोरिवोपपदसमासस्य नित्यत्वेन 'कारको गतः' इति वाक्यस्यासम्भवात्। प्रथमान्तसुप्पदानुवृत्तौ तु तस्य सुबन्तत्वाभावान्न समासप्राप्तिरिति न दोषः।

न च धातोरत्रोपपदत्वेऽपि तस्य क्तादिप्रत्ययेनैकार्थीभावापन्नत्वात्, तावन्मात्रस्य निष्कृष्यैकार्थीभावासम्भवान्न समास इति वाच्यम्, सिद्धान्ते निष्कृष्यैकार्थीभावाभावेऽपि वृत्त्यङ्गीकारेण समासापत्तेर्दुर्वारत्वादिति चेत्, न; तुमुन्विधायके क्रियापदेनातिङिति न्यासेन समानफलत्वायाक्रियेति न्यासस्थक्रियापदेनेव प्राधान्येन साध्यावस्थापन्नव्यापारबोधकस्यैव ग्रहणेनात्र ण्वुलादेरेवाप्राप्तेः। अत एव भाष्येऽत्र समासमाशङ्क्य नैतत्क्रियावाचीत्यनेन पूर्वपक्ष्यभिमततादृशप्रयोग एव नेति सूचितम्। अन्यथा विशिष्टस्य तदभावेऽपि धातोस्तादृशत्वाद्दोषो दुर्वार एव।

न च प्रथमान्तसुप्पदस्यापि निवृत्तौ 'राजयुध्वा' इत्यादौ पूर्वपदे नलोपानापत्तिरिति वाच्यम्, उपपदमिति महासंज्ञाकरणेन पदस्यैव तत्रोद्देश्यत्वाङ्गीकारेणादोषात्।

ननु "उपपदमतिङ्" ( पा० सू० २।२।१९ ) इति सूत्रोदाहरणभूतानां कल्पबाद्यन्तानामनभिधानेऽपि गत्यंशे ज्ञापनायातिङ्ग्रहणापकर्षस्य पूर्वसूत्रे आवश्यकतया तत्र 'प्रपचतितराम्' इत्यादौ नित्यसमासवारणायातिङ्ग्रहणस्य चारितार्थ्यात्तत्र सुपेत्यस्यासम्बन्धकल्पने न मानम्। न च "उपपदम्०" ( पा० सू० २।२।१९ ) इति सूत्रसम्बद्धातिङ्ग्रहणेनैव स्वाव्यवहितपूर्वसूत्रे सुपेत्यस्यासम्बन्धद्वारा तस्मिन्नसम्बन्धो ज्ञाप्यत इति वाच्यम्, साक्षात् स्वस्मिन्नसम्बन्धज्ञापनेनैव चारितार्थ्यसम्भवेन पूर्वत्रापि तदसम्बन्धकल्पने मानाभावादिति चेत्, न; अतिङित्यस्य पूर्वसूत्रेऽपकर्षेण ज्ञापकत्वाङ्गीकारे 'कुप्रादयो गतिरुपपदमतिङ्'

**अस्या अनित्यत्वात् क्वचित् सुबुत्पत्त्यनन्तरमपि समासः।**

---

इत्येव सूत्रयितव्ये तथाकरणेन पूर्वसूत्रे एतत्सम्बन्धेन ज्ञापकस्य भाष्ये तात्पर्यविषयत्वाभावात्।

अत एव "कुगति०" ( पा० सू० २।२।१८ ) इत्यत्र गतिरिति योगं विभज्य तत्रातिङिति्यपकृष्य ज्ञापकत्वं नोक्तम्। अत एवानयोर्योगयोः सुप्सुपेति निवृत्तमित्युत्तरसूत्रे एवोक्तमित्याहुः।

केचित्तु—अतिङित्यस्य समासविशेषणत्वेन समासे पूर्वोत्तरपदयोराकाङ्क्षितत्वात् प्रत्यासत्त्या पूर्वोत्तरपदरूपतिङन्ताघटितसमास इत्यर्थेन शुद्धतिङन्तस्य पूर्वपदत्वेनोत्तरपदत्वेन वानुप्रवेशसम्भावना यत्र तत्रैवातिङिति निषेधात् तत्र सुपेत्येव सिद्धेऽतिङ्ग्रहणस्य वैय्यर्थ्यमिति ज्ञापकत्वं सुस्थम्। एवञ्च कल्पबन्तादीनामनभिधानक्लेशोऽपि न। तेषामभिधाने यद्भाष्यं मानं तदेवास्मदुक्तार्थे मानमिति न कोऽपि दोष इत्याहुः।

**अनित्यत्वादिति**। "अम्वाम्ब०" ( पा० सू० ८।३।९७ ) इति गवादिग्रहणादिति भावः। **समास इति**। न च "कर्त्तृकरणे कृता०" (पा० सू० २।१।३२) इति सूत्रे सुपेत्यस्य निवृत्तेः परिभाषया बोधितत्वेन तृतीयान्तं समर्थेन कृदन्तेन समस्यत इत्यर्थात्, कथं सुबन्तेन समास इति वाच्यम्। प्राचीनमते लक्ष्यानुरोधेन व्यक्तिपक्षमाश्रित्य "उपपदमतिङ्" ( पा० सू० २।२।१९ ) इत्यत्र उपपदशब्दे उपपदप्रकृतिकं सुबन्तमुपपदसुबन्तमित्यर्थद्वयाङ्गीकारवदत्रापि लक्ष्यानुरोधेन क्वचिद् वाक्यभेदेन सुपेत्यस्य सम्बन्धेन कृदन्तप्रकृतिकसुबन्तेनापि समासाङ्गीकारेणादोषात्।

न चैवम् 'अयःक्रीती' इत्यादौ "सोऽपदादौ" ( पा० सू० ८।३।३८ ) इति सत्वापत्तिः, उत्तरपदे सुबुत्पत्त्यभावेन ककारस्यापदादित्वादिति वाच्यम्, "कर्त्तृकरणे०" ( पा० सू० २।१।३२ ) इत्यस्य वैकल्पिकत्वेन[1] क्रीतशब्दस्यापि स्वातन्त्र्येण प्रयोगार्हत्वेनार्थवत्त्वात् प्रातिपदिकत्वेन "सोऽपदादौ" ( पा० सू०-८।३।३८ ) इति सूत्रे आदिग्रहणेन पदत्वयोग्यप्रातिपदिकाद्यवयवभिन्नककारस्यैव ग्रहणेनादोषात्।

न चैवमपि 'उरःकेण' इत्युपपदसमासे दोष एव, अत्रोत्तरखण्डेन सहोपपदनिमित्तकैकार्थीभावस्य नित्यत्वेन केत्येतावन्मात्रस्य स्वातन्त्र्येण प्रयोगानर्हत्वेन तस्य नव्योक्तार्थवत्त्वाभावेन प्रातिपदिकत्वासम्भवात्, पदत्वयोग्यताया अप्यभावादिति वाच्यम्, 'मूलकेनोपदंशं भुङ्क्ते' इत्यादौ "तृतीयाप्रभृतीन्यन्यतरस्याम्"

---

१. "कर्त्तृकरणे०" ( पा० सू० २।१।३२ ) इति कारकेण समासस्यानित्यत्वेन' इति पाठः क० पु०।

( पा० सू० २।२।२१ ) इत्यनेन तृतीयाप्रभृत्युपपदानाममन्ताव्ययेन सह विकल्पेन समासविधानेन तत्र विषये कृदन्तोपपदसमुदाये एकार्थीभावस्य पाक्षिकत्वावश्यकतया कृन्निमित्तैकार्थीभावस्यैतादृशे विषये प्रकृतिप्रत्ययमात्रे एव स्वीकारेण सर्वत्र कृन्निमित्तैकार्थीभावस्य कृदन्ते एव कल्पनौचित्येन तावन्मात्रस्याप्यर्थवत्त्वेन प्रातिपदिकत्वसम्भवात् ।

अत एव "सोऽपदादौ" ( पा० सू० ८।३।३८ ) इति सूत्रस्थशब्दरत्नग्रन्थः, "न पदान्त०" ( पा० सू० १।१।५८ ) सूत्रस्थः 'पद' इति पदत्वयोग्योपलक्षणमिति शेखरग्रन्थश्च सङ्गच्छते ।

यदि "तृतीयाप्रभृतीनि०" ( पा० सू० २।२।२१ ) इति सूत्रस्थशेखरोक्तरीत्या 'मूलकेनोपदंशं भुङ्क्ते' इत्यादावुपपदनिमित्तककृत्प्रत्ययान्तयुक्तवाक्ये कृत्प्रत्ययनिमित्तैकार्थीभावस्य वैकल्पिकत्वे बीजाभावात्तत्रोपपदकृदन्तयोर्व्यपेक्षा दुर्वचा, समासविधौ वा ग्रहणेन समाससंज्ञाया एव विकल्पः क्रियते न त्वेकार्थीभावस्य । अत एव महता मूलकेनोपदंशमिति विकल्पेन समासविधानस्य फलं तु 'उपदंशं मूलकेन' इति व्यस्तप्रयोगादिसिद्धिः ।

अत एव "अनुपसर्जनात्" (पा० सू० ४।१।४१) इति सूत्रे कुम्भकारेत्यादौ कारेत्यस्यार्थवत्सूत्रोक्तार्थवत्त्वाभावान्न प्रातिपदिकत्वमिति शेखरे उक्तमित्युच्यते, तदा "दिवाविभा०" (पा० सू० ३।२।२१) इति सूत्रे भास्करशब्दे सत्वनिपातनाद् धात्वनवयवककारे एव "सोऽपदादौ" (पा० सू० ८।३।३८ ) इति सत्वप्रवृत्तिर्ज्ञाप्यत इति 'उरःकेण' इत्यादौ न दोष इति बोध्यम् ।

एतेनास्या अनित्यत्वात् सुबन्तेन समासे उत्तरभागस्य पदत्वात्, "सोऽपदादौ" ( पा० सू० ८।३।३८ ) इति न सत्वम् । न च "उत्तरपदत्वे च०" ( का० वा० १।१।६३ ) इति प्रत्ययलक्षणप्रतिषेधात् पदत्वं दुर्वचम्, पदादौ कवर्गे परतः सत्वं न भवतीति सत्वनिषेधस्य पदादिविधित्वेनापदादाविति पर्युदासेनात्र तन्निषेधाप्रवृत्तेः ।

न च वार्त्तिके पदादिस्थानिकविधेरेव पदादिविधिग्रहणेन ग्रहणम्, अत एव 'निष्कृतम् इति "इदुदुपध०" ( पा० सू० ८।३।४१ ) इत्यस्योदाहरणं भाष्योक्तं सङ्गच्छते ।

अन्यथा 'निष्कृतम्' इत्यादौ सुबुत्पत्तेः पूर्वं समासेन "उत्तरपदत्वे च०" ( का० वा० १।१।६३ ) इति निषेधेन वा पदादित्वेन "इदुदुपध०" (पा० सू०-८।३।४१ ) इत्यस्यासिद्धत्वात् "इणः षः" ( पा० सू० ८।३।३९ ) इत्यस्यैव प्रवृत्त्या "इदुदुपध०" ( पा० सू० ८।३।४१ ) इत्यस्य 'निष्कृतम्'इत्युदाहरणासङ्गतिरिति वाच्यम्, "इणः षः" ( पा० सू० ८।३।३९ ) इत्यस्यात्रानव्ययस्येत्यस्य सम्बन्धेन

**यथा सा हि तस्य धनक्रीतेति ।**

**अन्ये त्वनित्यत्वे न मानम्, तत्राजादित्वाट्टाबित्याहुः । अत एव 'कुम्भकारः' इत्यादौ षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव । षष्ठीसमासाभावे चोपपदसमासकृत एकार्थीभाव इति न तत्र वाक्यमिति भाष्ये स्पष्टम् ।**

**तत्र हि 'षष्ठीसमासादुपपदसमासो विप्रतिषेधेन' इति वार्त्तिकम् । अथवा**

---

'निष्कृतम्' इत्यादौ तदप्राप्त्या भाष्यविरोधासम्भवात् । एवञ्च 'उरःकेण' इत्यादौ न दोष इत्याहुः ।

**धनक्रीतेति** । 'सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी' इति भट्टिप्रयोगोपपत्तयेऽनित्यत्वस्वीकारे फलाभावादित्याह[1]—**अन्ये त्विति** ।

**आहुरिति** । अनित्यत्ववादिमते 'धनक्रीता' 'धनक्रीती' इत्युभयं साधु । अजादिगणे पाठे त्वेकमेव रूपं स्यादित्यस्वरसो बोध्यः । **अत एवेति** । कारकविभक्त्यन्तेन समासस्य सुबुत्पत्तेः प्रागङ्गीकारादेवेत्यर्थः ।

**षष्ठीसमासोऽपीति** । ननु षष्ठीसमासस्यापि सुबुत्पत्तेः प्रागुत्पत्तौ किं मानमित्यत आहः—**तत्र हीति** । **'षष्ठीसमासादुपपदसमासः'** इत्यादि विप्रतिषेधवार्त्तिकम्, **अथवा**—इत्यादि—**तत्प्रत्याख्यानञ्च** । प्रकृतार्थे मानमाह—**षष्ठीत्यादिना** ।

न चोभयशास्त्रविहितसमासज्ञयोर्युगपत्प्रवृत्तिसम्भवेनासम्भवरूपविप्रतिषेधाभावात्कथं विप्रतिषेध इति वाच्यम्, वा ग्रहणेन नित्यग्रहणेन च समाससंज्ञायास्तत्प्रयुक्तैकार्थीभावस्य च पाक्षिकत्वनित्यत्वयोर्बोधनात्, एकस्मिन् भावाभावयोर्यौगपद्यासम्भवाद् विरोधस्य सुवचत्वात् ।

एवञ्च षष्ठीसमासस्य सुबुत्पत्तेः पूर्वमप्रवृत्तौ यौगपद्यासम्भवाद् विप्रतिषेधोक्तिरयुक्ता स्यादिति तत्तत्र गमकमिति भावः । एवं तत्रत्याख्यानमपि गमकमित्याह—**अथवेति** ।

तत्र भाष्ये प्रथमं विप्रतिषेधादुपपदसमासमुक्त्वा तदग्रेऽन्तरङ्गत्वादुपपदसमासप्राप्तिकाले तत्समासे कृते चोत्तरपदस्य सुबन्तत्वाभावात्, षष्ठीसमासः स्वयमेव न प्राप्नोतीत्याशयेन 'न वा षष्ठीसमासाभावादुपपदसमासो भविष्यति' इति विप्रतिषेधोक्तिं प्रत्याख्याय, तदग्रेऽत्रोभयोर्युगपत्समावेशे सत्यपि दोषस्य सूद्धरत्वेन पूर्वोक्तरीत्या परत्वाऽन्तरङ्गत्वाभ्यामुपपदसमासस्य प्राबल्यकल्पनं वृथेत्याशयेन **'अथवा'**—'विभाषा षष्ठीसमासः, यदा न षष्ठीमासस्तदोपपदसमासो भविष्यति' इत्युक्तं भाष्ये ।

---

१. 'प्रमाणाभावात्, तत्राजादित्वादेव टाप् सिद्ध्यतीत्याह' इति पाठः क० पु० ।

**'विभाषा षष्ठीसमासो यदा न षष्ठीसमास्तदोपपदसमासः' इति तत्प्रत्याख्यानं च।**

**यद्यप्युपपदसमास्यान्तरङ्गत्वाभिप्रायकम् 'न वा षष्ठीसमासाभावादुपपदसमासः' इति वार्त्तिककृतोक्तम्, तथापि तदुभयप्रत्याख्यानपरम् 'अथवा' इत्यादि भाष्यं परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तेन कृद्भिः समासमात्रस्य सुबुत्पत्तेः पूर्वमेव लाभात्।**

**एतेनैषा कारकतद्विशेषयोरुपादान एवेति परास्तम्। अस्या विध्येकवाक्य-**

---

षष्ठीसमास इत्यस्यास्तीति शेषः। भविष्यतीत्यस्य स्थास्यतीत्यर्थः। अत्र संज्ञाया एकार्थीभावस्य च कल्पकं शास्त्रद्वयम्। अन्यतरशास्त्रस्य वैकल्पिकत्वात्पाक्षिकतन्निवृत्तिप्रसक्तावप्यन्यतरस्य नित्यत्वात् तद्व्यक्तौ तस्य स्थितिर्भविष्यतीति न किञ्चिदनिष्टं सम्पद्यत इति भाष्याशयः।

एवञ्च षष्ठीसमासस्य सुबुत्पत्तेः प्रागनङ्गीकारे विप्रतिषेधादुपपदसमासस्यान्तरङ्गत्वाद् वा पूर्वमेव प्रवृत्तौ सुबन्ताभावात् षष्ठीसमासाप्राप्त्या तयोः समावेशासम्भवेन समावेशाभ्युपगमेन तदुभयप्रत्याख्यानपरभाष्यस्य चासङ्गतिरिति भावः। तदेतद् हृदि निधायाह—**यदेत्यादिना**—**प्रत्याख्यानञ्चेति**—अस्य मानमिति शेषः।

ननु विप्रतिषेधवार्त्तिकं षष्ठीसमासस्य सुबुत्पत्तेः पूर्वं प्रवृत्तौ गमकम्, अन्यथोभयोः समकाले प्राप्त्यभावाद् विप्रतिषेधोक्तिरयुक्ता स्यादिति यदुक्तं तदेव न घटते। षष्ठीसमासस्य बहिरङ्गत्वमुपपदसमासस्यान्तरङ्गत्वञ्च स्वीकृत्य, एतदुत्तरं विप्रतिषेधोक्तेरयुक्तत्वस्य वार्त्तिककृतैव स्पष्टमभिहितत्वात। तस्मान्नेदं गमकं भवितुमर्हतीत्याशयेन शङ्कते—**यद्यपीति**। समाधत्ते—**तथापीति**। **भाष्यमिति**। अस्योक्तार्थे गमकं भवत्येवेति शेषः।

न चोभयोः सुबुत्पत्तेः पूर्वं समासेऽपि पूर्वोक्तरीत्या विरोधेन विप्रतिषेधशास्त्रप्रवृत्त्योभयोः समावेशो दुर्वच इति भाष्यमसङ्गतमेवेति वाच्यम्; अत्रोपपदसंज्ञानिमित्तैकार्थीभावस्य सत्त्वेन तद्वैकल्पिकत्वस्य महाविभाषया बोधयितुमशक्यतया 'नहि संज्ञाया भावाभावाविष्येते' इति भाष्येण महाविभाषया संज्ञाविकल्पस्याबोधनादत्र युगपदुभयविहितसमाससंज्ञायाः प्रवृत्तिसम्भवेनासम्भवरूपविरोधाभावादित्याशयात्।

ननु "षष्ठी" ( पा० सू० २।२।८ ) इति सूत्रे सुपेत्यस्यासम्बन्धे 'मातुः स्मरति' इत्यादावपि समासापत्तेः। किञ्च षष्ठ्यन्तस्यानेकसुबन्तेन समासापत्तिः। अतः सुपेत्यस्य सम्बन्धे कुम्भकारेत्यादौ कृदन्ते षष्ठीसमानापत्तिरिति चेत्, न; कारकविभक्त्यन्तेन समासप्राप्तिकालेऽनया परिभाषया सुबुत्पत्तेः प्राक् कृद्भिरेवेति नियमस्वीकारेणादोषादिति दिक्।

त्वाभावेन विप्रतिषेधादिशास्त्रवत् कार्यव्यवस्थापकत्वेनोपादान एवेत्यर्थालाभाच्च ॥ ७६ ॥

ननु "उगिदचाम्" इत्यत्र धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमेनाधातोरेव नुमि सिद्धेऽधातुग्रहणं व्यर्थम्, अत आह—

**साम्प्रतिकाभावे भूतपूर्वगतिः ॥ ७७ ॥**

तत्तद्वचनसामर्थ्यन्यायसिद्धेयम् । तत्सामर्थ्यादधातुभूतपूर्वस्यापीत्यर्थेन

---

**अलाभाच्चेति** । केचित्तु 'अपां स्रष्टा' इति "तृजकाभ्याम्०" ( पा० सू० २।२।१५ ) इत्यस्य भाष्योक्तोदाहरणासङ्गतिः, तत्र कृदन्तेनैव समासस्य प्रसक्त्याऽनङ्न्तेन समासाप्राप्तेः । किञ्च 'प्राप्तां जीविकाम्—प्राप्तजीविकाम्' इत्यत्र पूर्वपदे ह्रस्वश्रवणार्थमकारप्रश्लेषो व्यर्थः । अनया टाबुत्पत्तेः पूर्वमेव समासलाभात् । किञ्च "द्वितीया श्रित०" ( पा० सू० २।१।२४ ) इति सूत्रे लक्षणया श्रितादिप्रकृतिकसुबन्तेत्यर्थाश्रयणं व्यर्थं स्यात् । तस्मात् कारकतद्विशेषोपादाने एव प्रवृत्तिरित्याहुः[1] ॥ ७६ ॥

**व्यर्थमिति** । "उगिदचाम्" ( पा० सू० ७।१।७० ) इति सूत्रे वाक्यत्रयम् । उगिदन्तस्याङ्गस्य नुमित्याद्यम् । धातोश्चेदिति द्वितीयं नियमार्थम् । आचारक्विबन्ते 'गोमान्' इत्यादौ नियमेन व्यावर्त्तितस्य नुमः प्रतिप्रसवार्थं तृतीयम् । यदीयं परिभाषा न स्यात्तदा तृतीयं वाक्यं व्यर्थमेव स्यादिति भावः । एवञ्चाधातुत्वमुपलक्षणं सर्वनाम्नो वृत्तिमात्र इत्यत्रेव न तु विशेषणमिति बोध्यम् ।

ननु नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति पक्षेऽञ्चतिग्रहणस्याञ्चतिभिन्नस्योगितो धातोर्नुम्नेत्यर्थेन 'गोमान्' इति क्विबन्ते नुमोऽप्राप्तौ तृतीयवाक्यस्य प्रतिप्रसवार्थकत्वेऽपि नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति पक्षे सूत्रे उगित्पदे सङ्कोचेन तेन धातुभिन्नोगित एव ग्रहणादञ्चतिग्रहणस्य नलोप्यञ्चतौ विध्यर्थत्ववदधातुग्रहणस्यापि पूर्वमधातुत्वावच्छिन्ने विध्यर्थत्वमेव । पक्षद्वयेऽपि नुम्विधिसूत्रस्थाञ्चतिग्रहणेन नुमो निषेधो वा विधिर्वा सम्पद्यते, न तूगित्कार्यस्य ङीपोऽपि, तेन वाक्येनास्य सम्बन्धाभावात् ।

न चाञ्चतिग्रहणेनात्र शास्त्रे उगित्पदं धातुभिन्नोगित्परमिति सामान्यतो ज्ञाप्यत इति वाच्यम् । तथा सति 'प्राची' 'ब्राह्मणी' इत्यत्र ङीपोऽप्यनापत्तेः । न चाञ्चतिभिन्नधात्वतिरिक्तोगित्परमिति ज्ञाप्यते, एवं सत्यत्रैवाञ्चतिग्रहणस्य वैय्यर्थ्यापत्त्या ज्ञापितेऽपि चारितार्थ्यासम्भवादिति चेत्; न; निषेधमुखेन प्रवृत्तिरिति पक्षेऽञ्चतिभिन्नस्योगितो धातोरुगित्त्वप्रयुक्तं कार्यमात्रं नेत्यर्थः ।

---

१. अलाभाच्च' इत्यादितः 'इत्याहुः' इत्यन्तं नास्ति क० पु० ।

**गोमत्यतेः क्विपि 'गोमान्' इत्यादौ नुम्सिद्धिः। "नामि" इत्यादिसूत्रेषु भाष्ये स्पष्टा ॥ ७७ ॥**

## बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७८ ॥

**अपिना अतद्गुणसंविज्ञानम्। तेषां गुणानामवयवपदार्थानां संविज्ञानं विशेष्यान्वयित्वमिति तदर्थः।**

---

विधिमुखेन प्रवृत्तिरिति पक्षेऽप्युगित्पदेन सामान्यतोऽत्र शास्त्रे धातुभिन्नोगित एव ग्रहणम्। अञ्चु ग्रहणं तूगिल्लक्षणकार्यमात्रमञ्चतेर्भवतीति विध्यर्थम्। अधातुग्रहणं तु नुमः प्रतिप्रसवार्थमिति न दोषः।

न चाधातुग्रहणेन पूर्वोक्तनियमे प्रतिप्रसवेन 'गोमान् स्त्री' इत्यत्र ङीबपि स्यादिति वाच्यम्, तथा सत्यौपदेशिकधातुविषये एव नियमाङ्गीकारेण 'गोमान्' इत्यत्र नुम्सिद्ध्याधातुग्रहणस्यैव वैयर्थ्यापत्तिः।

ननु द्वितीयवाक्ये सर्वनामस्थाने इति सम्बध्यते वा न वा? आद्ये अञ्चति-भिन्नस्योगितो धातोरुगित्त्वप्रयुक्तकार्यमात्रं सर्वनामस्थाने परतः नेत्यर्थापत्त्या शसादौ परतः उखास्रच्छब्दे ङीबापत्तेः। विधिमुखेन प्रवृत्तिपक्षेऽपि सर्वनाम-स्थाने परतः अञ्चतेरुगिल्लक्षणकार्यमात्रं भवतीत्यर्थेन प्राक्शब्दे शसादौ ङीबनापत्तेः। द्वितीये-अञ्चतिग्रहणस्य सर्वनामस्थानभिन्ने विध्यर्थत्वापत्त्या 'उखास्रत्' पुमान' इत्यादौ पूर्ववाक्येन नुमो दुर्वारत्वापत्तेः। "नाञ्चेः पूजायाम्" (पा० सू० ६।४।३०) इत्यत्र पूजायामित्यस्य वैयर्थ्यापत्तेश्च।

यद्वा "उगितश्च" (पा० सू० ४।१।६) इत्यत्र चेति लुप्ताकारेऽञ्चतिरेव निर्दिश्यते। तच्च ङीब्विषये नियमार्थम्। तेन 'उखास्रत्' 'गोमान् स्त्री' इत्यत्र च न ङीप्। इदश्चात्रैव कैयटे स्पष्टम्।

नन्वस्मिन्पक्षे नुम्विधावञ्चतिग्रहणेनौपदेशिकधातोर्नुम् चेत्, अञ्चतेरेवेति नियम्यताम्, 'गोमान्' इत्यत्र नुम इष्टत्वेन तत्रापादनासम्भवात्। न चैतादृशनियमे 'गोमान् स्त्री' इत्यत्र नुम इव ङीपोऽप्यापत्तिः, "उगितश्च" (पा० सू० ४।१।६) इत्यत्रौपदेशिकत्वानन्तर्भाविणैव नियमस्वीकारेणादोषात्। एवञ्चाधातुग्रहणमत्र पक्षे व्यर्थमिति चेत्, न; स्पष्टार्थत्वात् ॥ ७७ ॥

**विशेष्यान्वयित्वमिति।** बहुव्रीहिसंज्ञके वाक्येऽन्यपदार्थे विशेषणीभूतानां संविज्ञानं भवति। सम्यग्विज्ञानं चान्यपदार्थस्य यथा स्वविशेष्यभूतविधेयक्रिया-न्वयित्वम्। एवमस्यापि मुख्यविशेष्यभूतक्रियान्वयित्वात् कार्यित्वेन विज्ञानं भवतीत्यर्थः। तथा च विधेयान्वयि स्वघटकावयवार्थकत्वे तद्गुणसंविज्ञानत्वं तदन्वयि तदर्थकत्वं तद्भिन्नत्वमिति फलितम्।

ननु बहुव्रीहौ विशेषणस्य प्रधानक्रियान्वयित्वं साक्षात्? उतान्यपदार्थद्वार-

**यत्र समवायसम्बन्धेन सम्बन्ध्यन्यपदार्थः, तत्र प्रायस्तद्गुणसंविज्ञानम्। अन्यत्र प्रायोऽन्यत्। 'लम्बकर्णचित्रगू' उदाहरणे।**

---

कम्? नाद्यः, वृत्तावुपसर्जनस्य स्वातन्त्र्येण प्रधानक्रियान्वयायोगात्, विभक्त्यर्थमद्वारीकृत्य प्रातिपदिकार्थस्य साक्षात् क्रियान्वयानभ्युपगमात्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमाच्च। अन्यथा 'दण्डिनं पूजय' इत्यादौ दण्डादेरपि पूजने कर्मत्वेनान्वयापत्तेः।

न द्वितीयः, 'लम्बकर्णं पूजय' इत्यादौ समवायेन कर्णविशिष्टस्यैव, 'शुक्लवाससं पूजय' इत्यादौ संयोगेन वासोविशिष्टस्यैव, 'चित्रगुं पूजय' इत्यादावपि गोविशिष्टस्यैव शब्दशक्त्या कर्मत्वप्रतीतेरानुभाविकत्वेनोभयत्रापि विशेषणस्यान्यपदार्थमन्तरान्यत्रान्वयस्याक्लृप्तत्वात् तयोर्भेदे वैलक्षणस्य दुरुपपादत्वात्।

न च तयोर्गुणानां विशेषणत्वमुपलक्षणत्वमिति विशेषः, तादृशविशेष्यस्य प्रकरणादिनार्थाज्ज्ञानेऽपि तस्य शाब्दत्वासम्भवादिति चेत्, अत्राहुः—यत्र वर्त्तिपदार्थे कार्यान्वयमन्तरान्यपदार्थे कार्यान्वयो न सम्भवति, वर्त्तिपदार्थानमप्यवर्जनीयः कार्यान्वयस्तत्राद्यः। एवञ्च वहुव्रीहिघटकसम्बन्धो यत्र संयोगसमवायरूपस्तत्र कार्यस्यावर्जनीयत्वात् प्रायः कार्यान्वयो भवत्येव। तद्व्यतिरिक्तस्वस्वामिभावस्थलेऽरण्यस्थगवादिभिरपि तत्सम्बन्धान्नावर्जनीयतेति द्वितीय इति।

अन्ये तु लोके द्विविधोऽन्वयक्रमः। विशिष्टस्य वैशिष्ट्यमित्येको विशेष्ये विशेषणं तत्र विशेषणान्तरमित्यपरः। तत्राद्ये 'रक्तदण्डः पुरुषः' इत्यादौ दण्डे प्रकारीभूतस्यापि रक्तपदार्थस्य परम्परासम्बन्धेन विशेष्यान्वयिन्यन्वय इति उभयोरप्यन्वय इति तद्गुणत्वव्यवहारः। विशेष्यभूते पुरुषे दण्डो विशेषणम्, दण्डे रक्तपदार्थस्य विशेषणता, न तु धर्मिपारतन्त्र्येण रक्तपदार्थस्यापि पुरुषेऽन्वय इति, तदा द्वितीयः।

यद्वासति बाधके उद्देश्यतावच्छेदकेऽपि विधेयान्वय इति रीत्या 'घटः प्रमेयः' इत्यादाविव विशेषणस्यापि विधेयान्वयः। एवञ्च गुणस्यापीतरान्वयविवक्षायां तद्गुणसंविज्ञानम्, तस्येतरान्वयाविवक्षायामन्यदित्याहुः।

केचित्तु संविज्ञानञ्च कार्यान्वयित्वं कार्यिसन्निहितत्वं वा। अत एव 'लम्बकर्णं भोजय' इत्यादौ तद्गुणसंविज्ञानोपपत्तिः। अस्मिन् कल्पे विधेयक्रियान्वयित्वतत्कालसन्निहितत्वान्यतरवत् स्वघटकावयवार्थकत्वं तत्त्वम्, तद्भिन्नत्वमन्यत्वमिति लक्षणमाहुः।

तयोर्विषयविभागमाह—**यत्रेति**। प्रथमकल्पे 'लम्बकर्णं भोजय' इत्यादौ व्यभिचारात्—**प्रायः**—इत्युक्तम्। द्वितीयकल्पे—**प्रायः**—पदस्यान्वयस्तु, यत्रातद्-

**'सर्वादीनि, जक्षित्यादयः' इति चोदाहरणे। सर्वनामसंज्ञासूत्रे भाष्ये स्पष्टा ॥ ७८ ॥**

**ननु "वदः सुपि क्यप् च" इति चेनानुकृष्टस्य यतः "भुवो भावे" इत्यत्राप्यनुवृत्तिः स्यात्, अत आह—**

**चानुकृष्टं नोत्तरत्र ॥ ७९ ॥**

**णमुल्यनुवर्त्तमाने "अव्ययेऽयथाभिप्रेत" इति सूत्रे पुनर्णमुल्ग्रहणमस्या ज्ञापकम्। अन्यथा 'क्त्वा च' इति वदेत्।**

---

गुणसंविज्ञानं तत्र प्रायः संयोगसमवायान्तरसम्बन्धेन सम्बन्धी अन्यपदार्थ इति। एतत्फलन्तु—'अवाससमानय', "तसौ मत्वर्थे" (पा० सू० १।४।१९) इत्यादौ च मत्वर्थविशिष्टस्य प्रत्ययस्य तद्गुणसंविज्ञानेन ग्रहणम्। **सर्वादीनीति।** अत्रादिशब्द आद्यवयववाचकः। सर्वशब्दघटितसमुदायोऽन्यपदार्थः। तयोरवयवावयवीभाव-प्रयोजकः समवायः सम्बन्ध इति तद्गुणत्वम्।

ननु समुदायस्यान्यपदार्थत्वे तस्यैकत्वाद् बहुवचनानुपपत्तिः। किञ्च संज्ञायाः कार्यार्थत्वात् तत्र कार्याभावात् संज्ञायाः वैयर्थ्यम्। किञ्च महासंज्ञाकरणेन सर्वार्थबोधकत्वसामानाधिकरण्येनैव सर्वनामसंज्ञाविधानात्, समुदायस्यानर्थक-त्वात्, सर्वार्थवाचकत्वाभावात्, समुदाये संज्ञाया न प्राप्तिः। न चोद्भूतावयवभेद-विवक्षया बहुवचनोपपत्तिरित्याकरोक्तेर्न दोषः, तस्यावयवगतभेदप्रयोज्यसंख्या-रोपेणेत्यर्थ इति वाच्यम्, आरोपितबहुत्वाश्रयस्यैकत्वेन तत्र तस्यान्वयासम्भवात्, निरर्थकबहुवचननिर्देशवैयर्थ्यस्य दुरुद्धरत्वात्।

न च समुदाये कार्याभावेऽपि सामर्थ्यात् प्रत्येकमवतरन्ती संज्ञावयवेषु विश्रा-म्यतीति न दोष इति वाच्यम्। शक्तिग्रहस्य तद्ग्राहकशास्त्राधीनत्वेन तेन च समुदायस्यैव संज्ञित्वबोधनेन प्रत्येकं संज्ञित्वावगमस्य शास्त्रं विनाऽसम्भवात्।

न च सामर्थ्यात्तदपि कल्प्यते, आवृत्तिं विनोभयथा कल्पनासम्भवात्, प्राथमिकबोधस्य फलाभावाच्चेति चेत्, न; अत्र बहुवचननिर्देशेनावयवेषु समुदाय-त्वारोपेण सर्वादिपदे लक्षणयाऽवयवानां सर्वेषामुपस्थित्या तेषां सर्वार्थवाचकत्वेन च सर्वेष्टसिद्ध्याऽदोषात्।

"जक्षित्यादयः०" ( पा० सू० ६।१।६ ) इत्यादावपि 'जक्ष्' इति पृथक्-पदम्, इति शब्द इदमर्थकः, आदिशब्दः पूर्ववृत्तिवाची, इत्यादिर्येषामित्यतद्-गुणसंविज्ञानो बहुव्रीहिः ॥ ७८ ॥

**चेनानुकृष्टस्येति।** क्यपं दृष्ट्वा निवृत्त्यभिमुखस्य यतोऽनुवृत्तये कृतेन चेनेत्यर्थः। **स्यादिति।** तथा च 'ब्रह्मभव्यम्' इत्यपि स्यादिति भावः। **वदेदिति।**

**तद्धि उत्तरत्रोभयोः सम्बन्धार्थम् । उदाहरणानि स्फुटानि ।**

**इदमनित्यम् । अत एव "तृतीया च ह्रोः" इत्यत्र चानुकृष्टाया अपि द्वितीयाया "अन्तराऽन्तरेण" इत्यत्र सम्बन्धः ।**

**"लुटि च क्लृपः" इति सूत्रस्थेनानुवृत्त्यर्थकसकलचकारप्रत्याख्यानेन विरुद्धेयम् । व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्वाह इति तदाशयः । "कुलिजाल्लुक्खौ च" इति सूत्रस्थभाष्यविरुद्धा च । तत्र हि "द्विगोः ष्ठंश्च" इति सूत्रात् ष्ठनः, तत्र 'चेनाप्यनुकृष्टस्य खोऽन्यतरस्याम्" इत्यस्य चानुवृत्तिं स्वीकृत्य लुक्खौ चेति भाष्ये प्रत्याख्यातम् ॥ ७९ ॥**

**नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्यत आह—**

---

"स्वादुमि णमुल्" ( पा० सू० ३।४।२६ ) इत्यतश्चकारेण णमुलोऽनुकर्षणादिति भावः । **उत्तरत्रेति ।** "तिर्यच्यपवर्गे" ( पा० सू० ३।४।६० ) इत्यादौ ।

**अनित्यमिति ।** चानुकृष्टविकल्पनिवारणफलकात् "एकाजुत्तरपदे०" ( पा० सू० ८।४।१२ ) इत्यत्र 'ण'ग्रहणादित्याहुः । **खोऽन्यतरस्यामित्यस्येति ।** "आढाकाचित०" ( पा० सू० ५।१।५३ ) इति सूत्रस्थस्येति भावः । पूर्वत्र चेनापीत्यत्रोक्तोऽपिरत्र योज्यः । चेनानुकृष्टस्य खोऽन्यतरस्यामित्यस्यापीत्यन्वयः ।

**प्रत्याख्यातमिति ।** कुलिजान्ताद् द्विगोः सम्भवत्याद्यर्थेषु लुक्खौ स्तः, चात् ष्ठंश्चेत्यर्थः । अत्र खोऽन्यतरस्यामित्यतः 'ख'ग्रहणेऽनुवर्त्तमाने पुनः 'ख'ग्रहणादन्यतरस्यामिति नानुवर्त्तते । लुक्ठञाविव खष्ठनोस्तु न लुक् । एषां द्वन्द्वेन चकारेण च सह विधानेनोद्देश्यत्वासम्भवात् । ठञ् तु "सम्भवत्यवहरति पचति" ( पा० सू० ५।१।५२ ) इत्यधिकारेण सिद्ध इति 'द्विकुलिजिकी' 'द्विकुलिजीना' ठञ् पक्षे लुक् 'द्विकुलिजी' इति रूपत्रयमिष्यते ।

प्रत्याख्यानपक्षे खग्रहणाभावेनान्यतरस्यां ग्रहणस्याप्यनुवृत्त्या ष्ठन्खयोर्विकल्पेन विधानात्ताभ्यां मुक्ते सामान्यशास्त्रेण ठञ्, तस्य "अध्यर्ध०" ( पा० सू० ५।१।२८ ) इतिं लुकि तदेव रूपत्रयमिति न फलभेद इति भावः ।

न च मूलेऽन्यतरस्यां ग्रहणानुवृत्त्या लुक्खौ वा स्त इति लुकोऽपि वैकल्पिकत्वाङ्गीकारात् पक्षे लुगभावे 'द्वैकुलिजिकी' इति तुरीयं रूपं सिद्ध्यति । प्रत्याख्यानपक्षे च तन्नेति फलभेद इति वाच्यम् । न च ठञः पक्षे लुगभावेन चतुर्थं रूपमिष्यत इति कैयटोक्तेस्तस्य सिद्धान्तेऽप्यनिष्टत्वात् । मूलं तु चिन्त्यमेवोक्तभाष्यविरोधादिति बोध्यम् ॥ ७९ ॥

**अनुदात्तादेरन्तोदात्ताच्चेति ।** "अनुदात्तादेरञ्" ( पा० सू० ४।२।४४ ) "बह्वचोऽन्तोदात्ताठ्ठञ्" ( पा० सू० ४।३।६७ ) इत्यादावित्यर्थः ।

## स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ८० ॥

**स्वरोद्देश्यके विधावित्यर्थः। "नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु" इति सूत्रे पृथिव्यादिपर्युदासोऽस्या ज्ञापकः। अन्यथा पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव।**

**धर्मिग्राहकमानादेव च स्वरोद्देश्यकविधिविषयमिदम्। अत एव "शतुरनुमो नद्यजादी "अचः कर्त्तृयकि" इत्यादावजादी, अच इत्यादेश्चारितार्थ्यम्। अत एव 'राजवती" इत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वात्,"अन्तोऽवत्याः" इति स्वरो न, 'उदश्वित्वान्' इत्यत्र "ह्रस्वनुड्भ्याम्" इति मतुबुदात्तत्वं च नेत्याकरः। स्पष्टं चेदम् "समासस्य" इति सूत्रे भाष्ये।**

---

**स्वरोद्देश्यक इति।** स्वरप्रयोज्यविधावित्यर्थः। **ज्ञापक इति।** अनुदात्तादौ पृथिव्यादिभिन्ने उत्तरपदे "देवताद्वन्द्वे च" ( पा० सू० ६।२।१४१ ) इति पूर्वोत्तरपदप्रकृतिस्वरो नेत्यर्थः।

**नद्यजादीति।** अनुम्यः शतृप्रत्ययः, तदन्तान्तोदात्तात्परा या नदी, अजाद्यसर्वनामस्थानविभक्तिश्चोदात्तेत्यर्थः। **अचःकेति।** उपदेशेऽजन्तानां कर्त्तृवाचिनि सार्वधातुके परे विहितो यो यक् तस्मिन् परे आदिरुदात्त[1] इति तदर्थः। 'लूयते केदारः स्वयमेव' इत्युदाहरणम्। **स्वरो नेति।** अवतीशब्दस्यान्त उदात्त इति तदर्थः। **च नेति।** ह्रस्वान्तादन्तोदात्तान्नुटश्च परस्य मतुप उदात्त इत्यर्थः।

**आकर इति।** न च मनिनन्ताद्युदात्तरोमण्वच्छब्दे 'रोमण्वन्तौ' इत्यादौ मतुबुदात्तत्ववारणाय नुटोऽप्यन्तोदात्तात्परस्यैव ग्रहणेनान्यस्यापि स्वरप्रयोज्यत्वान्नुङ्ग्रहणं व्यर्थम्, 'अक्षण्वतः' इत्यत्र "छन्दस्यपि दृश्यते" ( पा० सू० ७।१।७६) इत्यनङि, नुटि, ह्रस्वान्तत्वादेरसिद्धेः 'उदश्वित्वान्' इत्यादौ कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वान्मतुबुदात्तत्वं च दुर्वारमेवेति वाच्यम्, पूर्वोक्ताजादी, अच इति च ज्ञापकेन स्वरेतरयावन्निमित्तसमवधाने सति यत्रोदात्तादिपदबोध्यस्य स्वरस्य व्यञ्जनकृतो निमित्तत्वाभावस्तत्रैवैतत्परिभाषाप्रवृत्त्या प्रकृते ह्रस्वान्तात्परत्वाभावेनान्तोदात्तात्परस्यातिदेशासम्भव इत्याशयात्।

न च 'स्वपद्भ्य;' इत्यत्रापि व्यञ्जनानामविद्यमानवद्भावेन भ्यसोऽकारस्यान्तोदात्तात्परत्वात्स्वरस्य दुर्वारत्वेन 'नद्यजादी' इत्यत्राजादिग्रहणं व्यर्थमेवेति वाच्यम्, उदात्तादिप्रयोज्ये कार्ये कर्त्तव्ये उदात्तादिरूपस्य स्वरस्य व्यञ्जनकृतो यत्रादित्वान्त्यत्वाभावः, आनन्तर्याभावो वा, तत्र विषये तस्याविद्यमानवद्भावेनादित्वान्त्यत्वादिप्रयुक्तकार्यसम्पादनेन भ्यसि अन्तोदात्तात्परत्वस्यानेनानयनेऽपि भ्यस्यजादित्वस्यानतिदेशादकारेऽजादित्वेऽपि विभक्तित्वाभावादुक्तदोषासम्भवात्।

---

1. 'अदिरुदात्तः' इत्यपपाठः क० पु०।

"उच्चैरुदात्तः" इति सूत्रे कैयटस्तु 'इयमनावश्यकी, समभिव्याहृताजुपरागेण हलोऽप्युदात्तादिवदवभासात्तदुपपत्तेः' इत्याह। तत्र भाष्येऽपि ध्वनितमेतत् ॥ ८० ॥

नन्वेवमपि 'राजदृषत्' इत्यादौ "समासस्य" इत्यन्तोदात्तत्वं षकाराकारस्य न स्यात्, अत आह—

**हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ ८१ ॥**

अस्याश्च "यतोऽनावः" इति सूत्रेऽनौप्रतिषेधो ज्ञापकः। 'नाव्यम्' इत्यत्रादिर्नकारो न स्वरयोग्यः, यश्चाकारस्तद्योग्यो नासावादिरिति स प्रतिषेधोऽनर्थकः।

न चादिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपोऽस्त्विति वाच्यम्, तथा सति निमित्तभूतद्व्यचकत्वस्य विनाशादुपजीव्यविरोधेनाद्युदात्तत्वाप्राप्तेः, इत्यन्यत्र विस्तरः। स्पष्टा चेयम् "समासस्य" इति सूत्रे भाष्ये ॥ ८१ ॥

---

**इयमनावश्यकीति**। अत एव भिक्षादिष्वनुदात्तत्वनिमित्तकाञ्बाधनार्थम् 'युवति, गर्भिणी' पाठश्चरितार्थः। अन्यथा हलादित्वादेवाञोऽप्राप्त्या तद्व्यर्थमेव स्यात्। न चैतत्परिभाषाभावे 'दधि' इत्यत्र "उदात्तादनुदात्तस्य०" (पा० सू० ८।४।६६) इति स्वरानापत्तिः। "हल्स्वर०" (परि० ८१) इत्यस्यास्तु न प्राप्तिः, हलः स्वरप्राप्तेरभावादिति वाच्यम्, अनुदात्तपदे बहुव्रीह्याश्रयणेनादेः परस्येति हल्स्वरप्राप्त्या "हल्स्वर०" (परि० ८१) इति परिभाषया निर्वाहिति ॥ ८० ॥

**ज्ञापक इति**। यत्प्रत्ययान्तस्य द्व्यच्कस्यादिरुदात्तः, नावं वर्जयित्वेत्यर्थः। **अस्त्वितीति**। "त्यदादीनामः०[१]" (पा० सू० ७।२।१०२) इत्यादाविव हलः स्थानेऽन्तरतमोऽच् स्यादिति भावः।

**विस्तर इति**। ननु "स्वरविधौ०" (परि० ८०) इत्यत्र सम्बन्धसामान्यषष्ठ्यन्तेन समासात् स्वरकर्मकविधेरपि स्वरविधित्वसम्भवात्, 'राजदृषत्' इत्यत्रापि स्वरसिद्धेरियं व्यर्था। न च 'उदश्वित्वान्' इत्यत्राप्यापत्तिरिति वाच्यम्, 'अक्षण्वान्' इत्यत्राप्यक्षिशब्दान्मतुपि "छन्दस्यपि दृश्यते" (पा० सू० ७।१।७६) इत्यनङि "अनो नुट्" (पा० सू० ८।२।१६) इति मतुपो नुटि, नलोपे, स्वरे नलोपस्यासिद्धत्वेऽप्यनयाऽविद्यमानवद्भावेन नुटस्तद्भक्तत्वेन ह्रस्वान्तात्परत्वादेव मतुपः स्वरसिद्ध्या पुनर्नुड्ग्रहणस्य तदनित्यत्वज्ञापकत्वेनादोषादिति चेत्, न; स्वरे नलोपस्यासिद्धत्वेन, नुटोऽन्तोदात्तात्परत्वासम्भवादेतत्परिभाषाया अनित्यत्वादप्रवृत्तौ 'अक्षण्वन्तः' इत्यत्र स्वराप्राप्त्या स्वांशे चारितार्थ्यासम्भवात्, अत्रापि परिभाषाप्रवृत्तौ नुड्ग्रहणवैयर्थ्यस्य दुर्वारत्वात्। नलोपस्थलेऽप्यस्याः प्रवृत्तौ "नलोपः सुप्०" (पा० सू० ८।२।२) इति

---

१. 'त्यदानामः' इति पाठः क० पु०।

ननु "पूरणगुण" इति निषेधस्तव्यत्यपि स्यात् "दिव औत्" इत्यौत्वं दिवेः क्विप्यपि स्यात्, तथा "यतोऽनावः" इति स्वरो ण्यत्यपि स्यात् "ऋदृशोऽङि गुणः" इति चङ्यपि स्यात्; अत आह—

**निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ८२ ॥**

**तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥ ८३ ॥**

"वामदेवाड्ड्यड्ड्यौ" इति सूत्रे ड्यड्ड्यतोर्डित्त्वमनयोर्ज्ञापकम् । तद्धि "ययतोश्चातदर्थे" इत्यत्र तयोरग्रहणार्थम् । नञः परस्य ययदन्तस्योत्तरपदस्यान्त उदात्त इति तदर्थः । एवं चावामदेव्येऽव्ययपूर्वपदप्रकृतिस्वर एव भवति ।

तन्मात्रानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्त्यार्थः ।

---

सूत्रे स्वरग्रहणवैयर्थ्यापत्तेश्च । तद्धि नलोपेऽपि विद्यमानत्वाय । यदि तत्राप्यविद्यमानवद्भावस्तर्हि तद्व्यर्थमेवेति नुड्ग्रहणं न ज्ञापकमिति ध्येयम् ।

अन्ये तु "नलोपः सुप्०" ( पा० सू० ८।२।२ ) इति सूत्रे स्वरग्रहणेन स्वरविधावित्यस्यानित्यत्वम् । तेन 'उदश्वित्वान्' इत्यादौ न दोषः । 'अक्षण्वन्तः' इत्यत्र तु 'येन नाव्यवधानम्' इति न्यायेन नलोपासिद्धत्वेऽपि व्यवधानं सह्यत इति नुड्ग्रहणं चरितार्थमिति परिभाषाद्वयं नाश्रयणीयमित्याहुः ॥ ८१ ॥

**तव्यत्यपि स्यादिति ।** सिद्धान्ते मध्योदात्तकर्त्तव्यशब्द एव निषेधः । परिभाषाभावे उदात्तरहितस्वरितान्तेऽपि निषेधापत्त्या कृदुत्तरपदप्रकृतिस्वरेण स्वरितान्तसमासस्यासिद्धिः ।

**क्विप्यपीति ।** दिवेर्डिविरिति व्युत्पादनेन प्रत्ययस्य सानुबन्धकत्वेऽपि प्रातिपदिकस्य तत्त्वे मानाभावात्[१], उणादीनामव्युत्पन्नत्वाच्च ।

**ण्यत्यपीति ।** 'चेयम्' 'जेयम्' इत्यत्रेव 'कार्यम्' 'हार्यम्' इत्यत्रापि स्यात् । **चङ्यपीति ।** ननु णिचा व्यवधानाद् दृशेश्चङ्परत्वासम्भव इति चेत्, न; "ऋदृशोऽङि०" ( पा० सू० ७।४।१६ ) इति सूत्रादङीत्यनुवर्त्तमाने "जृस्तम्भु०" (पा० सू० ३।१।५८) इत्यङ्निमित्तः "श्वयतेरः" (पा० सू० ७।४।१८) इत्यकारः, "विभाषा धेट्श्व्योः" ( पा० सू० ३।१।४९ ) इति चङ्विषयेऽपि स्यादित्याशयात् । अत एव दृशेश्चापीति नोक्तम् ।

**तदर्थं इति ।** "पाशादिभ्यो यः" ( पा० सू० ४।२।४९ ) 'पाश्या', ब्रह्माणि साधुः 'ब्रह्मण्यः' इत्यत्र नञा समासे उदाहरणात्[२] । **तन्मात्रेति ।** 'सर्वं वाक्यं सावधारणम्' इति न्यायेन स एवानुबन्धो यस्येत्याशयः ।

---

१. 'मानामानाभावात्' इत्यपपाठः क० पु० ।

२. 'उदाहृणात्' इत्यपपाठः क० पु० ।

**एते च प्रत्ययाप्रत्ययसाधारणे, "दिव औत्" इत्यादौ सञ्चारितत्वात्।**

**वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्टम् "औङ आपः" इत्यत्र भाष्ये। येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वादि वा तदनुच्चारणे एवैषा, धर्मिग्राहकमानात। तेन "जश्शसोः" इत्यत्र नैषेति निरनुबन्धकत्वात् तद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम्।**

**एवमन्त्याऽन्यतरानुबन्धोच्चारणे एव। तेन "वनो र च" इत्यादौ ङ्वनिप्क्वनिपोर्ग्रहणसिद्धिः।**

---

यत्तूक्तं जृधातोर्ज्रृ्धातोश्च क्त्वाप्रत्यये तु "श्र्युकः किति" (पा० सू० ७।२।११) इति निषेधे प्राप्ते "जॄव्रश्च्योः क्त्वि" (पा० सू० ७।२।५५) इती—डागमेन "न क्त्वा सेट्" (पा० सू० १।२।१८) इति कित्त्वनिषेधे 'जरित्वा' इति रूपम्। एवं 'ञिफला' धातोः "तृफल०" (पा० सू० ६।४।१२२) इत्येत्वे 'फेलतुः' इति रूपम्। अतो धर्मिग्राहकमानादियं प्रत्ययनिमित्तविधिविषयैव। "उगिदचाम्०" (पा० सू० ७।१।७०) इत्यतः "दिव औत्" (पा० सू० ७।१।८४) इत्यत्राधातुग्रहणानुवृतेर्न दोष इति तन्मतं दूषयितुमाह—**एते चेति।**

**साधारण इति।** अत एव "दुग्वोदीर्घश्च" (का० वा० ८।२।४४) इति विधीयमाननत्वदीर्घौ 'मृदुतया द्रुतया' इति माघप्रयोगे न। 'टुदु' उपतापे (स्वा० १३३७) इत्यस्य "दुग्वोर्दीर्घश्च" (का० वा० ८।२।४४) इत्यत्राग्रहणात्। एवञ्च पूर्वोक्तरूपे न भाष्यसम्मते इति भावः। **वर्णग्रहणे इति।** "एरच्" (पा० सू० ३।३।५६) इत्यादाविति भावः।

न च "उत्करादिभ्यश्छः" (पा० सू० ४।२।९०) "शिलयाः ढः" (पा० सू० ५।३।१०२) "कुलात्खः" (पा० सू० ४।१।१३९) "क्षत्राद्घः" (पा० सू० ४।१।१३८) इत्यादौ निरनुबन्धकानां सम्भवात् "तित्तिरिवरतन्तुखण्डिकोखाच्छण्" (पा० सू० ४।३।१०२) इत्यादौ सानुबन्धके आयन्नादयो न स्युरिति वाच्यम्; छादिष्वक्रार उच्चारणार्थं इति वर्णमात्रस्यैव ग्रहणेन प्रत्ययस्याग्रहणात्। अत एव ठक्-ढक्-अञ्-ढिनुक्-फिञ्प्रभृतिषु न दोषः।

ननु वसोः सम्प्रसारणं विदेश्शतुर्वसोरेव स्यात्, न तु क्वसोः। न च "विदेश्शतुर्वसुः" (पा० सू० ७।१।३६) इत्यत्रोकारोच्चारणात्प्रदेशे उभयोरपि ग्रहणम्, अन्यथा शतुरुगित्त्वादेव तत्कार्यसिद्धेरिति वाच्यम्। वसोः सम्प्रसारणं "वसुस्रंसु०" (पा० सू० ८।२।७२) इत्यादावेतत्परिभाषाप्रवृत्त्याऽस्यैव ग्रहणं यथा स्यान्न तु क्वसोरित्येतदर्थमस्य[1] चारितार्थ्यात्।

---

१. 'इत्येदर्थमस्य' इत्यपपाठः क० पु०।

**एकानुबन्धकग्रहणे सम्भवतीति त्वर्थो न भाष्यादिसम्मत इत्यन्यत्र विस्तरः ॥ ८२-८३ ॥**

**ननु 'कुटीरः' इत्यादौ स्वार्थिकत्वात् स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्न्यायप्राप्तत्वात् पुंस्त्वानुपपत्तिः, 'अप्कल्पम्' इत्यत्र नपुंसकैकवचनयोरनुपपत्तिश्चेत्यत आह—**

**क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते ॥ ८४ ॥**

**"णचः स्त्रियाम्" इति सूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका। अन्यथा "कर्मव्यतिहारे णच् स्त्रियाम्" इति स्त्रियामेव विधानात् किं तेन ? स्पष्टा चेयं बहुज्विधायके भाष्ये ॥ ८४ ॥**

---

न च "विदेः शतुर्वसुः" ( पा० सू० ७।१।३६ ) इति वसोर्विधायके "वसोः सम्प्रसारणम्" ( पा० सू० ६।४।१३१ ) "वसुस्रंसु०" ( पा० सू० ८।२।७२ ) इति प्रदेशे च उकारानुच्चारणेनैव क्वसोर्व्यावृत्तिसिद्धेः पुनरुकारोच्चारणं व्यर्थमेव स्यादिति वाच्यम्। तथा सति 'चर्मवसः पश्य' इत्यत्र सम्प्रसारणापत्तेः। दत्त्वविधौ धातुसाहचर्येण धातोरेव ग्रहणेन 'विद्वद्भ्याम्' इत्यादौ तदनापत्तेः।

न च "विदेःशतुर्वसुः" ( पा० सू० ७।१।३६ ) इत्यत्र सरकारप्रश्लेषेणास्यापि द्व्यनुबन्धकत्वान्न दोषः। तथा सति "सिति च" ( पा० सू० १।४।१६ ) इति पदत्वात् 'विद्वद्भ्याम्' इत्यत्रेव 'विद्वान्' इत्यत्राऽप्यवग्रहापत्तेरिति चेत्, न; 'वस आच्छादने' (अदा० १०९३) इत्यस्यानुदात्तत्वेन सानुबन्धकत्वान्निवासार्थकस्य क्विपि सिद्धान्तेऽपि "वचिस्वपि०" ( पा० सू० ६।१।१५ ) इति सम्प्रसारणापत्त्या 'चर्मवसः पश्य' इत्यत्रादोषेणोकारोच्चारणसामर्थ्यादुभयोर्ग्रहणेनादोषात् ॥ ८२-८३ ॥

**किं तेनेति**। ननु ज्ञापितेऽपि न चारितार्थ्यम्, 'व्यावक्रोशी' इति णजन्तप्रकृतिकाञन्तस्य नपुंसकत्वे पुंल्लिङ्गत्वे वा णज्विधौ स्त्रियामित्युक्तेर्वैयर्थ्यापत्त्या तत्सामर्थ्यादेव लिङ्गान्तरस्य व्यावृत्त्या स्त्रीत्वसिद्धेः।

न च स्वार्थिकेष्वपि वा ग्रहणानुवृत्तेरभावे तस्य चारितार्थ्यम्, वाग्रहणेन सामर्थ्यात् षष्ठ्याद्यन्ताद् वक्ष्यमाणेष्वर्थेषु प्रत्ययो वा भवतीत्येवमर्थेनैकार्थीभावरूपसामर्थ्यस्यैव समासवत् तद्धितविधावपि विकल्पस्वीकारेणात्यन्तस्वार्थिकेषु पदविधित्वाभावेन समर्थपरिभाषोपस्थितेरभावाद् वा ग्रहणेन तद्वैकल्पिकत्वबोधनद्वारा प्रत्ययविकल्पनायोगात्।

अत एव समासान्तेषु वेत्यस्यासम्बन्ध इति चेत्, न; एकार्थीभावरूसामर्थ्यस्यात्यन्तस्वार्थिकेषु दुरुपपादतया महाविभाषया सामर्थ्यविकल्पबोधनासम्भवेऽपि

**ननु 'सुपथो नगरी' इति "युवोरनाकौ" इति सूत्रभाष्योदाहृते "इनः स्त्रियाम्" इति कप् स्यात्, अत आह—**

**समासान्तविधिरनित्यः ॥ ८५ ॥**

**"प्रतेरंशवादयस्तत्पुरुषे" इत्यन्तोदात्तत्वायांश्वादिषु राजन्शब्दपाठोऽस्या ज्ञापकः। अन्यथा टचवान्तोदात्तत्वे सिद्धे किं तेन ? "द्वित्रिभ्यां पाद्दन्मूर्द्धसु" इति स्वरविधायके भाष्ये स्पष्टम् ॥ ८५ ॥**

**ननु 'शतानि' इत्यादौ नुमि कृते षट्संज्ञा प्राप्नोति, ततश्च लुक् स्यात्, तथा 'उपादास्त' इत्यत्रात्वे कृते "स्थाघ्वोरिच्च" इतीत्वं प्राप्नोतीत्यत आह—**

**सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८६ ॥**

---

त्रलादिप्रत्ययस्य विकल्पबोधने बाधकाभावेनात्रभावपक्षे णजन्तस्य स्त्रीलिङ्गत्व-सम्पादनेन तत्र स्त्रियामित्युक्तेश्चारितार्थ्येन सामर्थ्याभावेन तेन लिङ्गान्तरव्या-वृत्त्यसम्भवात् समासान्तेषु "शेषाद् विभाषा" ( पा० सू० ५।४।१५४ ) इति ज्ञापकाद् वेत्यस्यासम्बन्ध इति न दोष. ।

अत्र परिभाषायां वचनांशे ज्ञापकाभावेऽप्येकदेशानुमत्या परिभाषाङ्गी-कारात् 'अप्कल्पम्' इत्यादौ न दोषः ॥ ८४ ॥

**स्पष्टमिति**। तत्र हि समासान्तस्य नित्यत्वे कार्यिविशेषसन्देहव्यावृत्तये "पाद्दन्"[1] इति प्रक्रमाभेदाय मूर्वष्वित्ति कृतसमासान्त एव निर्देष्टव्ये तदनु-च्चारणेन समासान्तविधेरनित्यत्वमिति ।

एतेन "द्वित्रिभ्याम्०" ( पा० सू० ६।२।१९७ ) इति सूत्रे बहुव्रीहिग्रहणं ज्ञापकमिति कौस्तुभोक्तमपास्तम् । ज्ञापितेऽपि स्वांशे चारितार्थ्यासम्भवात् । तद्धित्तत्पुरुषेऽन्तोदात्तविकल्पवारणाय तत्रानेनान्तोदात्तविकल्पे सत्यपि तदभाव-पक्षे उत्सर्गस्य समासोऽन्तोदात्तस्य प्रवृत्त्या दोषासम्भवात् ।

न च विकल्पसामर्थ्यात्तद्बाधः, बहुव्रीहौ प्रयोजनलाभेन सामर्थ्याविरहात् । एवञ्च व्यावृत्त्यभावाद् बहुव्रीहिष्वप्युक्तं रूपं व्यर्थमेव । **'सुपथी नगरी' इति—**नान्तत्वान्ङीपि "भस्य टेर्लोपः" (पा० सू० ७।१।८८) इत्यनेन टिलोपे रूपम् ॥८५॥

**'उपादास्त इति**। दीङ्धातोर्लुङि, सिचि "मीनातिमीनोति०" ( पा० सू० ६।१।५० ) इत्यनेनैज्विषयाकित्सन्निपातनिमित्तकमात्वं घुत्वद्वारा "स्थाघ्वोरि-च्च" ( पा० सू० १।२।१७ ) इति तद्विघातककित्त्वेत्त्वयोरनिमित्तमिति भावः ।

न चानया "क्ङिति च" ( पा० सू० १।१।५ ) इत्यस्य कित्कार्यस्य निवृत्ता-वपि कित्त्वतत्सन्नियोगेत्त्वयोः प्रवृत्तौ सन्निपातविघाताभावेन 'उपादेस्त' इति

---

१. 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' ( पा० सू० ६।२।१९७ ) ।

**सन्निपातः=द्वयोः सम्बन्धः, तन्निमित्तो विधिस्तं सन्नपातं यो विहन्ति, तस्यानिमित्तम् । उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलैषा ।**

**अत एवात्र सन्निपातशब्देन न पूर्वपरयोः सम्बन्ध एव, किन्तु विशेष्यविशेषणसन्निपातोऽपि गृह्यते । अत एव 'ग्रामणिकुलम्' इत्यादौ नपुंसकह्रस्वत्वेऽपि "पिति कृति" इति तुग् न । प्रातिपदिकाजन्तत्वसन्निपातेन जातस्य ह्रस्वस्य तदविघातकत्वात् । तुक्यजन्तत्वविघातः स्पष्ट एव ।**

**न चार्थाश्रयत्वेन ह्रस्वस्य बहिरङ्गतयाऽसिद्धत्वम्, अर्थकृतबहिरङ्गत्वानाश्रयणस्योक्तत्वात् । किञ्च "षत्वतुकोरसिद्धः" इत्येतद्बलात् कृतितुग्ग्रहणाच्च तुग्विधौ बहिरङ्गपरिभाषया अप्रवृत्तेः ।**

---

स्यादिति वाच्यम्, साक्षात्परम्परया वा स्वनिमित्तिविघातस्य स्वयमनिमित्तमित्यर्थात् साक्षात्सन्निपातकस्येव तत्प्रवृत्तिनिमित्तभूतातिदेशिकसंज्ञादीनामप्यनयाप्रवृत्तिरिति तत्त्वम् ।

ननु 'अवदायः' 'अवदानः' इत्यत्र णप्रत्यययुच्प्रत्ययसिद्धये "मीनातिमीनोति०" ( पा० सू० ६।१।५० ) इत्यादौ "आदेच०" ( पा० सू० ६।१।४५ ) इति सूत्रादेच इत्यस्योपदेश इत्यस्य चानुवृत्त्योपदेशपदस्य प्रत्ययपरत्वाङ्गीकारेणैज्निमित्तप्रत्यये विवक्षिते एषामात्त्वमित्यर्थस्यावश्यकतयास्य परनिमित्तकत्वाभावादात्त्वस्य सन्निपातलक्षणत्वं दुर्वचम् ।

न चैज्विषयत्वविशिष्टप्रत्ययनिमित्तकघुत्वस्य निमित्तं न भवतीति वाच्यम्, अत्र च्लिप्रत्ययस्यैवैज्निमित्तत्वेन तस्यानेन कित्त्वातिदेशेनोपजीव्यविरोधाभावादिति चेत्, न; च्लिप्रत्ययस्य प्रयोगे क्वाप्यश्रवणेन भाविसत्ताश्रयत्वरूपविषयत्वस्य कदाप्यसम्भवेन तस्यात्त्वनिमित्तत्वासम्भवेन सिज्विषयतामादायैवात्त्वप्रवृत्तेर्वक्तव्यतया तस्य कित्त्वातिदेशे उपजीव्यविरोधस्य सूपपादत्वात् ।

**विहन्तीति** । तद्विघातपदे कर्मण्यण्, उपपदसमासः । घञन्तेन षष्ठीसमासस्तु न युक्तः, स्वस्यापि स्वसन्निपातविघातप्रयोजकत्वेनान्यस्येव स्वस्याप्यप्रवृत्त्यापत्तेः । निमित्तनिमित्तिनोः सम्बन्धवद् विशेषणविशेष्यभावरूपसन्निपातग्रहणे फलमाह—**तुग्नेति** । ननु अर्थकृतबहिरङ्गत्वानाश्रयणेऽपि 'अधीत्य' इत्यत्रेव ग्रामणीति पदद्वयात्मकसमुदितप्रातिपदिकापेक्षह्रस्वापेक्षया क्विप्प्रकृतिभूतह्रस्वान्ततदादिप्रत्ययोभयापेक्षतुकोऽन्तरङ्गत्वेन दोष इत्यरुचेराह—**किञ्चेति** ।

**अप्रवृत्तेरिति** । न चाभ्यां परिभाषानित्यत्वमेव ज्ञाप्यताम् । तत्फलं तु "शिवोऽर्च्यः"[1] इति । एवञ्च ग्रामणीति बहिरङ्गपरिभाषयैव सिद्धमिति नापूर्वविशेष्यविशेषणसन्निपातः परिभाषायामाश्रयणीयः, गौरवात्फलाभावाच्चेति

---

१. 'शिवोऽर्चः' इति पाठः क० पु० ।

**सर्वविधसन्निपातग्रहणादेव 'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्' इत्येतत्परिभाषादोषनिरूपणावसरे वार्त्तिककृतोक्तम्—'न हि प्रत्ययः पूर्वपरसन्निपातनिमित्तकः, स एव च सन्निपातशब्देन गृह्यत इति मत्वा न प्रत्ययः सन्निपातनिमित्तक इति शङ्कायां तदभ्युपेत्यैवाङ्गसंज्ञा तर्ह्य निमितं स्यादित्येकदेशिनोक्तम्' इति न तद्भाष्यविरोधः ।**

**किञ्चैवं 'शैवः, गार्ग्यः, वैनतेयः' इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इत्यस्य वयर्थ्यम् ।**

---

वाच्यम्, परिभाषाया अनित्यत्वस्य तेन ज्ञापनेऽपि 'अधीत्य' 'वृत्रहभ्याम्' इत्यादौ परिभाषाया अप्रवृत्तौ बीजाभावेन ज्ञापितेऽपि चारितार्थ्यस्य दुर्वचत्वात् । इष्टस्थलेऽपि परिभाषाया अप्रवृत्तौ न्यायस्य निर्विषयत्वापत्तेः ।

किञ्च नयति कुलमिति नि-इत्यत्र पदद्वयाभावेन प्रत्ययापेक्षत्वेन तुक एव वहिरङ्गत्वात् तत्र तुग्वारणायोक्तविधसन्निपातस्यावश्यकत्वमित्याशयात् । उक्तार्थे वार्त्तिकसम्मतिमाह—**सर्वविधेति** । सङ्कोचे मानाभावेन सर्वविधोपजीव्यविघातेऽपि तत्प्रवृत्तेर्न्याय्यत्वादिति भावः ।

**वर्णाश्रय इति** । "अत इञ्" ( पा० सू० ४।१।९५ ) "इतश्चानिञः" ( पा० सू० ४।१।१२२ ) इति विधीयमानप्रत्यय इत्यर्थः । ननु वर्णाश्रयप्रत्ययस्य पूर्वमविद्यमानस्य प्रकृतिविशेषादुत्पद्यमानतया सम्बन्धिद्वयानन्यनिमित्तत्वाभावादत्र न दोष इत्याशयकस्योत्तरभाष्यस्य निरालम्बनत्वापत्तिरत आह—**नहीति** ।

**एकदेशिनेति** । न चैतद्भाष्यप्रामाण्याद् वार्त्तिककृदुक्तिरेकदेशिनोऽस्त्विति वाच्यम्, अङ्गाधिकारकार्येषु सर्वत्राङ्गसंज्ञाया निमित्तत्वानापत्तौ तेषां पाठस्य वैयर्थ्यापत्त्या सामर्थ्यादङ्गकार्यमात्रेऽङ्गसंज्ञानिमित्तत्वस्यावश्यकत्वेनाङ्गसंज्ञा तर्ह्य निमित्तं स्यादित्युक्तेरयुक्तत्वेन तस्यैकदेशित्वस्यावश्यकतया तदभ्युपगमेन तूष्णींभावान्नहीत्यादेरप्येकदेशित्वात् ।

**वैयर्थ्यमिति** । पौर्वापर्यसन्निपातलक्षणाङ्गसंज्ञायाः सामर्थ्यादाङ्गकार्यं प्रति निमितत्वाङ्गीकारेऽपि विशेषणविशेष्यभावरूपसन्निपातलक्षणस्येत्रः लोपं प्रति निमित्तात्वं नेति सूचनाय—**वर्णाश्रयः**—इति विशेषणम् । यदि तादृशसन्निपात एवात्र परिभाषायां न गृह्यते तदा तद्विशेषणस्य व्यावर्त्त्याभाव इति भावः ।

ननु "यस्मात्प्रत्यय०" ( पा० सू० १।४।१३ ) इत्यस्य सङ्ग्राहकत्वेऽप्युपप्लूयमानेऽङ्गसंज्ञाविधौ यत्तत्पदाभ्यां तत्तत्प्रत्ययविध्युद्देश्यतावच्छेदकरूपावच्छिन्नस्यैवोद्देश्यत्वबोधनेनेञ्प्रत्यये परेऽवर्णान्तमङ्गसंज्ञं भवतीति वाक्योपप्लवेनाङ्गसंज्ञाया ईदृशे विषये एवावर्णान्तप्रकृत्याश्रयत्वं न तु 'शैवः' इत्यादौ ।

तत्र हि अणि परतः तत्प्रकृतिभूतः शिवशब्दोऽङ्गसंज्ञीति वाक्योपप्लवेना-

'ग्रामणिकुलम्' 'ग्रामणिपुत्रः' इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे यथाकथञ्चिद् बहिरङ्गपरिभाषयापि वारणं सम्भवतीति "कृन्मेजन्तः" इत्यत्र "ह्रस्वस्य पिति" इति सूत्रे चैकदेशिना तया परिभाषया तुग् वारितो भाष्ये ।

---

वर्णस्याङ्गसंज्ञायां शब्देनासंस्पर्शात्तत्रानुपजीव्यतया लोपेनावर्णनाशेऽप्यङ्गसंज्ञोपजीव्यनाशाभावेनैतत्परिभाषया लोपस्यावारणात् । "यस्य०" ( पा० सू० ६।४।१४८ ) इति लोपविषये सर्वत्रैतत्परिभाषाविषयता न, किन्तु 'दाक्षिः' इत्यादावेवेति सूचनाय—**वर्णाश्रयः**—इति विशेषणम् ।

न च 'शैवः' इत्यादावपि "यस्य०" ( पा० सू० ६।४।१४८ ) इत्यकारलोपे शिवशब्दनाशोऽस्त्येवेति वाच्यम्, "एकदेशविकृत०" ( परि० ३७ ) न्यायेन वांते प्रकृतित्ववत् शिवशब्दत्वबुद्धेरप्यक्षतत्वेन तस्य नाशाभावात् ।

न चातिदेशेन तद्बुद्धावपि वास्तवतद्विघातोऽस्त्येवेति वाच्यम्, तस्य न्यायस्य लौकिकत्वेनापूर्वातिदेशाभावादिति चेत्, न; अस्य लोकन्यायमूलकत्वेन लोके उपजीव्यनाशे इव तदवयवनाशादिच्छेदे निमित्तत्वेऽप्युपजीव्यविरोधीति व्यपदेशस्य दर्शनेन शिवशब्दावयवाकारनाशेऽपि तादृशानुपूर्वीनाशेनाङ्गसंज्ञाया निमित्तत्वासम्भव इत्याशंयात् । एवञ्च विशेषणविशेष्यसन्निपातस्फोरणायैव—**वर्णाश्रयः**—इति वार्तिककृतोपन्यस्तमिति बोध्यम् ।

ननु तुग्विधौ बहिरङ्गपरिभाषाया एवाप्रवृत्तौ क्रमेण 'ग्रामणिकुलम्', 'ग्रामणिपुत्रः' इत्युभयत्र बहिरङ्गपरिभाषया तुग्वारणपरभाष्यासङ्गतिरत आहः—**ग्रामणिकुलमिति । यथा कथञ्चिदिति ।** सन्निपातपरिभाषायाः फलत्वेनोक्तरूपोपन्यासे सिद्धान्तिना कृते, पूर्वपक्षिणा नपुंसकह्रस्वत्वश्चाज्ञात्वौत्तरपदिकह्रस्वस्य बहिरङ्गासिद्धत्वात्तुग्नेति कथञ्चिद्वारणं कृतम्, न तु सिद्धान्तिनेति न दोष इति भावः ।

नन्वौत्तरपदिकह्रस्वत्वे ह्रस्वान्तस्य तदादेस्तुकि कृतेऽपि 'स्वाङ्गमव्यवधायकम्' इति न्यायेनानन्तर्यस्याविघातात् कथमेतत्परिभाषया तुग्वारणम् ? न च यदा ह्रस्वमात्रस्य तुगागमस्तदेदं प्रयोजनमिति कैय्यटोक्तेस्तत्पक्षे प्रयोजनत्वेनोपन्यास इति वाच्यम्, तत्पक्षेऽपि 'अवयवावयवः' इति न्यायेन व्यवधानासम्भवेनैतत्परिभाषया वारणासम्भवात् ।

न च 'अवयवावयवः' इति न्यायानाश्रयणेनैव तदुपन्यास इति वाच्यम्, 'पिति कृति' इत्यनेन[1] तदादेरुपस्थित्या ह्रस्वमात्रस्य तुगापादनासम्भवात् । न चोपस्थिततदादेः पिति कृति परतः ह्रस्वस्य तुगित्यर्थात्तदापादनसम्भव इति

---

१. 'इग्येन' इत्यपपाठः क० पु० ।

**अत एव परिभाषाफलत्वेनेदमुक्तम् "क्ङ्मेजन्तः" इति सूत्रे वार्त्तिककृतेति केचित् ।**

**सन्निपातलक्षणविधित्वमस्या लिङ्गम् । स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः सन्निपातः, तद्विघातस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति ।**

**नन्वेवम् 'रामाय' इत्यादौ "सुपि च" इति दीर्घानापत्तिः, अदन्ताङ्गङे-सन्निपातेन जातस्य यादेशस्य तदविघातकत्वात ।**

---

वाच्यम्, एवमपि तदन्तस्य तुगिति पक्षे सन्निपातपरिभाषया वारणासम्भवेन दोषस्य दुर्वारत्वात् ।

न च ग्रामणीत्यत्रोत्तरपदस्य ह्रस्वान्ततदादित्वेऽपि विशिष्टस्य तदादित्वासम्भवात् पूर्वपदानवयवत्वात्तदन्ततृक्पक्षे परिभाषया वारणं सम्भवत्येवेति वाच्यम्, तदादेरित्यस्यापि पिति कृतीत्यत्र पञ्चम्यन्ततयान्वयस्यावश्यकत्वेन शब्दस्वरूपाध्याहारेण ह्रस्वान्तस्य तुगागमेन विशिष्टस्य तुकि सन्निपातविघाताभाव इति कैय्यटाशयात् । ह्रस्वस्येति पक्षेऽप्यवयवावयवेति न्यायेन वारणासम्भवात् ।

एवञ्च 'ग्रामणिकुलम्' 'ग्रामणिपुत्रः' इत्यत्र सन्निपातपरिभाषया तुग्वारणपरभाष्यमसङ्गतमित्याशङ्क्याह—**अत एवेति** । विशेषणविशेष्यसन्निपातग्रहणादेवेत्यर्थः । **इदमुक्तमिति** । अन्यथा जायमानस्य तुकोऽवयवत्वेनैव प्रवर्त्तनात् स्वाङ्गस्यानन्तर्याविघातकत्वादेतत्परिभाषया तद्वारणपरभाष्यस्य कुकविकृतकाव्यपद्यवत् क्लिष्टत्वापत्तिः । मम त्विगन्तत्वरूपविशेषणविशेष्यसन्निपातविघाताभिप्रायेणैतद्भाष्यं प्रवृत्तमिति सर्वमनाविलमिति दिक् ।

न चैवम् 'ग्रामणिच्छत्रम्' इत्यादौ "छे च" ( पा० सू० ६।१।७३ ) इति तुकोऽप्यनापत्तिः, तथा च "ह्रस्वस्य पिति०" ( पा० सू० ६।१।७१ ) इति सूत्रस्थभाष्यविरोध इति वाच्यम्, "छे च" ( पा० सू० ६।१।७३ ) इति तुग्विषयेऽनित्यत्वादस्याप्रवृत्त्या न दोष इत्यभिमानः । **केचिदिति** । भाष्यतत्त्वविद इत्यर्थः ।

ननु सन्निपातविघातकशास्त्रान्तरप्रवृत्तिप्रयोजकसन्निपातलक्षणविधेः सर्वत्र पूर्वं प्रवृत्तेरावश्यकतया तेनैव तत्सम्बद्धप्रतियोगिनाशद्वारा तत्सम्बद्धरूपसन्निपातस्य नाशेन तदुत्तरं प्रवर्त्तमानशास्त्रेण तद्विघातस्य क्वाप्यसम्भवाद् 'रामाय' इत्यादावतिव्याप्त्यापादनपरभाष्यासङ्गतिरत आह—**स्वप्रवृत्तेरिति । तद्विघातकस्येति ।** अस्योपजीव्यविरोधन्यायमूलकतया प्रकृतिप्रत्ययसम्बन्धस्येव प्रकृतिप्रत्यययोरप्युपजीव्यत्वेन स्वप्रवृत्त्यान्यतरविघातेऽपि पश्चादन्यतरविघातकं प्रति पूर्वप्रवृत्तकार्यस्य निमित्तत्वं नेत्याशयात् ।

वस्तुतोऽकारान्ताङ्गसन्निपातलक्षणो यादेशो विशेषणसन्निपातविघातकदीर्घं प्रति न निमित्तमिति भाष्याशय इति बोध्यम्, न तूपजीव्यविरोधस्यायुक्तत्वम्,

**न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्, आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनैतत्प्रवृत्तेः ।**

**किञ्चान्तरङ्गे कर्त्तव्ये बहिरङ्गस्यासिद्धत्वेऽपि तत्र कृते तस्यासिद्धत्वे मानाभावः ।**

**किञ्चातिदेशिकसन्निपातविघाताभावमादायैतदप्रवृत्तौ 'गौरि' इत्यादौ सम्बुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तसन्निपातविघाताभावात्, तत्रैतस्याति-**

---

इति लोकन्यायमूलिकयानया सन्निपातलक्षणविधेः स्वोपजीव्यविघातकत्वेन गृहीतशास्त्रान्तरप्रवृत्तौ प्रयोजकत्वं नेति बोध्यते ।

प्रकृते दीर्घस्य यादेशं प्रत्यसिद्धत्वेन तद्विघातके शास्त्रे स्वोपजीव्य-विघातकत्वज्ञानाभावेनास्याप्राप्तेरतिव्याप्त्यापादनपरभाष्यासङ्गतिरिति शङ्कते— **न चेति । यञादीति ।** बहुपदार्थापेक्षत्वेन परनिमित्तत्वेन चास्य बहिरङ्गत्वमिति भावः । **नात्रेति ।** एवञ्च विघातरूपविशेषणज्ञानाभावेन तत्कर्त्तृकत्वरूपविशिष्ट-ज्ञानाभावेन तदप्राप्तिरिति भावः । अत्र यादेशदृष्ट्याऽसिद्धत्वम्, न तु परिभाषा-दृष्ट्या, तस्यामन्तरङ्गत्वस्य दुर्वचत्वात् ।

ननु दीर्घासिद्धत्वं किं मणिमन्त्रादिन्यायेन सन्निपातपरिभाषाप्रवृत्तिप्रति-बन्धकमुत तत्सामग्रीविघटनद्वारा । नाद्यः, मानाभावात् । न द्वितीयः, एतत्परिभाषा-प्रवृत्तिप्रयोजकीभूतसन्निपातलक्षणविधित्वरूपलिङ्गज्ञानस्य तद्विघातकत्वग्रहप्रयो-ज्यत्वाभावेन सामग्रीविघटनासम्भवेनैतत्परिभाषाप्रवृत्त्यासिद्धत्वेन तस्मिन् तज्ज्ञानाभावेऽपि वस्तुतस्तद्विघातकत्वादनया दीर्घं प्रति यादेशो निमित्तं न भवतीति बोधने बाधकाभावेन दीर्घप्राप्तेरिति चेत्, न; अस्या लोकन्यायमूलकतया लोके उपजीव्यविघातकत्वेन ग्रहोत्तरमेव तत्कार्ये सहायसम्पादनादर्शनात् तद्विघा-तकत्वज्ञानं सहायसम्पादने प्रतिबन्धकम् । प्रकृते चास्यासिद्धत्वात्तद्विघातकत्वज्ञानं दुर्लभम् । वास्तवं तद्विघातकत्वं तु नान्यस्य सहाये प्रवृत्तौ प्रतिबन्धकमिति न सन्निपातपरिभाषाप्राप्तिरिति भाष्यासङ्गतिरिति भावः ।

**एतत्प्रवृत्तेरिति ।** प्रकृतेऽन्तरङ्गत्वज्ञानार्थं यादेशदीर्घयोर्वाक्यार्थज्ञानस्य तल्लक्ष्यपर्यालोचनस्य चावश्यकतया तज्ज्ञानकाले एव तस्मिन् दीर्घे, भावितद्-विघातकत्वज्ञानस्यापि जातत्वेन तस्मिन्नसिद्धत्वारोपस्य तदप्रवृत्तौ प्रतिबन्धकत्वा-सम्भव इति भावः । ननु —असिद्धत्वारोपविषये आहार्यज्ञानस्यैव प्रवर्त्तकतया वस्तु-गतेर्ग्रहणमयुक्तमित्यरुचेराह—**किञ्चेति । मानाभाव इति ।** एवञ्चासिद्धत्वस्यै-वाप्रतीत्या दीर्घे तद्विघातकत्वज्ञानं सुलभमिति परिभाषाप्रवृत्तिर्युक्तैवेति भावः ।

ननु 'पूर्वत्र०'' ( पा० सू० ८।२।१ ) इव ''अन्तरङ्गे'' ( परि० ५० ) इत्यत्रापि विषयसप्तमीत्वस्वीकाराद् यादेशं प्रति दीर्घासिद्धत्वबोधनं युक्तमेवे-त्याह—**किञ्चेति । समाधत्ते—गौरीति । स्थानिवत्त्वेनेति ।** न चातिदेशेन

**व्याप्तिपर"क्नमेजन्तः" इति सूत्रस्थभाष्यासङ्गतिः।**

**सन्निपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत्, तर्ह्यत्रासिद्धत्वमपि कथमिति विभावय, 'अशास्त्रीयेऽसिद्धत्वाप्रवृत्तेः' "इदूदेत्" इति सूत्रे कैयटेन स्पष्टमुक्तत्वात्।**

---

स्थानिप्रयोज्यकार्यमादेशे सत्यपि भवतीत्यतिदिश्यते, न तु स्थान्यपि सन्निधाप्यते, येन सन्निपातविघातो न स्यादिति वाच्यम्, आनुमानिकस्थानिवद्भावेन स्थानिप्रयोज्यकार्यस्यैव तत्प्रयोज्यसन्निपातव्यवहारस्याप्याहार्यारोपसम्भव इत्याशयात्।

न च प्रत्ययाव्यवहितत्वरूपस्य तस्य प्रकृत्यानन्तर्यलक्षणस्य च सन्निपातस्य प्रकृतौ प्रत्यये च प्रत्येकं पर्याप्तत्वेन तस्य सुमदायवृत्तित्वाभावादानुमानिकस्थानिवद्भावेनातिदेशो दुर्वचः। श्रौतस्य तु नावसरः, अल्विधित्वादिति वाच्यम्, तस्यावध्यवधिमद्भावलक्षणसम्बन्धरूपतया स्वस्वामिभावसम्बन्धस्येव समुदायवृत्तित्वाङ्गीकारेणादोष इत्याशयात्।

ननु लोपोत्तरं स्थानिवत्त्वेनासिद्धत्वेन च तद्विघातकत्वबुद्धेरसम्भवेऽप्यतिदेशव्यापारात्पूर्वं तस्मिन् तद्विघातकत्वबुद्धेर्दुर्निवारत्वात्, सन्निपातपरिभाषाप्रवृत्त्या पूर्वं दीर्घादि नैव प्रवर्त्तेत इति चेत्, न; लक्ष्ये शास्त्रप्रवृत्तेः प्राक् तद्विघातकत्वस्य क्वाप्यसम्भवेन यत्र तद्विघातकत्वबुद्धिर्भाविनीत्यर्थस्यावश्यकतयाऽतिदेशेन तदभावबुद्धौ सत्यां भावितद्विघातकत्वबुद्धेरप्यनुदयेन परिभाषाया अप्राप्तेरित्याशयात्।

वस्तुतः--असिद्धपरिभाषाप्रवृत्तिसमकालमेवानयोपजीव्यविघातकत्वं मा भूया इत्यर्थस्य बोधनसम्भवेनात्रासिद्धत्वेऽपि फलाभावः। अत एव पुक्ह्रस्वत्वस्य 'अदीदपत्'इति भाष्यं सङ्गच्छते। अन्यथा चङ्पेक्षह्रस्वस्य णिनिमित्तपुगपेक्षया बहिरङ्गत्वेनासिद्धत्वात्तत्रास्याऽतिव्याप्त्यापादनासङ्गतिः स्पष्टैव। तथा च सन्निपातलक्षणविधेर्वस्तुतः स्वोपजीव्यविघातकशास्त्रान्तरं प्रति निमित्तत्वं नेत्येवानया बोध्यते।

ननु स्वोपजीव्यविघातकत्वेन गृहीतशास्त्रान्तरं प्रत्येवेति नियम इति यादेशं प्रति दीर्घासिद्धत्वस्याप्रतिबन्धकत्वेन परिभाषाप्रवृत्तिः सुकरेति भावः। ननु तासौ नित्यानिट्त्ववत् पूर्वापरसन्निवेशापेक्षसन्निपातस्याप्यशास्त्रीयत्वात्कथं स्थानिवत्त्वमत आह—**सन्निपातस्येति। अत्रेति।** भाविसन्निपातविघातकत्वबुद्ध्यभावरूपे कार्ये इत्यर्थः।

**उक्तःवादिति।** तत्र हि तपराणां दीर्घाणां निर्देशात् प्लुतस्य प्रगृह्यसंज्ञाया अप्रवृत्या 'अग्नी३ इति'इत्यादौ प्रगृह्याश्रयप्रकृतिभावानापत्तिमाशङ्क्य प्लुतभावी

**एवञ्च पूर्वत्रासिद्धीयेऽपि कार्यं एतत्परिभाषाप्रवृत्तिर्भवत्येवेति चेत्, न; 'कष्टाय' इति निर्देशेनैतस्या अनित्यत्वात् ।**

---

प्रकृतिभावं लभते इत्यर्थं उक्तो भाष्ये। तत्र कैय्यटः 'प्लुतो भावी यस्य स प्लुतस्थानी प्रकृतः, तस्यैव प्रकृतिभावः'।

न च 'प्लुतस्यासिद्धत्वात्स्थान्यपि प्लुतभावित्वात्कथं प्लुतव्यपदेशं लभत इत्याशङ्क्य प्लुतोऽस्य भावीति बुद्धया प्रकल्पनमेतत्। न च तत्र प्लुतस्यासिद्धत्वम्, अन्यथा प्लुतोऽसिद्ध इत्ययमपि व्यवहारो न स्यात्'इत्यबोचत्। तत्र विवरणे शास्त्रीयकार्येऽसिद्धत्वम्, बुद्ध्यानुसन्ध्यानरूपे कार्ये नासिद्धत्वम्, असिद्धवचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थमिति वार्त्तिकोक्तेरित्युक्तम्।

न च 'हर एहि' इत्यादावसिद्धत्वेनाव्यवहितत्वाभावबुद्धेरप्यसम्भवाद् वृद्ध्यापत्तिरिति वाच्यम्, शास्त्रीयकार्यस्य प्रवृत्त्यर्थं निवृत्त्यर्थं वासिद्धत्वस्य प्रवृत्तिः, न तु केवलव्यवहारे इति न दोष इति भावः।

**एवञ्चेति**। अशास्त्रीये व्यवहारेऽतिदेशाप्रवृत्तौ साधितायां सत्यामित्यर्थः। **भवत्येवेति**। यथा 'वृत्रघ्नः' इत्यत्र "कुमति च" ( पा० सू० ८।४।१३ )। इति णत्वे इत्यर्थः। यद्यपि "अत्पूर्वस्य"[१] ( पा० सू० ८।४।२२ ) इति नियमादत्र न दोषः, तथाप्युदाहरणान्तरम्, 'दत्तम्' इति बोध्यम्। तत्र "दो दद्घोः" ( पा० सू० ७।४।४६ ) इति दान्तादेशपक्षे निष्ठानत्वम्। ननु च 'अबान्धाम्' इत्यादौ धत्वस्याप्यनापत्तिः, अनित्यत्वेनादोषात्।

**अनित्यत्वादिति**। न च वकारेणैव प्रत्याहारे कर्तव्ये 'यञ्' इति प्रत्याहाराश्रयणसामर्थ्यादस्याऽप्रवृत्तिरिति वाच्यम्, "प्वादय आगणान्ताः" इति पक्षे 'जानाति' इत्यत्र ह्रस्वारणं दीर्घोच्चारणसामर्थ्यादित्युक्तम्। अत्र पक्षे 'ज्ञा' धातोः श्यनि जादेशे 'जायते' इत्यत्र दीर्घस्तु "अतो दीर्घः०" ( पा० सू० ७।३।१०१ ) इति सिद्ध्यतीति वक्तव्यम्। यदि यकारेण प्रत्याहारो न स्यात्तदा न सिद्ध्येदिति बोध्यम्।

नन्वेवमपि 'श्रीपाय' इत्यत्र कथमालोपवारणम्। न च मात्राकालिकत्वविशिष्टमवर्णत्वमत्त्वम्। तत्र "कष्टाय०" ( पा० सू० ३।१।१४ ) इनि निर्देशेन प्रापितदीर्घेण मात्राकालिकत्वांशस्य नाशेऽप्यवर्णत्वांशस्यादेशेऽप्यनुवर्त्तनात, यादृशसन्निपातं निमित्तीकृत्याग्रिमकार्योपजीव्यकार्यं प्रवृत्तम्, तत्र निर्देशेन लेशतस्तद्विघातकं प्रति निमित्तत्त्वाऽङ्गीकारेऽपि तस्य लेशतोऽनुवृत्ततदंशविघातकान्तरं प्रत्यपि निमित्तत्वाङ्गीकारे मानाभावात्, लोपेन तन्नाशे उपजीव्यविरोधः स्पष्ट

---

१. "हन्तेरत्पूर्वस्य" ( पा० सू ८.४।२२ ) इति सूत्रे योगविभागेन 'अत्पूर्वस्य' इति नियमादिति भावः।

**ययोः सन्निपातस्य विघातकं शास्त्रम्, तयोः सन्निपातनिमित्तकविधावुपादानमपेक्षितमिति तु नाग्रहः। अत एव 'दाक्षिः' इत्यत्राकारान्तप्रकृतोञ्सन्नि-**

---

एवेति वाच्यम्, ह्रस्वत्वविशिष्टावर्णस्यैव निमित्तत्वेन निमित्ततावच्छेदकधर्मनाशोत्तरं तस्य निमित्तत्वस्वीकारे मानाभावेन तस्यानुपजीव्यत्वात्।

किञ्चात्वं ह्रस्वव्यक्तिषट्कनिष्ठावर्णत्वव्याप्यजातिः। सा च दीर्घे नास्त्येवेति लोपेन तन्नाशेऽप्युपजीव्यविरोधस्य दुरुपपादत्वात्। न चावर्णत्वमात्राकालिकत्वयोः समवहितयोः प्रत्येकं दण्डचक्रयोरिव हेतुत्वं मात्राकालिकत्वशिष्टेऽवर्णे निरुक्तात्त्वव्याप्यजात्यवच्छिन्ने वाऽत्पदस्य सङ्केतेन तेन प्रत्येकं निमित्तत्वाप्रतीतेरिति चेत्, न; मात्रिकत्वविशिष्टव्यापकजात्यवच्छिन्ने एवात्पदस्य शक्तिग्रहेण मात्रिकत्वस्य कारणतावच्छेदकतावच्छेदकत्वेऽपि कारणत्वावच्छेदकत्वाभावेनात्वस्यैव कारणतावच्छेदकतया तदवच्छिन्नस्यैव तेनोपस्थित्या दीर्घेण तन्नाशे परिभाषा विरोधस्य सूपपादत्वात्।

न चैवम् "ऋत इद्धातोः" ( पा० सू० ७।१।१०० ) इति सूत्रस्थभाष्यविरोधः। तत्र हि धातुग्रहणाभावे 'मातॄणाम्' इत्यादौ दोष उक्तः। त्वद्रीत्यात्र ह्रस्वपदेन मात्राकालिकत्वविशिष्टात्त्वावच्छिन्नस्यैवोपस्थित्या दीर्घेण मात्रिकत्वांशस्य नाशेऽपि विशेष्यांशस्यादेशेऽप्यनुवृत्त्यालोपस्येव तत्रेत्वस्यापि वारणसम्भवादिति वाच्यम्, तस्यैकदेशयुक्तित्वात्। अन्यथाजन्तमुपजीव्य प्रवृत्तादीर्घस्याजन्तविघातकेत्वं प्रति निमित्तत्वासम्भवात् त्वन्मतेऽपि भाष्यासङ्गतेर्दुर्वारत्वात्।

न चैवमपि "अतोऽम्" ( पा० सू० ७।१।२४ ) इति सूत्रस्थशेखरासङ्गतिः। तत्र 'म्' इति छेदे 'हे ज्ञान' इत्यादौ प्रकृतिप्रत्यययोः[1] सन्निपातमुपजीव्य प्रवृत्तमकारादेशः तद्विघातकस्य लोपस्य निमित्तं न स्यादित्युक्तम्।

त्वद्रीत्या मकारादेशेनैव तत्सन्निपातस्य नष्टत्वेन लोपेन पुनस्तस्य नाशायोगादेतत्परिभाषाऽप्राप्तेरिति वाच्यम्, "एङ्ह्रस्वात्०" ( पा० सू० ६।१। ६९ ) इति सूत्रे 'हे ज्ञान' इत्यादौ मलोपाय, 'कतरत्' इत्यादौ लोपाभावाय चाङ्गाक्षेपव्यधिकरणान्वयहल्पदानुवृत्त्याश्रयणपरभाष्यप्रामाण्येन सन्निपातलक्षणविधेः प्रागिव स्वप्रवृत्त्यनन्तरमपि यः सन्निपातस्तद्विघातस्याप्यनिमित्तमित्यर्थाश्रयणेन परिभाषाप्रवृत्तेः सूपपादत्वात्।

ज्ञापनफलं तु 'मतौ' इत्यादौ ङ्यादेशौत्त्वसन्नियोगेन विधीयमानमत्त्वमङ्गप्रत्ययसन्निपातकृतमिति टाबभाव इति प्राहुः। **उपादानमिति**। विशिष्य तत्तद्रूपेणोपादानमित्यर्थः। अत्र मानमाह—**अत एवेति**।

---

१. 'प्रकृतिप्रत्यययायोः' इत्यपपाठः क० पु०।

पातनिमित्ताङ्गसंज्ञाऽनया परिभाषयाल्लोपस्य निमित्तं न स्यादित्याशङ्क्यानित्यत्वेन समाहितम्, "कृन्मेजन्तः" इति सूत्रे भाष्ये; 'न ह्यङ्गसंज्ञायामदन्तस्याङ्गसंज्ञा' इत्युक्तमस्ति।

न च 'कुम्भकारेभ्यः, आधये' इत्यादावव्ययसंज्ञाया अनया परिभाषया वारणपरभाष्यासङ्गतिः। अनया परिभाषया लुग् मा भूत्, अव्ययत्वं तु स्यादेव। लुका हि तदीयसन्निपातस्य विघातः, नाव्ययसंज्ञया। संज्ञाफलं त्वकच् स्यादिति वाच्यम्, एतदुदाहरणपरभाष्यप्रामाण्येन साक्षात्परम्परया वा स्वनिमित्तसन्निपातविघातकस्य स्वयमनिमित्तमित्यर्थेनादोषात्। एतेनात्राकच् स्यादित्यपास्तम्।

न च कार्यकालपक्षे लुगेकवाक्यतापन्नसंज्ञाबाधेऽप्यकजेकवाक्यतापन्ना स्यादिति वाच्यम्, अन्तरङ्गायां तदेकवाक्यतापन्नसंज्ञायां बहिरङ्गगुणादेरसिद्धत्वात्, लुगेकवाक्यतापन्ना तु न गुणादितोऽन्तरङ्गा, उभयोरपि शब्दतः सुबाश्रयत्वात्।

---

नन्वेवम् 'कतीनाम्' इत्यत्र "षट्चतुर्भ्यश्च" ( पा० सू० ७।१।५५ ) इति नुटि "नामि" ( पा० सू० ६।४।३ ) इत्यस्य चारितार्थ्यमाशङ्क्य तावन्मात्रार्थत्वे कतेर्नामित्येव ब्रूयादित्युक्तम्। तयोरुपादानाग्रहत्यागे तु तत्रापि परिभाषाविरोधसम्भवेन चारितार्थ्यापादनासङ्गतिरिति चेत्, न; अङ्गसंज्ञायां यत्पदेन तत्तत्प्रत्ययविधावुद्देश्यतावच्छेदकरूपावच्छिन्नस्यैव ग्रहणेनाकारान्तरूपविशेषणसन्निपातविरोधवदत्र तत्सन्निपातविरोधो नेत्याशयात्।

ननु 'सन्निपातलक्षणो विधिः' स्वोपजीव्यविघातकं प्रत्यनिमित्तमित्युच्यते, न तु तत्प्रयोजकं प्रत्यप्यनिमित्तम्, मानाभावादिति शङ्कते—**न चेति। आधय इति।** न चान्तरङ्गत्वादायादेशः शङ्क्यः, अपरनिमित्तकत्वेनाव्ययसंज्ञाया एवान्तरङ्गत्वात्, लुक्प्रयोजकत्वेनाव्ययसंज्ञाया प्रबलत्वाच्च।

**परम्परया वेति।** लोके स्वविरोधिविग्रहणे इव स्वविरोधिमूलविग्रहणेऽपि प्रवृत्तिदर्शनादिति भावः। कार्यकालपक्षे संज्ञानां भिन्नभिन्नत्वाल्लुगेकवाक्यतापन्नायास्तद्विघातकत्वेऽप्यकजेकवाक्यतापन्ना दुर्वारेत्याशङ्कते—**न चेति। स्यादिति।** न च प्रकृतिप्रत्यययोरानन्तर्यमुपजीव्य प्रवृत्तमेतत्वम्, अकच्प्रवृत्तौ स्वप्रकृत्यानन्तर्यं भज्येतेति कथं तन्निमित्तं भवेदिति वाच्यम्, तन्मध्यपतितन्यायेन आनन्तर्याविघातात्[1]।

नन्वेवम्, 'क्नापयति' इत्यत्र पुक्यपि यदागमन्यायेन क्नीङ्ग्रहणेन ग्रहणात् तत्राप्यानन्तर्याविघातादतिव्याप्त्यापादनपरभाष्यासङ्गतिरिति चेत्, न; स्वप्रवृत्त्यनन्तरकालिकसन्निपातस्य पुका विघातसम्भव इत्याशयात्।

**सुबाश्रयत्वादिति**[1]। न च कार्यकालपक्षेऽपि वाक्यैकवाक्यताया एवाङ्गी-

---

१. 'अङ्गत्वाविघातात्' इति पाठः क० पु०।

**"न यासयोः" इति निर्देशाच्चैषाऽनित्या। तेन नातिप्रसङ्गः। स्पष्टा चेयं "कृन्मेजन्तः" इति सूत्रे भाष्ये। अस्या अनित्यत्वे फलानि भाष्ये परिगणितानि—वर्णाश्रयः, प्रत्ययः वर्णविचालस्यानिमित्तम्, दाक्षिः। आत्वं पुग्विधेः—ज्ञापयति। पुग्ह्रस्वस्य—अदीदपत्। त्यदाद्यकारष्टाब्विधेः—या सेति। इड्विधिराकारलोपस्य—पपिवान्। "ह्रस्वनुड्भ्यां मतुप्" "अन्तोदात्तादुत्तरपदात्" इति मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य—अग्निमान्, परमवाचा। नदीह्रस्वत्वं सम्बुद्धिलोपस्य—'नदि, कुमारि' इत्यादि। यादेशो दीर्घत्वस्य—कष्टाय। इतोऽन्यत्र प्रवृत्तिरेव, 'दोषाः खल्वपि साकल्येन परिगणिताः' इति भाष्योक्तेरित्यन्यत्र विस्तरः॥ ८६॥**

**ननु 'पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः' इत्यादौ "द्विगोर्लुक्" इत्यणो लुकि "लुक्तद्धित" इति स्त्रीप्रत्ययलुक्यानुकः श्रवणापत्तिः, अत आह—**

**सन्नियोगशिष्टानामन्यतरापाय उभयोरप्यपायः॥ ८७॥**

**अत्र च "बिल्वकादिभ्यश्छस्य लुक्" इति सूत्रस्थं छग्रहणं ज्ञापकम्। तद्धि**

---

कारात्कथं शब्दतः सुबाश्रयत्वमिति वाच्यम्, बहिरङ्गपरिभाषाया अन्तरङ्गनिमित्तनिमित्तकत्वेन समानाश्रयत्ववत् संज्ञानामपि कार्यार्थत्वात् कार्यनिमित्तनिमित्तकत्वसम्भव इत्याशयाज्ज्ञापकादिति 'यका' 'सका' इत्यादौ विभक्तिनिमित्तकमत्त्वं टापोऽनिमित्तं नेति टाप्परत्वाभावादित्वाप्रवृत्तौ तद्व्यर्थमिति भावः।

**पुग्ह्रस्वेति।** ण्याकारसन्निपातलक्षणः पुक्ह्रस्वे तद्विघात इत्यनिमित्तमित्यर्थः। **साकल्येनेति।** यद्यपि 'गवाग्रम्' 'मत्याम्' 'रामेण' इत्यादि भाष्ये नोक्तं तथापि दोषाणामल्पत्वे तात्पर्यं तस्येति शिवम्॥ ८६॥

आदिना 'पञ्चधीवा' इत्यादिः। **शिष्टानामिति।** निर्धारणे षष्ठी। शिष्टौ च शिष्टौ च शिष्टौ चेत्येकशेषः। **अपाये एति।** शास्त्रतः प्राप्ते इति शेषः। **ज्ञापकमिति।** 'बिल्वक्' आदिर्येषां ते बिल्वकादयः। अत्र आदिशब्दो न प्रभृतिवाची। नडादौ कुगागमरहितस्यैव पाठेन ककारविशिष्टस्य तदादित्वासम्भवात्, कप्रत्ययान्तबिल्वकशब्दादिघटितस्य गणस्य चाभावाच्च। किन्तु प्रकारवाची। तेन कुगागमविशिष्टा लक्ष्यन्ते। न च कुगागमवत्त्वेन सादृश्यविवक्षायां नडादिषु सर्वेषु "कुग्जनस्य परस्य०" (ग० सू० ४।२।१३८) इति गहाद्यन्तर्गणसूत्रेण विहितकुग्विषयेऽपि छस्य लुगापत्तिरिति वाच्यम्, 'कुकः, छस्य लुक्' इत्येव वक्तव्ये बिल्वकादिग्रहणसामर्थ्येन कृतकुगागमानां बिल्वादीनामेव लक्षणया ग्रहणेनादोषात्।

न च प्रकारार्थकादिशब्दग्रहणे कप्रत्ययान्तस्य ग्रहणं दुर्वारमिति वाच्यम्, सूत्रे ककारोत्तरमकारप्रश्लेषे मानाभावेन कप्रत्ययान्तस्य तेन ग्रहणासम्भवात्।

**छमात्रस्य लुग्बोधनद्वारा कुकोऽनिवृत्तिर्यथा स्यादित्यर्थम्। कृतकुगागमा नडाद्यन्तर्गता बिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन।**

---

न चैवं व्यञ्जनान्तबिल्वक्शब्देन बहुव्रीहौ जश्त्वापत्त्या ककारनिर्देश एव तत्र मानमिति वाच्यम्, "यत्तदेतेभ्यः" ( पा० सू० ५।२।३९ ) इत्यादाविवानुकरण-स्वरूपभङ्गभिया 'ऐच्' पदे इव, भत्वाद् वा तदकरणेन तदुपपत्तेः।

एवञ्चात्रादिशब्देन कुगागमविशिष्टबिल्वप्रभृतय एव बोध्यन्ते। तस्माद् विहितस्य छस्य तद्धिते परे लुगित्यर्थः। "तदस्मिन्नस्तीति देशे तन्नाम्नि" ( पा० सू० ४।२।६७ ) इत्यधिकारस्थेन "नडादीनां कुक्च ( पा० सू० ४।२।९१ ) इत्यनेन कुगागमसन्नियोगेन बिल्वशब्दाच्छप्रत्यये 'बिल्वकीयो देशः'। तत्र भवार्थेऽणि 'बैल्वकं काष्ठम्' इत्युदाहरणम्। अत्रोदाहरणभूतबैल्वक्शब्दाच्छे ततः स्वार्थिक—'क' प्रत्यये कृते "बैल्वकीयम्' इति रूपमिष्यते। तत्र "यस्य०" ( पा० सू० ६।४।१४८ ) इति लोपेऽस्यापि छप्रत्ययस्य कुग्विशिष्टात् परत्वेन लुक् स्यात्, अतोऽत्र विहितविशेषणम्।

न च "नडादीनां कुक्च" ( पा० सू० ४।२।९१ ) इति छसन्नियोगेनैव कुको विधानाद् बिल्वादिभ्यश्छस्य विधानसम्भवेऽपि बिल्वकादिभ्यो विहितत्वं छस्य न सम्भवतीति वाच्यम्, नडादीनामित्यत्र श्रुतक्रमानुरोधेन "धिन्विकृण्व्योः०" ( पा० सू० ३।१।८० ) इत्यत्रेव पूर्वं कुकि "यदागमाः०" ( परि० ११ ) इत्यनेन बिल्वक्शब्दस्यापि बिल्वशब्दत्वात्, ततः छे, तस्य बिल्वकादिभ्यो विहितत्व-सम्भवात्।

तथा च बिल्वक्शब्दाद् विहितस्य छस्यैव सम्भवेन तस्यैव लुक्सिद्धेः, पुनः छग्रहणं सन्नियोगशिष्टपरिभाषया कुको निवृत्तिर्माभूत्, छमात्रस्यैव यथा स्यादिति नियमार्थम्। यदीयं न स्यात्तर्हि तदनर्थकमिति उक्तार्थे ज्ञापकमिति भावः। तदेतद् हृदि निधायाह—**कृतेत्यादिना**। एतेन छग्रहणाभावे जश्त्वाभावेन कुगागमनिर्दे-शस्यैवानिश्चयात्। प्रत्युत ककारोच्चारणेन प्रकारार्थकादिशब्दग्रहणेन कप्रत्ययान्त-स्यैव सूत्रे ग्रहणापत्त्या तस्मात् "कोपधाच्च" ( पा० सू० ४।३।१३६ ) इत्यणि 'बैल्वकम्' इत्यत्र लुगापत्त्या वृद्धिश्रवणानापत्तिः।

न च तद्धिते परत एव लुगिति वाच्यम्। एवमपि 'बैल्वकीयम्' इत्यत्राणो लुगापत्तेः। छ ग्रहणे कृते तु कप्रत्ययान्तबिल्वकशब्दाद् विहितस्य छस्यासम्भवेन कृतकुगागमस्यैव निर्देश इति न दोष इत्यपास्तम्।

कृतेऽपि छग्रहणे विहितविशेषणेन पूर्वोक्ते 'बैल्वकीयम्' इत्यत्र लुग्वारणेऽपि "बिल्वादिभ्योऽण्" ( पा० सू० ४।३।१३५ ) इति विकारार्थेऽणि, ततः के, ततो वृद्धाच्छे, के च 'बैल्वकीयम्' इत्यत्र "एकदेशविकृत०" ( परि० ३७ ) न्यायेन

**न चैवमपि छग्रहणं व्यर्थम्, कृतकुगागमानुवादसामर्थ्यादेव तदनिवृत्तिसिद्धेः, अन्यथा "बिल्वादिभ्यः" इत्येव वदेत्। लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नातिप्रसङ्ग इति वाच्यम्, ततोऽपि प्रतिपदोक्तत्वेन "बिल्वादिभ्योऽण्" इति विकाराद्यर्थस्य लुगापत्तिवारणार्थं कुगनुवादचारितार्थ्यात्। समुच्चयार्थकचशब्दयोगे तु विधेययोरेककालिकत्वैकदेशत्वनियमान्न्यायसिद्धावीयम्।**

---

बैल्वकशब्दस्यापि बिल्वकशब्दत्वे तत्समुदाये बिल्वकशब्दत्वस्यार्थसमाजसिद्धतया तत्र लुगापत्त्या कप्रत्ययान्तस्य ग्रहणेन वारयितुमशक्यत्वात्।

किञ्च बिल्वकशब्दात्संज्ञायां कन्प्रत्यये "वा नामधेयस्य" ( का० वा० १।१।७५ ) इति वृद्धसंज्ञायां ततः छे दोषस्य दुर्वारत्वात्। तस्मात् "बिल्वकादिभ्यः०" ( पा० सू० ६।४।१५३ ) इत्यत्र ककारोत्तरमकारप्रश्लेषे मानाभावेन कप्रत्ययान्तस्य न ग्रहणमित्येव युक्तम्।

स्वांशे चारितार्थ्यमस्य दुर्घटमिति शङ्कते—**न चेति**। ज्ञापकत्वेऽपीत्यर्थः। **अन्यथेति**। तदनुवादस्य कुगागमानिवर्त्तकत्वाभावे इत्यर्थः। **वदेदिति**। बिल्वादिभ्यः परस्य लुगित्यर्थे उक्तन्यायेन कुकोऽपि निवृत्तौ प्राप्तायां तदनिवृत्त्यर्थं छग्रहणस्य चारितार्थ्येन ज्ञापकत्वोपपत्तावपि सूत्रे कुग्निर्देशस्य वैयर्थ्यापत्त्या तत्सामर्थ्यादेव तदनिवृत्तिसिद्धेति सूत्रे 'छ'ग्रहणं व्यर्थमेवेति भावः।

**न्यायसिद्धाऽपोयमिति**। समुच्चार्थक--'च'-शब्देन योगे 'ईश्वरं गुरुञ्च भजस्व' इत्यादौ चशब्देन स्वसमभिव्याहृतपदार्थे कार्यान्विये इतरसाहित्यं बुध्यते।

इतरसाहित्यञ्च—इतरक्रियासम्बन्धप्रयोज्यक्रियासम्बन्धवत्त्वम्। इतरेतरयोगे तु परस्परक्रियासम्बन्धव्याप्यक्रियासम्बन्धवत्त्वरूपं साहित्यमिति भेदः। अत एव तत्र विग्रहे चद्वयप्रयोगः। समुच्चये तु न समासः, एकस्यान्यसहितस्यान्वयेऽपीतरस्य केवलस्यैवैकधर्मावच्छिन्नेऽन्वयेन चार्थेऽनेकसुबन्तस्य युगपत्प्रवृत्त्यभावात्।

एवञ्च ईश्वरकर्मकं भजनमिति बोधोत्तरम् 'ईश्वरसहितगुरुकर्मकं भजनम्' इति बोधः। साहित्यनियामकसम्बन्धस्य क्वचिदेककालिकत्वैकदेशवृत्तित्वादिः यथासम्भवमूह्यः। प्राचां मते साहित्यं प्रकार इति सहितधवखदिरकर्मकं छेदनमिति[1] बोधः।

नव्यमते समूहो द्रव्येणाभेदमापन्न एवोच्यत इति विवरणे तु साहित्यस्यैव

---

१. 'छेदनमिबोधः' इत्यपपाठः क० पु०।

**यत्तु 'णाविष्ठवत्' इत्यनेन पुंवत्त्वविधानमेतदनित्यत्वज्ञापनार्थम् । अन्यथा 'एतयति' इत्यादौ टिलोपेनैव ङीपि निवृत्ते 'सन्नियोगशिष्ट' परिभाषया तस्यापि निवृत्त्या 'एतयति' इत्यादिसिद्धौ पुंवत्त्ववैयर्थ्यं स्पष्टमेवेति "टेः" इति सूत्रे कैयटः,**

---

विशेष्यत्वं द्वन्द्वे इत्यन्यदेतत् । तथा च "श्रुवः श्रृ च" ( पा० सू० ३।१।७४ ) "परश्च" (पा० सू० ३।२।१) "परश्वधाट्ठञ्च" (पा० सू० ४।४।५८) "वनो र च" (पा० सू० ४।१।७) इत्यादिषु समुच्चयार्थकेन चेनान्यतरसाहित्यविशिष्टस्यैवान्यतरस्य विधानेनात्रान्यतरस्यापाये इतरस्याप्यपायस्य न्यायसिद्धत्वात् । अत्रापायश्च क्वचिन्निवृत्तिरूपः, क्वचिदप्रवृत्तिरूप इत्यग्रे स्पष्टीभविष्यति । अत एव "छेदादिभ्यो नित्यम्" (पा० सू० ५।१।६४) इति सूत्रे भाष्ये 'देवदत्तयज्ञदत्ताभ्यामिदं कर्त्तव्यम्' इत्युक्ते देवदत्तापाये यज्ञदत्तोऽपि न करोतीति लोकन्यायेनायं न्यायः साधितः ।

न च 'देवदत्तयज्ञदत्ताभ्यामिदं कर्त्तव्यमिदं कर्तव्यम्' इत्युक्तौ देवदत्तापाये यज्ञदत्तेनापि कार्यस्याकरणेन, तत्र कार्यस्यैवानिष्पत्तिरूपापायसम्भवेऽपि कार्यद्वयस्य यत्र शास्त्रद्वयेन[1] युगपदुत्पत्तिर्जाता तत्र कार्यप्रादुर्भावोत्तरमन्यतरस्य कार्यस्यापाये इतरस्य कार्यस्याप्यपाये कथं दृष्टान्तसङ्गतिरिति वाच्यम्; साहित्यविशिष्टयोरेव लक्ष्याधिकरणस्थितेर्विधानेन लक्ष्येऽन्यतरस्य स्थित्यभावे शास्त्रेण बोधिते इतरस्य तत्र स्थित्यभावस्यापि विधिस्वरसत एव सिद्धेः ।

अत एव 'उभाभ्यामत्र स्थेयम्' इत्युक्ते द्वयोर्मध्ये किञ्चित्कालोत्तरमन्यतरस्यापाये इतरोऽप्यपाय इति । सन्नियोगशिष्टत्वञ्च--विधिवाक्यद्वयविषयकसमूहालम्बनज्ञानजन्यप्रतीतिविषयत्वम् । "भवतष्ठक्छसौ" (पा० सू० ४।२।११५) इत्यादौ विधिवाक्यद्वयाभाव इति न तत्र सन्नियोगशिष्टत्वम् । "ठक्छौ च" ( पा० सू० ४।२।८४ ) इत्यादौ प्रत्यययोः समूहालम्बनज्ञानजन्यप्रतीतिविषयत्वाभावाच्च न दोषः ।

यद्वा विधिष्वव्याप्यविषयकज्ञानजन्यप्रतीतिविषयत्वं सन्नियोगशिष्टत्वम् । अत एव "मान्बध०" ( पा० सू० ३।१।६ ) इति सन्-अभ्यासदीर्घेण सन्नियोगशिष्टम् । अन्यथा तयोर्बोधे यौगपद्येऽपि लक्ष्ये क्रमेणैव प्रवृत्तेर्वक्तव्यतया कार्ययोर्यौगपद्यासम्भवात् सन्नियोगशिष्टत्वानापत्त्येच्छासन्नन्तेऽप्यतिप्रसक्तिः । मम तु सन्नियोगशिष्टतया मानेर्जिज्ञासायामनेन सन्नेव प्रवर्त्तत इति न दोषः ।

**सिद्धाविति ।** न च 'एतयति' इत्यत्र नकारनिवृत्तावपि 'देवदत्तहन्तृहतन्यायेन' तकारस्योज्जीवनासम्भवात् कथं तत्सिद्धिरिति वाच्यम् । यत्रापायसम्भावना तत्र पूर्वं लक्ष्ये तच्छास्त्रबोध्यकार्यस्याप्रवृत्तिरित्येव तदर्थ इत्याशयात् ।

---

१. 'वाक्यद्वयेन' इति पाठः क० पु० ।

**तत्, न; 'इडबिडमाचष्ट ऐडबिडयति' इत्यादौ पुंवत्त्वस्यावश्यकत्वात्। 'ऐनेयः, श्यैनेयः' इत्यादि तु स्थानिवत्त्वेन सिद्धमित्यन्यत्र विस्तरः॥ ८७॥**

---

**ऐडबिडयतीति।** इडविडोरपत्यमित्यर्थे "जनपद०" (पा० सू० ४।१।१६८) इत्यञि "अतश्च" (पा० सू० ४।१।१७७) इति स्त्रियां लुकि इडबिडपुंवद्भावे 'ऐडबिडयति' इति रूपं टिलोपमात्रेण सिद्ध्यतीति भावः। न चेदुदुपधेभ्यः णिच अनभिधानस्योक्तत्वेन अत्र णिजेव नेति वाच्यम्, लुङ्येवानभिधानेनाऽदोषात्। आदिना 'राज्ञीम्' 'पट्वीम्' आचष्टे 'राजयति' 'पटयति' इत्यादिसङ्ग्रहः।

**इत्यादि त्विति।** आदिना 'मानुषी' इत्यत्र "यस्य०" (पा० सू० ६।४।१४८) इति लोपेनाञो निवृत्तावपि षुको न निवृत्तिः।

**स्थानिवत्त्वेनेति।** न च स्थानिकार्यस्यादेशे "अचः पर०" (पा० सू० १।१।५७) इत्यनेनातिदेशेऽपि स्थानिनोऽसन्निधापनात्कथमपायो नेति वाच्यम्, 'वेतस्वान्' इत्यत्र "एकदेशविकृत०" (परि० ३७) न्यायेन पदत्वे कर्तव्ये स्वसन्नियोगन्यायेन पूर्वं नकारस्य निवृत्तिरूपे कार्ये कर्तव्ये स्थानिवद्भावप्रवृत्त्या स्थानिनि सति यथान्यतरापायाभावादेतत्परिभाषाया अप्रवृत्त्या नकारस्य निवृत्तिर्न भवति, तथेदानीमपीत्यभावातिदेशेनेष्टसिद्धिरित्याशयात्।

न चैवम् "अचः परस्मिन्०" (पा० सू० १।१।५७) इत्यत्र विधिशब्दे तन्त्राद्याश्रयणं व्यर्थम्, कर्मणि 'क्ति'प्रत्ययेऽपीष्टसिद्धेरिति वाच्यम्, अत्र पक्षे पूर्वस्थानिककार्यस्यैव ग्रहणापत्त्या नकारस्य स्थानषष्ठ्यन्तबोध्यत्वाभावेन तत्र स्थानिवत्त्वाप्रवृत्तेरित्याशयात्। सिद्धान्ते तु पूर्वसन्धिकार्यमात्रस्य ग्रहणान्न दोषः।

न चैवं प्रत्ययलक्षणेन छप्रत्ययस्याप्यपायाभावः "न लुमता०" (पा० सू० १।१।६३) इत्यस्य तु लुप्तप्रत्ययनिमित्तकपूर्वकार्याभावादप्राप्तेरिति वाच्यम्, लुप्तप्रत्ययनिमित्तके शास्त्रीये कार्ये एव प्रत्ययलक्षणप्रवृत्तेरङ्गीकारात्। "अचः परस्मिन्०" (पा० सू० १।१।५७) इत्यस्य त्वशास्त्रीयेऽपि प्रवृत्तेरङ्गीकारात्सन्नियोगशिष्टन्यायविषयेऽपि स्थानिवद्भावः सिद्ध्यतीति नैनेयसाम्यम्।

नन्वेवम् "न बहुव्रीहौ" (पा० सू० १।१।२९) इति सूत्रस्थशब्दरत्नविरोधः, तत्र हि "अकृतव्यूह०" (परि० ५७) परिभाषानित्यत्वे प्रकृतिप्रत्ययापत्तिवचनं ज्ञापकमिति मूलप्रतीकमादायात्रेदं चिन्त्यम्। लुक्यपि प्रत्ययलक्षणसत्त्वादत्राकृतव्यूहपरिभाषाया अप्रवृत्तेः।

"न लुमता०" (पा० सू० १।१।६३) इति निषेधस्तु प्रत्यये परतो जायमानपूर्वकार्ये एवेत्युक्तम्। तत्र कंसं घातयतीत्यादौ "अकृतव्यूह०" (परि० ५७) परिभाषया क्तल्लुकि वधादेशनिवृत्तौ प्रत्ययलक्षणेन प्रत्ययस्य

**ननु 'चुरा शीलमस्याः सा चौरी' इत्यादौ शीलम् "छत्रादिभ्यो णः" इति णे ङीप् न प्राप्नोतीत्यत आह—**

**ताच्छीलिके णेऽण्कृतानि भवन्ति ॥ ८८ ॥**

---

सत्त्वादित्युक्तिरसङ्गता। उक्तरीत्याकृतव्यूहपरिभाषाप्रवृत्तिप्रतिबन्धकरूपकार्ये प्रत्ययलक्षणाप्रवृत्तेः।

किञ्च तत्रैवाग्रे सन्नियोगशिष्टपरिभाषया कृल्लुकि वधादेशनिवृत्तौ सिद्धायां प्रत्ययापत्तिवचनस्य तदनित्यत्वे ज्ञापकत्वं समर्थितम्। सन्नियोगशिष्ट-परिभाषया तन्निवृत्तौ प्रत्ययलक्षणं नेति तदाशयः।

एवञ्च "अकृतव्यूह०" (परि० ५७) परिभाषासन्नियोगशिष्टपरिभाषाभ्यां वधादेशनिवृत्तौ, आद्ये प्रत्ययलक्षणस्य प्रवृत्तिः, द्वितीये प्रत्ययलक्षणस्याप्रवृत्ति-रित्यसङ्गतमिति चेत्, न; "धिन्विकृण्व्योः०" ( पा० सू० ३।१।८० ) इति सूत्रे वलोपविधानेऽपि "न धातु०" ( पा० सू० १।१।४ ) इति निषेधसिद्धिरिति भाष्यप्रामाण्येन सन्नियोगशिष्टकार्यविषये उभयोः समूहालम्बनैकबुद्धिविषयत्वेन नियमेन तद्बुद्धिभावभावितत्वेन वधादेशस्य प्रत्ययनिमित्तकत्वात्, लुग्विषये निमित्तविनाशसम्भावनया वधादेरप्रवृत्त्या प्रकृतिप्रत्ययापत्तिवचनं[1] ज्ञापकमिति मनोरमाशयः।

तत्र 'राजा' इत्यादौ नान्तलक्षणे दीर्घे कर्त्तव्ये हल्ङ्यादिलोपेन निमित्तनाश-सम्भावनया पूर्वं दीर्घस्याप्रवृत्तौ प्राप्तायां लोपोत्तरमपि प्रत्ययलक्षणस्य शास्त्रीये दीर्घे कर्तव्ये प्रवृत्तिसम्भवेन दीर्घसिद्ध्यैतादृशे विषये "अकृतव्यूह०" ( परि० ५७ ) परिभाषाया निष्फलत्वेनाप्रवृत्तिवदत्रापि प्रत्ययलक्षणेन प्रत्ययनिमित्तकवधादेश-स्यातिदेशसम्भवेनाकृतव्यूहेत्यस्याप्रवृत्त्या वधादेशस्य प्रवृत्तिसम्भवेन तन्निवृत्तये प्रत्ययापत्तिवचनस्य[2] चारितार्थ्यसम्भव इत्याशयात्। सन्नियोगशिष्टपरिभाषया जातस्य वधादेशस्य निवृत्तिरूपकार्यप्रवृत्तिप्रतिबन्धस्याशास्त्रीयत्वेन प्रत्ययलक्षणा-प्राप्त्या तन्निवृत्तौ सिद्धायां तद्वचनं तदनित्यत्वज्ञापकमेवेति युक्तमेवोक्त-मित्याहुः ॥ ८७ ॥

**ताच्छीलिके इति।** ननु शीलमित्येवार्थः, न तु "आक्वेस्तच्छील०" ( पा० सू० ३।२।१३४ ) इत्यत्रेव तच्छीलमित्यतः परिभाषायां 'ताच्छीलिके' इत्युक्तमिति चेत्, न; "तदस्य पण्यम्" (पा० सू० ४।४।५१) इत्यतः तदित्यनुवृत्त्या प्रथमान्तार्थसम्बन्धीशीलमित्यर्थाभिप्रायेण ताच्छीलिकत्वोक्त्यादोषात्।

---

१. 'प्रकृतिप्रत्यापत्तिवचनम्' इति पाठः क० पु०।

२. 'प्रत्यापत्तिवचनस्य' इति पाठः क० पु०।

**"अन्" इत्यणि विहितप्रकृतिभावबाधनार्थम् "कार्मस्ताच्छील्ये" इति निपातनमस्या ज्ञापकम्। ताच्छीलिकणान्तात् "अणो द्व्यचः" इति ङिब्सिद्धिरप्यस्याः प्रयोजनमिति नव्याः। ताच्छीलिक इत्युक्तेः "तदस्यां प्रहरणम्" इति णे 'दाण्डा' इत्येव। "कार्मः" इति सूत्रे भाष्ये स्पष्टा ॥ ८८ ॥**

**ननु "कंसपरिमृड्भ्याम्" इत्यादौ "मृजेर्वृद्धिः" दुर्वारा, इत्यत आह—**

**धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ॥ ८९ ॥**

---

**ज्ञापकमिति**। यद्यपि कार्मशब्देऽण्कार्यं भवतीत्येव ज्ञापयितुं युक्तम्, तथापि 'चौरी' 'तापसी' इति रूपद्वयसिद्धये सामान्यापेक्षं ज्ञापकमाश्रितमिति बोध्यम्। **प्रयोजनमिति**। अत एव **'अण्कृतानि'** इति बहुवचनं सङ्गच्छते।

**नव्या इति**। अत्रारुचिस्तु "अणो द्व्यचः" (पा० सू० ४।१।१५६) इत्यत्रापत्यार्थकाण एव ग्रहणेन "सामान्यातिदेशे०" ( परि० ११० ) इति न्यायेन तदतिदेशासम्भवान्नेदं फलं युक्तम्। अत एवोपसंहारे 'चौरी' 'तापसी' इत्यणन्तादीतीकारः सिद्धो भवतीत्येवोक्तं भाष्ये, न तूदाहरणे कार्ये वादिपदं प्रयुक्तम्।

एवञ्च बहुवचनं प्रयोगभेदाभिप्रायकमेव। इत्थञ्च कर्म शीलमस्याः 'कार्मी ब्राह्मणी' इत्यपि नेति केचित्। "छत्रादिभ्योऽण्" एव विधातव्ये 'ण'प्रत्ययकरणं ज्ञापकसिद्धस्यासार्वत्रिकत्वात्, क्वचित्तदभावाय। तेन 'छात्रा' इत्येव न ङीप्। एतेन "कार्मः०" ( पा० सू० ६।४।१७२ ) इति सूत्रं न कार्यम्, तथा न ज्ञाप्यञ्च लाघवेन ङीब्विधौ शीललक्षण'ण' ग्रहणं कर्तव्यमित्यपास्तम् ॥ ८८ ॥

**इत्यादाविति**। आदिना 'देवदृग्भ्याम्' 'उदकमुग्भ्याम्' 'वार्त्रघ्नः' 'गिरौ' इत्यादौ अमनुमृतत्वलत्वपरिग्रहः। **तत्प्रत्यये इति**। धातोरित्यधिकृत्य विहितप्रत्यय इत्यर्थः। न च 'बीभत्सते' इत्यादौ भष्भावानापत्तिः, तत्र सनः धातोरित्यधिकृत्य विधानाभावादिति वाच्यम्; धातोः प्रत्यये परतो यत्कार्यं विधीयते तद् धातुविहितप्रत्यय एवेत्यनया नियम्यते, न तु कार्यविधौ तत्प्रत्यय इत्युपस्थाप्यते, येन सकारादौ तत्प्रत्यय इति स्यात्। अतो भष्भावस्य वर्णनिमित्तकत्वान्नास्याः प्राप्तिः।

न चैवम् "अचि विभाषा" ( पा० सू० ८।२।२१ ) इति लत्वमपि वर्णाश्रयमेवेति दोष इति वाच्यम, "ग्रो यङि" (पा० सू० ८।२।२०) इति साहचर्यादिदं प्रत्यये एवेति काशिकोक्त्याऽस्यापि प्रत्ययरूपाज्निमित्तकत्वमित्याशयात्।

हरदत्तस्तु—अत्र साहचर्याश्रयणे पचाद्यच एव ग्रहणापत्तिः, तस्माद् यत्र धातोः कार्यमुच्यते तत्रानया प्रत्यय इत्युपस्थाप्यते इत्याह—'बीभत्सते' इत्यादौ तु न दोषः, "किरश्च०" ( पा० सू० ७।२।७५ ) इति निर्देशेनास्यानित्यत्वात्।

**भ्रौणहत्ये तत्वनिपातनमस्या ज्ञापकम् ।**

**'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति पाठस्तु 'प्रसृड्भिः' इत्यादौ "अनुदात्तस्य चर्दुपधस्य" इत्यमापादनेन भाष्ये दूषितः ।**

**यत्कार्यं प्रत्ययनिमित्तं तत्रेयं व्यवस्थापिका । तेन पदान्तत्वनिबन्धनम् "नशेर्वा" इति कुत्वम् 'प्रणग्भ्याम्' इत्यादौ भवत्येव । इयङादिविधौ तु नैषा, "न भूसुधियोः" इति निषेधेनानित्यत्वात् । "मृजेर्वृद्धिः" इत्यत्र भाष्ये स्पष्टा ॥ ८९ ॥**

---

केचित्तु—वस्तुतः "अचि विभाषा" ( पा० सू० ८।२।२१ ) इति सूत्रस्थ-भाष्योक्तरीत्याऽस्या वर्णनिमित्तकत्वेऽपि 'देवगिरौ' इत्यादौ व्यवस्थितविभाषया न दोष इत्याहुः । तदेतद् हृदि निधाय वक्ष्यति—**यत्कार्यं प्रत्ययनिमित्तमिति ।**

**ज्ञापकमिति ।** अन्यथा ब्राह्मणादित्वाद्भावे "ष्यञि "नस्तद्धिते" ( पा० सू० ६।४।१४४ ) इति टिलोपं बाधित्वा परत्वात् "हनस्त०" ( पा० सू० ७।३।३२ ) इति तत्वे तद्वैयर्थ्यं स्पष्टमेव । न चोपधावृद्ध्यभावनिपातनम्, आदिवृद्धिविषये तदप्रवृत्तेः । न च "ञ्नित्यादिः०" ( पा० सू० ६।१।१९७ ) इत्याद्युदात्तबाधनार्थं निपातनम्, तस्येष्यमाणत्वात् । न च कुत्वाभावार्थं निपातनमस्तु, ज्ञापकपरभाष्य-प्रामाण्येन तत्वांशेऽपि निपातनेन तस्य ज्ञापकत्वाङ्गीकारात् । केचित्तु "न क्वादेः" ( पा० सू० ७।३।५९ ) इत्यत्र नेति योगविभागात् क्वचित्कुत्वं नेत्याहुः ।

प्राचीनोक्तं खण्डयति—**धातोः स्वरूपेति ।** विशिष्येति शेषः । **पाठस्त्विति ।** वार्त्तिककृदुक्त इति शेषः । **दूषित इति ।** "मृजेर्वृद्धिः" ( पा० सू० ७।२।११४ ) इति सूत्रे यदि स्वरूपग्रहणे इत्युच्यते 'प्रसृड्भ्याम्' 'प्रसृड्भिः' अत्राम्--प्राप्नोतीत्युक्त्वा, एवं तर्हीयं परिभाषा कर्त्तव्या, **"धातोः कार्यमुच्यमानं तत्प्रत्यये०"** ( परि० ८९ ) इत्युक्तम् ।

'ओः सुपि" ( पा० सू० ६।४।८३ ) "वर्षाभ्वश्च" ( पा० सू० ६।४।८४ ) इति सूत्रम् 'खलप्वम्' इत्यादौ यणर्थम् । तत्रानयोवङोऽप्राप्त्या "इको यण०" ( पा० सू० ६।१।७७ ) इत्येव यण्सिद्धेस्तद्व्यर्थं सदनित्यत्वे ज्ञापकमिति प्राचीनोक्तं न युक्तमिति ध्वनयन्नाह—**"नभूसुधियोः"** ( पा० सू० ६।४।८५ ) इति । 'खलप्वम्' 'वर्षाभ्वम्' इत्यत्रामि पूर्वरूपबाधनार्थं तदावश्यकमिति तदाशयः ।

यदि तु 'सुधियौ' इत्यादौ "इको यणचि" ( पा० सू० ६।१।७७ ) इति प्राप्तयण्बाधनार्थमेवेदमित्युच्यते, तदा "किरश्च०" ( पा० सू० ७।२।७५ ) इति निर्देश एव ज्ञापकमिति बोध्यम् ॥ ८९ ॥

**ननु 'सर्वके, उच्चकैः' इत्यादौ सर्वनामाव्ययसंज्ञे न स्याताम्, अत आह—**

**तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ९० ॥**

**"नेदमदसोरकोः" इति सूत्रे 'अकोः' इति निषेधोऽस्या ज्ञापकः। 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति "येन विधिः" इति सूत्रे भाष्ये पाठः ॥ ९० ॥**

**ननु "गातिस्थाघुपाभूभ्यः" इति सिचो लुक् 'अपासीत्' इत्यादौ पातेरपि स्यात्, अत आह—**

**लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ ९१ ॥**

**अस्याश्च ज्ञापकः "स्वरतिसूति०" इति सूत्रे सूङिति वक्तव्ये सूतिसूयत्योः**

---

**गृह्यत इति।** यतस्तन्मध्यपतितोऽतस्तद्बोधकेन स समुदायो गृह्यत इति परिभाषार्थः। **ज्ञापक इति।** अन्यथाकज्विशिष्टस्य त्यदादित्वाभावेनात्वाप्राप्त्यादन्ताङ्गत्वाभावादकज्विशिष्टस्य 'इदम्' शब्दत्वाभावाच्च प्रतिषेधाप्राप्त्या तद्वैय्यर्थ्यं स्पष्टमेव।

न च गङ्गाप्रविष्टनदीदृष्टान्तमूलकस्य 'अकोः' इति प्रतिषेधसिद्धस्यास्य "एकदेशविकृत०" ( परि० ३७ ) न्यायवदक्तपरिमाणकार्येष्वप्रवृत्तेः 'सर्वके' इत्यादिसिद्धिर्न स्यादिति वाच्यम्, अक्तपरिमाणधर्मस्याधिके आरोपमन्तरा 'अकोः' इति प्रतिषेधस्य सार्थक्यासम्भवेन तद्विषयेऽपि प्रवृत्तेरदोषात्।

**एकदेशभूतमिति।** एकदेशवद्भूतं स्थितमित्यर्थः। तन्मध्यपतितत्वेन तत्सादृश्यं बोध्यम्। **गृह्यत इति।** अनवयवत्वेऽप्युक्तज्ञापकाद् भेदबुद्धिर्न कर्त्तव्येत्यर्थः ॥ ९० ॥

**पातेरपीति। अपासीदिति**—प्रयोगस्थरक्षणार्थकपाधातोरपीत्यर्थः। न चात्र भूसाहचर्यादलुग्विकरणस्यैव ग्रहणान्न दोषः। "गापोष्टक्" ( पा० सू० ३।२।८ ) इत्यादावपि 'गाङ् गतौ' ( भ्वा० १०१६ ) 'गा स्तुतौ' ( जु० ११८१ ) 'कै, गै, शब्दे' ( भ्वा० ९८२, ९८३ ) इत्येषामलुग्विकरणत्वात्, लुग्विकरणस्य गातेरसम्भवात्तत्साहचर्यात् पिबतेरेव ग्रहणं भविष्यतीति वाच्यम्; "गापोष्टक्" ( पा० सू० ३।२।८ ) इत्यत्र "गामादाग्रहणे०" ( परि० ११५ ) इति परिभाषया लुप्तविकरणालुप्तविकरणसाधारण्येन ग्रहणात्तत्साहचर्यासम्भवेन तत्र पिबतेर्ग्रहणायास्यावश्यकत्वात्[1]।

तेन लुप्तविकरणेन निरनुबन्धेन च साहचर्यात् 'गाङ् गतौ' (भ्वा०१०१६) 'गा स्तुतौ' ( जु० ११८१ ) इत्यनयोर्न ग्रहणमिति बोध्यम्।

**सूतिसूयत्योरिति।** 'षूङ् प्राणिगर्भविमोचने' ( अदा० ११०५ ) 'षूङ्

---

१. 'आवश्यकत्' इत्यपपाठः क० पु०।

**पृथङ्निर्देश इति कैयटः। तन्न, साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासम्भवात्।**

**ध्वनिता चेयं परिभाषा "यस्य विभाषा" इत्यत्र भाष्ये। तत्र हि 'विदितः' इति प्रयोगे निषेधमाशङ्क्य 'यदुपाधेर्विभाषा, तदुपाधेर्निषेधः "विभाषा गमहनविदविशाम्" इति सूत्रे 'शविकरणस्य ग्रहणं लुग्विकरणश्चायम्' इत्युक्तम्। तत्र चो हेतौ, यतोऽयं लुग्विकरणः, अतो विशिसाहचर्याच्छविकरणस्य ग्रहणम्, न तु हनिसाहचर्यादस्यापि, एतत्परिभाषाविरोधादिति तदाशयः।**

**अत एव परिभाषायां लुग्विकरणस्यैवेति नोक्तम्। कण्ठतस्तु भाष्ये एषा क्वापि न पठिता। "गातिस्था" इति सूत्रे 'पिबतेर्ग्रहणं कर्त्तव्यम्' इति वार्त्तिककृता 'सर्वत्रैव पाग्रहणेऽलुग्विकरणस्य ग्रहणम्' इति भाष्यकृता चोक्तम्। "स्वरतिसूति" इति सूत्रे कैयटेन च स्पष्टमुक्ता॥ ९१॥**

---

प्राणिप्रसवे' ( दिवा० १२०७ ) अनयोः षूङिति ङिन्निर्देशेनैव ग्रहणस्य "षू प्रेरणे" ( तुदा० १५०१ ) इत्यस्य व्यावृत्तेश्च सिद्ध्या पृथङ्निर्देशो ज्ञापक इति भावः।

ननु 'साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते तयोः पृथङ्निर्देशः' इति तस्य कैयटोक्तज्ञापकता[1] चिन्त्येत्याह—**तन्नेति**। तर्हि परिभाषायाः किं मूलं तत्राह—**ध्वनितेति**। **निषेधेति**। "यस्य विभाषा" ( पा० सू० ७।२।१५ ) इति शास्त्रेणेति भावः। **यदुपाधेरिति**। बहुव्रीहिप्रकृतिकपञ्चम्यन्तमेतत्। उपाधिशब्दो विशेषणपरः। **हेताविति**। भिन्नोपाधिकत्वहेतावित्यर्थः।

ननु भिन्नोपाधिकत्वं तयोः कथं सिद्धमत आह—**विशिसाहचर्यादिति**। ननु विशिसाहचर्यं नोक्तार्थे नियामकं भवितुमर्हति, परसाहचर्यापेक्षया पूर्वसाहचर्यस्यान्तरङ्गत्वात्।

किञ्चोभयसाहचर्यादुभयोर्ग्रहणस्य वापत्तिरत आह—**एतदिति**। एतत्परिभाषासत्त्वे एतदुपोद्बलितपरसाहचर्यस्यैवाश्रयणं सिद्ध्यति। एतदभावे भाष्ये तथोक्तिरयुक्ता स्यादिति भावः।

न चान्तरङ्गपरिभाषोपोद्बलितपूर्वसाहचर्यस्यापि दुर्वारत्वम्, तस्या अनित्यत्वेन प्रकृतसूत्रे "नुदविदोन्द०" (पा० सू० ८।२।५६) इति सूत्रे चाप्रवृत्त्या परसाहचर्यस्यैव तत्र ग्रहणात्। **अत एवेति**। कैयटोक्तज्ञापकेन तस्य ज्ञापयितुमशक्यत्वादेवेत्यर्थः।

ननु "सत्सूद्विष०" ( पा० सू० ३।२।६१ ) इति सूत्रे वेत्तेर्ग्रहणानापत्त्या 'वेदवित्' इत्यस्यासिद्ध्यापत्तिरिति चेत्, न; तत्र विदेत्यकारोच्चारणेऽस्य विवक्षितत्वेन लाभार्थं व्यतिरिक्तस्य सर्वस्यापि ग्रहणेनादोषात्॥ ९१॥

---

१. 'ज्ञापता' इति पाठः क० पु०।

**ननु 'प्रजिघाययिषति' इत्यादौ "हेरचङि" इति विधीयमानं कुत्वं न स्यात, अत आह—**

**प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ॥ ९२ ॥**

**अचङीति प्रतिषेध एवास्या ज्ञापकः। इयं च कुत्वविषयैव। "हेरचङि" इति सूत्रे भाष्ये स्पष्टेयम् ॥ ९२ ॥**

**ननु 'युष्मभ्यम्' इत्यादौ 'भ्यसः' इत्यत्र भ्यमिति च्छेदे भ्यसो भ्यमि कृतेऽन्त्यलोपे एत्वं स्यात्, अत आह—**

**अङ्गवृत्ते पुनर्वृत्तावविधिः ॥ ९३ ॥**

**अङ्गे = अङ्गाधिकारे वृत्तम् = निष्पन्नं यत्कार्यम्, तस्मिन् सति पुनरन्यस्याङ्गकार्यस्य वृत्तौ = प्रवृत्तावविधानं भवतीत्यर्थः।**

**एषा च "ज्यादादीयसः" इत्याद्विधानेन ज्ञापिता। अन्यथेकारलोपेन**

---

**'प्रजिघाययिषति' इत्यादाविति।** 'हि गतौ, वृद्धौ च' ( स्वा० १३३८ ) इत्यतः णिचि, ततः सनि, इडागमे 'णिच्यच आदेशो न' इति निषेधाद् वृद्धेरप्रवृत्त्या 'हि' शब्दस्य द्वित्वे, ततो णिनिमित्तकवृद्धौ णेर्गुणेऽयादेशे चाभ्यासकार्ये चोक्तरूपसिद्धिः।

**न स्यादिति।** 'अचङि' इति पर्युदासेनाभ्यासनिमित्तप्रत्यये परतः एवास्य प्रवृत्त्यात्र णिचा व्यवधानात्कुत्वानापत्तिरिति भावः।

**ज्ञापक इति।** अन्यथा 'हेः' इति प्रकृतिनिर्देशाण्ण्यन्तस्य धात्वन्तरत्वाद् हिग्रहणेनाग्रहणात्, हेश्चङ्परत्वाभावात्तत्र कुत्वनिषेधो व्यर्थ इति भावः।

**कुत्वमात्रविषयेति।** एतत्फलं तु ण्यन्तस्य हन्तेरात्मनेपदाभावः ॥ ९२ ॥

**अङ्गवृत्ते**—इत्यत्र न बहुव्रीहिः। निष्ठान्तस्य पूर्वनिपातापत्तेः। अतः सप्तमीतत्पुरुष एव युक्त इत्याशयेनाह—**अङ्गे इति। निष्पन्नम्**—शास्त्रद्वारा **यत्कार्यं तस्मिन्** ज्ञाते सतीत्यर्थः। **पुनरित्यनेन**—प्रत्यासत्तिः सूचिता। तेन लक्ष्यैक्यलाभः। पुनस्तस्यैव प्रवृत्त्यसम्भवादत आह—**अन्यस्येति।** प्रत्यासत्तिलब्धार्थमाह—**अङ्गेति। प्रवृत्ताविति।** निष्पत्तावित्यर्थः। प्राप्तायामिति शेषः। **अविधानम्** = अनिष्पत्तिः, अप्रवर्तनं प्रवृत्तिर्नेति यावत्। **लोपेनेति।** "बहोर्लोपः०" ( पा० सू० ६।४।१५८ ) इत्यतस्तदनुवृत्तेरिति भावः।

ननु 'अकृत्' इति पर्युदासेन धातुविहितप्रत्यये एव तत्प्रवृत्तिः, अन्यथा 'गार्ग्यः' इत्यत्रापि "यस्येति०" ( पा० सू० ६।४।१४८ ) लोपात् परत्वादीर्घे 'ज्यायान्' इत्यत्रैव "सकृद्गति०" ( परि० ४० ) न्यायेन लोपानापत्तिः।

किञ्च 'ज्यायान्' इत्यत्र दीर्घप्रवृत्तिद्वाराऽकारस्य कृतार्थतया सामर्थ्य-

**"अकृत्सार्व" इति दीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेव। अत एव भिन्नस्थानिकाङ्गकार्यविषयाप्येषा। इयञ्चानित्या, द्वयोरिति निर्देशात्। अनित्यत्वबललभ्यार्थमादायैव "भ्यसो भ्यम्" इति सूत्रे भाष्ये निष्ठितस्येति पठितम्।**

**केचित्तु, अनया परिभाषया न किञ्चिल्लक्ष्यं साध्यते, अत एव "ज्ञाजनोर्जा" 'ज्यादादीयसः' इति सूत्रयोरेनां ज्ञापयित्वा किं प्रयोजनमिति प्रश्ने पिबतेर्गुणप्रतिषेध उक्तः, स न वक्तव्यः, इत्येव प्रयोजनमुक्तम्, न तु लक्ष्यसिद्धिरूपम्। तदुक्तम् "भ्यसो भ्यम्" इत्यत्र 'अभ्यम्' इति च्छेदः, "शेषे लोपः" चान्त्यलोप**

---

विहरात् 'ज्येष्ठः' इत्यत्र "यस्येति०" ( पा० सू० ६।४।१४८ ) लोपापत्तिः। "प्रकृत्यैकाच्" ( पा० सू० ६।४।१६३ ) इति सूत्रं त्वादेशेष्वजुच्चारणसामर्थ्याट्टिलोपाप्रवृत्त्या प्रत्याख्यातमिति चेत्, न; 'अकृत्' इति पर्युदासेऽपि सुब्भिन्नत्वेनैव सादृश्यमङ्गीकार्यम्, न तु त्वदुक्तरीत्या। तथा सति 'कृष्णायते' इत्यादौ क्यङि दीर्घानापत्तेः। 'गार्ग्यः' इत्यादौ नित्यत्वादल्लोप इति न दोषः।

'ज्यायान्' इत्यत्रापि "प्रकृत्यैकाच्" ( पा० सू० ६।४।१६३ ) इति सूत्राभावे नित्यत्वाट्टिलोपस्यैव दीर्घात्पूर्वं प्रवृत्त्याकारोच्चारणसामर्थ्यात् "येन ना०" ( परि० ५८ ) इति न्यायेन टिलोपस्येव सामर्थ्यादल्लोपस्यापि बाधेन तदप्रवृत्त्या दीर्घे 'जायान्' इति रूपसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। **"ज्ञाजनोर्जा" ( पा० सू० ३।३।७९ ) इति।**

ननु दीर्घोच्चारणस्य "प्वादीनां ह्रस्वः" ( पा० सू० ७।३।८० ) इति प्राप्तह्रस्वबाधनार्थत्वात्सामर्थ्यं दुर्वचम्। न चैकेषां मते प्वादीनां प्रवृत्तत्वान्न दोषः।

एवमपि 'शबादेशाश्श्यनादयः' इति पक्षे "अचः परस्मिन्०" ( पा० सू० १।१।५७ ) इति स्थानिवत्त्वेन दीर्घानापत्तेः, मतान्तरे तदसम्भवादिति चेत्, न; प्रतिपदोक्तत्वात् पूर्वं ह्रस्वे ततो दीर्घे रूपसिद्ध्या दीर्घोच्चारणस्य वैयर्थ्यस्य सूपपादत्वात्, ( स्थानिवत्त्वं न। सपादसप्ताध्यायीस्थदीर्घे लोपरूपाजादेशस्यैव स्थानिवत्त्वनिषेध इति नियमानङ्गीकारस्य "वार्णादाङ्गम्" ( परि० ५६ ) इत्यत्र निरूपितत्वात् "न पदान्त०" ( पा० सू० १।१।५८ ) इति निषेधप्रवृत्तेः[१] ) सत्यां परिभाषायां पुनर्दीर्घप्रवृत्त्या तत्सार्थक्यं स्पष्टमेव। **न तु लक्ष्येति।** पिबतेरदन्तत्वान्न दोष इति तदाशयः। न चादन्तत्वेऽपि 'पिबति' इत्यत्र मध्योदात्तश्रवणापत्तिः, आद्युदात्तनिपातनेनादोषात्।

न च 'स्रग्विणमाचष्टे 'स्रजयति' दूरमाचष्टे 'दवयति' इत्यादावाङ्गेनातिदेशेन विनो लुकस्तथा यणादिलोपस्य च प्रवृत्तत्वादनया न वृद्धिरित्युक्तमा-

---

१. कोष्ठकान्तर्गतो नास्ति क० पु०।

**एव "अतो गुणे" इति पररूपेण सिद्धम् 'युष्मभ्यम्' इत्यन्यत्र निरूपितम् ।**

**एवञ्च सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यम् "भ्यसो भ्यम्" इति सूत्रस्थं च भाष्यमेकदेशयुक्तिरित्याहुः ।। ९३ ।।**

**यत्तु 'ओरोत्' इति वाच्ये "ओर्गुणः" इति गुणग्रहणात्—**

**संज्ञापूर्वकविधेरनित्यत्वम् । ९४ ।।**

**इदञ्च विधेयकोटौ संज्ञापूर्वकत्व एव । 'तेन स्वायम्भुवम्' इत्यादि सिद्धम् ।। ९४ ।।**

**तथा निलोडित्येव सिद्धे आनिग्रहणात्—**

**आगमशास्त्रमनित्यम् ।। ९५ ।।**

---

करे, एतत्परिभाषाभावे कथं तत्सिद्धिरिति वाच्यम्, भाष्यानुक्तभसंज्ञातिदेशवत्, लक्ष्यानुरोधात् क्वचिद्भावातिदेशस्याप्यङ्गीकारेणेष्टसिद्धेरित्याशयात् ।

**युष्मभ्यमिति ।** न त्वाभ्यमिति छेदे ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र सुबन्तस्यैवेति नियमात् फलभेदापत्तिरिति वाच्यम्, 'यथेच्छसि तथाऽस्तु' इति भाष्यप्रामाण्येन तत्राकचोऽनभिधानाङ्गीकारेणादोषादिति दिक् ।। ९३ ।।

**गुणग्रहणादिति ।** न च 'ओत्' इत्युक्तेऽपि तपरसूत्रप्रवृत्त्या संज्ञात्वमक्षतमेवेति वाच्यम्; स्वरूपातिरिक्तसंज्ञाया एव विवक्षणेनादोषात् । यद्यपि गुणग्रहणेन 'संज्ञापूर्वकभिन्नविधिरनित्यः' इत्यपि ज्ञापयितुं शक्यते, तथापि प्रकृतलक्ष्यानुरोधादेवमुक्तम् ।

**इत्यादि सिद्धमिति ।** आदिना 'ज्योतिषम्' 'क्षिणोति' इत्यस्य सङ्ग्रहः । आद्ये "अधिकृत्य०" ( पा० सू० ४।३।८७ ) इत्यण्, नादिवृद्धिः । द्वितीये 'क्षिणु' ( तना० १५५९ ) धातोरुप्रत्ययनिमित्तो लघूपधगुणो न । यद्यपि बृहतेर्धातोरिव शारीरकभाष्यप्रयोगे गुणाभावः फलं सम्भवति तथापि वर्हतेरित्येव तत्र पाठ इत्यभिमानः ।। ९४ ।।

**आनिग्रहणादिति ।** आगमाभावदशायां णत्वनिवृत्त्यर्थं हि आकारग्रहणम् । यद्यागमा नित्यास्तदागमरहितस्यासम्भवेन तद्व्यावृत्त्यसम्भवात् तद्व्यर्थं सज्ज्ञापकमिति भावः । न च पूधातोः क्तिनि निष्ठावद्भावेन नत्वे 'प्रपूनिः' इत्यत्रार्थवत्त्वात्तदन्तं प्रत्युपसर्गत्वाच्च[1] दोषवारणायाकारोच्चारणम्, लोड्ग्रहणं तु प्रहिमानीत्यादावनर्थकत्वात् प्रादीनामनुपसर्गत्वाच्च न दोष इति भाष्ये प्रत्याख्यातमिति वाच्यम्, अस्य 'नि' शब्दस्य लाक्षणिकत्वेनादोष इत्याशयात् ।

---

१. 'प्रत्युपगंत्वाच्च' इति पाठः क० पु० ।

**तेन सागरं तर्त्तुकामस्येत्यादि सिद्धम् ॥ ९५ ॥**

**तथा तनादिपाठादेव सिद्धे "तनादिकृञ्भ्यः" इति सूत्रे कृञ्ग्रहणात्—**

**गणकार्यमनित्यम् ॥ ९६ ॥**

**तेन 'न विश्वसेदविश्वस्तम्' इत्यादि सिद्धम् ॥ ९६ ॥**

**तथा चक्षिङो ङित्करणात्—**

**अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥ ९७ ॥**

**तेन 'स्फायन्निर्मोकः' इत्यादि सिद्धम् ॥ ९७ ॥**

**तथा विनार्थनञा समासेन "अनुदात्तं पदमनेकम्" इत्येव सिद्धे वर्जग्रहणात्—**

**नञ्घटितमनित्यम् ॥ ९८ ॥**

**तेन "नेयङुवङ्" इत्यस्यानित्यत्वात् 'हे सुभ्रु' इति सिद्धमिति, तत्, न;**

---

न चैवमपि 'प्रनिकखति' इत्यादौ णत्वव्यावृत्तये आकारोच्चारणं चरितार्थम्, 'नेर्गद०" ( पा० सू० ८।४।१७ ) इति सूत्रं तु गदादीनां शेषपदेन ग्रहणाभावायेति वाच्यम्; लोड्ग्रहणे सति आकारग्रहणवैयर्थ्यमित्याशयात् । **तर्त्तुकामस्येति सिद्धमिति** । इदं तूपलक्षणम्, 'वातैर्लोचनवारिभिः प्रमृष्टम्' इत्यत्रेडभावस्य ॥ ९५ ॥

**कृञ्ग्रहणादिति** । न च कृञ्ग्रहणमन्यत्तनादिकार्यं कृञो माभूदिति ज्ञापनार्थम् । तेन 'अकृत' इत्यत्र "तनादिभ्यस्तथासो०" ( पा० सू० २।४।७९ ) इति विकल्पेन लोपो नेति वाच्यम्; एतदभावे "ह्रस्वादङ्गात्" ( पा० सू०-८।२।२७ ) इति लोपेनेष्टसिद्ध्यादोषात् ॥ ९६ ॥

**ङित्करणादिति** । 'विचक्षणः' इत्यत्रान्तोदात्तत्वाय "अनुदात्तेतश्च०" ( पा० सू० ३।२।१४९ ) इति युजर्थं क्रियमाणेनेकारेणैवात्मने पदे सिद्धे, तदर्थं कृतेन ङित्करणेन तत्प्रयुक्तमात्मनेपदमनित्यमिति ज्ञाप्यत इति भावः ।

न चान्तेदित्त्वप्रयुक्तनुमो वारणाय ङकारस्य चारितार्थ्यात्कथं ज्ञापकत्वम्, चक्षेरयकारेण तादृशेनैव नुम्व्यावृत्तेर्युचश्च सिद्धेस्तद्वैय्यर्थ्यस्य तादवस्थ्यात् ।

न चानुदात्तेत्वप्रयुक्तस्वरोऽनित्य इति ज्ञापनेनापि तुल्यन्यायेन ङित्करणस्य ङित्त्वप्रयुक्ततत्स्वरसम्पादनेन चारितार्थ्यसम्भवात्कथमुक्तार्थे ज्ञापकमिति वाच्यम्; प्राथमिकलस्थानिकसार्वधातुकादेश एव फललाभेन पश्चादुपस्थितानुदात्तेत्वप्रयुक्त-स्वरानित्यत्वकल्पने मानाभावादित्याशयात् ॥ ९७ ॥

**सुभ्रु इति** । यद्यपि 'सुभ्रु' इति 'शरदः कृतार्थता' इत्यादाविव सामान्ये नपुंसकेनापि सिद्धम्, तथापि विशेषविवक्षायामपि तत्प्रयोगसिद्धये इदमित्यभि-

**भाष्येऽदर्शनात्, भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात्, भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात् ।**

**किञ्च ज्ञापितेऽव्यानीत्यस्य न सार्थक्यम्, आडागमशून्यप्रयोगस्याप्रसिद्धेः ।**

---

मानः । ननु भाष्येऽदर्शनेऽपि भाष्यादृष्टसूत्राणामिव भाष्याविरुद्धस्य सूत्राक्षर-स्वरससिद्धस्य प्राचीनैः प्रमितलक्ष्यसाधकत्वेनाभ्युपगतस्य स्वीकारे न किञ्चिद्-बाधकमत आह—**भाष्यानुक्तेति** ।

दृष्टप्रयोजनवत्सु सौत्राक्षरेषु तत्प्रयोजनस्यानभिधानेन तस्यान्यथा साधनेन वा प्रत्याख्यानादौ प्रवृत्तिवत् क्वचित्साक्षाद् दृष्टप्रयोजनासम्भवेऽपि परिभाषा-ज्ञापनद्वारा सार्थक्यसम्पादनाय प्रवृत्तिवदत्र गुणपदस्य परिभाषाज्ञापनद्वारा दृष्टप्रयोजनसम्भवेऽपि सूत्रतात्पर्यनिर्णयार्थं प्रवृत्तयोर्भाष्यवार्त्तिककृतोः प्रवृत्त्य-दर्शनेन सर्वनामस्थानपदवद् गुणपदस्यापि शुद्धादृष्टार्थताया एवौचित्येनादृष्टार्थेषु दोषलेशासम्भवेन विचारासहत्वात्तयोः भाष्यवार्त्तिककृतोरप्रवृत्तिकल्पनाया एवौचित्यात् ।

अन्यथोक्तवचनानां तत्साध्यफलानां च प्रमितत्वे तदंशे भाष्यवार्त्तिककृतो-रुपेक्षायां बीजाभावेन तत्त्यागे न्यूनतापत्तेः ।

न चैवं तेषां ग्रहणं व्यर्थमत आह—**भाष्येति** । **औचित्यादिति** । अत एव "शताच्च ठन्यतावशते" ( पा० सू० ५।२।२१ ) इति सूत्रे कैयटेनापिशलकाशकृ-त्स्नव्याकरणान्तरस्थम् 'शताच्च ठन्यतावग्रन्थे' इति सूत्रमुपन्यस्य तन्मते शतं परिमाणमस्येत्यर्थविवक्षायां 'शत्यः शतिको वा गोसङ्घः' इति साधुः । पाणि-निमते तु 'शतको गोसङ्घः' इत्येव साधुरिति व्याकरणयोर्विरोधमुपन्यस्य नियत-कालश्रुतिस्मृतयो व्यवस्थाहेतवो भवन्ति, कलौ पाराशरस्मृतिवत्, मुनित्रयमते-नैवाद्यत्वे साध्वसाधुप्रविभाग इत्युक्तम् ।

अत एव भाष्यरत्नावल्याम् "न य्वाभ्याम्०" ( पा० सू० ७।३।३ ) इति सूत्रे न्यङ्कोरिति न्यङ्कुशब्दे ऐज्निषेधः आपिशले व्याकरणान्तरे दृश्यते तन्मते न्यङ्कोरिदम् 'न्याङ्कवम्' पाणिनिमते तु 'नैयङ्कवम्' इत्युक्त्वाऽद्यत्वे 'नैयङ्कवम्' इत्येव साधु ।

अत एव व्याकरणान्तरेषु सत्स्वप्योषधीषु वीर्यवत्ताशक्तिवत् शब्देषु साधुत्वशक्तीरपि प्रादुर्भवतीस्तिरोभवतीश्चार्षेण चक्षुषा प्रत्यक्षयन् भगवानाचार्यः प्रयोक्तॄणां हिताय स्वोपज्ञमिदमष्टकं व्याकरणमारब्धवान् । तदुपरि तथैव भगवान्भाष्यकारः शब्दसाधुत्वशक्तीः प्रत्यक्षयन् 'त्वत्कपितृकः' इत्यादीनां काल-भेदेन साधुत्वेऽपि नेदानीं साधुत्वमित्याशयेन "न बहुव्रीहौ" ( पा० सू० १।१।२९ ) इत्यादि प्रत्याचख्यौ । तथा च 'यथोत्तरं मुनीनां प्रामाण्यम्' इति पाणिनीयानां

**आङ्ग्रहणं तु लोड्ग्रहणवदिति बोध्यम् । अत एव "घोर्लोपो लेटि वा" इति सूत्रे वेति प्रत्याख्यातम् । लोपेऽप्याट्पक्षे आटः श्रवणं भविष्यति—'दधात्' इति, अटि 'दधत्' इति । आगमशास्त्रस्यानित्यत्वे त्वाट्यसति 'दधात्' इत्यसिद्ध्या वाग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिः स्पष्टैव ।**

---

समयः । तदुक्तम्—

> यद्विस्मृतमदृष्टं वा सूत्रकारेण तत्स्फुटम् ।
> वाक्यकारो ब्रवीत्येव तेनादृष्टञ्च भाष्यकृत् ।
> तस्मादेतत् पाणिनीयं त्रिमुनीति वदन्ति हि ।। इति ।

तस्माद् भाष्यवार्त्तिकसम्बन्धस्य सूत्राक्षरेण ज्ञापितस्यापि न साधुत्वनियामकत्वम् । अत एव फलभेदेऽपि तत्र तत्र प्रत्याख्यानं सङ्गच्छत इति बोध्यम् ।

न च—

> पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
> वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।।

इति याज्ञवल्क्यस्मृत्या 'षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति भाष्योक्तस्मृत्या च व्याकरणत्वेनाङ्गत्वाददृष्टार्थत्वं कल्पनीयम् ।

व्याकरणत्वञ्च शब्दसाधुत्वप्रमितिकरणत्वम्, तच्च प्रत्याख्यातेषु ख्याशब्दस्य साधुत्वप्रतिपत्त्यनुपयोगित्वान्न सम्भवति, येन तादृशश्रुतिस्मृतिबलात्कल्प्यत इति वाच्यम्, 'वर्णेनाप्यनर्थकेन न भवितव्यम्' 'सामर्थ्ययोगान्नहि किञ्चिदत्र' इति भाष्येण ऊठादिपदानामिव परिभाषाज्ञापकत्वस्य भाष्यादावनुक्त्या व्याकरणघटकस्यापि दृष्टफलासम्भवेऽदृष्टार्थताया युक्तत्वमित्याशयात् । यद्वा सर्वनामस्थानपदवदूठादिपदस्याप्यदृष्टार्थत्वाङ्गीकार इत्याशयात् । एतेन हि वेति तावद् ग्रहणं प्रमादकृतमाचार्यस्येति भाष्ये तत्प्रत्याख्यानवदत्राप्रत्याख्यानेन "रक्षोहा०"[1] इति वार्त्तिकेऽदृष्टार्थस्यानुक्तेरत्र दृष्टार्थत्वकल्पनमेव युक्तमित्यपास्तम् ।

सर्वेषां वेदाङ्गानामदृष्टार्थत्वेऽपि प्रेक्षावत्प्रवृत्तये व्याकरणस्यासाधारणप्रयोजनकथनाय "रक्षोहा०"[2] इत्यस्य प्रवृत्ततया तत्र तदनुक्त्या न्यूनताया असम्भवात् । **लोड्ग्रहणवदिति ।** आग्रहणसत्त्वे लोड्ग्रहणस्य यथादृष्टार्थत्वं तथा लोड्ग्रहणसत्त्वे आग्रहणस्यापि-अदृष्टार्थत्वमेवेति भावः ।

यद्यपि निरासमन्तान्नयति कुलम्, 'निरानि' अत्र णत्वव्यावृत्तये लोड्ग्रहणमावश्यकम्, तथापि लाक्षणिकत्वान्न दोष इति भाष्याशयः । **अत एवेति ।** अस्या अभावादेवेत्यर्थः ।

**प्रत्याख्यातमिति ।** अत्र सूत्रे "वेति शक्यमवक्तुम् । कस्मान्न भवति, 'दधात्'

---

१. व्या० म० भ० पस्पशा०  २. व्या० म० भा० पस्पशा० ।

**एतेन यत्कैयटेन केचिदित्यादिनाऽस्यैव वाग्रहणस्य तदनित्यत्वज्ञापकतोक्ता, साऽपि चिन्त्या, प्रत्याख्यानपरभाष्यविरोधात्, तनादिसूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च । चक्षिङो ङकारस्यान्तेदित्वाभावसम्पादनेन चारितार्थ्याच्च ॥ ९८ ॥**

**एवमेव—**

**आतिदेशिकमनित्यम् ॥ ९९ ॥**

**सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥ १०० ॥**

---

इत्यत्र लोपः । अस्त्वत्र लोपः, आटः श्रवणं भविष्यति । तेनोभयं सिद्ध्यति, 'दधत्' इति 'दधात्' इत्युक्तं भाष्ये । तत्र धाञः "लिङर्थे लेट्" ( पा० सू० ३।४।७ ) इति लेटस्तिपि "इतश्च लोपः परस्मैपदेषु" ( पा० सू० ३।४।९७ ) इतीकारलोपे "लेटोऽडाटौ" ( पा० सू० ३।४।९४ ) इत्यडागमे, शपश्श्लौ द्वित्वेऽभ्यासह्रस्वे लोपे 'दधत्' इति रूपम्, आडागमे लोपे 'दधात्' इति रूपम्, लोपाभावपक्षे 'दधात्' इत्येव रूपम् । आडागमस्यानित्यत्वेनाप्रवृत्तौ लोपस्य नित्यत्वे हल्ङ्यादिलोपे 'दत्' इत्यस्यापत्त्या 'वा' ग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिः ।

न च तस्यानित्यत्वेऽप्यौत्सर्गिकप्रवृत्तिमादाय तदुपपत्त्या न दोष इति वाच्यम्, आनिग्रहणस्यागमशून्यप्रयोगस्याप्रसिद्धत्वेऽपि सम्भाविततादृशप्रयोगमादाय तस्य चारितार्थ्योपपादनवदत्राप्याडागमशून्यप्रयोगस्य सम्भावितत्वेन दोषसम्भव इत्याशयात् ।

न च कृतेऽपि 'वा' ग्रहणे लोपपक्षे आडागमाद्यभावे उक्तं रूपं दुर्वारमेवेति वाच्यम्, तथा सति 'वा' ग्रहणस्य वैय्यर्थ्यापत्त्या लोपपक्षे आगमाप्रवृत्तेरनङ्गीकारात् । **तदनित्यत्वेति** । आगमानित्यत्वे इत्यर्थः । **चारितार्थ्याच्चेति** । चेन पूर्वोक्तज्ञापकविघटनप्रकारस्य समुच्चयः ॥ ९८ ॥

**अनित्यमिति** । स्थानिवत्सूत्रेण सिद्धे प्रत्ययलक्षणसूत्रं तज्ज्ञापकमिति भावः । 'राजा' इत्यादावुभयोः नित्ययोः परत्वाद्दीर्घेऽन्तरङ्गत्वात् पदत्वे पश्चाल्लोपेनेष्टसिद्धौ तद्वैयर्थ्यमित्युभयत्रायं ज्ञापकमिति भावः ॥ ९९ ॥

**इड्विधिश्चेति** । 'श्वयित्वा' इत्यत्र 'श्वि त्वा' इति स्थिते सम्प्रसारणेडागमयोः प्राप्तौ "सम्प्रसारणं तदाश्रयश्च कार्यं बलवत्" ( परि० १२८ ) इति वचनात्पूर्वं सम्प्रसारणे प्राप्तेऽनया पूर्वमिटि "न क्त्वा सेट्" ( पा० सू० १।२।१८) इति कित्त्वनिषेधात् सम्प्रसारणाभावादिष्टं सिद्ध्यति ।

अत्र "सनि ग्रहगुहोश्च" ( पा० सू० ७।२।१२ ) इत्यत्रोकोऽनुकर्षणाय चकारकरणं ज्ञापकम् । 'रुरूषति' इत्यत्र "इको झल्" ( पा० सू० १।२।९ ) इति कित्त्वे "श्र्युकः किति" ( पा० सू० ७।२।११ ) इतीण्निषेधे तद्वैयर्थ्यम् ।

**इत्यादि भाष्यानुक्तं बोध्यम्। 'स्वायम्भुवम्' इत्यादि लोकेऽसाध्वेव,**

---

न च सनः कित्त्वात्परत्वादिट् स्यादिति चकार इति वाच्यम्, अतिदेश-विध्योरेकवाक्यतया कार्यकालपक्षे "निषेधांश्च बलीयांसः" ( परि० १२१ ) इति न्यायेन च निषेधविधेर्बलवत्त्वात्। किञ्च कित्त्वे प्रसक्ते "श्र्युकः किति" ( पा० सू० ७।२।११ ) इति निषेधविषयत्वेनेडागमाप्रवृत्तेः। सत्यां त्वस्यामिटि, अञ्झलादित्वात्तदप्राप्त्या तत्सार्थक्यम्।

**इत्यादीति**। आदिना 'क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च' इत्यस्य सङ्ग्रहः। एतत्फलम 'ग्रामे मृदु ते पचन्ति' इति। अत्रानेन कर्मत्वे, अन्वादेशेऽप्यप्रथमान्तत्वेन "सपूर्वायाः०" ( पा० सू० ८।१।२६ ) इति विकल्पापत्तिर्न। एवं 'सकृल्ल्वौ, सकृल्ल्वः' इत्यत्र कारकपूर्वत्वाद्यण्। इदञ्च नपुंसकत्वं विशेष्यनिघ्नेष्वेवेति। 'आदिं पचति' इत्यादौ कर्मत्वप्रयुक्तद्वितीयामात्रमेव।

अत्र च ज्ञापकम् "तत्प्रत्यनुपूर्वमीपलोमकूलम्" ( पा० सू० ४।४।२८ ) इति शास्त्रेण द्वितीयान्तात्प्रतीपशब्दाद् वर्तत इत्यर्थे ठग्विधानम्। अन्यथा वृतुधातोरकर्मकत्वेन द्वितीयान्तत्वाभावात् तदप्राप्त्या तदसङ्गतिः। **बोध्यमिति**। 'श्वयित्वा' इत्यादौ परत्वादिष्टसिद्ध्या न दोषः।

नन्वेवम् 'स्वायम्भुवः' इत्यादिप्रयोगाणां का गतिरत आह—**'स्वायम्भुवम्' इत्यादीति। आसाध्वेवेति**। छान्दसानां तु सर्वकार्याणां तत्र वैकल्पिकत्वादिष्टसिद्धिः। केषाञ्चित् पृषोदरादित्वात्साधुत्वं बोध्यम्। मृदु स्तोकादौ नपुंसकत्वं सामान्ये नपुंसकमित्येव सिद्धम्। द्वितीयापि फलस्य व्यपदेशिवद्भावेन फलाश्रयत्वेन कर्मत्वात्तद्विशेषणत्वात् सिद्धा।

ननु फलस्य तादात्म्येन फलाश्रयत्वेऽपि फलतावच्छेदकसम्बन्धेन फलाश्रयत्वासम्भवात् तद्विशेषणे 'स्तोकं पचति' इत्यादावेतत्परिभाषाभावे कथं द्वितीया ? न च व्यपदेशिवद्भावेन तेन सम्बन्धेन फलाश्रयत्वात्तत्सिद्धिरिति वाच्यम्, मुख्यसम्बन्धेन तत्फलाश्रयस्य तण्डुलादेः सम्भवेन ससहायत्वेन व्यपदेशिवद्भावाप्रवृत्तेः। अन्यथा व्यापारस्यापि व्यापाराश्रयत्वेन कर्त्तृत्वात्तद्विशेषणे तृत्तीयापत्तेः।

अत एव 'निजौ चत्वार एकाचः' इति भाष्यमेकदेश्युक्तिरिति मूले परिभाषेन्दुशेखरे उक्तमिति। अत एव च "तपस्तपः कर्मकस्यैव" (पा० सू० ३।१।८८) इत्यत्र तपसः क्रियाविशेषणत्वात् कर्मत्वमिति शेखरे उक्तमिति चेदुच्यते—प्राचां मते पचियज्यादीनां सर्वेषां धातूनां पाकयागादिरूपे तत्तत्फलानुकूले[1] व्यापारविशेष

---

१. 'तत्फलानुकूले' इति क० पु० पाठः।

इत्यन्यत्र विस्तरः ॥ १०० ॥

इव उत्पादनापरपर्याये करोतिवाच्ये उत्पत्त्यनुकूले उत्पत्तिव्यधिकरणे व्यापारेऽपि शक्तिः। 'घटो भवति' इत्यादौ भूधातोरप्युत्पत्त्यनुकूलव्यापारवाचित्वात्तद्वारणाय व्यधिकरणेति। तस्य च शक्ततावच्छेदकं धातुत्वम्। तत्तद्विशेषांशे शक्ततावच्छेदकं तु पचित्वादिकमेवेति भावकर्मप्रक्रियायां मूले एव स्पष्टम्।

पचति, पाकं करोतीति विवरणानुरोधात् सर्वत्र पचित्वादिनोपात्तपाकादिः धातुत्वेन वाच्यकरोत्यर्थभावनायां भाव्यत्वेनान्वेति। एवञ्च 'धावति पश्य' इत्यादौ धावनस्येव 'शोभनं पचति' इत्यादौ तदुपात्तविशेषांशस्य तदुपात्तकरोत्यर्थोत्पत्तिरूपफलवत्त्वेन मुख्यकर्मत्वात् तद्विशेषणेऽपि द्वितीया सिद्ध्यति।

न च 'पचति' इत्यादौ फूत्कारादिरूपव्यापारस्य भाव्यत्वेन तदुपात्तकरोतिवाच्योत्पत्तिरूपफलाश्रयत्वेऽपि फलविशेषणे स्तोकादौ द्वितीयोपपत्तिर्दुर्वचा। न च 'पचति' इत्यस्य विक्लितिं करोतीति विवरणानुरोधेन तदुत्पत्तेरपि धातुवाच्यत्वाङ्गीकारात् क्रियाजन्योत्पत्त्याश्रयत्वात्कर्मत्वं फलस्यापीति वाच्यम्, फलव्यापारयोर्जन्यजनकभावस्य संसर्गमर्यादयैव लाभसम्भवेन सर्वत्रोत्पत्तेरपि धातुवाच्यत्वस्वीकारे गौरवादिति वाच्यम्। न च 'पच्यते' इत्यादौ फलस्यैव विशेष्यत्वेन पदार्थैकदेशत्वाभावात्तत्र विशेषणान्वयः सूपपाद इति वाच्यम्; तत्रापि व्यापारविशेष्यकबोधस्यैव सिद्धान्तेऽङ्गीकारात्।

न च 'फलं व्यापारश्च धात्वर्थः' इति पक्षे फलस्यापि स्तोकादिविशेषणसम्बन्धसम्भवात्तत्र द्वितीया दुर्वचैवेति वाच्यम्, कृञ्वाच्यसामान्यभावनाजन्योत्पत्तिरूपफलाश्रयत्वविवक्षणेनैव तत्रापि द्वितीयासिद्धेः। 'फलावच्छिन्नव्यापारस्यैव धातुवाच्यत्वम्' इति पक्षे फलस्य पदार्थैकदेशत्वेन 'नित्यो घटः' इत्यादौ नित्यत्वादीनां घटत्वांश इव स्तोकादेरपि तद्विशेषणत्वासम्भवेनादोषात्।

न च स्तोकादिविशेष्यभूतव्यापाररूपे कर्मणि लकारापत्तिः, उक्तरीत्या सर्वेषां सकर्मकत्वेन भावे चाकर्मकेभ्य इति विशेषणसामर्थ्येन बाह्यकर्मरहितस्यैव ग्रहणेन तत्साहचर्यात् पूर्ववाक्येऽपि तादृशस्यैव कर्मणो ग्रहणेन धातुना क्रोडीकृते कर्मणि 'स्तोकमोदनः पच्यते, स्तोकमोदनस्य पक्ता' इत्यादौ न लकारषष्ठ्यादेः प्रवृत्तिरित्यदोषात्।

एवञ्च 'सुखं स्वपिति' इत्यकर्मकधातुष्वपि सुखपदेन सुखसाधनं लक्ष्यते इति न दोषः। एतेन 'मास आस्यते देवदत्तेन मासस्यासिता' इत्यादौ कर्मणि लः षष्ठी च न स्यात्। तस्य स्तोकादिवन्मुख्यकर्मत्वाभावादित्यपास्तम्। न च 'पच्यते' इत्यादौ फलस्यैव विशेष्यत्वेन पदार्थैकदेशत्वाभावात् तत्र विशेषणान्वयः सम्भवतीति वाच्यम्, तत्रापि व्यापारविशेष्यकबोधस्यैव सिद्धान्तात्।

एवञ्च 'ज्योतिष्टोमेन[१] यजेत्' इत्यादौ यजित्वादिनोपात्तत्यागानुकूल-व्यापारस्य धातुत्वेनोपात्तकृत्र्थभावनां प्रति करणत्वात्, तद्विशेषणे ज्योतिष्टोमपदे तृतीया। सर्वत्र विशेषांशस्य सामान्यभावनां प्रति भाव्यत्वेऽपि यागस्य फलभावनां प्रति श्रुत्युपात्तकरणत्वनिर्वाहाय प्रकृते तथा विवक्षाङ्गीकारात्।

न च भाव्यरूपस्य विशेषांशस्य करणत्वविवक्षायां सामान्यभावनाया भाव्याकाङ्क्षा न निवृत्तेति वाच्यम्, तस्याम् 'स्वर्गकामः' इति पदोपात्तकाम्य-स्वर्गादेर्भाव्यत्वेनान्वयसम्भव इत्याशयात्। न च नमस्कारेण देवान् पूजयतीत्यर्थे 'देवान् नमस्यति' इति प्रयोगः, इति कैयटोक्तरीत्या 'स्वर्गं यजति' इत्यस्याप्यापत्तिः। कामान्तपदोल्लिखितकालान्तरभाविस्वर्गादेरुद्देश्यतया भावनाविशेषणत्वेऽपि तस्य धातूपात्तोत्पत्तिरूपफलशालित्वाभावेन द्वितीयोत्पत्तिप्रयोजककर्मत्वासम्भवात्। अत एव 'तृप्तिकामः पचेत्' इतिवत् 'तृप्तिं पचति' इति न प्रयोगः।

न चैवम् 'शोभनं घटं करोति' इत्यादौ कृञैवोत्पत्त्यनुकूलव्यापारस्योक्तत्वाद् धातुत्वेन पुनस्तद्बोधे बोधावृत्तिप्रसङ्गात्, तद्विशेषणे शोभनशब्दे कथं द्वितीयेति वाच्यम्, घटनिष्ठोत्पत्त्यनुकूलस्य बाह्यशरीरव्यापारविशेषस्य कृञादिनोपादानेऽपि बाह्यव्यापारविशेषे औदासीन्यप्रवृत्तिरूपस्य कृतिप्रयत्नादिपदाभिलाप्यस्याभ्यन्तरस्य मानसप्रवृत्तिरूपस्य सर्वसाधारणस्य धातुत्वेन वाच्यत्वाङ्गीकारेणादोषात्।

न चैवमपि 'शोभनं भवति' इत्यादौ घटादावचेतने उक्तयत्नादिरूपप्रवृत्तेरसम्भवात् तत्र द्वितीया दुर्लभेति वाच्यम्, तत्रोत्पत्त्यनुकूलव्यापारश्च साध्यत्वेनाभिधीयमानाद्यनिष्टाश्रयतैव, यद्वा सत्कार्यवादे सदेव यावत् स्थूलरूपं न प्रतिबध्यते न तावज्जायत इत्युच्यते, इत्यभियुक्तव्यवहारेण तत्प्रतिपत्त्यनुकूलव्यापाररूपः। उभयथापि तादृशभवनयोग्यताया घटादौ सत्त्वात् तादृशयोग्यतायास्तन्निष्ठायास्तत्प्रापकत्वात्तस्या एव तत्र क्रियात्वेन वाच्यतेति सर्वमनवद्यम्।

केचित्तु—पचित्वादिनैव फूत्कारवत्तदनुकूलयत्नस्यापि बोधः, न तु धातुत्वेन धातुमात्रस्य क्रियात्ववति शक्तिः, गौरवात्, धातुत्वाद्यजानतोऽपि बोधात्। फूत्कारादिव्यापारः फूत्कारत्वादितत्तद्रूपेण वाच्यः। विक्लित्यनुकूलस्वोपलक्षिततत्तद्धर्मावच्छिन्ने पच्यादेः शक्तिः। धातूनां कदाचित् ( व्यापारविशेषस्याज्ञानदशायामिति भावः ) क्रियात्वेनापि बोध इति मञ्जूषायां स्पष्टम्। 'पचति' पाकं करोतीत्यादौ विक्लित्यादिफलस्यैव क्रियाया अपि यत्नजन्यत्वाद् भाव्यत्वेन यत्नार्थकसकर्मककरोतिना विवरणमिति न दोषः।

न चैवम् 'शोभनं पचति' इत्यादौ क्रियाविशेषणाद् द्वितीया दुर्लभा, यत्नसहितव्यापारस्यैव पचित्वादिनोपस्थित्या सामान्यभावनायां विशेषांशस्य पृथगु-

१. 'जोतिष्टोमेन' इति पाठः क० पु०।

**यदपि—ननु हन्तेर्यङ्लुक्याशीर्लिङि वधादेशो न स्यात्, अत आह—**

**प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ।। १०१ ।।**

**षाष्ठद्वित्वस्य द्विःप्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं न्यायसिद्धम् ।**

---

पस्थित्यभावेन कर्मत्वेनान्वयासम्भवादिति वाच्यम्, फलस्यैव सामान्यभावनाया अपि धातुतः सर्वत्र पृथगेवोपस्थित्या तत्र विशेषव्यापारस्य भाव्यत्वेनान्वयात्, स्तोकादेस्तद्विशेषणत्वाद् द्वितीयोपपत्तेः । सामान्यव्यापारविशेषणत्वे तु प्रथमैव ।

न च फलस्य सर्वत्र क्रियाजन्यत्वेन क्रियाजनकत्वरूपकारकत्वासम्भवात् कर्मसंज्ञाया अप्राप्तेर्द्वितीया दुर्लभेति वाच्यम्, फलोद्देशेनैव क्रियायां प्रवृत्त्या फलस्यापि विदेशस्थसम्प्रदानस्येव 'घटं करोति' इत्यादौ घटस्येव च स्वज्ञानद्वारा क्रियाजनकत्वेन कारकत्वस्य सूपपादत्वात् । एवमकर्मके 'स्तोकं पचति' इत्यादौ सुखादिरूपफलस्यैव सामान्यभावनाजन्योत्पत्तिरूपफलाश्रयत्वात्तद्विशेषणे द्वितीया सिद्धा । अत एव "तपस्तपः कर्मकस्य" ( पा० सू० ३।१।८८ ) इत्यत्र क्रियाविशेषणत्वात् कर्मत्वं तपस इति शेखरोक्तं[1] स्वरसत एव सङ्गच्छते ।

न चैवम् 'ज्योतिष्टोमेन यज' इत्यादौ फलावच्छिन्नव्यापारस्यैव धातुनोपस्थित्या त्यागरूपफलस्य व्यापारं प्रत्यकरणत्वेन व्यापारेऽन्वयासम्भवात् तद्विशेषणे तृतीया दुर्लभेति वाच्यम्, त्यागानुकूलव्यापाररूपस्य यागस्य तदुपात्तसामान्यभावनां प्रति करणत्वेन ज्योतिष्टोमादिपदानां त्यागे विशेषणत्वात् तृतीयोपपत्तेर्न दोष इत्याहुः ।

यजिपदोक्तदेवपूजा च मन्त्रकरणको देवतोद्देश्यको हविषस्त्यागः । स च 'न मम' इति स्वस्वत्वत्यागरूप आभ्यन्तरः, प्रक्षेपरूपो बाह्योऽयमेव यागः । यद्यप्यस्य भाव्यतया न करणत्वं तथापि तत्करणकव्यापारे एव यजेः शक्तिरिति न दोष इत्याहुः ।। १०० ।।

**न्यायसिद्धमिति ।** समुदायस्य वस्तुतोऽवयवानतिरिक्ततया चङ्परे णावित्यत्रेव "हनो वध०" (पा० सू० २।४।४२) इत्यत्रापि जातिनिर्देशेन "अस्ति सिचः०" ( पा० सू० ७।३।९६ ) इत्यत्र मनोरमोक्तरीत्या "ते प्राग्धातोः" ( पा० सू० १।४।८० ) इत्यत्र "अनुकरणं चानिति०" ( पा० सू० १।४।६२ ) इत्यत्र च भाष्योक्तरीत्या च तिङि परतो हन्तित्वजात्याश्रयस्योच्चारणप्रसङ्गे

---

१. 'शेखरे उक्तम्' इति पाठः क० पु० ।

**अत एव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धिरिति । तदपि न, भाष्येऽदर्शनात् । किञ्च तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधनेऽपि समुदायस्य तत्त्वबोधने मानाभावः ।**

**अत एव "दयतेर्दिगि" इति सूत्रेऽस्तेः परत्वाद् द्वित्वे कृते परस्यास्तेर्भूभावे पूर्वस्य श्रवणं प्राप्नोतीत्याशङ्क्य विषयसप्तम्याश्रयणेन परिहृतं भाष्ये ।**

---

वधिरुच्चारणीय इत्यर्थात् समुदाये वाक्यपरिसमाप्तिरिति न्यायेनोभयोरपि वधादेशेन 'वध्यात्' इति रूपम् । एवमन्यदप्यूह्यम् ।

'श्रृणोति' इत्यत्र "श्रुवः श्रृ च" ( पा० सू० ३।१।७४ ) इत्युभयोरादेशः, न तु शोश्रवीतीति रूपम् । एवम् "पाघ्राध्मा०" ( पा० सू० ७।३।७८ ) इति सूत्रविषये 'अनुतिष्ठत्' इत्यत्र यङ्लुगन्ताच्छतरि तिष्ठादेशः 'पश्यत्' इत्यत्र पश्यादेशः । एवं 'विजेज्यानः' इत्यत्र "विपराभ्याम्०" ( पा० सू० १।३।१९ ) इत्यात्मनेपदम् । 'सञ्चञ्चुराणः पशुना' इत्यत्र "समस्तृतीयायुक्तात्" ( पा० सू० १।३।५४ ) इत्यात्मनेपदम् । एवम् 'अभिलालयति' इत्यत्र श्यनित्यादि बोध्यम् ।

**सिद्धिरिति** । न चोत्तरखण्डमादाय तत्सिद्धिः, तस्यानङ्गत्वात् । न चाङ्गाधिकारे तदन्तविधेः सत्त्वान्न दोषः, समुदायस्यैव प्राचां मतेऽर्थवत्त्वेन पूर्वोत्तरखण्डयोरनर्थकत्वेनालैवानर्थकेन तदन्तविधिरिति नियमेन तदसम्भव इत्याशयात् ।

यद्यपि विधानसामर्थ्याद् जुहुधीत्यत्र न दोष इति सुवचम्, तथापि 'ममंथ, ननंष्ठ, ररन्थ, जजम्भ' इत्यादौ नुम् न स्यादिति भावः । **मानाभाव इति** । समुदायस्योद्देश्यतावच्छेदकीभूतहन्तित्वावच्छिन्नत्वे मानाभाव इति भावः ।

न च 'ऊर्णुनुवतुः' इत्यादौ तुवङ्प्रवृत्तये 'ऊर्णुनु' इत्यस्यागमस्थले इवानुमानिकस्थानिवद्भावेन धातुत्ववदत्रापि हन्तित्वं सुलभमिति वाच्यम् । "एरुः" ( पा० सू० ३।४।८६ ) इत्यादौ स्थानषष्ठीनिर्देशेन तत्रानुमानिकस्थानिवद्भावानङ्गीकारेऽपि तदन्यत्र स्थानिवद्भावाङ्गीकारेणादोषात् । 'ऊर्णुनुवतुः' इत्यादौ 'नु' शब्दे धात्ववयवत्वबुद्धेरक्षतत्वेनावयवसन्निधाने विशिष्टे एवावयविबुद्ध्या न दोषः ।

न च "भ्रस्जो रोपधयोः०" ( पा० सू० ६।४।४७ ) इति सूत्रे 'वरीभृज्यते' इत्यत्र रीको रमागमव्यावृत्तये उपदेश इत्यवश्यमनुवर्त्तनीयमिति भाष्यम् । तद्व्याख्यानावसरे तन्मध्यपतितन्यायेन तत्प्राप्तिशङ्केति कैयटोक्तं विरुद्धचेत, भ्रस्जेरार्धधातुकपरत्वाभावादिति वाच्यम्, न्यायसिद्धस्य "दयतेर्दिगि०" (पा० सू० ७।४।९ ) इति सूत्रस्थभाष्यस्य विरोधेनैतद्भाष्यस्यैकदेशयुक्तित्वमिति विवरण एव प्रतिपादितत्वेनादोषात् । तदेतद् हृदि निधायाह—**अत एवेति** ।

**अन्यथा त्वदुक्तरीत्या 'एकाज्द्विर्वचन'न्यायेन समुदायस्यैवादेशापत्तौ तदसङ्गतिः स्पष्टैव । तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्या ।**

---

**स्पष्टैवेति ।** न च 'निजौ चत्वार एकाचः, कस्य कार्येण भाव्यम्' इति जिज्ञासायामुद्देश्यतावच्छेदकत्वावच्छिन्ने समुदायरूपे एकाचि कार्यप्रवृत्ताववयवानामप्यनुग्रहः सिद्धयतीति तन्न्यायशरीरम् । प्रकृते समुदायेऽस्तित्वस्यैवाभावेन समुदायस्योद्देश्यतावच्छेदकावच्छिन्नत्वाभावात्कार्याप्राप्तेः कथमेतन्न्यायेन समुदाये कार्यापादनमिति वाच्यम्, 'वध्यात्' इत्यत्रोक्तरीत्या समुदाये कार्यप्रवृत्तिः सम्पादनीया । उक्तव्यक्तिपक्षमाश्रित्य कस्याञ्चिद्व्यक्तौ कार्यं प्रवर्त्तनीयमिति विषये समुदाये कार्यप्रवृत्तिसम्भवेऽवयवे कार्यमनुचितमिति तन्न्यायशरीराङ्गीकारेण प्रकृते न्यायप्राप्तेः सम्भवेन तदसङ्गतिरित्याशयात् ।

न च "दयतेः०" ( पा० सू० ७।४।९ ) इति सूत्रे दिग्यादेशस्य द्वित्ववारणाय द्वित्वे कृते 'साभ्यासस्य दिग्यादेशो भविष्यति' इत्युपक्रमभाष्यविरोधेनाग्रिमभाष्यमेकदेशिन इति वाच्यम्, सूत्रोच्चरितदयधातुनिष्ठदयत्वस्य प्रत्येकं विश्रान्त्या स्वाङ्गसमुदाये स्वाङ्गत्वाभाववद् दयशब्दद्वये तत्त्वस्याप्यनभ्युपगमात्, प्रत्येकं दयशब्दत्वेऽपि समुदायस्यैव प्राचीनमतेऽर्थवत्त्वेनावयवस्यानर्थकत्वात्समुदायस्यार्थवत्त्वेऽपि निर्दिश्यमानत्वाभावात्समुदाये आदेशप्रवृत्तिसमर्थनस्य सर्वथा दुरुपपादत्वादस्य भाष्यस्यैकदेशित्वकल्पनस्य न्याय्यत्वात् ।

**बोध्येति ।** तस्यैवार्थवत्त्वादिति भावः । अत्रापि "दयतेः०" ( पा० सू० ७।४।९ ) इति भाष्यमेव मानम् । अन्यथा बोधावृत्तिप्रसङ्गादुभयोरर्थवत्त्वासम्भवात्समुदायेऽन्यतरस्मिन् वार्थवत्त्वस्य वक्तव्यतया समुदायेऽर्थवत्त्वाङ्गीकारेऽपि तत्रास्तित्वाभावेनावयवेऽस्तित्वेऽप्यर्थवत्त्वाभावेन परस्य भूभाव इति भाष्यासङ्गतिः स्पष्टैव ।

नन्वेवमुत्तरखण्डस्यैवार्थवत्त्वेन धातुत्वादुपसर्गस्य मध्ये प्रयोगापत्तिः । न च द्वित्वोत्तरमभ्यासस्यानर्थक्येन धातुसंज्ञायाः प्राप्त्यभावेऽपि द्वित्वात्पूर्वं धातुत्वस्य सत्त्वेन जातसंस्कारानिवृत्त्या ततः पूर्वं प्रयोगः सिद्ध इति वाच्यम्, उत्तरखण्डस्याप्यर्थवत्त्वेन ततः प्रागपि प्रयोगापत्तेरिति चेत्, न; द्वित्वात् प्रागेवोपसर्गस्य "ते प्राग्०" ( पा० सू० १।४।८० ) इति प्रयोगनियमेन पूर्वं प्रयोगे तदुत्तरं द्वित्वे कृतेऽपि ततस्तं निष्कास्य मध्ये प्रयोगापादनासम्भवात् ।

द्वितीयस्योपसर्गस्य तूत्तरखण्डरूपधातुविषयकेन "ते प्राग्०" ( पा० सू० १।४।८० ) इति शास्त्रेण पुनर्मध्ये प्रयोगापत्तिस्तु न, उक्तार्थानामिति न्यायेन तदसम्भवात् । "ते प्राग०" ( पा० सू० १।४।८० ) इत्यस्य संज्ञानियामकत्वपक्षेऽनभिधानाद् व्यवहितप्रयोगाभाववन्मध्ये प्रयोगस्यापि वारयितुं शक्यत्वाच्च ।

**'भुसुवोः'' इत्यस्य तदन्ताङ्गस्येत्यर्थात् प्राप्तस्य गुणनिषेधस्य बोभूत्विति नियम इति न तद्विरोधः। तस्माद्धन्तेर्यङ्लुकि 'वध्यात्' इत्यादि माधवाद्युदाहृतं चिन्त्यमेवेत्यन्यत्र विस्तरः॥ १०१॥**

**यदपि ननु ''वृद्धिर्यस्याचामादिः'' इत्यत्रेक्परिभाषोपस्थितौ शालीयाद्यसिद्धिः, अत आह—**

**विधौ परिभाषोपतिष्ठते नानुवादे॥ १०२॥**

---

न च 'प्रणिजगाद' इत्यत्र ''नेर्गद०'' ( पा० सू० ८।४।१७ ) इति णत्वानापत्तिः, समुदायस्यानर्थकत्वेनार्थवदुत्तरखण्डस्य परत्वाभावात्। ''पूर्वत्रासिद्धीयमद्वित्वे'' ( परि० १२६ ) इत्यस्य तु न प्राप्तिः, तस्य णत्वविषयेऽप्रवृत्तेः 'ऊर्णुनाव' इत्यत्र शेखरे स्पष्टत्वादिति वाच्यम्, णत्वविधावप्रवृत्तिप्रतिपादनपरस्य शेखरग्रन्थस्यानित्यत्वमूलकतयेष्टस्थले प्रवृत्तिकल्पने तद्विरोधाभावात्।

एतेन ''स्थादिषु०'' ( पा० सू० ८।३।६४ ) इति सूत्रेऽभ्यासग्रहणस्य नियमार्थत्वानापत्तिः, अभ्यासस्यानर्थकत्वादित्यपास्तम्। णत्वप्रकरणे तिङन्तेऽस्य प्रकारान्तरेणापि वारणस्य कृतत्वाच्च।

नन्वेवम् ''बोभूतु'' इति प्रयोगे समुदायस्य भूत्वाभावेनोत्तरखण्डस्यानङ्गत्वेन ''भूसुवोः०'' ( पा० सू० ७।३।८८ ) इत्यस्याप्राप्त्या तस्य निपातनस्य नियमार्थत्वोपपादनपरभाष्यविरोध इत्यत आह—**भुसुवोरिति**। वस्तुतोऽङ्गावयवयोर्भुसुवोरित्यर्थेऽपि न दोष इति बोध्यम्।

**बध्यादित्यादीति**। आदिना 'विजेज्यानस्सदा शम्भुः, सञ्चञ्चुराणः पशुना' इत्यादौ ''विपराभ्याम्०'' ( पा० सू० १।३।१९ ) इति, समस्तृतीयायुक्तात्'' (पा० सू० १।३।५४) इत्यात्मनेपदमित्यादि तदुक्तिश्च चिन्त्यैवेति भावः॥१०१॥

**शालीयाद्यसिद्धिरिति**। आदिपदेन 'स्वच्छाया' इत्यादेः सङ्ग्रहः। वक्ष्यमाणपरिभाषाभावे ''इको गुणवृद्धी'' ( पा० सू० १।१।३ ) इत्यत्र 'विधीयेते' इत्यध्याहाराभावेन गुणवृद्धिशब्दाभ्यां यस्मिन् शास्त्रे गुणवृद्धी अनुवाद्यत्वेन, विधीयत्वेन वा स्तः, तत्रेक इत्यस्योपस्थितिरित्यर्थः स्यात्।

तथा च ''वृद्धिर्यस्या०'' ( पा० सू० १।१।७३ ) इत्यत्रापि तदुपस्थित्या यस्य प्रातिपदिकस्याचां मध्ये इक्स्थानिकाद्यवयवीभूतोऽच् वृद्धिस्तद्वृद्धमित्यर्थः स्यात्। तथा च औपगवीयेत्यादावेव स्यान्न तु शालीयादौ। तथा ''छे च'' ( पा० सू० ६।१।७३ ) इत्यादौ ह्रस्वपदश्रुत्याऽच्परिभाषोपस्थित्याऽच्स्थानिकह्रस्वस्यैव तुगित्यर्थापत्त्या 'ग्रामणिच्छत्रम्' इत्यादावेव स्यान्न तु 'स्वच्छाया' इत्यादाविति भावः।

नन्वत्र—**विधौ**—इत्यस्य विधिशास्त्रे इत्यर्थे तत्रैव लिङ्गस्य परिभाषोप-

**अनूद्यमानविशेषणेषु तन्नियामिका परिभाषा नोपतिष्ठत इति तदर्थः ।**

**विध्यङ्गभूतानां परिभाषाणां विधेयेनासिद्धतया सम्बन्धासम्भवेऽपि तद्विशेषेणव्यवस्थापकत्वेन चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभाव इति तर्कमूलेयम् ।**

---

स्थापकत्वम्, न तु नियमशास्त्रे इत्यर्थः स्यात् । तथा च "इन्हन्पूषा०" (पा० सू० ६।४।१२) इत्यादौ दोषः, स्थानेग्रहणवैयर्थ्यापत्तिश्च ।

विधिशब्दस्य विधेयपरत्वे यत्र विधेये लिङ्गमस्ति तत्रैवेत्यर्थे धुडादौ "आद्यन्तौ०" (पा० सू० १।१।४६) इत्यस्य, ह्रस्व इत्यादौ "अचश्च" (पा० सू० १।२।२८) इत्यस्य, "कृञ्चानुप्रयुज्यते०" (पा० सू० ३।१।४०) इत्यादौ "तस्मिन्०" (पा० सू० १।१।६६) इत्यस्य च यथाकथञ्चित् प्रवृत्तिसम्भवेऽप्यन्यत्रासम्भव एवेति सामर्थ्याद् विधिपदस्य लक्षणया विधेयविशेषणपरत्वेन विधेयविशेषणीभूते लिङ्गे परिभाषोपस्थितिर्नानूद्यमानविशेषणीभूते लिङ्गे इत्यर्थस्यैव वक्तव्यतया तत्र विध्यंशस्यैतत्परिभाषां विनापि सिद्धतयानूद्यमानविशेषणेषु परिभाषाणामप्रवृत्तिकल्पनमेवास्या मुख्यं फलमिति सूचयितुं प्रथमं निषेधवाक्यार्थमाह—**अनूद्यमानेति ।**

अनूद्यमानस्य यद्विशेषणं तत्रेत्यर्थः । अनुवादपदस्थानुवादविशेषणपरत्वं लक्षणया लिङ्गस्यानूद्यमानविशेषणत्वे इत्यर्थः । "छे च" (पा० सू० ६।१।७३) इत्यादौ लिङ्गभूतस्य ह्रस्वपदस्य यथा विधेयविशेषणता तथानुपदमेव स्फुटीभविष्यति ।

अस्या न्यायसिद्धत्वमुपपादयति—**विध्यङ्गेति ।** विविच्य विषयविशेषे विधेयव्यवस्थापकानामित्यर्थः । **सम्बन्धासम्भवेऽपीति ।** अनिर्ज्ञातसम्बन्धविशेषार्थिकायाः षष्ठ्याः "षष्ठी स्थाने०" (पा० सू० १।१।४९) इत्यादिभिः स्थानपदार्थनिरूपितसम्बन्धार्थकत्वस्य क्वचिदादावित्युद्देश्यविशेषसमर्पणद्वारा समुदाये प्राप्तस्थानितायाः क्वचिदन्त्येऽलि, क्वचित्सर्वस्मिंश्च व्यवस्थापकत्वेऽपि विधेयस्य निष्पाद्यत्वेनासिद्धतया साक्षात्तद्व्यवस्थापनासम्भव इति भावः ।

**तद्विशेषणेति ।** साक्षाद् विधेयान्वयिनीत्यर्थः । **व्यवस्थापकत्वेनेति ।** न च लोके पौर्वापर्यं दैशिकं कालिकञ्च, तच्च युगपदुपस्थितानामेवेति "इको यणचि" (पा० सू० ६।१।७७) इत्यादौ यणचोर्यौगपद्यासम्भवेन लिङ्गस्य विधेयविशेषणत्वासम्भवात् तत्र "तस्मिन्०" (पा० सू० १।१।६६) इत्यादीनामुपस्थितिर्दुर्वचेति वाच्यम्, अव्यवहितसप्तम्यन्तार्थोपश्लिष्टनिर्दिष्टपूर्वस्थानिसम्बन्धिकार्यमित्यर्थस्य परिभाषाबोध्यत्वेनैतत्परिभाषाविषये सप्तम्यन्तार्थस्योद्देश्यविशेषणत्वस्यैव मुख्यतयास्य गौणत्वाभावेनैतन्निषेधाप्रवृत्तेः ।

**किञ्च "उदीचामातः स्थाने" इति सूत्रे स्थानेग्रहणमस्या लिङ्गम्। अन्यथा "षष्ठी स्थाने" इति परिभाषयैव तल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति, तत्, न; "उदात्तस्वरितयोर्यणः" इत्यादौ "ष्यङः सम्प्रसारणम्" इति सूत्रभाष्योक्तरीत्या "अल्लोपोऽनः" इत्यादौ चैतस्या व्यभिचरितत्वात्, भाष्यानुक्तत्वाच्च। स्थानसम्बन्धो न परिभाषालभ्य इत्यर्थस्य "षष्ठी स्थाने" इति सूत्रे भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञापकासम्भवाच्च। तत्र स्थानेग्रहणं तु स्पष्टार्थमेव।**

---

न च सर्वत्र स्थान्यादेशभावविषये स्थानिनोऽप्रयोगस्यैव "षष्ठी स्थाने०" ( पा० सू० १।१।४९ ) इति सूत्रेण बोधनाल्लक्ष्ये इगचोर्युगपदवस्थानासम्भवेन कालिकं दैशिकं वा तयोः पौर्वापर्यं सम्भवतीति वाच्यम्, तयोः प्रसङ्गरूपैकज्ञानविषयत्वेन बौद्धयौगपद्यस्य पौर्वापर्यस्य च सम्भवेनादोष इत्याशयात्।

न चैवम् "मिदेर्गुणः" ( पा० सू० ७।३।८२ ) इत्यादौ लिङ्गस्य विधेयविशेषणत्वाभावादिक्परिभाषोपस्थितिस्तत्र दुर्वचा, गुणादिपदस्यापि विधेयं प्रति प्रकारत्वाङ्गीकारेणादोषात्। निषेधांशस्यैव परिभाषाबोध्यत्वेनात्रादोषाच्च।

**तद्वयर्थ्यमिति।** एतेनाचीत्यादेरिव स्थानिद्वारा विधेयविशेषणत्वमस्यापि सम्भवतीति व्यर्थं स्थानेग्रहणमित्यपास्तम्। सप्तम्यन्तेषु सामर्थ्यात् स्थानिद्वारकपरम्परासम्बन्धस्याश्रयणेऽपि षष्ठ्यन्तेषु तथाश्रयणे मानाभावात्।

**भाष्योक्तरीत्येति।** 'अनस्तक्ष्णा' इत्यादौ पूर्वाकारस्य लोपवारणाय 'यजादिस्वादिपरत्वेनाऽन्कारं विशेषयिष्यामः। अनाऽकारम्' इत्यादिभाष्यरीत्येत्यर्थः। आदिना "हे मपरे वा" ( पा० सू० ८।३।२६ ) "णौ चङि०" ( पा० सू० ७।४।१ ) "अचो रहाभ्याम्०" ( पा० सू० ८।४।४६ ) इत्यादिसङ्ग्रहः। अत्र सर्वत्रानूद्यमानविशेषणविशेषणत्वात् "तस्मिन्०" ( पा० सू० १।१।६६ ) इत्यादेरप्रवृत्त्यापत्त्या भाष्यासङ्गतिरित्यर्थः।

नन्वेष्वनित्यत्वान्न दोष इत्याह—**भाष्येति। असम्भवाच्चेति।** स्थानपदार्थस्यान्तरङ्गन्यायलभ्यत्वेन परिभाषाबोध्यत्वाभावेन तस्य परिभाषास्पृष्टत्वाभावात्। तेन परिभाषाणामप्रवृत्तिकल्पनं न युक्तमिति भावः।

न च स्थानपदार्थस्य परिभाषालभ्यत्वाभावेऽपि तदर्थनिरूपितसम्बन्धस्य परिभाषालभ्यत्वेन परिभाषास्पृष्टत्वात् तावतैव निर्वाहे स्थानेग्रहणं व्यर्थमिति तज्ज्ञापकत्वं भवेदेवेति वाच्यम्, परिभाषास्पृष्टत्वसम्पादनद्वारा तस्य ज्ञापकत्वसिद्धये "षष्ठी स्थाने०" ( पा० सू० १।१।४९ ) इत्यस्यावश्यकत्वेन तस्य प्रत्याख्यानासङ्गतेः। सूत्रद्वयविषये निर्वाहाय सामान्यपरिभाषारम्भे तदनित्यत्वकल्पने चातिगौरवात्।

**किञ्च 'विधौ परिभाषा'' इति प्रवादः "इको गुणवृद्धी'' "अचश्च" इत्यनयोर्विधीयत इत्यध्याहारमूलकः, अन्यत्र तु नास्या फलमित्यन्यत्र विस्तरः ॥ १०२ ॥**

---

नन्वेतत्परिभाषनङ्गीकारे "इको गुण०'' ( पा० सू० १।१।३ ) इत्यत्र का गतिरत आह—**किञ्चेति । मूलक इति ।** पूर्वसूत्राद् गुणवृद्धिग्रहणेऽनुवर्तमाने पुनर्गुणवृद्धिग्रहणसामर्थ्याद् विधीयत इत्यध्याहारेण 'अस्तिर्भवन्तीपरः' इति न्यायबाधेनास्यान्यत्राप्रवृत्तिः सिद्ध्यति ।

अन्यथा स्वरूपपरयोर्गुणवृद्धिपदयोः सम्बन्धे विधीयत इत्यध्याहारासम्भवेन 'अस्तिर्भवन्तीपरः' इति न्यायेन यत्र ते स्तस्तत्र इक इत्युपतिष्ठते इत्यर्थेन "वृद्धिर्यस्याचामादिः०'' ( पा० सू० १।१।७३ ) इत्यादावप्यतिप्रसङ्गः स्यादिति तत्सार्थकम् ।

एवम् "संयोगे गुरु'' ( पा० सू० १।४।११ ) इत्यादावच्परिभाषोपस्थित्या संयोगपरकाच्स्थानिकह्रस्वस्यैव गुरुसंज्ञापत्त्या "इजादेः०'' (पा० सू० ३।१।३६) इत्यत्रानृच्छग्रहणस्य वैयर्थ्यापत्त्या च विधीयत इति "अचश्च'' ( पा० सू० १।२।२८ ) इत्यत्राप्यध्याह्रियते इति भावः ।

एतेन 'मालाप्रस्थः' इत्यत्र "प्रस्थेऽवृद्धमकर्क्यादीनाम्'' ( पा० सू०, ६।२।८७ ) इत्युदात्ते सिद्धे "मालादीनाञ्च'' ( पा० सू० ६।२।८८ ) इति ज्ञापकाद् विधीयत इत्यध्याह्रियते इत्यपास्तम् । नामधेयविषये "वा नामधेयस्य'' ( का०-वा० १।१।७५ ) इति वृद्धत्वेन पर्युदासप्रवृत्त्या तद्वैयर्थ्याभावात् ।

नन्वनयोर्विधीयत इत्यध्याहारेण निर्वाहेऽपि "क्ङिति च'' ( पा० सू०-१।१।५ ) इत्यादौ दोषो दुर्वार एवेत्यत आह—**अन्यत्रेति ।** "क्ङिति च'' ( पा० सू० १।१।५ ) इत्यादौ सति सप्तमीत्वात् "तस्मिन्०'' (पा० सू०१।१।६६) इत्यस्याप्राप्तिरिति, तदुपस्थितावपि ज्ञापकेन व्यञ्जनव्यवधानेऽपि प्रवृत्त्यङ्गीकाराद्वा न दोषः ।

एतेनाचीत्यस्य यण्विशेषणत्वे "कृञ्चानुप्रयुज्यते लिटि'' ( पा० सू० ३।१।४० ) इत्यत्रेवाजुपश्लिष्टस्य यणो विधानापत्त्या दधीत्यत्रापि यण्प्रसङ्गः । यदीक इत्यस्य विशेषणं तदानूद्यमानविशेषणत्वापत्तिः । किञ्च 'रामेभ्यः' इत्यादौ दीर्घैत्वयोर्यञ्झलनन्तराकारस्थानिकत्वस्य युगपत्सम्भवेनासम्भवरूपविप्रतिषेधानापत्तिश्च ।

न च 'एकः स्थानी द्वावादेशौ, न चास्ति सम्भवः' इति भाष्योक्तरीत्या विरोधव्युत्पादनं सुवचम्, स्थाने द्विर्वचनविषये "एचोऽयवायावः'' ( पा० सू० ६।१।७८ ) इत्यादिविषये चैकस्य स्थाने द्वयोः प्रवृत्तिवदेकादेशविषये द्वयोः स्थाने

**ननु 'नमस्करोति देवान्'**

---

एकस्य प्रवृत्तिवच्च 'रामेभ्यः' इत्यादावपि स्वस्वनिमित्तानन्तर्यस्य स्थानिन्यक्षतत्वेन युगपदादेशद्वयापत्तेरिति परास्तम् ।

"तस्मिन्०" ( पा० सू० १।१।६६ ) इत्यादिविषये स्थानिद्वारकविशेषणस्यैव सम्भवेन तस्यैव मुख्यतया तस्यानूद्यमानविशेषणत्वानङ्गीकारेणानूद्यमानविशेषणविशेषणे एवाप्रवृत्त्यङ्गीकाराद्, "विधौ परिभाषा०" (परि० १०२) इति न्यायानङ्गीकाराच्च, अजुपश्लिष्टस्येक उच्चारणप्रसङ्गे यणुच्चारणीय इत्युक्तौ यत्र कुत्रापि यणुच्चारणापत्तिवारणाय प्रत्यासत्त्या स्थान्युच्चारणकाले एव आदेशोच्चारणस्य शास्त्रतात्पर्यविषयत्वेन तस्य स्वस्य निमित्तसमनन्तरपूर्वकालत्वेन शास्त्रद्वयबोध्यकार्यद्वयविषये युगपदुभयोः स्वस्वनिमित्तानन्तर्यासम्भव इत्याशयात् ।

अत एव "अदस औ सुलोपश्च" ( पा० सू० ७।२।१०७ ) इति सुलोपविधानं चरितार्थमिति दिक् ।। १०२ ।।

**नमस्करोति देवानिति ।** स्वनिष्ठापकृष्टत्वज्ञानानुकूलव्यापारो[1] नमः पदार्थः । तत्र बोधरूपफलाश्रयतया देवानां कर्मत्वम् ।

नन्वत्र नमश्शब्दस्य गतित्वेन गतीनामुपसर्गवद् द्योतकतया श्रोतृबोधार्थं तत्प्रयोगेऽपि कृञ एव प्रणत्यर्थकत्वेन देवानां कर्मत्वेन तत्रैवान्वयविवक्षया नमःपदार्थे सम्बन्धित्वेनान्वयाभावादेव नमश्शब्देनायोगादुपपदार्थसम्बन्धनिमित्तकषष्ठ्या अप्राप्त्या तदपवादभूतायाश्चतुर्थ्या अप्यप्राप्त्यात्रैतत्परिभाषोपन्यासो व्यर्थ इति चेत्, न; सिद्धान्ते षष्ठीविषये एवास्य प्रवृत्तिसम्भवेऽप्यस्यामवस्थायां परिभाषाभावात् 'नमस्करोति देवान्' इत्यादौ नमश्शब्दद्योत्यकृञ्वाच्येन तदर्थेन योगात्परत्वादपवादत्वाद् वा द्वितीयां बाधित्वा चतुर्थ्यापत्त्या तद्वारणाय परिभाषोपन्यासात् ।

न चार्थवत्परिभाषयाऽर्थबोधकस्यैव ग्रहणादत्र द्योतकतयाऽर्थवन्नमश्शब्दस्य योगाभावान्नात्र चतुर्थ्याः प्राप्तिरिति वाच्यम्, द्योत्यार्थमादायास्याप्यर्थवत्त्वस्य सूपपादत्वात् । अन्यथोपसर्गाणां द्योतकतया क्वाप्यर्थवत्त्वासम्भवादुपसर्गनिमित्तककार्येऽर्थवत्परिभाषया अप्रवृत्त्यापत्त्या वनानि विशन्तीत्यत्रापि "नेर्विशः" ( पा० सू० १।३।१७ ) इत्यस्यापत्तेः ।

न च 'सर्पिषोऽपि स्यात्' इत्यादौ कर्मप्रवचनीयापिद्योत्यबिन्दुपदार्थेऽन्वयेन सर्पिषः कर्मप्रवचनीययुक्तत्वेऽपि यथा न द्वितीया तथेहापि नमश्शब्दद्योत्यकृञ्वा-

---

१. 'स्वनिष्ठापकृष्टत्वप्रतिपत्त्यनुकूलव्यापारः' इति पाठः क० पु० ।

**'नमस्यति देवान्' इत्यादौ "नमः स्वस्ति०" इति चतुर्थी दुर्वारा, इत्यत आह—**

---

च्यप्रणत्यर्थान्वयेऽपि न चतुर्थीति वाच्यम्, "कर्मप्रवचनीययुक्ते०" (पा० सू० २।३।८) इत्यस्य कर्मप्रवचनीयद्योत्यसम्बन्धे प्रतियोगिनि द्वितीयेत्यर्थात्तत्रापि-द्योत्यदौर्लभ्यप्रयुक्तदौर्लभ्यरूपसम्बन्धस्य विन्दुः प्रतियोगी न सर्पिरिति तत्र न दोषः। प्रकृते तु विनिगमनाविरहाद् वाच्येन वा द्योत्येन वार्थेन योग इति चतुर्थी-प्राप्तिः सम्भवतीति भावः।

ननु 'रावणाय नमस्कुर्याः' इति भट्टिप्रयोगे चतुर्थ्यनापत्तिः। न च तन्नानुकूलयितुमित्यर्थेन, 'स्वयम्भुवे नमस्कृत्य' इतिवदुपपत्तिः, रावणस्य सीतां प्रति स्वयमेवानुरक्तत्वेनाप्रतिकूलत्वात्तथार्थवर्णनस्यायुक्तत्वात्, "नमः स्वस्तिः०" (पा० सू० २।३।१६) इति चतुर्थीति तद्व्याख्यानजयमङ्गलाग्रन्थविरोधाच्च। "रावणाय नमस्कुर्यास्स्यात् सीते स्वस्ति ते ध्रुवम्" इति क्रमेण सूत्रोदाहरण-प्रक्रमभङ्गापत्तेश्चेति चेत्, न; कर्मणः शेषत्वविवक्षया द्वितीयाया अप्राप्तौ सम्बन्ध-सामान्ये प्राप्तषष्ठीं वाधित्वानेन चतुर्थीसम्भवेन तदुपपत्तेः।

केचित्तु नमश्शव्दार्थस्यैव कर्मत्वम्, रावणोद्देश्यकं प्रणामं कुरु, इत्यर्थ इत्याहुः। तदसत्, गतिसंज्ञकस्य द्योतकत्वेन तस्य पृथगर्थोपस्थापकत्वाभावात्। एतेन "नमः स्वस्ति०" (पा० सू० २।३।१६) इति सूत्रे स्वस्त्यादिसाहचर्यात् स्वरादिपठितस्यैव नमश्शव्दस्य ग्रहणादत्रोर्यादित्वान्न दोष इत्यपास्तम्। "स्वस्ति-र्भवतु विप्राय, शेषाय धूतकलये नमामि" इत्यभियुक्तप्रयोगविरोधात, तयोर्वैषम्ये वीजाभावाच्च।

**नमस्यतीति।** "नमो वारिवश्चित्रङः०" (पा० सू० ३।१।१९) इत्यत्राधिकृतस्य करणे इत्यस्याभिधानशक्तिस्वाभाव्यात् क्रियाविशेषणपरत्वम्। तेन नमसः पूजारूपव्यापारे, पूजा च द्रव्यत्यागः, वरिवसः परिचर्यायाम्, चित्रङ आश्चर्ये क्यच्। नमः पदार्थस्य तत्र करणत्वेनान्वयः। नमस्कारेण पूजयतीत्यर्थः इति कैयटादयः।

ननु नमस्कारेण पूजयतीति कैयटोक्तार्थे देवानां प्रीत्यनुकूलद्रव्यत्यागरूप-पूजार्थे कर्मत्वेनान्वयेऽपि नमःपदार्थेऽन्वयाभावेन चतुर्थ्यापादनमसङ्गतम्। न च नमःपदार्थेऽप्युद्देश्यत्वेनान्वयाच्चतुर्थ्यापादनं युक्तम्, प्रधानव्यापारजन्यफलाश्रयत्वेन कर्मत्वस्य प्रधानकार्यत्वेन बलवत्त्वात् द्वितीयोपपत्तिः।

न च नमः पदार्थे एव शाब्दोऽन्वयः, क्यजर्थे आर्थान्वय इति वाच्यम्, प्रधानस्य तत्साकाङ्क्षत्वे तत्रान्वयं विहायान्यत्रान्वयस्यायुक्तत्वात्।

## उपपदविभक्तेः कारकविभक्तिर्बलीयसी ।। १०३ ।।

**कारकविभक्तित्वञ्च क्रियाजनकार्थकविभक्तित्वम् । तच्च प्रथमाया अप्यस्तीति सापि कारकविभक्तिरिति "सहयुक्ते०" इत्यादिसूत्रेषु भाष्ये ध्वनितम् ।**

---

किञ्च देवदत्तस्य घटीयतीत्यादौ वृत्तावुपसर्जनीभूतघटपदार्थे देवदत्तादेरिव देवानामपि नमःपदार्थे उद्देश्यत्वेनान्वयासम्भवान्नमःशब्देन योगाभावाच्चतुर्थ्या अप्राप्त्या तत्र तद्वारणायैतत्परिभाषोपन्यासासङ्गतिरिति चेत्, न; पूजार्थकनमःशब्दात् करोतीत्यर्थे क्यज्विधानेन क्यजन्तधातूपस्थाप्यपूजारूपफलाश्रयत्वाद् देवानां कर्मत्वाद् द्वितीयावत्, देवानां पूजां करोतीत्यर्थान्नमःशब्दस्य देवसम्बन्धोऽस्तीति षष्ठीं बाधित्वा चतुर्थ्या अपि प्राप्तिः सम्भवतीत्याशयात् ।

फलत्वञ्च—कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वे सति तद्धात्वर्थत्वम् । 'पश्य मृगो धावति' इत्यादौ धावनादेः फलत्ववारणाय तद्धात्विति । अन्यथा प्रधानानुरोधिकर्मत्वस्य बलवत्त्वान्मृगस्य कर्तृत्वं न स्यात । 'स्तोकं पचति' इतिवद् विशेषणयोगोऽपि भवतीति बोध्यम् ।

**बलीयसीति** । बलवच्छब्दादीयसुनि "विन्मतोः०" ( पा० सू० ५।३।६५ ) इति लुकि रूपम् । **क्रियाजनकार्थकेति** । क्रियाजनकत्वेन बोधविषयीभूतो यः कर्मादिरूपोऽर्थः, तदर्थकेत्यर्थः । **ध्वनितमिति** । तत्र हि अप्रधानं वचनमनर्थकम्, कारकविभक्तेर्बलवत्त्ववत् प्रधानात् प्रथमा भविष्यतीत्युक्तम् ।

अन्यथा विशेषणतया सहार्थान्वयिनः षष्ठ्यपवादत्ववद् विशेष्यतया तदर्थान्वयिनः, प्रथमाया अप्यपवादत्वापत्त्या तत्र तद्वारणाय तस्य चारितार्थ्यात्तदसङ्गतिः । सिद्धान्ते त्वनया कारकविभक्तेः सर्वतो बलवत्त्वे बोधिते, अर्थात् षष्ठ्यपवादत्वमेवोपपदविभक्तेः फलति ।

ननु प्रथमान्तस्थले आख्यातार्थकर्तुः क्रियाजनकत्वेऽपि प्रथमायास्तदर्थकत्वे न मानम् । न च 'अभिहिते प्रथमा' इति वार्त्तिकेन प्रथमाया अपि कारकविभक्तित्वं प्रातिपदिकार्थगतकारकशक्तावन्येनाभिहितानां स्वार्थे वर्त्तमानात्प्रातिपदिकात् प्रथमेत्यर्थस्य शेखरादावुक्तत्वेन तदर्थासिद्धिरिति चेत्, न; आख्यातार्थस्य कर्त्रादेः क्रियाकारकभावेनैव क्रियायामन्वयात्तदभिन्नप्रातिपदिकार्थस्यापि तथैवान्वयात् । तस्य वस्तुतः क्रियाजनकत्वात्तदर्थकप्रथमाया अपि क्रियाजनकार्थकविभक्तित्वं सिद्धमित्यदोषात् ।

वस्तुतः "सह युक्ते०" ( पा० सू० २।३।१९ ) "अन्तराऽन्तरेण युक्ते" ( पा० सू० २।३।४ ) इति सूत्रस्थभाष्यप्रामाण्याद् देवदत्त इत्युक्ते कर्त्ता निर्दिष्ट

**इयं च वाचनिक्येव। अत एव "यस्य च भावेन" इति सप्तम्यपेक्षयाधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन, "तत्र च दीयते" इति सूत्रे भाष्ये ध्वनितम्, कैयटेन च स्पष्टमुक्तम्। एतेन 'क्रियान्वयित्वं कारकत्वम्' इत्यपास्तम्, "यस्य च भावेन" इति सप्तम्या अपि क्रियान्वयित्वात्।**

**ये तु प्रधानीभूतक्रियासम्बन्धनिमित्तकार्यत्वेन कारकविभक्तीनां बलवत्त्वं वदन्ति; तेषामुभयोरपि क्रियासम्बन्धनिमित्तकत्वेन तदसङ्गति स्पष्टैव।**

---

इत्यर्थवत्सूत्रभाष्याच्चाभिहितकारकवाचित्वं प्रथमाया अप्यङ्गीक्रियत इति प्रथमापि सार्थकविभक्तिरेव। 'द्वौ ब्राह्मणौ' इत्यादौ द्वित्वादेरिवोभाभ्यामपि देवदत्तः पचतीत्यादावेकस्यैव कर्तृत्वस्य बोध इति न तद्बोधावृत्तिप्रसङ्गः। अत एव 'काण्डे तिष्ठतः' इत्यादौ विभक्त्यर्थस्य संसर्गत्वेऽपि प्रकृत्यर्थापेक्षया प्राधान्यान्न ह्रस्व इति "ह्रस्वो नपुंसके०" ( पा० सू० १।२।४७ ) इत्यत्र शेखरे उक्तम्।

**अत एवेति।** अपूर्वपरिभाषाङ्गीकारादेवेत्यर्थः। **स्पष्टमुक्तमिति।** दीयते-कार्यमित्येतयोरर्थयोः कालवाचिभ्यो भववत्प्रत्यया भवन्तीति सूत्रार्थः। तत्र दीयमानस्य तत्र भवत्वात् "तत्र भवः" ( पा० सू० ४।३।५३ ) इत्यनेनैव सिद्धे सूत्रे 'दीयते' इत्यंशो व्यर्थ इत्याशङ्क्य, नैतन्मासे दीयते, किं तर्हि मासे गते दीयते, इत्यस्य तत्र भवत्वाभावात्तदावश्यकमिति भाष्ये स्थितम्।

तत्र हि 'गते मासे' इति प्रतीकमुपादाय 'मासे दीयते' इति नैषाधिकरण-सप्तमी किं तर्हि ? "यस्य च भावेन०" ( पा० सू० २।३।३७ ) इति। "तत्र भवः" (पा० सू० ४।३।५३) इत्यत्र त्वधिकरणसप्तमी "उपपदविभक्तेः०" (परि० १०३) इति न्यायात्। इह त्वतिदेशसामर्थ्याद् भावलक्षणसप्तमीपरिग्रह इति कैयटेनोक्तम्। अग्रे च भाष्ये यन्मासे अतिक्रान्ते दीयते तस्य मास औपश्लेषिकाधिकरणं भवत्येवेति "तत्र भवः" ( पा० सू० ४।३।५३ ) इत्यनेनैव सिद्धमित्युक्तम्।

न चास्या उपपदनिमित्तकत्वाभावात्कथमुपपदविभक्तित्वमिति वाच्यम्, यत्सम्बन्धिभावेन क्रियया निर्ज्ञातदेशकालया अनिर्ज्ञातदेशकालक्रियान्तरं लक्ष्यते ज्ञाप्यते प्रत्यासत्त्या ज्ञापकक्रियाश्रयवाचकात्सप्तमीत्यर्थेन लक्ष्यलक्षणक्रियावाचक-पदसम्बन्धनिमित्तकत्वेनोपपदनिमित्तकत्वमित्याशयात्।

एवञ्च 'गोषु दुह्यमानासु गतः' इत्यादौ गवां क्रियाविशिष्टवेशेणैव लक्षक-त्वात् 'शिखी ध्वस्तः' इत्यादौ शिखायां ध्वंसप्रतियोगित्ववल्लक्षकत्वस्य विशेषणी-भूतक्रियायां विश्रान्त्या तादृशक्रियाश्रयवाचकत्वेन द्वयोरपि सप्तमीति बोध्यम्।

**क्रियान्वयित्वादिति।** कारकाणां क्रियान्वय इति वाक्यस्य घटत्ववतां घटत्ववत्तेति वाक्यतुल्यतापत्तेश्चेत्यपि बोध्यम्। **प्रधानीभूतेति।** अक्रियारूपोप-पदार्थापेक्षयेत्यादिः। **असङ्गतिरिति।** तत्सप्तम्या अपि प्रधानीभूतज्ञाप्यक्रिया-सम्बन्धनिमित्तकत्वादिति भावः।

**"नमो वरिवः०" इति सूत्रे 'नमस्यति देवान्' इत्यादौ चतुर्थीवारणाय भाष्ये उपन्यासस्यासङ्गतेश्च ।**

**एतेन 'क्रियाकारकसम्बन्धोऽन्तरङ्गः' इति तन्निमित्ता विभक्तिरन्तरङ्गा, उपपदार्थेन तु यत्किञ्चित् क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता**

---

न च "तत्र भवः" ( पा० सू० ४।३।५३ ) इत्यादौ श्रुतक्रियापेक्षाधिकरणसप्तम्यपेक्षयाध्याहृतविशेषणीभूतलक्षकक्रियासापेक्षत्वेनास्या दुर्बलत्वात् तत्सङ्गतिरिति वाच्यम्, गुणक्रियासम्वन्धनिमित्तकत्वेऽपि प्रधानीभूतज्ञाप्यक्रियासम्वन्धनिमित्तकत्वेन वलवत्त्वाहानेः ।

किञ्च "यस्य च भावेन०" ( पा० सू० २।३।३७ ) इति सप्तम्या लक्ष्यलक्षणभावसम्वन्धनिमित्तषष्ठ्यपवादत्ववत् "तत्र भवः" ( पा० सू० ४।३।५३ ) इत्यत्राधिकरणसप्तम्यपवादत्वस्याप्यापत्तेः, "अनन्तरस्य०" ( परि० ६२ ) इति न्यायेनाधिकरणसप्तम्या एवापवादत्वापत्तेश्च । सिद्धान्ते वाचनिक्यानयाधिकरणसप्तम्याः सर्वतो वलवत्त्वबोधनेनास्याः षष्ठ्यपवादत्वमेव फलतीति न दोषः ।

**असङ्गतेश्चेति ।** "सनाद्यन्ताः०" ( पा० सू० ३।१।३२ ) इति सूत्रेण धातुसंज्ञाविषये प्रकृतिप्रत्ययानां शब्दशक्तिस्वभावादसत्त्वभूतक्रियावाचित्वेनोभयत्रापि नमःपदार्थस्य निमित्तत्वेन तदसङ्गतिरिति भावः । **अन्तरङ्ग इति ।** यद्यप्युपपदविभक्तावुपपदापेक्षावत् कर्मत्वादेः क्रियानिरूपितत्वात् क्रियापदापेक्षात्रापीति पदान्तरसम्वन्धनिमित्तकत्वमुभयोरपि तुल्यम, तथाप्युपपदविभक्तेः षष्ठ्यपवादत्वेन षष्ठीवाच्यसम्वन्धस्य क्रियाकारकभावमूलकत्वेनानुमीयमानक्रियापदापेक्षापि तत्र विद्यत इति तस्य वहिरङ्गत्वमिति भावः ।

अत एव "षष्ठी शेषे" ( पा० सू० २।३।५० ) इति सूत्रे 'कर्मादीनामविवक्षा शेषः' इति भाष्यव्याख्यानावसरे 'राज्ञः पुरुषः' इत्यत्र सिद्धस्वभावयोर्द्रव्ययोः क्रियां विना परस्परं सम्बन्धासम्भवमाशङ्क्य क्रियापि श्रेणिरिव सम्बन्धजनिका । यथा 'राजा पुरुषाय ददाति' इति कर्तृसम्प्रदानभावसम्प्रत्ययात्, कर्तृसम्प्रदानभावादिनिमित्तकः स्वस्वामिभावादिसम्बन्धः, तत्र यदा तत्प्रयोजकक्रियाकारकभावस्य वस्तुतः सतोऽप्यविवक्षा, तत्प्रयोज्यस्वस्वामिभावादिसम्वन्धमात्रविवक्षा तदा षष्ठी । तदुक्तम्—

सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।
श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते ॥

इति कैयटेनोक्तम् ।

एवञ्च सर्वत्र कियाकारकभावमूलक एव सम्वन्ध इत्युपपदविभक्तौ चोपपदापेक्षाधिकेति तस्य वहिरङ्गत्वमिति भावः ।

**विभक्तिर्बहिरङ्गेत्यपास्तम्, 'नमस्यति' इत्यत्र नमःपदार्थेऽपि क्रियाकारकभावेनैवान्वयात् । अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव ।**

**"सहयुक्ते" इत्यादौ च प्रधाने प्रथमासाधनार्थमियं भाष्य उपन्यस्तेत्यन्यत्र विस्तरः ।। १०३ ।।**

**ननु 'अदमुयङ्' इत्यादौ पूर्वस्यापि मुक्त्वापत्तिः, अत आह—**

**अनन्त्यविकारेऽन्त्यसदेशस्य ।। १०४ ।।**

**अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः ।**

---

ननु नमश्शब्दस्य प्रातिपदिकत्वेन सत्त्वार्थकतया सत्त्वभूतक्रियावाचकत्वाभावेन चतुर्थ्याः प्रधानक्रियासम्बन्धनिमित्तकत्वाभावान्न दोष इत्यत आह—**नमस्यतीति । मुण्डस्येवेति ।** अत्र वृत्तौ मुण्डशब्दो भावसाधनः । मौण्ड्यरूपतदर्थस्यैवोत्पाद्यमानत्वात्, न हि माणवकत्वं क्रियत इति भाष्याच्च । तस्य च धातुवाच्यफलस्यैव साध्यावस्थतया भानात्क्रियारूपत्वेन कारकांशे नित्यसापेक्षत्वान्माणवकस्यैकदेशे मुण्डपदार्थेऽन्वय इत्याकरे स्पष्टम् ।

अत एव कारकाणामसत्त्वभूतक्रियायामेवान्वय इति सिद्धान्तः सङ्गच्छते । एतादृशे विषये प्रकृत्यर्थस्यासत्त्वभूतक्रियारूपेण भानानङ्गीकारे तस्य कारकं प्रति नित्यसापेक्षत्वाभावेन माणवकादेस्तत्रैकदेशेऽनन्वयात् करोत्यर्थान्वयस्यापि सर्वथायोग्यत्वाच्च कर्मत्वानापत्तिः ।

न च 'काष्ठं भस्म करोति' इत्यादाविव विकृत्युत्पत्तिरूपफलद्वयानुकूलव्यापारस्य धात्वर्थत्वेन विकृतिरूपफलाश्रयत्वान्माणवकस्य कर्मत्वं सिद्धमिति न दोष इति वाच्यम्, वाक्ये माणवशब्दात् कर्मसामानाधिकरण्यादेव द्वितीयोपपत्त्या धात्वर्थाधिक्ये मानाभावात् । वृत्तावपि तद्विग्रहवाक्यसमानार्थकत्वस्यैव वक्तव्यतया विकृतेर्णिज्वाच्यत्वासम्भवेनोक्तरीतेरेवावश्यकत्वात् । अन्यथा 'सापेक्षेभ्योऽपि णिजर्थम्' इत्यादिग्रन्थासङ्गतेः । अत्र णिच् सापेक्षत्वेऽपि गमकत्वाद् भवति । क्यच् तु नेति भाष्ये स्पष्टमित्यलम् ।। १०३ ।।

परिभाषाघटक—**'अनन्त्यविकारे'** इत्यस्यानन्त्ययोर्विकार इत्यर्थं सूचयितुमाह—**अन्त्यसदेशानन्त्यसदेशयोरिति ।** अन्त्येन समानो देशो यस्य स अन्त्यसदेशः, न अन्त्यसदेशः, अनन्त्यसदेशः, तयोः स्थाने इत्यर्थः । प्रत्यासत्तिन्यायलब्धार्थमाह—**एकप्रयोगे इति ।** एकस्मिन्पदे इत्यर्थः । युगपदेकप्रसरेणेत्यर्थः । **प्राप्ताविति ।** अस्य कार्यस्येति शेषः । अस्याः फलमाह—**अन्त्यदेशस्यैवेति ।** कस्यानन्त्ययोर्विकार इत्याकाङ्क्षायां प्रत्यासत्त्या तत्तद्विकारत्वविधायकशास्त्रे षष्ठीनिर्दिष्टस्येति लभ्यते ।

**अन्यथा धात्वादेर्नत्वसत्वे 'नेता' 'सोता' इत्यादावेव स्याताम्, न तु 'नमति' 'सिञ्चति' इत्यादौ ।**

**अनन्त्यविकार इति च लिङ्गम् ।**

**अन्त्येन समानो देशो यस्य सोऽन्त्यसदेशः । तत्त्वं चान्त्यवर्णतद्वर्णयोरित-**

---

एवञ्च तत्तत्कार्यविधायके षष्ठीनिर्दिष्टोद्देश्यस्यानन्त्यावयवीभूतौ यौ कार्यिणौ तयोरेकप्रसरेणैकस्मिन् लक्ष्ये आदेशद्वयप्रसङ्गे तदन्त्यसदेशस्यैव स्थाने तत्कार्यं भवति नानन्त्यसदेशस्येति नियमात् 'अनस्तक्षणः' 'हंसशिरांसि' 'अदमुयङ्' इत्यादौ पूर्वस्य न भवति किन्त्वङ्गान्त्यसदेशाकारस्यैव लोपादिरितीष्टसिद्धिः । प्रत्यासत्तिफलं तु "इको यणचि" ( पा० सू० ६।१।७७ ) इत्यादावङ्गस्येत्यादि-षष्ठीनिर्देशाभावात् 'पट्व्या' 'मृद्व्या' इत्यादावनयान्त्यसदेशस्यैवेति नियमाभावः ।

न च 'पन्थाः' इत्यादौ "इतोऽत्०" ( पा० सू० ७।१।८६ ) इत्यत्वस्य न्थादेशस्य च युगपत्प्रसङ्गेऽनया न्थादेशानापत्तिः । न्थादेशस्तु 'पन्थियौ' इत्यत्र चरितार्थ इति वाच्यम्, विकार इत्येकवचननिर्देशेनैकस्यैव कार्यस्योभयस्थाने युगपत्प्रसङ्गे इत्यर्थेनादोषात् । पूर्वोक्तप्रत्यासत्त्यनाश्रयणे दोषमाह—**अन्यथेति । इत्यादावेवेति ।** आदिना 'सः' 'स्यः' इत्यत्र "तदोः०" ( पा० सू० ७।२।१०६ ) इति सत्वसङ्ग्रहः ।

ननु समानां ग्रहणं कर्त्तव्यमित्यादाविव समानशब्दस्यैकशब्दपर्यायतया वर्णोच्चारणस्य क्रमिकत्वेन द्वयोर्वर्णयोरुच्चारणाधिकरणीभूतसूक्ष्मकालस्य विभिन्नत्वेन तयोरेकदेशत्वासम्भवाद् देशब्देनाकाशस्य स्थूलकालस्य वा ग्रहणेऽतिप्रसङ्गस्तदवस्थ एवेत्यन्त्यसदेशत्वं दुर्वचमित्याह—**तत्त्वमिति ।**

नन्वितरशब्देन कालस्य ग्रहणमुत वर्णस्य ? नाद्यः । सर्वत्र वर्णस्य वर्णान्तरोच्चारणेऽर्धमात्राकालस्य नान्तरीयकतया तथा वक्तुमशक्यत्वात् ।

न च सामर्थ्यादर्धमात्राधिककाल एव गृह्यत इति न दोष इति वाच्यम्, 'अदमुयङ्' इत्यादौ रेफरूपस्य यत्किञ्चित्कार्यिणस्तथात्वेऽपि दकारे तदसम्भवेन दोषापत्तेः ।

अत एव न द्वितीयः । 'चलीक्लृप्यते' इत्यादौ ऋकारोत्तरभागस्य रेफवद् वर्णान्तरेणाग्रहणाद् वर्णव्यपदेशाभावेनातिव्याप्त्यापत्तेः । न च तत्तद्विधिविधेय-स्थानित्वानाक्रान्तवर्णस्यैवेतरपदेन विवक्षणान्न दोषः, मुत्वविधिविधेयमकार-निरूपितस्थानित्वानाक्रान्तत्वस्य रेफे सत्त्वेन दोषस्य दुर्वारत्वात् ।

**राव्यवधानेन बोध्यम्। अत एव विद्ध इत्याद्यर्थम् "न सम्प्रसारणे" इति चरितार्थम्।**

**"अल्लोपोऽनः" इत्यादेः 'अनस्तक्ष्णा' इत्यादावाद्याकारादावप्रवृत्तिरप्यस्याः फलम्, यजादिस्वादिपरान्नन्ताङ्गस्याकारस्य लोप इत्यर्थस्यैवाङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षतयौचित्यादङ्गावयवयजादिस्वादिपरस्यान　　इत्यादिक्रमेणानेकत्रानेक-**

---

न च कार्यित्वानाक्रान्त इत्यत्रैकसूत्रबोधितं यद्यत्कार्यं प्राप्तम्, तत्तत्कार्यित्वानवच्छिन्नस्य ग्रहणमिति न दोषः, 'अदमुयङ्' इत्यत्राद्यदकारेऽप्यन्त्यसदेशापत्तेः, 'हंसशिरांसि' इत्यादौ नकारेण व्यवधानादव्याप्त्यापत्तेश्च।

न च "न सम्प्रसारणे०" (पा० सू० ६।१।३७) इति ज्ञापकाद् हल्भिन्नव्यवधानशून्यत्वं विवक्ष्यते। एवञ्च 'चलीक्लृप्यते' इत्यादौ ऋकारोत्तरवृत्तिहल्भिन्नाद्भागेन व्यवधान्न दोष इति वाच्यम्, 'अदमुयङ्' इत्यत्र दकारस्यापि स्वोत्तरवृत्तिदकाररेफरूपहल्व्यवधानेऽपि तद् भिन्नव्यवधानशून्यत्वाद्दोषापत्तेः।

न च स्वाङ्गसमुदाये स्वाङ्गत्वाभाववद् हल्समुदायेऽपि हल्त्वाभावाद् हल्भिन्नसमुदायव्यवधानान्न दोष इति वाच्यम्, तथा सति 'आदर्शेन' इत्यत्रेव 'रामेण' इत्यत्राप्यडाद्यतिरिक्तसमुदायव्यवधानेन णत्वानापत्तेः।

न चात्र सूत्रेऽन्त्यसदेशस्येत्यस्योपस्थित्यान्त्यसदेशत्वाभावेनाद्यदकारस्य मत्वाप्रवृत्त्या तत्सन्नियोगशिष्टस्योत्वस्य दकाराकारेऽप्रवृत्त्या न दोषः, एतत्परिभाषैकवाक्यतयान्त्यसदेशस्य दात्परत्वावच्छिन्नस्यान्त्यसदेशस्य दत्वावच्छिन्नस्य चोत्वमत्वे भवत इत्येकप्रसरेणैव द्वयोरुत्वस्य परदकारे मत्वस्य च प्रवृत्तेः सूपपादत्वेन सन्नियोगशिष्टत्वाहानेरिति चेत्, न; प्रत्यासत्त्या यस्य दकारस्य मत्वं भावि तस्मात्परस्यैवोत्वविधानेनादोषात्। अत्रार्थे मानमाह—**अत एवेति। चरितार्थमिति।** अन्त्यसदेशत्वस्येतराव्यवहितत्वरूपस्याविवक्षायां सूत्रं व्यर्थं स्यादिति भावः।

ननूक्तज्ञापकेनान्त्यसमीपवृत्तित्वरूपमन्त्यसदेशत्वं हलितराव्यवहितत्वरूपम्, न तु यत् किञ्चिद्वर्णाव्यवहितत्वमित्याश्रयणे स्वांशे ज्ञापकस्य चारितार्थ्येऽप्यन्यत्र फलं दुर्वचम्, अन्त्यसमीपवृत्त्यन्त्यासमीपवृत्तिकार्यिणोर्मध्येऽन्त्यसमीपवृत्तिकार्यिण एव भवतीत्यर्थेनेष्टसिद्धेः।

न च 'चलीक्लृप्यते' इत्यादावस्या अप्रवृत्तिरेव फलम्, "पूर्वत्रासिद्धीयमद्विर्वचने" (परि० १२६) इत्यनेन द्वित्वात्पूर्वं लत्वे ततो द्वित्वे रीकि तस्यापि लत्वे वेष्टसिद्धेरदोषात्।

किञ्च "कृपो रोलः" (पा० सू० ८।२।१८) इत्यत्र कृपेत्यस्यावृत्त्या रेफविषयकस्य ऋकारविषयकस्य च वाक्यस्य प्रत्येकमुपप्लवेनान्त्यसदेशानन्त्यस-

**क्लिष्टकल्पनापेक्षयास्या उचितत्वात् ।**

**न चैषा "ष्यङः सम्प्रसारणम्" इति सूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम्, वार्त्तिकोक्तफलानामनेकक्लिष्टकल्पनाभिरन्यथासिद्धिं प्रदर्श्यापि यान्येतस्याः परिभाषायाः प्रयोजनानि, तदर्थमेषा कर्त्तव्या प्रतिविधेयं दोषेषु, प्रतिविधानं चोदात्तनिर्देशात् सिद्धमित्युपसंहारात् । 'मिमार्जिषति' इत्यर्थं चैषा । तत्र वृद्धेः पूर्वमन्तरङ्गत्वाद् द्वित्वे परत्वादभ्यासकार्ये ततोऽभ्यासेकारस्य वृद्धिवारणायावश्यको । न च वृद्धौ पुनरभ्यासह्रस्वत्वेन सिद्धिः, 'लक्ष्ये लक्षणस्य' इति न्यायेन पुनरप्रवृत्तेः ।**

---

देशयोरेकेन विधिना युगपत्कार्ययोरप्राप्त्यादोषादिति चेत्, न; 'एधेयाताम्' इत्यादावनया पूर्वसकारस्य लोपानापत्तेः ।

**उचितत्वादिति ।** न चाङ्गस्य प्रत्ययसामान्यं प्रत्युत्थिताकाङ्क्षत्वेऽपि यजादिप्रत्ययविशेषं प्रत्यतथात्वादङ्गविशेषणत्वे प्रयोजनाभावात्,"श्रुतानुमितयोः०" ( परि० ११६ ) इति न्यायेनान एव तद्विशेषणं भवितुमर्हतीति वाच्यम्, भादिसंज्ञासु कार्यकालपक्षस्यैव दुर्लभतया सत्यपि तत्पक्षे वाक्यभेदेनान्वयस्याङ्गीकारेण "यचि०" ( पा० सू० १।४।१८ ) इत्यस्यावृत्त्योभयविशेषणत्वे मानाभाव इत्याशयात् । अङ्गेन प्रत्ययाक्षेपेऽपि तस्य तत्रैवान्वयस्यौचित्यात् । अत एव "नोपधायाः" ( पा० सू० ६।४।७ ) इत्यत्रोपधाग्रहणं चरितार्थम् ।

वस्तुतोऽङ्गाक्षिप्तप्रत्ययस्य प्राय उद्देश्यविशेषणत्वकल्पनमेव युक्तम्, नत्वङ्गविशेषणत्वम्, अन्यथा जराया जरा 'जराजरा' त्रयाणां त्रयः 'त्रित्रयः' इत्यादौ पूर्ववृत्तिजराशब्दत्रिशब्दयोर्जरसादेशत्रयादेशयोरापत्तेः ।

किञ्च 'युवमघोनः सुपात्पदः प्रष्ठवाट् विश्वौहः पश्य' इत्यादौ पूर्वपदे सम्प्रसारणपुंवद्भावोठं दुर्वारमित्यापत्तेः । तस्मात् 'अनस्तक्ष्णः' 'प्रत्यच्काहम्' 'सशिरांसि' इत्यादौ प्रत्ययस्योद्देश्यविशेषणत्वात् सर्वेष्टसिद्धिः ।

**उदात्तनिर्देशादिति ।** यथा "स्वरितेनाधिकारः" ( पा० सू० १।३।११ ) इत्यत्र स्वरितत्वं लिङ्गम्, एवमस्यामुदात्तनिर्देश इति भावः । एतत्फलं तु 'अपचत्' इत्यत्र सर्वत्र निघात इत्याहुः । **आवश्यकीति ।** न च प्रतिपदोक्तत्वात्पूर्वं वृद्धौ न दोषः, "द्विर्वचनेऽचि" (पा० सू० १।१।५९) इति निषेधेन पूर्वं तदप्रवृत्तेः । न चाभ्यासविकारे बाध्यबाधकभावाभावेन पूर्वं वृद्धौ न दोषः, वृद्धेरभ्यासकार्यत्वाभावात् ।

वस्तुतोऽत्राङ्गाक्षिप्तप्रत्ययस्योद्देश्यविशेषणतयार्थवन्मृजेरिक इत्यर्थाश्रयणाच्च न दोषः । किञ्चाभ्यासस्य मृज्त्वमपि दुर्लभम्; अक्तपरिमाणत्वेन "एकदेशविकृत०" ( परि० ३७ ) न्यायाप्राप्तेः । अनर्थकत्वेन स्थानिवद्भावासम्भवात् । "यस्येति च" ( पा० सू० ६।४।१४८ ) इत्यत्र निमित्तं कार्यिविशेषणम्, नत्वङ्गविशेषणम् ।

**यत्तु "न सम्प्रसारणे" इति सूत्रे भाष्ये 'नैतस्याः परिभाषायाः प्रयोजनानि' इत्युक्तम्। तस्यायमर्थः—एतत्सूत्रे प्रयोजनान्येतस्याः परिभाषाया न भवन्ति, व्यधादावन्त्यसमानदेशयणोऽभावादिति। 'नैतान्येतस्याः प्रयोजनानि' इति पाठोऽपि क्वचिद् दृश्यते।**

**वाचनिक्येवैषा। स्पष्टा च "ष्यङः" इति सूत्रे "अदसोऽसेः" इति सूत्रे च 'केचिदन्त्यसदेशस्य' इत्यनेन भाष्य इत्यन्यत्र विस्तरः॥ १०४॥**

**ननु "अव्यक्तानुकरणस्यातः" इति पररूपम्, 'पटत्' इति 'पटिति' इत्यादौ "अलोऽन्त्यस्य" इत्यन्त्यस्य प्राप्नोतीत्यत आह—**

**नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥१०५॥**

**अनभ्यासेत्युक्ते 'विभर्त्ति' इत्यादौ "भृञामित्" इत्याद्यन्त्यस्यैव। अभ्यासोऽनर्थकः, अर्थावृत्त्यभावात्, किन्तूत्तरखण्ड एवार्थवानित्यन्यत्र निरूपितम्।**

**एषा "अलोऽन्त्यात्" सूत्रे भाष्ये स्पष्टा। फलानामन्यथासिद्धिकरणेन**

---

यानीति भाष्यस्यापि यदि यानि कानिचित्प्रयोजनानि स्युः, तदर्थमेषा परिभाषा कर्त्तव्या स्यात्, दोषेषु प्रतिविधेयं च स्यात्, तदेव नेति तद्भाष्याशयः।

ननु 'अदमुयङ्' इत्यस्येष्टत्वे एतत्परिभाषायाः प्रयोजनकथनावसरे अस्यासाधारणत्वेन प्रथमं वक्तव्यतया तत्राकथनादुदाहृतानामन्यथासिद्धिप्रदर्शनान्नार्थोऽनया परिभाषयेत्युपसंहाराच्चास्या आश्रयणे फलं भाष्यसम्मतं नेत्याशङ्क्याह—**यत्त्विति। अयमर्थ इति।** अन्यथासिद्धिं प्रदर्श्य नैतस्याः परिभाषायाः प्रयोजनानीत्युपक्रम्य तत्रापरितोषेण "यान्येतस्याः प्रयोजनानि तदर्थमेषा कर्त्तव्या" एषु दोषेषु विधानपूर्वकमुपसंहारादुक्तार्थकत्वमेवोचितमिति भावः।

वस्तुतः "अदसोऽनोस्रेः" (का० वा० ८।२।८०) इति वार्त्तिकप्रत्याख्यानाय 'असेः' इति पक्षमुक्त्वा तत्र पक्षे 'अदमुयङ्' इति भवितव्यम्, न स्यात्, इत्याशङ्क्योक्तश्चादसोऽद्रेरिति समाधानमुक्तम्। उक्तरूपम् 'केचिदिच्छन्ति' इत्यनेनात्र रूपेऽसम्मतिः सूचिता। 'नेत्येके' इत्येव सिद्धान्तः। अत एव हि दृश्यते इति तस्य रूपस्य लोकप्रसिद्धत्वद्योतनाय हिः प्रयुक्त इत्याहुः।

नन्वेतत्परिभाषासत्त्वे "र्वोरुपधायाः०" (पा० सू० ८।२।७६) "अत उपधायाः" (पा० सू० ७।२।११६) इत्यादावुपधाग्रहणं व्यर्थमिति चेत्, न; 'अबिभर्भवान्' 'बभूव' इत्यादावनन्त्यसदेशयोरिकाराकारयोर्द्वयोरभावेनैतत्परिभाषाया अप्राप्त्या तत्रानन्त्ये कार्यप्रवृत्तिवारणायोपधाग्रहणस्यावश्यकत्वात्॥ १०४॥

**अन्त्यस्येति।** ननु 'अतः' इत्यस्य पञ्चमीत्वादेकादेशस्य पूर्वपदसमुदायस्थानिकत्वेनैकादेशस्थानिभूतपूर्वखण्डमात्रे कथं परिभाषाप्रवृत्तिरिति चेत्, न; द्विवचननिर्देशेनैकग्रहणेन च द्वयोरपि पृथक् स्थानित्वमित्याशयात्। अत एव

**प्रत्याख्याता चेति तत एवावधार्यताम् ।। १०५ ।।**

**ननु 'ब्राह्मणवत्सा च ब्राह्मणीवत्सश्च' इत्यादौ "पुमान् स्त्रिया" इत्येकशेषापत्तिः, स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावात्, अत आह—**

**प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ।। १०६ ।।**

**तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः । स्पष्टा चेयम् "पुमान् स्त्रिया" "नपुंसकमनपुंसकेन" इत्यनयोर्भाष्ये ।**

---

"एकदेशविकृत०" ( परि० ३७ ) न्यायेन 'पटिति' इत्यत्र पदत्वाज्जश्त्वं न । परस्थानिकादेशस्याज्मात्रस्थानिकत्वेन तमादाय स्थानिवत्त्वप्रवृत्तेः । अन्यथा झल्स्थानिकत्वेऽप्यच्स्थानिकत्वाभावेन स्थानिवत्त्वाभावाज्जश्त्वं दुर्वारम् ।

न च 'जुहुवतुः' इत्यत्रेव तत्स्थानिकादेशं प्रति तस्यैव निमित्तत्वानङ्गीकारात्परनिमित्तकत्वासम्भव इति वाच्यम्, जश्त्वप्रतिबन्धाय पूर्वस्थानिसादृश्यस्यैवातिदेष्टव्यतया तादृशस्थान्यपेक्षया परस्य निमित्तस्य ग्रहणेनादोषात् । न चैकादेशस्योभयस्थानिकत्वेनाज्मात्रस्थानिकत्वं दुरुपपादम्, एकादेशप्रकरणे सर्वत्राचीत्यनुवृत्त्याज्मात्रवृत्तिस्थानितावच्छेदकादेशः स्थानिवदित्यर्थेनादोषात् । "न पदान्त०" (पा० सू० १।१।५८) इति निषेधस्तु परपदमात्रस्थानिकादेशविषय एवेति प्रकृते न तस्य प्राप्तिः ।

**प्रत्याख्यातेति** । "हलि लोपः" (पा० सू० ७।२।११३) इत्यत्र "अनाप्यकः" ( पा० सू० ७।२।११२ ) इत्यतोऽन्ग्रहणमनुवृत्य तस्य षष्ठ्यन्ततया विपरिणामं कृत्वानो नकारस्य लोपे पररूपे दीर्घे 'आभ्याम्' इति रूपम् । 'दित्सति' इत्यादौ तु "सनिमीमा०" ( पा० सू० ७।४।५४ ) इत्याद्यनुवृत्त्यैव सिद्धे पुनरत्र ग्रहणादभ्यासत्वेन यो निर्ज्ञातस्तस्य सर्वस्य लोप इत्यर्थान्न दोषः ।

न चाभ्यासविकारेत्यस्य 'अजीगणत्' इत्युदाहरणपरभाष्यप्रामाण्याल्लोपस्यापि विकारपदेन ग्रहणात्, अनभ्यासविकार इति निषेधात्, सत्यामपि परिभाषायामन्त्यस्यैव स्यादिति वाच्यम्, 'लोपागमवर्णविकार' इति पस्पशास्थभाष्येण लोपशब्देन विहितलोपस्य विकारपदेनाग्रहणात् । परिभाषाप्रत्याख्याने 'देहि' इत्यादौ "लोपो यि" ( पा० सू० ६।४।११८ ) इत्यतो लोपग्रहणेऽनुवर्त्तमाने पुनर्लोपग्रहणान्न दोषः । 'पटिति' इत्यत्र तु न दोषः, आम्रेडितस्य वेति वक्तव्ये नाम्रेडितेत्यारम्भात्, त्वमादेशा हलन्ता इति पक्षे मकारस्य मकारविधाने फलाभावात्सामर्थ्यात्सर्वादेशः ।। १०५ ।।

**भाष्ये इति** । सरूपयोः स्त्रीपुंसयोः सहविवक्षायाम् "पुमान् स्त्रिया" ( पा० सू० १।२।६७ ) इति पुंवाचकस्य शेषो विधीयते । तत्र "वृद्धो यूना०" ( पा० सू० १।२।६५ ) इत्यतः 'तल्लक्षणश्चेदेव' इति सम्बद्ध्यते । तत्र तत्पदमर्थ-

**'अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलम्' इति "हेतुमति च" इत्यत्र भाष्य-कैयटयोः ॥ १०६ ॥**

**ननु स्वस्रादित्वप्रयुक्तो मातृशब्दस्य ङीब्निषेधः परिच्छेत्तृवाचकमातृशब्देऽपि स्यात्, अत आह—**

---

परम् । ययोः सहविवक्षा तदर्थगतस्त्रीत्वपुंस्त्वमात्रकृतविशेषश्चेदित्यर्थः । एवञ्चेदं न्यायसिद्धम् ।

न च 'कुक्कुटमयूर्यौ च कुक्कुटमयूरौ च' इति सहविवक्षायाम् "पुमान् स्त्रिया" ( पा० सू० १।२।६७ ) इत्येकशेषानापत्तिः, समुदायार्थं प्रत्युपसर्जनीभूतावयवार्थनिष्ठलिङ्गकृतविशेषस्यापि सत्त्वादिति वाच्यम्, अवयवापेक्षितपदस्यार्थो न तु तद्व्यतिरिक्तः समासोऽर्थोऽस्तीति कैयटेनोक्ताभेदपक्ष इव भेदपक्षेऽप्यवयवानामेव कार्यसम्बन्धेन कार्याश्रयत्वरूपार्थप्राधान्यस्य तत्र सूपपादत्वादेकशेषोपपत्तेः ।

न च 'कारकश्च कारिका च' 'पटुश्च पट्वी च' इत्यादावेकशेषानापत्तिः, तदर्थगतस्त्रीत्वादिकृतविशेषापेक्षयेत्वयणादिरूपशब्दकृतविशेषस्यापि सत्त्वादिति वाच्यम्, तद्भावभावितामात्रेण स्त्रीप्रत्ययद्वारा यणित्वं प्रत्यप्यर्थस्य निमित्तत्वाङ्गीकारात् ।

अत एव सहविवक्षापि 'ब्राह्मणवत्सा' इत्यादौ प्रधानयोरेव तेन प्रधानयोरेव स्त्रीपुंसयोर्विशेषप्रयोजकता यत्र तत्रैवैकशेषः । इह चाप्रधानकृतस्यापि विशेषस्य सत्त्वान्नैकशेष इति कैयटादिभिरुक्तम् ।

कैयटयोरिति । लोके प्रधानराजकार्यापेक्षया अमात्यादीनामन्तरङ्गस्याप्यात्मकार्यस्याकरणदर्शनादन्तरङ्गादपि प्रधानकार्यस्य बलवत्त्वमिति तत्रोक्तम् । अत एव 'मूलकेनोपदंशं भुङ्क्ते' इत्यादौ प्रधानक्रियानिरूपितकरणत्वात्तृतीया । अन्यथोपदंशनक्रियानिरूपितकर्मत्वस्य परत्वादन्तरङ्गत्वाद् द्वितीयाप्रवृत्त्या तृतीयानापत्तेः ।

न च ग्रामाय गन्तुमिच्छतीत्यादौ ग्रमेर्ग्रामः कर्म, इषेस्तूभयं कर्मेति भाष्याद् गुणक्रियाकर्मत्वनिरूपितचतुर्थ्यपेक्षयेषिक्रियानिरूपितकर्मत्वशक्त्यभिधायिन्या द्वितीयायाः प्रधानकार्यत्वात् चतुर्थ्यनापत्तिरिति वाच्यम्, गमिक्रियानिरूपितकर्मत्वशक्तिविशिष्टस्यैवेषिक्रियाकर्मत्वेन चतुर्थीं विना स्पष्टं गुणक्रियानिरूपितकर्मत्वशक्तेरप्रतीतौ तत्रेषिक्रियाकर्मत्वस्याप्यप्रतीत्यापत्तेः ।

अत एवाश्वेन गन्तुमिच्छतीत्यादावश्वपदे तृतीया । अन्यथाश्वे गुणक्रियानिरूपितकरणत्ववत्प्रधानेषिक्रियानिरूपितकर्मत्वस्य सत्त्वेन तृतीयानापत्तेः । मम तु गुणक्रियानिरूपितकरणत्वविशिष्टस्यैवेषिक्रियाकर्मत्वेनान्तरङ्गत्वात्तृतीयेति न दोषः ॥ १०६ ॥

**अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ १०७ ॥**

**तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणम्, न परिच्छेत्तृवाचकस्य। 'योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिका' इति व्युत्पत्तिरेव तद्बीजम्। रथकाराधिकरणन्यायसिद्धोऽयमर्थः।**

**कश्चित्तु "दीधीवेवीटाम्" इत्यत्रानया परिभाषया दीधीङ्वेवीङोरेव ग्रहणम्, न दीङ्धीङ्वेञ्वीनामिति, तत्, न; तथा सति 'दीवेधीवीटाम्' इत्येव वदेदित्यन्ये ॥ १०७ ॥**

**ननु वातायनार्थे गवाक्षेऽवङो वैकल्पिकत्वात् 'गोक्षः' इत्याद्यपि स्यात्, अत आह—**

**व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥ १०८ ॥**

**लक्ष्यानुसाराद् व्यवस्था बोध्या। "शाच्छोः" इति सूत्रे "लटः शतृ"**

---

**एव तद्बीजमिति। अवयवप्रसिद्धेरिति।** ल्यब्लोपे पञ्चमी। अवयवप्रसिद्धिमपेक्ष्येत्यर्थः। अर्थवत्परिभाषयार्थे गृह्यमाणे रूढ्यर्थस्य झडित्युपस्थित्या तत्र शास्त्रस्य चारितार्थ्येन यौगिकविषये स्मृतानामवयवार्थानां परस्परमन्वयद्वारा वाक्यार्थविषयोपस्थितस्यार्थस्य शब्दविशेषणत्वेन ग्रहणे मानाभाव इति भावः।

यद्यपि ननान्दादिसाहचर्यात् सम्बन्ध्यर्थबोधकमातृशब्दस्यैव ग्रहणात्परिच्छेत्तृवाचीमातृशब्दे न दोषः, तथापि प्राचीनोक्तम् "दीधीवेवीटाम्" ( पा० सू० १।१।६ ) इत्येतत्परिभाषोदाहरणमसङ्गतमिति बोधयितुमस्या उपन्यास इति बोध्यम्। **न दीङ्धीङ्वेञ्वीनामिति।**

न च दीङ्धातोर्गुणविषये "मीनाति०" ( पा० सू० ६।१।५० ) इत्यात्वविधानेन तद्ग्रहणे निषेधवैयर्थ्यम्। किञ्च वेञ्धातोः "आदेच उपदेशे०" ( पा० सू० ६।१।४५ ) इत्यात्वेन गुणस्यैवाप्राप्तेर्निषेधवैयर्थ्यमिति वाच्यम्, आभ्याम् "अचो यत्" ( पा० सू० ३।१।९७) इति यत्—प्रत्यये आत्वे "ईद्यति" ( पा० सू० ६।४।६५ ) इतीत्वे 'देयम्' 'वेयम्' इत्यादौ गुणनिषेधप्रसङ्ग इत्याशयात्।

न चैवमपि "ईद्यति" ( पा० सू० ६।४।६५ ) इतीत्वविषये वीग्रहणेनैव वेञोऽपि निषेधसिद्ध्या वेञ्ग्रहणं व्यर्थं स्यादिति वाच्यम्, अस्य वीशब्दस्य लाक्षणिकत्वेन ग्रहणानापत्त्या वेञ्ग्रहणस्यावश्यकत्वात् ॥ १०७॥

**व्यवस्थितविभाषयापीति।** विभाषा भावाभावौ व्यवस्थितौ निष्कृष्टौ। अर्थभेदेन क्वचिल्लक्ष्ये भाव एवार्थभेदेन क्वचिदभाव एव क्वचिदर्थे भावाभावा-

इत्यादिसूत्रेषु च भाष्ये स्पष्टा ॥ १०८ ॥

**विधिनियमसम्भवे विधिरेव ज्यायान् ॥ १०९ ॥**

नियमे ह्यश्रुताया अन्यनिवृत्तेः सामर्थ्यात् परिकल्पनमुक्तानुवाददोषश्चेति लाघवाद् विधिरेवेति बोध्यम् । "यस्य हलः" इत्यत्र "इजादेः सनुमः" इत्यादौ च भाष्ये स्पष्टेयम् ॥ १०९ ॥

ननु "आशंसायां भूतवच्च" इत्यनेन लुङ इव लङ्लिटोरप्यतिदेशः स्यात्, अत आह—

**सामान्यातिदेशे विशेषानतिदेशः ॥ ११० ॥**

सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावोऽस्या बीजम् । तेनानद्यतनभूतरूपे विशेषे विहितयोस्तयोर्नातिदेशः । इयमनित्या, "न ल्यपि" इति लिङ्गात् । तेन स्थानिवत्सूत्रेण विशेषातिदेशोऽपि । स्पष्टं चैतत्सर्वम्

---

त्रित्येवंरूपया व्यवस्थया कानिचित् कार्याणि क्रियन्त इत्यर्थः । इयञ्च परिगणितेष्वेव नान्यत्रेति बोध्यम् ॥ १०८ ॥

**अन्यनिवृत्तेरिति ।** "कृत्तद्धितसमासाश्च" ( पा० सू० १।२।४६ ) इत्यादौ विधिप्रकरणेऽश्रुतनिषेधस्य परिकल्पनम्, स्वार्थत्यागः, प्राप्तबाधः, इति दोषत्रयं नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे । विधिमुखेन प्रवृत्तिरिति पक्षेऽपि सामान्यशास्त्रेऽर्थवत्पदस्यार्थवत्समुदायातिरिक्तपरत्वेन सङ्कोचपरिकल्पनमस्यैवेति बोध्यम् ।

एतत् परिभाषोदाहरणं यथा "ह्वावामश्च" ( पा० सू० ३।२।२ ) इति सूत्रेण 'सर्गह्वायः' इत्यत्र कप्रत्ययेनाऽणो बाधात्तस्याप्राप्तौ तद्विधीयते, उत 'सर्गसंह्वायः' इत्यत्र सोपसर्गत्वेन कस्याप्यप्राप्तस्याणः सिद्धत्वात् तत्रानेन नियम्यते सोपसर्गेभ्योऽण् यदि स्यात्तर्हि एभ्य एवेति ।

तथा च 'गोसन्दायः' इत्यत्राण् न स्यात् । अतो विधिरेवाश्रीयते । अत एव 'सर्गह्वायः' इत्यादि सिद्ध्यति । एवं क्र्यादिसूत्रे[1] स्तुद्रवादिग्रहणेऽपि । तस्य 'तुष्ठोथ' इत्यादौ भारद्वाजनियमप्रापितेण्णिषेधाय विधित्वे सम्भवति नियामकत्वं नोचितमित्यन्यत्र स्पष्टम् ।

न च क्र्यादीनां नियामकत्वकाले "ऋतो भार०" ( पा० सू० ७।२।६३ ) इत्यस्य नियामकत्वासम्भवेन तदा स्तुद्रवादिग्रहणस्य कथं विध्यर्थत्वसम्भव इति वाच्यम्; चतुर्णां नियमोत्तरं कथञ्चित्सम्भव इत्याशयात् ॥ १०९ ॥

**लिङ्गादिति ।** ननु क्त्वादेशः क्त्वावद्भवतीति वाक्येन तन्निष्ठार्थधातु-

---

१. "कृसृभृवृस्तुद्रुसुश्रुवो लिटि" ( पा० सू० ७।२।१३ ) इति सूत्रे इत्यर्थः ।

**"स्थानिवत्" सूत्रे भाष्ये ॥ ११० ॥**

**ननु "तित्स्वरितम्" इति स्वरितत्वम् 'चिकीर्षति' इत्यादौ स्यात्, अत आह—**

**प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ १११ ।**

**इयं च "अङ्गस्य" इति सूत्रे भाष्ये पठिता। वर्णग्रहणे च न प्रवर्तत इति तत्रैव कैयटे स्पष्टम्। अत एव "सनाशंसभिक्ष उः" "वले" इत्यत्र सन्वलयोः प्रत्यययोर्ग्रहणम्।**

**परे तु "तित्स्वरितम्" इति सूत्र एषा परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाश्रितेति कैयटेनोक्तम्। "अङ्गस्य" इति सूत्रे तत्प्रत्याख्यानायैषा भाष्य एकदेशिनोक्ता। अत एव "तिति प्रत्ययग्रहणं कर्त्तव्यम्" इति वार्त्तिककृतोक्तम् उक्तसूत्रयोर्व्याख्यानात् प्रत्यययोरेव ग्रहणमित्याहुः ॥ १११ ॥**

---

कत्ववद् वलादित्वकित्वादीनां कुतो नातिदेशः। न च व्याप्येन व्यापकस्यानुमानादिनोपस्थित्योपात्तधर्मस्य तद्व्यापकधर्मस्य वातिदेशेन वचनस्य चारितार्थ्येन व्याप्यधर्मस्योपस्थापकसामग्र्यभावेन तदतिदेशासम्भव इति वाच्यम्, वलादित्वस्य तद्घटितार्थधातुकत्वादेश्च क्तादिसाधारणत्वेन तद्व्याप्यत्वासम्भवादिति चेत्, न; परिभाषायां विशेषपदेनोपात्ततद्व्यापकधर्मभिन्नधर्मस्य विवक्षणेनादोषात्। विशेषातिदेशे तु सामान्यातिदेशो भवत्येव। यथा "एकं बहुव्रीहिवत्" ( पा० सू० ८।१।९ ) इति बहुव्रीहिवद्भावे समासवद्भावोऽपीति बोध्यम् ॥ ११० ॥

**न प्रवर्तत इति।** अत्र मानं तु "अपृक्त एकाल्प्रत्ययः" ( पा० सू० १।२।४१ ) इति प्रत्ययग्रहणम्। तद्धि कविमाचष्टे 'कवयति' इत्यत्र "वेरपृक्तस्य" ( पा० सू० ६।१।६८ ) इति लोपाभावाय। यदि वर्णग्रहणेऽपीयं प्रवर्तेत तदा तद्वैय्यर्थ्यं स्पष्टमेव। अतो विशिष्टरूपोपादानविषय एवेयमिति भावः। अत एव मात्रच्कुण्डिनचोश्चित्वं चरितार्थम्। अन्यथा "चितः" ( पा० सू० ६।१।१६३ ) इत्यत्रापि तत्प्रवृत्तौ तद्वैय्यर्थं स्पष्टमेव।

**उक्तमिति।** न च 'अग्नौ' इत्यत्र स्वरितत्ववारणायौपदेशिकप्रत्ययत्ववतो ग्रहणमित्यर्थबोधनाय तच्चरितार्थम्। तथा सति "न विभक्तौ०" ( पा० सू० १।३।४ ) इत्यत्र तुग्रहणस्य वैयर्थ्यापत्तेः। स्मादित्यत्रौत इव विधानकालिकप्रत्ययत्वाभावेनेत्संज्ञायाः फलाभावेनाप्रवृत्त्या दोषाभावात्। 'अग्नौ' इत्यत्रादित्वान्न दोषः।

ननु विशिष्टरूपोपादानाभावात् तत्र परिभाषाप्रवृत्त्या तत्सार्थक्यमिति चेत्, परिभाषायाः फलमेव नेत्याशयेनाह—**उक्तसूत्रयोरिति। व्याख्यानादिति।**

**ननु "विपराभ्यां जेः" इत्यात्मनेपदं 'परा सेना जयति' इत्यर्थके 'पराजयति सेना' इत्यत्र प्राप्नोतीत्यत आह—**

**सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ।। ११२ ।।**

**तेन विशब्दसाहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति तत्रैव भाष्ये स्पष्टम् । सहचरणं सदृशयोरेवेति सहचरितशब्देन सादृश्यवानुच्यते । 'रामलक्ष्मणौ' इत्यादावपि सादृश्यमेव नियामकम् । सदृशयोरेव सहविवक्षा, तयोरेव सहप्रयोग इत्युत्सर्गाच्च । ध्वनितं चेदम् "कर्मप्रवचनीययुक्ते द्वितीया" इति सूत्रे भाष्ये ।**

---

"सनाशंस०" ( पा० सू० ३।२।१६८ ) इति सूत्रे 'पणु दाने' इत्यस्य लाक्षणिकत्वान्न ग्रहणम्, "मतोश्च बह्वच्०" ( पा० सू० ४।२।७२ ) इत्युत्तरसूत्रसाहचर्याद् वलशब्दोऽपि प्रत्ययस्यैव बोधकः ।

न च "षष उत्वम्०" ( का० वा० ६।३।७६ ) इति वार्त्तिके 'धा' शब्देनाप्रत्ययस्यापि ग्रहणे षट् दधातीति 'षड्धा' इत्यादावप्यतिप्रसङ्गापत्तिः; धास्वित्यत्र बहुवचननिर्देशेन नानाधिकरणवाचिनः "सङ्ख्याया विधार्थे धा" ( पा० सू० ५।३।४२ ) "अधिकरणविचाले च" ( पा० सू० ५।३।४३ ) इति विहितस्यैव ग्रहणेनाऽदोषात् ।। १११ ।।

**साहचर्यादिति ।** सहचरस्य भावः साहचर्यम्, तस्मादित्यर्थः । **स्पष्टमिति ।** ननु पक्षिवाचकविशब्दस्यापि सम्भवात्कथं तत्साहचर्यं नियामकम् । न च 'विर्जयति' इत्यादौ विभक्त्या व्यवधनात्ततः परत्वासम्भवः, 'वी जयतः' 'वे जयसि' इत्यादौ तत्सम्भवादिति चेत्, न; परस्परसाहचर्यादुपसर्गस्यैव ग्रहणेनाऽदोषात् । न च परस्परसाहचर्यादनव्यययोरेव ग्रहणमस्त्विति वाच्यम्; उपसर्गयोः प्रादौ पाठेन सहचरणस्य दृष्टत्वेन तयोः साहचर्यवदनुपसर्गयोरपाठेन तद्ग्रहणस्यासम्भवात् ।

अत एव "अन्तरान्तरेण०" ( पा० सू० २।३।४ ) इत्यादावव्यययोरेव ग्रहणमिति सङ्गच्छते । ननु सहचरितशब्देन सहगन्तुरुपस्थितावपि शास्त्रे तस्य नोपयोग इत्याह—**सहचरणमिति ।** साहचर्यस्य सादृश्यव्याप्यत्वात्सादृश्यवतो ग्रहणमित्याह— **सादृश्यवानिति । उच्यते इति ।** निरूढलक्षणयेति भावः ।

ननु लोके दृष्टसाहचर्यसम्बन्धस्यैकसम्बन्धिन्यायेनाभिधानियामकत्वेऽप्यगृहीतसाहचर्यस्थले "सुप्तिङन्तम्०" ( पा० सू० १।४।१४ ) इत्यादौ तिङ्साहचर्यात्सुप्पदं प्रत्याहारपरमेवेति कथमभिधानियामकत्वं तस्येत्यत आह—**रामेति । नियामकमिति ।** रामपदेन दशरथापत्यस्य ग्रहणे इति शेषः । एवं सहविवक्षया सहप्रयोगेणात्रापि सदृशस्यैव ग्रहणं भविष्यतीति तदाशयः । अत्रार्थे मानमाह— **ध्वनितमिति ।**

तत्र हि "पञ्चम्यपाङ्परिभिः" इति सूत्रेण लक्षणादिद्योतकपरियोगे पञ्चमीमाशङ्क्य 'यद्यप्ययं परिर्दृष्टापचारो वर्जने चावर्जने च, अयं खल्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयः, तस्य कोऽन्यः सहायो भवितुमर्हत्यन्यो वर्जनार्थात्, यथास्य गोः सहायेनार्थ इति गौरेवानीयते, नाश्वः, न गर्दभः' इत्युक्तम्। तेन हि सदृशानामेव प्रयोगे सहायभावो बोधितः।

"द्विस्त्रिश्चतुः" इति सूत्रे साहचर्येणैव कृत्वोऽर्थस्य ग्रहणे सिद्धे कृत्वोऽर्थग्रहणादेषाऽनित्या। तेन "दीधीवेवीटाम्" इत्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणमित्यन्यत्र विस्तरः ॥ ११२ ॥

ननु "अस्थि" इत्यनङ् 'प्रियसक्थ्ना ब्राह्मणेन' इत्यत्र न स्यात्, अङ्गस्य नपुंसकत्वाभावात्, अत आह—

श्रुतानुमितयोः श्रुतसम्बन्धो बलवान् ॥ ११३ ॥

श्रुतेनैव सम्बन्धः, नानुमितेन प्रकरणादिप्राप्तनेत्यर्थः। प्रकरणादितः श्रुतेर्बलवत्त्वादिति भावः।

एवं च तत्र लिङ्गमस्थ्यादीनामेव विशेषणम्, नाङ्गस्य शिशीलुग्नुम्विधिषु तु गृह्यमाणस्याभावात् प्रकरणप्राप्ताङ्गस्यैव विशेषणम्।

अत एव "वा नपुंसकस्य" इति सूत्रे "वा शौ" इति न कृतम्। तत्र नपुंसकग्रहणं हि गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्यात, 'बहवो ददतो येषु तानि कुलानि बहुददति' इत्यत्र मा भूत्; 'बहूनि ददन्ति येषु ते बहुददन्तः' इत्यत्र यथा स्यादित्येवमर्थम। स्पष्टं चेदम् "स्वमोर्नपुंसकात्" इत्यत्र भाष्ये।

---

**बोधित इति।** अत एव पणिसाहचर्यात्पनेरपि स्तुतावेवायप्रत्ययः। "सर्त्तिशास्ति०" ( पा० सू० ३।१।५६ ) इति सूत्रे लुप्तशपा शासिना साहचर्यात् सर्त्यर्त्ती जौहोत्यादिकावेव गृह्येते इत्यादि सङ्गच्छते।

**इटो ग्रहणमिति।** नन्वनित्यत्वे उभयोरपि ग्रहणापत्तिरिति चेत्, न; तथा सति तस्य पूर्वनिपातापत्तेः। केचित्त्वनित्यत्वे फलम् "आदृगमहन्०" ( पा० सू० ३।२।१७१ ) इत्यत्र ऋधातोरग्रहणमित्याहुः ॥ ११२ ॥

**प्रियसक्थ्नेति।** प्रियदध्नेति तु नोक्तम्, उरःप्रभृतिष्वस्य पाठेन कपो दुर्वारत्वात्। न चास्थ्यादीनां नित्यनपुंसकत्वेन तद्विशेषणत्वे नपुंसकेत्यस्यानुवृत्तिर्व्यर्था स्यादिति वाच्यम्, "आदृगमहन्०" ( पा० सू० ३।२।१७१ ) इति धाञः कि-प्रत्यये दधिरित्यादौ तत्प्रवृत्तिवारणाय सार्थक्यात्।

**मा भूदिति।** अभ्यस्तात्परो यः शता तदन्तस्य नपुंसकस्य नुम्वा स्यादि-

केचित्तु "अचो रहाभ्यां द्वे" इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन परन्तर्भावादनुमितेन कार्यित्वं बाध्यत इत्येतदुदाहरणमाहुः, तत, न; तक्रकौण्डिन्यन्यायेन सिद्धेरित्यन्यत्र विस्तरः ।। ११३ ।।

ननु "तत्पुरुषे तुल्यार्थः" इति स्वरः 'परमेण, कारकेण, परमकारकेण' इत्यादौ स्यात्, तथा "गातिस्थाघुपाभूभ्यः" इति लुक् 'पं ओवं शोषणे' इत्यतः कृतात्त्वात् परस्यापि स्यात्, अत आह—

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ।। ११४ ।।**

लक्षणं लाक्षणिकम्, उपचारात ।

तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तः, तस्यैव ग्रहणम्, शीघ्रोपस्थितिकत्वात् । द्वितोयो हि बिलम्बोपस्थितिकः । 'पै' इत्यस्य

---

त्यर्थः । अत्र शत्रन्तस्यानपुंसकत्वान्न भवति । यदि शत्रन्ते नपुंसकस्येति विशेषणं न स्यात्, तदा तद्वैय्यर्थ्यं स्पष्टमेव ।

अत्र श्रुतत्वं साक्षादुच्चरितत्वरूपम्, अन्यतराकाङ्क्षारूपस्थानप्रमाणलब्धत्वञ्च । अनुमितत्वन्तूभयाकाङ्क्षारूपप्रकरणप्राप्तत्वमिति बोध्यम् ।

**केचित्त्विति**—मतेऽनुमितत्वं प्रकरणप्राप्तत्वरूपम्, किन्तु सामान्यरूपेण प्रतीतिविषयत्वम्, तेन विशेषविषयानुमानात् ।। ११३ ।।

**विलम्बोपस्थितिक इति** । लक्षणञ्च प्रतिपदञ्च लक्षणप्रतिपदम्, पदं-पदं प्रतिपदम्, वीप्सायामव्ययीभावः । तत्तत्पदेन बोधितमित्यर्थः । अत्र पदशब्दः कार्यविधौ यस्य येन रूपेणोद्देश्यता तद्रूपावच्छिन्नपदपरः । तादृशपदकरणिकाज्ञानज्ञाप्यतद्व्यापकीभूता या प्रमितिः, तद्विषयस्यैव प्रयोगसमवायिशब्दस्य ग्रहणम् । एवमेव प्रतिपदविधाना षष्ठीत्यादावपीति केचित् । लक्षणम् = शास्त्रं गुणो वा, ताभ्याम्—उक्तम् = बोधितमित्यर्थः ।

अन्ये तु—**प्रतिपदोक्तम्**—इत्यत्र पदशब्दः एतत्परिभाषाप्रवृत्तिविषयसूत्रे यस्य येन रूपेण कार्यिता तद्रूपावच्छिन्नबोधकशब्दपरः । तस्याभिमुख्यद्योतकेन प्रतिना "लक्षणेनाभिप्रति०" ( पा० सू० २।१।१४ ) इति समासः । एतत्समासविषये 'प्रत्यग्नि शलभाः पतन्ति' इत्यादावग्निपदस्य ज्ञापकाग्नौ लक्षणावत्, पदशब्दस्यात्र ज्ञापकपदे लक्षणा । तथा च कार्यिपदमभिमुखीकृत्य तद्बोधकनिरुक्तपदेन बोधितं प्रयोगसमवायि यद्रूपं तस्य शास्त्रे ग्रहणमित्यर्थः ।

एवञ्च स्वावयववाचकपदघटितशास्त्रबोधितत्वं लाक्षणिकत्वम्, स्ववाचकघटितशास्त्रबोधितत्वं प्रतिपदोक्तत्वमिति फलितम् । स्वपदं तत्तत्कार्यप्रवृत्तियोग्यलक्ष्यघटककार्यिपरम् । तथा चैतत्परिभाषाप्रवृत्तिविषयीभूतं प्रयोगसमवायि

**'पा' इति रूपं लक्षणानुसन्धानपूर्वकं बिलम्बोपस्थितिकम्। पिबतेस्तु तच्छीघ्रोपस्थितिकम्। इदमेव ह्येतत् परिभाषाबीजम्। इयं वर्णग्रणेऽपि "ओत्" सूत्रे**

---

यत्पदं तल्लक्षणेनावयवशः प्रतिपादितञ्चेल्लाक्षणिकम्। अनुकरणेनानुकार्यस्वरूपबोधनवत् तत्तत्पदेनैव तादृशं रूपमाचार्येण बोधितं यत् तत्प्रतिपदोक्तम्।

एवञ्च तत्तत्पदेन तत्तत्सजातीयशब्दस्वरूपप्रतिपादनं शास्त्रे विशिष्य तत्तत्स्वरूपोपादान एव सम्भवति, तत्त्वन्यथेति साक्षात्तत्तच्छब्दानुवादेन बोधितत्वं प्रतिपदोक्तत्वमिति ग्रन्थकृतां व्यवहारः। एतयोर्मध्ये प्रतिपदोक्तस्यैव कार्यमित्यर्थः। यथा 'अध्याप्य गतः' इत्यादौ इङ्धातोः "क्रीङ्जीनां णौ" ( पा० सू०-६।१।४८ ) इत्यात्त्वे पुकि "विभाषाऽऽपः" ( पा० सू० ६।४।५७ ) इति णेर्विकल्पेनायादेशो न, अस्यावयवद्वारेणैवान्वाख्यानात्। किन्तु आप्लृधातोरेव भवति। एवम् "इसुसुक्तान्तात्कः" ( पा० सू० ७।३।५१ ) 'धानुष्कः' इत्यत्रैव भवति, न तु वस्धातोः क्विपि सम्प्रसारणे "शासिवसि०" ( पा० सू० ८।३।६० ) इति षत्वे उषाचरति 'औषिकः' इत्यत्रेति बोध्यम्।

एवं पूर्वपदप्रकृतिस्वरविधायके "तत्पुरुषे तुल्यार्थ०" ( पा० सू० ६।२।२ ) इति सूत्रे पूर्वपदस्य तृतीयान्तत्वेनोद्देश्यता, तद्रूपावच्छिन्नबोधकं तत्पुरुषविधायके "तृतीया तत्कृता०" ( पा० सू० २।१।३० ) इति सूत्रे तृतीयापदं तेन बोधितम्।

पूर्वपदञ्च 'शङ्कुलाखण्डः' इत्यादौ वर्तमानं शङ्कुलापदमिति लक्षणसमन्वयः। 'परमकारकेण' इत्यत्रत्यपरमपदं तु यद्यपि तृतीयान्तम्, तथापि तस्य तत्पुरुषघटकता विशेषणत्वेनैव न तु तृतीयान्तपदबोध्यत्वेनेति न दोषः।

एवम् "विभाषा दिक्समासे बहुव्रीहौ" ( पा० सू० १।१।२८ ) इत्यत्र दिक्समासत्वं दिग्वाचकपदप्रकृतिसुबन्तत्वरूपोद्देश्यावच्छेदकविशिष्टसमासत्वम्, तच्च "दिङ्नामान्यन्तराले" ( पा० सू० २।२।२६ ) इत्यत्र समासपदस्यानुवर्तनादन्तरालबहुव्रीहौ दक्षिणपूर्वेत्यत्र समासे अस्ति। उन्मुग्धबहुव्रीहौ तु दिग्वाचकपदप्रकृतिकसुबन्तत्वेन तत्रोद्देश्यताया अभावान्न[1] तत्र दोष इति सर्वत्र लक्षणसङ्गतिः।

न चैवं सखीमतिक्रान्तः 'अतिसखिः' इत्यादावनङादिकं स्यात्, प्रातिपदिकस्य कुत्रापि साक्षादुच्चारणासम्भवादिति वाच्यम्, 'अग्रहणप्रातिपदिकानामुपदेशः कर्त्तव्यः मञ्चको मञ्जकः' इति भाष्येण तादृशानामप्युदेशानुमानात्। यद्वा प्रतिपदोक्तपदेनोद्दिष्टभिन्नं गृह्यते। तेन तत्तत्सदृशयोरपि ग्रहणम्। लाक्षणिकपदेन गुणैः प्रापितस्य ग्रहणात्।

---

१. 'अभान्न' इति पाठः क० पु०।

**भाष्ये सञ्चारितत्वात् ।**

**यत्तु वर्णग्रहणे नैषा "आदेचः" इत्यत्रोपदेशग्रहणादिति, तत्तु तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम् ।**

**अनित्या चेयम् "भुवश्च महाव्याहृतेः" इति महाव्याहृतिग्रहणादित्यन्यत्र विस्तरः ॥ ११४ ॥**

---

**संचारितत्वादिति ।** तत्र हि "च्व्यन्तस्य प्रतिषेधो वक्तव्यः" इति वार्त्तिकफलत्वेनोपन्यस्ते 'अदोऽभवत्' इत्यादौ दोषवारणायेयमुपन्यस्ता । 'यस्य हि साक्षादुच्चारणं नास्ति "आद्गुणः" ( पा० सू० ६।१८७ ) इत्यादिसामान्यलक्षणेन यद्रूपं निष्पाद्यते तल्लाक्षणिकमुच्यते' इति कैयटेन तद्व्याख्यातम् । यदीयं वर्णग्रहणे न प्रवर्तेत तदास्यासङ्गतिः स्पष्टैव ।

न चैवम् 'क्रापयति' इत्यादौ पुगनापत्तिः, अस्य लाक्षणिकत्वादिति वाच्यम्, अस्य लक्षणजन्यत्वेऽपि "गमेर्डोः" ( उणा० सू० २२५ ) इत्यत्रेवात्राप्याकारस्य साक्षादुच्चारणेनास्य गुणैः प्रापितत्वाभावात् । अत एव "ह्वावामश्च" ( पा० सू०-३।२।२ ) इति सूत्रे ह्वेञो ग्रहणं चरितार्थम् । तद्धि—आदन्तलक्षणकव्वाधनाय । अस्य लाक्षणिकत्वादेव तदप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ।

न चैवम् 'चिकीर्षति' इत्यादौ "अज्झन०" ( पा० सू० ६।४।१६ ) इति दीर्घे "ॠत इद्धातोः" ( पा० सू० ७।१।१०० ) इतीत्वानापत्तिः, दीर्घशब्देनैव विधानादिति वाच्यम्, 'मातॄणाम्' इत्यादावित्ववारणाय कृतेन धातुग्रहणेन तद्विषयेऽस्या अप्रवृत्तिबोधात् । अत एव 'चिकीर्षति' इत्यादौ "अज्झन०" ( पा० सू० ६।४।१६ ) इति दीर्घे "इट् सनि वा" ( पा० सू० ७।२।४१ ) इतीड्विकल्पो न । केचित्तु सन्निपातपरिभाषया नेडित्याहुः ।

'अतिखट्वाय' इत्यत्राकारस्य "सुपि च" ( पा० सू० ७।३।१०२ ) इति दीर्घनिष्पन्नत्वेन 'अभ्र आं अपः' इत्यत्रानुनासिकाकारवद् दीर्घादिपदप्रतिपादितत्वेन गुणैः प्रापितत्वरूपलाक्षणिकत्वस्य सुस्थत्वान्न तत्र दोषः ।

**ग्रहणादिति ।** भूर्भुवः स्वरिति सान्ताव्ययानि पृथिव्यन्तरिक्षस्वर्गवाचकानि । एतास्तिस्रो महाव्याहृतयः । तत्र भुवः सस्य रुर्वा स्याद्रेफो वा, भुवरित्युदाहरणम् । महाव्याहृतिग्रहणम् 'भुवो विश्वेषु' इत्यत्र व्यावृत्तये । तत्र "छन्दसि लुङ्लिङ्लिटः" ( पा० सू० ३।४।६ ) इति वर्त्तमानेऽर्थे लङ्, सिप्, शपि गुणाभावश्छान्दसः, उवङ्, "बहुलं छन्दस्यमाङ्योगेऽपि" ( पा० सू० ६।४।७५ ) इत्यडभावः । लाक्षणिकत्वादेवास्याग्रहणे सिद्धे महाव्याहृतिग्रहणं तदनित्यत्वे ज्ञापकमिति भावः ॥ ११४ ॥

**नन्वेवं देङो दोधातोश्च कृतात्त्वस्य घुसंज्ञा न स्यात्, तथा मेङ आत्त्वे 'प्रणिमाता' इत्यादौ "नेर्गदनद" इति णत्वं न स्यात्, तथा 'गै' इत्यस्यात्त्वे "घुमास्था" इतीत्वं न स्यात्, अत आह—**

**गामादाग्रहणेष्वविशेषः ।। ११५ ।।**

**अत्र च ज्ञापकं दैपः पित्त्वम् । तद्धि 'अदाप्' इति सामान्यग्रहणार्थम् । अन्यथा लाक्षणिकत्वादेव विधौ तदग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन पित्त्वेन ? तेन चैकदेशानुमतिद्वारा सम्पूर्णा परिभाषा ज्ञाप्यते ।**

---

**न स्यादिति ।** दाण्दाञोः सूत्रस्य चारितार्थ्यात् 'देङ् रक्षणे, दो अवखण्डने' इत्यनयोर्न स्यात् । तथा च—

दीयते वसु भूर्येन दीयन्ते तेन मानवाः ।
अदीयन्त द्विषोऽस्त्रेण सन्तोऽदीयन्त येन च ।।

इत्यनापत्तिरिति भावः ।

**न स्यादिति ।** 'माङ् माने' इत्यत्र सूत्रं चरितार्थम् । 'मा माने' इत्यस्य तु नात्र ग्रहणम्, घुप्रकृतिर्माङिति भाष्ये ङितः पाठात् । घुप्रकृतिकमाङिति द्वन्द्वः । प्रकृतिपदेन प्रत्यासत्त्या पूर्वोत्तरयोरेव प्रकृतेर्ग्रहणम् । तत्फलं तु 'प्रणिमयते' 'प्रणिदयते' इत्यत्र णत्वम् ।

न च "नेर्गद०" ( पा० सू० ८।४।१७ ) इति सूत्रे 'प्रणिमयते' इत्यत्र णत्वार्थं क्रियमाणेन प्रकृतिग्रहणेनैव मेङः सङ्ग्रहेण 'प्रणिमाता' इत्यत्र णत्वस्य सिद्धत्वात् "गामादा०" ( परि० ११५ ) इत्यत्र माग्रहणं व्यर्थम् । न च "घुमास्था०" ( पा० सू० ६।४।६६ ) "ह्वावामश्च" ( पा० सू० ३।२।२ ) इत्यत्र त्रयाणां ग्रहणार्थमियमावश्यकी, घटादौ पठिते 'श्रा-पाके' इत्यत्र लक्षणप्रतिपदोक्तपरिभाषा-लुग्विकरणपरिभाषयोर्विरोधादुभयोरप्रवृत्त्योभयोरपि ग्रहणवदत्रापि लुग्विकरणलक्षणप्रतिपदोक्तनिरनुबन्धकपरिभाषाणां परस्परं विरोधादप्रवृत्त्या त्रयाणां ग्रहणसिद्धेः ।

न च प्रकृतिग्रहणेन मेङ आत्वात्पूर्वं तत्प्रकृतित्वाद् ग्रहणसम्भवेऽप्यात्वोत्तरं तत्प्रकृतित्वासम्भवाद् ग्रहणं न प्राप्नोतीति वाच्यम्, आत्वोत्तरमपि स्थानिवत्त्वेन प्रकृतित्वबुद्धचा णत्वस्य सूपपादत्वादिति चेत्, न; प्रकृतित्वस्याशास्त्रीयत्वेन तस्य स्थानिवद्भावेनातिदेशासम्भवात् । **न स्यादिति ।** 'गास्तुतौ' इति जौहोत्यादिके सूत्रस्य चारितार्थ्यादिति भावः ।

नन्वेवमपि निरनुबन्धकपरिभाषया देङादेर्ग्रहणं न स्यात् । एवं लुग्विकरणपरिभाषयेत्वविधौ 'मा माने' इत्यस्य ग्रहणं न स्यात् । माङ्मेङोरेव ग्रहणं

**इयं च लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषालुग्विकरणपरिभाषाणां बाधिका । "दाधा घु" इति सूत्रे भाष्ये स्पष्टा ।**

**"गातिस्था" इति सूत्रे इणादेशगाग्रहणमेवेष्यत इति न दोष इत्यन्यत्र विस्तरः ।। ११५ ।।**

**ननु वृद्ध्यादिसंज्ञाः समुदाये स्युः, अत आह—**

**प्रत्येकं वाक्यपरिसमाप्तिः ।। ११६ ।।**

**'देवदत्तादयो भोज्यन्ताम्' इत्यत्र भुजिवत् ।। ११६ ।।**

---

स्यात् । तथा गाग्रहणेन "गै शब्दे" 'गा स्तुतौ' इत्यनयोरेव ग्रहणं स्यात् । इङो गाङादेशस्य ग्रहणं न स्यात् । तथा च 'मिमाते' 'अध्यगीष्ट' इति रूपानापत्तिरत आह—**इयञ्चेति** ।

**बाधिकेति** । अत एव गाङादेशे ङित्करणं चरितार्थम् । तद्धि "गाङ्कुटादिभ्यः" (पा० सू० १।२।१) इत्यत्र गाङ्पदेनास्य ग्रहणेन ङित्वार्थम्, सत्यपि ङित्वे यदीत्वविधौ लुग्विकरणनिरनुबन्धकपरिभाषाभ्यामस्य ग्रहणं नैव स्यात्तदा ङित्करणं व्यर्थमेव स्यात् । तस्मादियं तिसृणामेव बाधिका, नार्थवत्परिभाषाया इति तत्त्वम् ।

अत एव 'प्रणिदापयति' इत्यत्रानर्थकत्वाण्णत्वानापत्तिमाशङ्क्य यदागमन्यायेन समाहितम् । एतेन प्रतिपदोक्तपरिभाषानन्तरमेवास्योल्लेखनेन तदपवादत्वमेवेत्यपास्तम् । तदनित्यत्वादेव सिद्धेरस्या वैयर्थ्यापत्तेः । नन्वेवम् "गातिस्था०" ( पा० सू० २।४।७७ ) इति सूत्रे गाग्रहणेऽपि सर्वग्रहणापत्तिरत आह—**गातीति** ।। ११५ ।।

**वाक्यपरिसमाप्तिरिति** । अत्र वाक्यपदेन लक्षणया वाक्यार्थभूतक्रियाजन्यफलस्य ग्रहणम् । यथा **'देवदत्तादयो भोज्यन्ताम्'** इति वाक्ये णिजर्थभूतप्रयोजकव्यापार एव वाक्यजन्यप्रतीतिविशेष्यभूता क्रिया । तत्फलं णिच्प्रकृतिवाच्यं तृप्तिफलकमदनरूपं भोजनम्, तच्च प्रत्येकमेव परिसमाप्यते । तद्वच्छास्त्रेऽपि "वृद्धिरादैच्" ( पा० सू० १।१।१ ) इत्यादौ वृद्ध्यभिन्ना आदैच इति वाक्यार्थः । तत्फलं तु प्रदेशेषु आदैचामुपस्थितिफलकः शक्तिग्रहः प्रत्येकं परिसमाप्यते इत्यर्थः ।

ननु तृप्तिफलिकाया एकस्या भुजिक्रियाया बहुभिर्युगपद्भारवहनवदनुष्ठातुमशक्यत्वाद् भुजिफलस्य तृप्तिरूपस्य समुदायेऽसम्भवात्तथाङ्गीकारेऽपि प्रकृते तन्न्यायेन प्रत्येकं संज्ञाङ्गीकारे किं बीजमिति चेत्, न; "वृद्धिर्यस्य०" (पा० सू० १।१।७३) इति सूत्रस्यैव मानत्वात् । अन्यथा 'औपगवीयः' इत्यत्राचां मध्ये आदिभूतस्याचो वृद्धित्वाभावात्तदसङ्गतिः स्पष्टैव ।

**नन्वेवं संयोगसंज्ञासमाससंज्ञाऽभ्यस्तसंज्ञा अपि प्रत्येकं स्युः, अत आह—**

**क्वचित्समुदायेऽपि ।। ११७ ।।**

**'गर्गाः शतं दण्ड्यन्ताम्', अर्थिनश्च राजानो हिरण्येन भवन्ति' इत्यादौ दण्डनवत् । लक्ष्यानुरोधेन च व्यवस्था ।। ११७ ।।**

**ननु "यूस्त्र्याख्यौ" इत्यत्र व्यक्तिपक्षे दीर्घनिर्देशादनण्त्वेन ग्राहकसूत्राप्राप्त्योदात्ताद्यन्यतमोच्चारणेऽन्यस्वरकस्य संज्ञा न स्यात्, अत आह—**

**अभेदका गुणाः ।। ११८ ।।**

**असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदकः, न विवक्षित इत्यर्थः ।**

---

न च "तद्धितेष्वचामादेः" ( पा० सू० ७।२।११७ ) इति त्रयाणां विधानात्तच्चरितार्थम्, अच्त्वस्य प्रत्येकमेव विश्रान्त्याचामादेरवृद्धित्वात् ।। ११६ ।।

**दण्डनवदिति ।** न च 'प्रतिप्रधानं गुणावृत्तिः' इति न्यायेनाप्रधानगर्गानुरोधेन प्रधानस्यावृत्तेरसम्भवेऽपि प्रकृते एतन्न्यायाश्रयणेन समुदाये संज्ञायाः प्रवृत्तौ किं बीजमिति वाच्यम्, हल्हलेत्येव वक्तव्ये तत्रानन्तरपदस्वारस्येन समाससंज्ञायां सहग्रहणानुवृत्त्या समुदाये एव वाक्यस्य परिसमाप्त्यादोषात् ।

एवम् 'देवदत्तादयो नाटयन्ताम्' इत्यादौ नाटयक्रियाया गीतादिक्रियासमुदायरूपत्वेन समुदाय एव वाक्यस्य परिसमाप्तिवदित्यपि वोध्यम् । प्रथममध्यमोत्तमसंज्ञा अपि प्रत्येकमेव । "णलुत्तमो वा" (पा० सू० ७।१।९१) इत्यादिज्ञापकात् । "अट्कुप्वाङ्०" ( पा० सू० ८।४।२ ) इत्यत्र तु 'गर्गैः सह न भोक्तव्यम्' इतिवत् प्रत्येकं समुदाये च वाक्यपरिसमाप्तिर्द्रष्टव्या । तदाह—**लक्ष्यानुरोधेनेति** ।।११७।।

**न स्यादिति ।** व्यक्तिपक्षे गुणानां भेदकत्वे यद्गुणविशिष्टस्योच्चारणं तद्गुणसमानाधिकरणतद्व्यक्तिवृत्तिव्याप्यजात्यवच्छिन्नव्यक्तेरेव शक्यत्वेन गुणान्तरयुक्ततज्जात्यवच्छिन्नस्य ग्रहणाभावादिति भावः । **स्वरूपेणेति ।** अधिकयत्नं विना साक्षादुच्चारित इत्यर्थः । यत्ने सत्यप्यविवक्षाङ्गीकारे यत्नवैयर्थ्यापत्तिरिति भावः ।

**गुण इति ।** उदात्तानुदात्तस्वरितानुनासिकत्वादिरूपाश्चत्वारो धर्माः, न तु ह्रस्वत्वादयः, अणुदित्सूत्रारम्भात् । **न भेदक इति ।** न व्यावर्त्तक इत्यर्थः । तस्याव्यावर्त्तकत्वे अविवक्षैव फलति । तदाह—**न विवक्षित इति ।** तथा चोच्चार्यमाणवर्णनिष्ठगुणस्याविवक्षितत्वेन गुणस्य शक्यतावच्छेदककोटावप्रवेशेन 'यू' इत्यत्र द्विमात्रत्वसमानाधिकरणेत्वावच्छिन्नस्यैव वाच्यत्वस्वीकारेण गुणान्तरयुक्तस्यापि सङ्ग्रहसम्भव इति भावः ।

**अत्र च "अस्थिदधि" इत्यादावनङादेरुदात्तस्यैवोच्चारणेन सिद्धे उदात्तग्रहणं ज्ञापकम्। स्वरूपेणोच्चारित इत्युक्तेरनुदात्तादेरन्तोदात्तादित्युदात्तादिशब्दोच्चारणे विवक्षैव।**

**"उञ उँ" इत्यत्राननुनासिक एवोच्चारणीये यत्नाधिक्येनानुनासिकोच्चारणाद् विवक्षा बोध्या। "पथिमथ्यृभुक्षाम्" इत्यादौ स्थान्यनुरूपतयानुनासिक एवोच्चारणीये निरनुनासिकोच्चारणात् तद्विवक्षा। एतदर्थमेवासति यत्न इत्युक्तम्।**

---

अत एव "दण्डहस्तः' इत्यादौ सवर्णदीर्घो न। अन्यथा "नाज्झलौ" (पा० सू० १।१।१०) इत्यत्र "अणुदित्०" (पा० सू० १।१।६९) सूत्रस्याप्रवृत्त्या व्यक्तिपक्षेऽक्षरसमाम्नाये यद्गुणविशिष्टस्यैवोच्चारणं तद्गुणविशिष्टतद्व्यक्तेरेवाच्त्वेन व्यक्त्यन्तरस्यानच्त्वान्निषेधानापत्तिः। मम तु गुणानामभेदकत्वाद् ह्रस्वषड्व्यक्तीनामपि ग्रहणान्न दोषः।

**ज्ञापकमिति**। न चोदात्तग्रहणे "अनुदात्तं पदम्०" (पा० सू० ६।१।१५८) इत्यस्य प्रवृत्तिः, स्वरूपेणोच्चारणे तु नेति फलभेदात्कथं ज्ञापकत्वमिति वाच्यम्, उदात्तगुणयुक्तस्य स्वरूपेण विधानेऽपि भेदका इति पक्षे "उञः" (पा० सू०-१।१।१७) "ऊँ" (पा० सू० १।१।१८) इत्यत्रानुनासिकविधानवदुदात्तविधानेऽपि शास्त्रस्य तात्पर्येण परिभाषोपस्थितिसम्भव इति भाष्याशयात्। **स्वरूपेणोच्चारित इत्युक्तेरिति**। साक्षादुच्चारित इत्यर्थः। **विवक्षैवेति**। अन्यथानुदात्तादिपदस्य स्थानेऽच्पदमेव कुर्यादिति भावः।

न च "अनुदात्तादेरञ्" (पा० सू० ४।२।४४) इत्यत्र अजादेरित्युक्तौ हलादावञनापत्तिः। अनुदात्तग्रहणे तु "स्वरविधौ व्यञ्जनम्०" (परि० ८०) इति परिभाषोपस्थित्या न दोष इति वाच्यम्, अनुदात्तग्रहणे कृतेऽपि तस्याभेदकत्वेनाजादिषु हलादिषु "स्वरविधौ०" (परि० ८०) इत्यनेनाविद्यमानवत्त्वात् प्राप्स्या 'अञ्' इत्येव प्रातिपदिकमात्रात्तत्सिद्धावनुदात्तादिग्रहणस्य वैयर्थ्यापत्तेः।

नन्वेवमपि "पथिमथि०" (पा० सू० ७।१।८५) इत्यत्र यत्नाधिक्याभावात् शुद्धस्य विवक्षासम्भवात् तत्रत्यभाष्यासङ्गतिरत आह—**पथीति। उच्चारणीये इति**। प्रतिपत्तिलाघवायेति शेषः। **तद्विवक्षेति**। नन्वत्र कथमनुनासिकस्य प्रसक्तिः, आकारस्यानण्त्वेन "अणुदित्०" (पा० सू० १।१।६९) सूत्राप्रवृत्तेः। न च गुणानामभेदकत्वेन तत्प्रसक्तिः, अनुनासिकत्वस्येव निरनुनासिकत्वस्यापि गुणत्वे मानाभावात्।

**न चवमस्थ्यादीनाम् "नञ्विषयस्य" इत्याद्युदात्ततयान्त्यादेशस्यानङः स्थान्यनुरूपेऽनुदात्त एवोच्चारणीय उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम्, परमास्थिशब्दादाबन्तोदात्त उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावात् ।**

---

न च निर्गुणस्योच्चारणासम्भवाद् यत्किञ्चिद्गुणकस्यैवोच्चार्यमाणत्वेन तस्याविवक्षयानुदात्तत्वादिगुणान्तरयुक्तस्य ग्रहणवदानुनासिक्यरूपगुणकस्यापि ग्रहणं सुवचम्, उदात्तत्वादीनां त्रयाणां परस्परं विरोधवत्तैरनुनासिकत्वस्य विरोधे मानाभावेनोदात्तत्वादिगुणैरनुनासिकत्वस्य व्यावृत्त्यसम्भवेन विरुद्धगुणान्तर-युक्तस्य व्यावृत्तिप्रसङ्गे तदभावाय ज्ञापकेन साधितयानया विरुद्धगुणान्तरयुक्तस्य सङ्ग्रहेऽप्यन्यस्य सङ्ग्रहासम्भवादिति चेत्, अत्राहुः, अनङुदात्त इत्युदात्तग्रहणेन वर्णानां गुणकृतभेदाभाव एव ज्ञाप्यते, न तु स्वरूपेणोच्चार्यमाणो गुण इति गौरवात् ।

"अनुदात्तादेरञ्" ( पा० सू० ४।२।४४ ) इत्यादौ तु सामर्थ्याद् भेदकत्व-मेव । तथा च द्विमात्रत्वसमानाधिकरणात्वरूपजात्यवच्छिन्नस्य सर्वस्यापि विधेयत्वेनोपस्थितयाऽन्तरतमपरिभाषयाऽनुनासिक एव स्यादिति भाव इति ।

अन्ये त्वाहुः—स्वरूपेणोच्चारितोऽपि गुणो न व्यावर्त्तक इत्यर्थः । तत्र सत्यपि गुणे तस्य न्यायेनाविवक्षया शक्यतावच्छेदककोटावप्रवेशेन गुणान्तरयुक्त-ग्रहणाङ्गीकारेऽसति गुणे गुणान्तरयुक्तस्य ग्रहणं कैमुतिकन्यायसिद्धमिति न दोष इति ।

वस्तुतस्तु 'तपरसूत्रेण षण्णां ग्रहणं प्राप्नोति' इति भाष्ये यत्नकथनम्, न तु निरनुनासिकत्वस्यापि गुणत्वाभिप्रायेण । तथा सति 'भूयात्' इत्यादावनुना-सिकयकारस्यापि पक्षे श्रवणापत्तेः ।

न च "भाव्यमान०" ( परि० १९ ) इति परिभाषया निषेधः, यासुटस्त-त्त्वेऽपि तदवयवयकारे भाव्यमानत्वासम्भवात् । अन्यथाऽनङि अकारस्यापि भाव्य-मानतया तेन निषेधेन सवर्णाग्रहणेनोदात्तग्रहणस्य स्वांशे चारितार्थ्यं दुर्वचमेव स्यात् । अत एव "ऋदुशन०" ( पा० सू० ७।१।९४ ) इत्यनङ् तृन्तृचोः ऋकारस्यानुदात्तत्वादिगुणयुक्तो भवतीति सिद्धान्तः सङ्गच्छते । **परमास्थीति ।** "पदाङ्गाधिकारे०" ( परि० २९ ) इति परिभाषयेति भावः ।

ननु "चतुरः शसि" ( पा० सू० ६।१।१६४ ) इत्यनेनान्तोदात्तो जायमानः 'चतस्रः' इत्यत्रापि प्राप्नोतीति तन्निवृत्त्यर्थमाद्युदात्तनिपातनं क्रियते । एत-त्परिभाषया तत्राप्यभेदकत्वापत्तिरिति तद्भाष्यासङ्गतिः । चतुरशब्दस्य व्युत्पत्तिपक्षे "चतेरुरन्" ( उणा० सू० ७३६ ) इति निदन्तत्वेनाव्युत्पत्तिपक्षे

**"चतसर्याद्युदात्तनिपातनं करिष्यते, वधादेशे आद्युदात्तनिपातनं करिष्यते, पदादयोऽन्तोदात्ता निपात्यन्ते, सहस्य स उदात्तो निपात्यते" इत्यादिभाष्यं त्वेकश्रुत्याऽष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थमित्याशयेन ।**

**"त्रैस्वर्येण पाठः" इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः।**

**परे तु, निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम्, तत्तद्रूपाद् यत्नात् तत्र तत्रोदात्तादिविवक्षा। "तिसृचतसृ" इत्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणम्—अन्यत्र स्थान्यनुरूपे स्वर उच्चारणीये तत्तदुच्चारणं विवक्षार्थम् ।**

---

"नः सङ्ख्यायाः" (फि० सू० २८) इति शास्त्रेणाद्युदात्तत्वेनाधिकयत्नाभावादित्यत आह—**चतसरीति ।**

ननु 'चतस्रः' इत्यत्र "चतुरः शसि" ( पा० सू० ६।१।१६४ ) इत्यन्तोदात्तं बाधित्वाचिरादेशेन पूर्वस्य स्वरभाविनोऽसम्भवात् स्वरो न भवति । तकाराकारस्य तु न प्रसङ्गः, रेफस्य स्थानिवत्त्वात् । 'स्वरे न स्थानिवत्' इति निषेधस्तु लोपरूपाजादेश एवेत्यरुचेराह—**वधादेशे इति ।** 'अवधीत्' इत्यत्र स्थानिवत्त्वेनानुदात्तत्वादिप्रतिषेधमाशङ्क्य तद्वारणाय तत्रोदात्तनिपातनं करिष्यते इत्युक्तम् । तद्विरुद्ध्येत । तत्राप्यनयाऽविवक्षाप्रसङ्गादिति भावः ।

नन्वत्रापि "स्थानेऽन्तरतमः" ( पा० सू० १।१।५० ) इति वचनानुग्रहादादेशेऽपि स्थान्यनुरूपेऽन्तोदात्ते उच्चारणीये, उदात्तोच्चारणं तद्विवक्षार्थमित्यत्राप्यधिकयत्नस्य वर्तमानत्वान्न ज्ञापकपरभाष्यविरोध इत्यत आह—**पदादय इति ।**

**एकश्रुत्येति ।** सर्वामप्यष्टाध्यायीमेकश्रुत्या पठित्वा पदादेशे एकश्रुत्या पाठं विहायोदात्तोच्चारणरूपयत्नाधिक्येन तद्विवक्षेति भावः ।

ननूदात्तग्रहणेन स्वशब्देनानुदात्तो गुणो न विवक्ष्यत इति ज्ञाप्यते? उत असति यत्ने इति ? आद्ये निपातनस्वरेण विवक्षापत्तेः । द्वितीयेऽनङ् उदात्त इत्यत्राप्येकश्रुत्या पठितव्ये तद्विहायोदात्तोच्चारणं विवक्षार्थं भविष्यतीति स्वांशे चारितार्थ्यं दुर्वचमित्यत आह—**त्रैस्वर्येणेति ।**

न चैवं सूत्र—( पूर्वोत्तर )भाष्ययोर्विरोधो दुर्वार एवेति चेत्, अत्राहुः; "विभाषा छन्दसि" ( पा० सू० १।२।३६ ) इति वैकल्पिकमेकश्रुत्यात्वमङ्गीकृत्याद्युदात्तनिपातनं करिष्यत इति भाष्यं प्रवृत्तम् । 'पक्षान्तरैरपि परिहारा भवन्ति' इति न्यायेन तस्या वैकल्पिकत्वात् त्रैस्वर्येण क्वचित्सूत्रपाठमाश्रित्य ज्ञापकत्वमुक्तमिति ।

**करणमिति ।** यद्यपि सर्वमपि कार्यमन्यथा प्रयोगे प्राप्ते एव क्रियते, तथापि तत्र तादृशं रूपं न साक्षादुच्चार्यत इति विशेषः । **विवक्षार्थमिति ।** हन्तेर्धातोरन्त

**सम्पूर्णाष्टाऽध्यायप्राचार्येणैकश्रुत्या पठितेत्यत्र न मानम्। क्वचित्पदस्यैकश्रुत्यापि पाठः, यथा दाण्डिनायनादिसूत्रे ऐक्ष्वाकेति। यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्, तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः।**

**विधेयाण्विषये तु "अप्रत्ययः" इति निषेधान्न गुणाभेदकत्वेन सवणग्रहणम्, अत एव 'घटवत्' इत्यादौ मतोर्मस्य नानुनासिको वकारः। अत एव "तद्वानासाम्" इति सूत्रनिर्देशः। अन्यथा "प्रत्यये भाषायाम्" इति नित्यमनुनासिकः स्यात्।**

---

उदात्त इत्यन्तोदात्तत्वात् तदनुरूपेऽन्तोदात्ते कर्त्तव्ये, आद्युदात्तोच्चारणं विवक्षार्थमिति भावः।

न च हन्तेरेकाच्त्वादाद्युदात्तत्वस्यापि सूपपादत्वात् तत्स्थानिकवधादेशस्याप्याद्युदात्ततेति स्थान्यनुरूप एवाद्युदात्त इति वाच्यम्, तस्य शास्त्रेणान्तोदात्तविधानेनान्तोदात्तव्यवहारात् तादृशस्यैवादेशस्यौचित्यमित्याशयात्। एवं पादशब्दस्य वृषादित्वेनाद्युदात्तत्वात् तत्स्थानिकादेशेऽपि तथोच्चारणीयेऽन्तोदात्तोच्चारणम्, एवं सादेशस्योदात्तानुदात्तोभयस्थानिकत्वेन स्थान्यनुरूपे स्वरिते उच्चारणीये उदात्तोच्चारणं विवक्षार्थमिति भावः।

केचित्तु—एवं सति 'तिसृ-चतसृ' इत्यन्तोदात्ते कर्त्तव्ये, आद्युदात्तोच्चारणं विवक्षार्थमितिवत्, 'अनङुदात्तः' इत्यत्रापि अनङः 'फिषोऽन्तः' ( फि० सू० १ ) इत्यन्तोदात्ते कर्तव्ये आद्युदात्तोच्चारणं विवक्षार्थं भविष्यति, इत्युदात्तग्रहणस्य स्वांशे चारितार्थ्यं दुर्वचमित्याहुः।

**न मानमिति।** वक्ष्यमाणभाष्यविरोधादिति भावः। तदेवाह—**क्वचिदिति। ऐक्ष्वाकेति।** तत्र हि ऐक्ष्वाकशब्दः "जनपदशब्दात् क्षत्रियादञ्" ( पा० सू०-४।१।१६८ ) इत्यपत्याञन्तः, भवार्थे कोपधाणन्तश्च। प्रकृते च द्वयोरपि ग्रहणम्, एकश्रुत्या पाठात्। अन्यथाद्युदात्तान्तोदात्तयोर्युगपद्ग्रहणासम्भवादन्यतरस्यैव ग्रहणापत्तिरित्युक्तम्। त्वन्मते सर्वस्याप्येकश्रुत्या पाठेनात्र शङ्कासमाधानयोरसङ्गतिरिति भावः।

ननु त्रैस्वर्येण पाठेऽपि सूत्रे द्वन्द्वनिर्देशेन समासान्तोदात्तत्वे कृते शेषनिघातेनानुदात्तत्वादनुदात्तस्यैक्ष्वाकस्याभावाद् गुणानामभेदकत्वाद् विनिगमनाविरहाच्चोभयोरपि ग्रहणं भविष्यति, किमेकश्रुत्येति चेत्, न; सूत्रे द्वन्द्वनिर्देशे तदलौकिकविग्रहवाक्ये विरुद्धस्वरकयोस्तयोः सूत्रेणानुकरणासम्भवेनान्तरस्य ग्रहणानापत्त्यैकश्रुत्याश्रयणस्याशक्यत्वात्।

**वकार इति।** यद्यपि पथिमथीत्यत्रेव शुद्धोच्चारणाद्विवक्षेति वक्तुं शक्यम्,

जातिपक्षे तु नास्योपयोग इति बोध्यम्। 'यू' इत्यादौ दीर्घमात्रवृत्तिजातिनिर्देशान्न क्षतिरित्यन्यत्र विस्तरः ।। ११८ ।।

ननु 'सर्वनामानि' इत्यत्र णत्वाभावनिपातनेऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यात्, अत आह—

**बाधकान्येव निपातनानि ।। ११९ ।।**

तत्तत्कार्ये नाप्राप्ते निपातनारम्भात्। "पुराणप्रोक्तेषु" इति निपातितपुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वान्नेति बोध्यम्।

पुराणेति पृषोदरादिः पुरातनेति चेत्यन्ये। इयम् "सर्वादि"सूत्र भाष्ये स्पष्टा।

---

तथापि शुद्धोच्चारणस्य लघुतया ज्ञापकत्वासम्भव इति भावः। वस्तुनो निरनुनासिकत्वस्य गुणत्वाभावादत्रानुनासिकस्य गुणाभेदकत्वेन प्रसक्तिरिति तु न युक्तम् ।। ११८ ।।

**निपातनेऽपीति।** संज्ञापदघटितशास्त्रेषु तत्तद्विधेयकार्यविशिष्टेन सञ्ज्ञा गम्यते चेदिति नार्थः, किन्तु संज्ञायां गम्यमानायामित्येवार्थः। तथा च सर्वनामशब्दे णत्वाशङ्का, निपातनात्तदभाव इति च सङ्गच्छते। अत एव क्षुभ्नादिषु 'नृनमन' शब्दपाठः, सूत्रे[1] 'अगः' इति च चरितार्थम्। अन्यथा ऋगयन-नृनमनशब्देन णत्वघटितेन संज्ञास्वरूपासम्प्रत्ययात् तदसङ्गतिः स्पष्टैव।

केचितु संज्ञापदघटितेषु तत्तद्विधेयकार्यविशिष्टेन संज्ञास्वरूपसम्प्रत्ययश्चेत्तत्कार्यं भवतीत्येवार्थः, न तु संज्ञायां गम्यमानायामिति। अत एव "भृञोऽसंज्ञायाम्" ( पा० सू० ३।१।११२ ) इति सूत्रे य एते संज्ञायां विधीयन्ते तेषु नैवं विज्ञायते संज्ञायामभिधेयायामिति, किं तर्हि ? प्रत्ययान्तेन चेत्संज्ञा गम्यते इति भाष्ये उक्तम्।

एवञ्च सर्वनामशब्दे णत्वस्य प्राप्तिरेव न। भाष्ये तु स्वायत्ते शब्दप्रयोगे लोके णघटितप्रयोगस्य 'शूर्पणखा' इत्यादौ संज्ञास्वरूपसमर्पकत्वेन शास्त्रेऽपि संज्ञास्वरूपसमर्पकं णत्वघटितमेव कुतो न कृतमित्याशङ्क्याचार्येण तथैवोच्चारणान्नेत्युक्तम्।

अत एव "अणृगयनादिभ्यः" (पा० सू० ४।३।७३ ) इति निर्देशादग इति प्रत्याख्यातम्। अन्यथा निर्देशेन सूत्रावयवप्रत्याख्याने बहूपप्लवापत्त्या तथा प्रत्याख्याने प्रवृत्तिर्भाष्यकृतोऽसङ्गता स्यात्। नृनमनशब्दपाठस्तु संज्ञायां

---

१. "पूर्वपदात्संज्ञायामगः" ( पा० सू० ८।४।३ ) इति सूत्र इत्यर्थः।

**'अबाधकान्यपि निपातनानि' इति तु भाष्यविरुद्धम् ॥ ११९ ॥**

**ननूखधातोर्द्वित्वे स्वत एव ह्रस्वत्वात् पूर्वमभ्यासह्रस्वाप्रवृत्तौ हलादिःशेषे सवर्णदीर्घे ह्रस्वापत्तिः, अत आह—**

**पर्यन्यवल्लक्षणप्रवृत्तिः ॥ १२० ॥**

**एवं च ह्रस्वस्यापि ह्रस्वे कृते 'लक्ष्ये लक्षणस्य' इति न्यायेन न पुनर्ह्रस्वः। तदुक्तम् "इको झल्" इति सूत्रे भाष्ये—'कृतकारि खल्वपि शास्त्रं पर्यन्यवत्' इति। सिद्धेऽपि ह्रस्वादिकारीत्यर्थः।**

---

गम्यमानायां णत्वमिति सूत्रमताभिप्रायेणेत्यलम्। अधिकमस्मत्कृतशेखरव्याख्याने निरूपितम्।

परिभाषावतरणं तु 'शाश्वतिकः' इति निपातनात् "येषाञ्च विरोधः०" ( पा० सू० २।४।९ ) इत्यत्र "इसुसुक्तान्तात्०" ( पा० सू० ६।३।५१ ) इति कादेशाभावेऽपि लोके 'शाश्वत्कः' इति स्यादित्यूह्यम्।

**भाष्यविरुद्धमिति।** नन्वेवम् "त्रेस्त्रयः" ( पा० सू० ७।३।५१ ) इति सूत्रं व्यर्थम्, त्रिशब्दादामि "निजां त्रयाणाम्०" ( पा० सू० ७।४।७५ ) इति निपातनेनैव त्रीणामित्यस्य व्यावृत्तिसिद्धेः। अबाधकान्यपीत्यङ्गीकारे तु पक्षे त्रीणामित्यस्याप्यापत्त्या तत्सार्थक्यम्।

किञ्चाबाधकान्यपीत्यस्यानङ्गीकारे 'श्रावणी' इत्यस्यासिद्धिः। ठग्विधायकेन "विभाषा फाल्गुनी०" ( पा० सू० ४।२।२३ ) इति सूत्रेण पौर्णमास्यां लुबभावज्ञापनेन 'श्रावणी' इति प्राप्ते 'श्रवणा' इति निपातनादिति चेत्, अत्राहुः, अनेन निपातनेन पौर्णमास्यां लुब्नेत्यर्थस्य फाल्गुनीत्यादिनिपातनेनानुमितस्यानित्यत्वं ज्ञाप्यते। तेन 'श्रावणी' इत्यपि सिद्ध्यतीत्याहुः। अबाधकान्यपीत्यस्य फलाभावात् त्रयादेशविधानं स्पष्टार्थमेवेति बोध्यम् ॥ ११९ ॥

**पूर्वमिति।** हलादिःशेषे सति ह्रस्वदीर्घयोः प्राप्तावन्तरङ्गं दीर्घं बाधित्वा वार्णपरिभाषया पूर्वं प्राप्तो ह्रस्वः फलाभावान्न प्रवर्तत इति भावः। **पर्यन्यवदिति।** मेघवदित्यर्थः। यथा मेघ ऊषरे अनूषरे च, ऊने पूर्णे च वर्षति तद्वच्छास्त्रस्य प्रवृत्तिः, न त्वग्निवददग्धमेव दहतीति भावः।

**न पुनर्ह्रस्व इति।** न च दीर्घस्योभयस्थानिकत्वेन तन्मात्रस्थानिकत्वाभावान्न लक्ष्यैक्यमिति वाच्यम्, "सहिवहोः०" ( पा० सू० ६।३।११२ ) इति सूत्रस्थभाष्यप्रामाण्यादेतादृशे विषयेऽपि लक्ष्यैक्याङ्गीकारात्।

तथा हि—"अवर्णस्येति किमर्थम्, 'ऊढः' 'ऊढवान्' इह मा भूत्। नैतदस्ति प्रयोजनम्"। कृतेऽपि तस्मिन् ढलोपविषये परत्वादोत्वे सम्प्रसारणपूर्वत्वं

**न च 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' इत्यत्र न मानमिति वाच्यम्, "समो वा लोपमेके" इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ "समः सुटि" इति सूत्रस्यैव मानत्वात्, "सम्प्रसारणाच्च" "सिचि वृद्धिः" इत्यादौ भाष्ये स्पष्टमुक्तत्वाच्च ।**

---

भविष्यति । पुनरोत्त्वं तु लक्ष्ये लक्षणस्येति न्यायेन नेति प्रत्याख्यातम् । तत्रावर्ण-ग्रहणाभावे "ढ्रलोपे०" ( पा० सू० ६।३।१११ ) इति सूत्रादण्ग्रहणानुवृत्त्योका-रस्यापि स्यादिति तात्पर्येण 'ऊढः' 'ऊढवान्' इति दोषे दत्ते, क्तप्रत्यये कृते एव ढ्रलोपविषयता, तस्मिन् सति सम्प्रसारणौत्त्वयोर्युगपत्प्राप्त्या परत्वादोत्त्वे न दोष इति तदाशयः ।

अत एव "लुटः प्रथमस्य०" ( पा० सू० २।४।८५ ) इति सूत्रे पुनः प्रसङ्ग-न्यायेन डादेशे पुनरेत्वमनेन न्यायेन नेत्युक्तम् ।

**लोपेनेति** । "समः सुटि" ( पा० सू० ८।३।५ ) इति सूत्राभावेऽनुस्वा-रागमः कथमिति न शङ्क्यम, "अत्रानुनासिकः०" ( पा० सू० ८।३।२ ) इत्यत्र 'रु'पदस्य रुप्रकरणविधेयोपलक्षणत्वेन लोपस्यापि रुप्रकरणस्थत्वात् ।

न च लोपस्य वैकल्पिकत्वेन तदभावपक्षेऽनुस्वाराद्यनापत्तिः, सूत्रसत्त्वे तु न दोष इति वाच्यम्; लोपस्य नित्यत्वाङ्गीकारेणेष्टसिद्ध्याऽदोष इत्याशयात् । न चोत्तरकालिकेनैकसकारसिद्ध्यर्थमावश्यकेन भाष्यकृद्वचनेन सूत्रवैयर्थ्यापादन-मनुचितमिति वाच्यम्, सूत्रकृन्मते तस्य वैयर्थ्याभावेन ज्ञापकत्वासम्भवेऽपि भाष्यकृन्मते सूत्रस्य फलाभावेन "विभाषा द्वितीया०" ( पा० सू० ७।३।११५ ) इति न वक्तव्यं भवतीतिवत् "समः सुटि:०" ( पा० सू० ८।३।५ ) इति न वा वक्तव्यं भवतीति तत्प्रत्याख्यानाकरणेन तन्मते ज्ञापकत्वसम्भव इत्याशयात् ।

**स्पष्टमुक्तत्वाच्चेति** । यद्यपि तत्र "सिचि वृद्धावोकारप्रतिषेधो वक्तव्यः, 'उदवोढाम्' । न वक्तव्यः । ओकाराद् वृद्धिर्भवति विप्रतिषेधेन । वृद्धिविप्रतिषेधेन चेदोत्त्वाभावः, तपरकरणात् । नैष दोषः । उक्तं वा वर्णग्रहणस्य प्रयोजनम्, वृद्धौ कृतायामोत्त्वं यथा स्यात्" इत्येवोक्तम् । तथापि तत्र कैयटेनोक्तं तत्रेति प्रतीकमादाय 'प्रवृत्तत्वाच्च लक्षणस्य पुनः प्रवृत्तिर्नेति' व्याख्यातम् । वर्णग्रहण-सामर्थ्याद् वृद्ध्युत्तरमोत्त्वेनेष्टसिद्धिं सम्पादयता पुनर्वृद्धिमनापादयता भाष्यकृता-ऽयमर्थो ध्वनित इत्याशयः ।

नन्वेवम् 'वव्रश्च' इत्यादावनेन न्यायेन रेफस्य निवृत्त्यनापत्तिः, न च हलादिशेषे अभ्याससम्बन्धिहल्त्वावच्छिन्नस्योद्देश्यत्वाद् यावदुद्देश्यं शास्त्रप्रवृत्तौ न किञ्चिद्बाधकं लक्ष्यभेदादिति वाच्यम्, निजिधातावेकस्यैकाचो द्वित्वे कृतेऽपि

**अत्र विकारकृतो लक्ष्यभेदो नेति "सिचि वृद्धिः" इति भाष्यात् प्रतीयते**

---

परस्यैकाचो द्वित्वापत्त्यानभ्यासग्रहणस्यानेन न्यायेनानर्थक्यप्रतिपादनपरभाष्यासङ्गत्यापत्तेः।

न चैकाज्व्यपदेशहेतुभूतस्याचो द्विरुक्तत्वात् तमेवाचमादाय पुनर्द्वित्वं दुर्लभम्, लक्ष्यभेदाभावादिति वाच्यम्, एवमपि समुदायावयवयोर्भेदेन समुदाये कार्यप्रवृत्तावप्यवयवनिशब्दरूपैकाचो विभिन्नत्वेन पुनः प्रवृत्तौ बाधकाभावात्।

अन्यथा 'यूनः' इत्यत्र वकारे सम्प्रसारणे कृते यकारस्य भिन्नत्वेऽपि 'युवन्' शब्दस्यैकत्वेन पुनः सम्प्रसारणाप्राप्त्या तन्निषेधवैयर्थ्यापत्तेरिति चेत्, न; कार्योद्देश्यतावच्छेदकाक्रान्तत्वे सति कार्यिभिन्नत्वे एव लक्ष्यभेदाङ्गीकारेण निजिघातावदोषात्। वृक्षप्रचलनन्यायेन समुदायस्य द्वित्वेऽवयवनिशब्दस्यापि कार्यित्वेन तद्भिन्नत्वाभावेन लक्ष्यभेदाभावेन पुनर्द्वित्वाप्राप्तेः। 'जुगुप्सिषतः' इत्यत्रापि न द्वित्वम्, निमित्तभेदेऽपि कार्यिभेदाभावात्।

न च 'इयाज' इत्यादावुत्तरखण्डस्याजादेरिति द्वितीयवाक्येन पुनर्द्वित्वं दुर्वारम्, लक्ष्यलक्षणयोर्भेदेनैतन्न्यायाप्राप्तेरिति वाच्यम्, उत्तरखण्डस्यैव धातुत्वाद् धात्ववयवादिभूतादचः परत्वाभावेनादोषात्। एतेनाभ्यासविशिष्टे धातुत्वमित्यपास्तम्।

ननु 'रामः' इत्यत्र विसर्गस्य द्वित्वे तस्य पुनर्द्वित्वं दुर्वारम्, द्वित्वनिष्पन्नस्य द्वितीयविसर्गस्य पूर्वं द्वित्वाप्रवृत्त्या कार्यिभिन्नत्वात्। न च नहि कार्यीति न्यायेन द्वित्वं प्रति तस्य निमित्तत्वं न सम्भवतीति वाच्यम्, एकस्य युगपत्कार्यिनिमित्तत्वयोरसम्भवेऽपि 'षट्सन्तः' इत्यत्र धकारडकारयोः प्रवृत्तिभेदेन चर्त्वं प्रति कार्यित्वनिमित्तत्वाङ्गीकारवत् तत्त्वयोरङ्गीकारे बाधकाभावादिति चेत्, न; द्वित्वनिष्पन्नेऽपि तत्त्वप्रत्यभिज्ञया लक्ष्यभेदानङ्गीकारात्।

नन्वेवम् 'उदवोढाम्' इत्यादौ कार्यिभेदात्पुनर्वृद्ध्यापत्त्या भाष्यासङ्गतिरत आह—**अत्रेति। प्रतीयत इति।** उद्देश्यत्वविधेयत्वान्यतरसम्बन्धेन कार्यविशिष्टत्वरूपकार्यित्वस्य विवक्षणेनौकारस्यापि[1] वृद्धिरूपाकारस्थानिकत्वेन वृद्धिविशिष्टत्वेन कार्यित्वेन कार्यिभिन्नत्वासम्भव इत्याशयः।

न चैवमपि 'पथः' 'सुपात्' इत्यादौ पुनर्लोपापत्तिः, 'षट्सन्तः' इत्यत्रेव लक्ष्यभेदात्। अत एव तिर्यञ्चमाचष्टे 'तिरायति, इत्यत्र परत्वाद् वृद्धौ, सकृद्गतिन्यायेन पुनः टिलोपवारणं कृतमिति वाच्यम्, स्वप्रवृत्त्यप्रयोज्योद्देश्यतावच्छेदकाक्रान्तत्वे सति कार्यिभिन्नत्वे एव लक्ष्यभेदाङ्गीकारात्।

---

१. 'विवक्षणेनैकारस्यापि' इति पाठः क० पु०।

इत्यन्यत्र विस्तरः ॥ १२० ॥

---

न चैवम् 'पथः' 'पथा' इत्यादावथशब्दे स्वतः टित्वेऽपि पथिशब्दटित्वस्य स्थानिवत्त्वमन्तरा प्राप्त्यातिदेशस्य चादेशोत्तरमेव प्राप्त्यातिदेशेन पथिशब्दत्व-सम्पादनद्वारा पूर्वं प्रवृत्तलोपस्य पुनर्लोपं प्रति प्रयोजकत्ववत् 'यूनः' इत्यत्रापि ज्ञापकेन परस्य प्रथमं सम्प्रसारणेऽतिदेशेन 'युवन्' शब्दत्वादेव यकारे सम्प्रसारण-प्राप्त्या स्वप्रवृत्त्यप्रयोज्योद्देश्यतावच्छेदकाक्रान्तत्वस्य 'यूनः' इत्यत्राप्यसम्भवेन "न सम्प्र०" ( पा० सू० ६।१।३७ ) इत्यस्य वैयर्थ्यमिति वाच्यम्, युवन्शब्दाव-यवयकारे उद्देश्यतावच्छेदकधर्मस्य स्वप्रवृत्तिमन्तरापि सम्भवेन 'पथः' इत्यत्राथ-शब्दे स्वप्रवृत्तिमन्तराऽसम्भवेन तयोर्वैलक्षण्यस्य सूपपादत्वात् ।

न चैवम् 'एधाञ्चक्रे' इत्यादौ लिटि "आमः" ( पा० सू० २।४।८१ ) इत्यनेन लुकि पुनः सुपो लुगनापत्तिः, ज्ञापकसिद्धत्वेनास्य न्यायस्यानित्यत्वेनाऽ-दोषात् ।

एतेन 'अग्नी३इति' इत्यत्र प्लुते पुनः प्रगृह्यसंज्ञा दुर्लभा । एवम् 'ममार' इत्यत्र पुनरभ्याससंज्ञापि दुर्लभेत्यपास्तम् । अभ्याससंज्ञाप्रवृत्तिकाले साक्षाद् वा स्थानिद्वारा वा सन्निहितानां हलां हलादिःशेषेण निवृत्त्यङ्गीकारेणादोषाच्च ।

एतेन 'युवजानिः' इत्यादौ पुनर्निङ्दुर्वारः । लोकन्यायेनादेशे तत्त्वबुद्धावपि पूर्वमाकारस्येदानीमादेशावयवेकारस्येति लक्ष्यभेदात् । अत एव 'कुरु' इत्यत्र उत्वसामर्थ्यान्न गुण इति शेखराद्युक्तं सङ्गच्छत इत्यपास्तम् । स्थानिवत्त्वेनैवादेशे जायाशब्दत्वेन पुनर्निङादेशस्यापाद्यमानतया स्थानिवत्त्वेन जायाशब्दत्ववत् कार्यित्वबुद्धेरप्यपह्नोतुमशक्यतया कार्यिभिन्नत्वाभावेनादोषात् ।

किञ्चेकारे कार्यप्राप्तेर्निङादेशप्रवृत्तिमन्तरा सम्भवेन पथिन्शब्दघटकी-भूताथशब्दे इव स्वप्रवृत्त्यप्रयोज्योद्देश्यतावच्छेदकाक्रान्ताभावेन लक्ष्यभेदा-सम्भवात् । 'कुरु' इत्यत्र तु लक्षणभेदान्नैतन्न्यायावसर इति भाष्यं समञ्जसमेव ।

न च 'वव्रश्च' इत्यादौ पूर्वम् "न सम्प्रसारणे०" ( पा० सू० ६।१।३७ ) इति निषेधे, उरदत्वे पुनर्निषेधानापत्तिः, 'एतिका' इत्यादौ पुनः स्थानिवत्त्वव-दिति वाच्यम्, तथा सति "न सम्प्र०" ( पा० सू० ६।१।३७ ) इति सूत्रस्यैव वैयर्थ्यापत्तेः ।

न च चित्रायां जाता 'चित्रा' इत्यादौ पुनष्टाब्दुर्लभः, उभयत्र चित्रशब्दस्यैव निमित्तत्वात् । अत एव 'काशकृत्स्नब्राह्मणी' इत्यत्र पुनर्ङीपमाशङ्क्य ङीब्वारण-मनेन न्यायेन भाष्योक्तं सङ्गच्छत इति वाच्यम्, अर्थभेदेन शब्दभेदाङ्गीकारात्, जातार्थगतस्त्रीत्वस्य टाप्प्रवृत्तिहेतुत्वेन प्रकृत्यर्थगतस्त्रीत्वस्यानिमित्तत्वात्, काशकृत्स्नायां पुनः प्रवृत्तावपि प्रोक्तार्थगतस्त्रीत्वस्यैव निमित्तत्वेनैतन्न्यायप्रवृत्ते-र्दुर्वारत्वादित्यलम् ॥ १२० ॥

ननु स्यन्दूधातोः 'स्यन्त्स्यति' इत्यादावात्मनेपदनिमित्तत्वाभावनिमित्तत्वात् "न वृद्भ्यश्चतुर्भ्यः" इति निषेधस्य बहिरङ्गत्वेनान्तरङ्गत्वादूदिल्लक्षणस्येड्विकल्पस्यापत्तिः, अत आह—

**निषेधाश्च बलीयांसः ॥ १२१ ॥**

अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः ।

'चतुर्भ्यः' इति तु स्पष्टार्थमेव । अत एव तत्प्रत्याख्यानं भाष्योक्तं सङ्गच्छते ।

अत एव सवर्णसंज्ञादेर्निषेधविषये न विकल्पः । अन्यथा मोमांसकरीत्या विधेरुपजीव्यत्वेन प्राबल्यात् तस्य सर्वथा बाधानुपपत्त्या दुर्वारः स इति मञ्जूषायां

---

**बहिरङ्गत्वेनेति** । सकारादिविशेषापेक्षत्वादात्मनेपदनिमित्तत्वाभावनिमित्तत्वेनाधिकापेक्षत्वाच्चेति भावः । **आपत्तिरिति** । सूत्रं तु "येन नाप्राप्ति०" ( परि० ५८ ) न्यायेनार्धधातुकलक्षणेड्बाधनेन चरितार्थमिति भावः ।

ननूक्तफलस्य चतुर्ग्रहणेन प्रत्येकं सर्वेषु निषेधप्रवृत्तिद्वारा सिद्धेरियं व्यर्था, अत आह—**स्पष्टार्थमिति** । न च कृपिव्यावृत्त्यर्थं तत् "तासि च०" ( पा० सू० ७।२।६० ) इति चकारेण सार्वार्धधातुके तस्यापि निषेधात् । न च चतुर्ग्रहणस्य वैकल्पिकेणनिषेधेन चारितार्थ्यान्नित्येडागमो दुर्वारः, बाध्यसामान्यचिन्ताश्रयणेनादोषात् ।

ननु चतुर्ग्रहणस्य परिभाषाङ्गीकारेण प्रत्याख्यानमनुचितम्, कुलभार्यापरित्यागेन नटभार्यास्वीकारवदित्यत आह—**अत एवेति** । 'स्तोकान्मुक्तिः' इत्यादि इञ्प्रत्ययान्ते तद्धितान्तत्वनिमित्तकप्रातिपदिकत्वात् प्राप्तस्य लुकोऽपि "पञ्चम्याः स्तोकादिभ्यः" ( पा० सू० ६।३।२ ) इति निषेधसिद्धयेऽस्या आवश्यकत्वादेवेत्यर्थः । शब्दरत्ने स्फुटमिदम् ।

**मीमांसकरीत्येति** । प्रतिषेधः सर्वोऽपि प्राप्तिसापेक्षः, प्राप्तिश्च क्वचिद् वागतः, यथा 'न कलञ्जं भक्षय' इत्यादौ । क्वचिच्छास्त्रतः, सा च शास्त्रजन्यत्वात्प्रमारूपैवोपजीव्या इति तस्या अत्यन्तबाधायोगाद् विकल्प एव प्राप्नोति ।

न च निषेधशास्त्रानालोचनेन सामान्यशास्त्रज्ञानमात्रेण भ्रमात्मकप्रतियोगिप्रसिद्ध्याऽभावबोधसम्भवेन विकल्पानुपपत्तिः, निषेधशास्त्रेऽस्यैव प्रथमोपस्थितिविषये विशेषदर्शनसत्त्वेन सामान्यशास्त्रतो भ्रमानुपपत्त्या तादृशप्रतियोगिनोऽप्रसिद्ध्याऽभावबोधनानुपपत्तेः । अतः शास्त्रेणैव प्राप्तिर्वाच्येति तस्याः प्रमारूपत्वाद् विकल्प इति तदाशयः ।

वस्तुतो निषेधशास्त्रस्य प्रथममुपस्थितौ सत्यामपि न दोषः, वाक्यज्ञानमात्रेण

**विस्तरः । अत एव "द्वन्द्वे च" "विभाषा जसि" इति चरितार्थम् ।**

**विध्युन्मूलनाय प्रवृत्तिरस्या बीजम् । "न लुमता" "कर्मणिङ्" इत्यनयो- र्भाष्ये स्पष्टैषा ।। १२१ ।।**

**नन्वत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिः, अत आह—**

**अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ।। १२२ ।।**

**यस्यार्थः प्रकृत्या प्रत्याय्यते, सोऽपि प्रत्यय इत्यस्याप्यङ्गीकारात् तस्य प्रत्ययत्वमिति न दोषः ।**

---

विशेषदर्शनासम्भवात् । तदर्थज्ञानं तु प्रतियोग्यप्रसिद्ध्यासम्भवग्रस्तम् । अतो विकल्पोक्तिरयुक्तैव ।

**चरितार्थमिति ।** न च तत्रैव विकल्पो नान्यत्रेति नियमार्थं तदस्त्विवति वाच्यम्, निषेधस्यैव विकल्पप्रयोजकत्वेन निषेधसङ्कोचमन्तरा विकल्पसङ्कोचा- सम्भवेन नियमेन निषेधसङ्कोचे योगविभागस्य वैयर्थ्यापत्तेः ।। १२१ ।।

**न दोष इति ।** प्रत्याययति इति प्रकृत्या प्रत्याय्यत इति वा कर्तृकर्म- व्युत्पत्त्यान्तर्भावितण्यर्थस्य प्रत्ययपदस्य तन्त्रेणाधिकाराद्यथासम्भवं सार्थकानां स्वार्थिकानाञ्च सङ्ग्रह इति न दोष इति भावः ।

न च स्वार्थिकेषु प्रकृत्या तदर्थः प्रत्याय्यते न तु स एवेति तस्य सङ्ग्रहो दुर्वच इति वाच्यम्, शब्दार्थयोस्तादात्म्येन प्रकृत्या प्रत्याय्यमानार्थकत्वात् सोऽप्येवमुच्यत इति भाष्यकैयटाभ्यां तस्यापि प्रत्ययत्वाङ्गीकारात् ।

नन्वन्वयव्यतिरेकाभ्यां कादीनां वाच्यद्योत्यार्थाभावनिश्चयेन प्रत्ययत्वाभावे शङ्किते स्वार्थिकत्वेन प्रत्ययत्वसमर्थनमयुक्तम्, प्रत्ययत्वसिद्ध्यनन्तरमेव "अनि- र्दिष्टार्थाः०" ( परि० १२२ ) इत्यनेन स्वार्थिकत्वसम्भवादन्योऽन्याश्रयापत्तेः ।

तस्मात् स्वार्थिकत्वं न प्रत्ययसंज्ञोपयोगि, किञ्च तेषाम् "अनिर्दिष्टार्थाः०" ( परि० १२२ ) इत्यनेन प्रकृत्यर्थकत्वे घञादिवत्कर्तृव्युत्पत्त्यैव प्रत्ययसंज्ञासिद्ध्या भाष्ये कर्मव्युत्पत्त्याश्रयणं व्यर्थं स्यात् ।

न च प्रत्ययसंज्ञोत्तरम् "अनिर्दिष्टार्थाः०" ( परि० १२२ ) इति न्यायेन योऽर्थस्तेन प्रतिपाद्यते सोऽर्थः प्रत्ययसंज्ञायाः पूर्वं प्रकृत्या प्रत्याय्यते इति प्रकृत्या प्रत्याय्यमानार्थसम्बन्धित्वात्तस्यापि प्रत्ययसंज्ञेत्यर्थ इत्याशय इति वाच्यम्, एवमपि प्रकृत्या प्रत्याय्यमानार्थकत्वसम्पत्त्यनन्तरं प्रत्ययत्वं प्रत्ययत्वसम्पत्त्यनन्तरं तस्योक्तन्यायेनोक्तार्थकत्वसम्पत्तिरित्यन्योऽन्याश्रयस्य दुर्वारत्वादिति चेत्, न; प्रत्ययसंज्ञायाः पूर्वमुक्तन्यायेन वाचकत्वाग्रहेण प्रत्यायकत्वासम्भवेऽपि शब्दार्थ-

**स्वार्थ इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः । महासंज्ञाकरणादर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम् । "सुपि स्थः" इत्यादिसूत्रेषु भाष्ये स्पष्टैषा ॥ १२२ ॥**

**योगविभागादिष्टसिद्धिः ॥ १२३ ॥**

**इष्टसिद्धिरेव, न त्वनिष्टापादनं कार्यमित्यर्थः ।**

---

सम्बन्धस्य नित्यत्वेन प्रकृत्या प्रत्याय्यमानार्थकत्वस्य वस्तुतः सम्भवेन शब्दार्थयोस्तादात्म्येन प्रत्याय्यमानार्थकत्वसमानाधिकप्रत्ययपदत्वस्य विधेयतया प्राप्ताप्राप्तविवेकन्यायेन प्रत्ययपदवत्त्वांशे एव विधिर्न तु प्रत्याय्यमानार्थकत्वांशेऽपि, तस्य लोकसिद्धत्वादिति सर्वमनाविलम् ।

**प्रकृत्यर्थ इत्यर्थ इति ।** अत्र प्रकृतित्वञ्च "परश्च" ( पा० सू० ३।१।१ ) इत्यत्र शेखरोक्तं प्रत्ययविध्युद्देश्यतावच्छेदकाक्रान्तत्वरूपं न सम्भवति, अन्योऽन्याश्रयापत्तेः ।

न चाणादिषु प्रत्ययत्वस्य निश्चितत्वेन तन्निष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकधर्मवत्त्वरूपप्रकृतित्वस्य प्रयोगान्तरे कप्रत्ययप्रकृतौ सम्भवेन तदर्थप्रत्यायकत्वरूपप्रत्ययत्वस्य कप्रत्ययेऽपि सम्भवेन कथमन्योऽन्याश्रय इति वाच्यम्, 'माता पूज्या' इत्यादौ मातृत्वादेः ससम्बन्धिकत्वेन प्रत्यासत्त्या स्वमातुरेव ग्रहणवत्, प्रकृतित्वस्यापि ससम्बन्धिकत्वेनोपस्थितत्वात् करिष्यमाणप्रत्ययनिरूपितप्रकृतेरेव गृहीतुमौचित्येन तत्रास्यामवस्थायां प्रत्ययत्वस्यानिश्चितत्वेन तन्निरूपितप्रकृतित्वस्यापि दुर्ग्रहेणान्योऽन्याश्रयस्य दुर्वारत्वात् ।

तस्माद् यस्य प्रत्ययत्वमानेयं तन्निष्ठविधेयतानिरूपितनिवृत्तिव्यधिकरणं तन्निरूपितावयवित्वव्यधिकरणं यदुद्देश्यत्वं तदवच्छेदकाक्रान्तत्वं प्रकृतित्वम् । वधाद्यादेशविधौ स्थानिनिष्ठोद्देश्यताया निवृत्तिसामानाधिकरण्यात् "त्रपुजतुनोः षुक्" ( पा० सू० ४।३।१३८ ) इत्यादावागमिनिष्ठायास्तस्या अवयवित्वसामानाधिकरण्यात् स्थान्यागमिनोर्नातिव्याप्तिः ।

तथा च विकारागमादीनां प्रत्ययाधिकारे पाठेऽपि न संज्ञा तद्विधायकवाक्येऽर्थस्यानुपादानात्[1] निरुक्तप्रकृतेरेव तत्राभावेन प्रकृत्यर्थबोधकत्वस्य सुतरामभावादित्यलम् ॥ १२२ ॥

**इष्टसिद्धिरेव नत्वनिष्टापादनमिति ।** यथा "इद्गोण्याः" ( पा० सू० १।२।५० ) इति सूत्रे ह्रस्वग्रहणानुवृत्त्या 'पञ्चगोणिः' इत्यादौ लुगपवादतया ह्रस्वविधानेन सिद्धे पुनरिद्ग्रहणयोगविभागेन क्वचिदन्यतोऽपि विधानार्थम् । तेन

---

१. 'अर्थस्यानुदयात्' इति पाठः क० पु० ।

तत्तत्समानविधिकद्वितीययोगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम् ।। १२३ ।।

**पर्यायशब्दानां लाघवगौरवचर्चा नाऽऽद्रियते ।। १२४ ।।**

तत्र तत्रान्यतरस्याम् "विभाषा वा" इति सूत्रनिर्देशज्ञापितमिदम् ।।१२४।।

**ज्ञापकसिद्धं न सर्वत्र ।। १२५ ।।**

स्पष्टमेव पठितव्येऽनुमानाद् बोधनमसार्वत्रिकत्वार्थमित्यर्थः । तेन ज्ञापकसिद्धपरिभाषयाऽनिष्टं नापादनीयमिति तात्पर्यम् । भाष्येऽपि ध्वनितमेतत् "ङ्याप्" सूत्रादौ ।

ज्ञापकेति न्यायस्याप्युपलक्षणम् । न्यायज्ञापकसिद्धानामपि केषाञ्चित् कथनमन्येषामनित्यत्वबोधनायेति भावः । यथा 'तत्स्थानापन्ने तद्धर्मलाभः' इति न्यायसिद्धं स्थानिवत्सूत्रम्, ज्ञापकसिद्धं च तत्र "अनल्विधौ" इति ।। १२५ ।।

---

'पञ्चभिः सूचीभिः क्रीतः, पञ्चसूचिः' इत्यादौ "लुक् तद्धित०" ( पा० सू० १।२।४९ ) इति प्राप्तलुगपवादतयेत्वस्य प्रवृत्त्येष्टसिद्धिः । न तु पञ्चभिः कुमारीभिः क्रीतः 'पञ्चकुमारः' इत्यत्राप्यनिष्टापादनं कर्त्तव्यमित्यर्थः । अत्र बीजमाह—**तत्तदिति** ।। १२३ ।।

**चर्चा नाद्रियत इति** । विचारो न कार्य इत्यर्थः ।।

**ज्ञापितमिति** । "आपोऽन्यतरस्याम्" ( पा० सू० ७।४।१५ ) इत्यत्र वेति वक्तव्येऽन्यतरस्यां ग्रहणम् "ईशः से" ( पा० सू० ७।२।७७ ) "ईडजनोर्ध्वे च" ( पा० सू० ७।२।७८ ) इत्यत्र योगविभागवद् वैचित्र्यार्थम्, न तु किञ्चिद् ज्ञापनार्थम् । तेन तत्र यत्नचिन्ता न कार्येति बोध्यते । एतेन स्वांशे चारितार्थ्यशङ्का नेति बोध्यम् ।

न चैवम् "कर्तृस्थे चाशरीरम्०" ( पा० सू० १।३।३७ ) इति सूत्रे 'काये' इति वक्तव्ये शरीरग्रहणं तदवयवोपलक्षणार्थम् । तेन 'गडुं विनयति' इति सिद्धमिति प्रचामुक्तिरसङ्गता स्यादिति वाच्यम्, शरीरतादात्म्यापन्नस्यैव कर्तृत्वेन शरीरस्य तत्स्थत्वासम्भवात्तेन तदवयवो लक्ष्यते । तेषां तु सम्बन्धविशेषेण तत्स्थत्वसम्भव इति न दोष इति भावः ।। १२४ ।।

**ज्ञापकेति**—ज्ञापकं हि नाम न वाचकं किं तर्हि ? इङ्गितेन सूचकं क्वचिदेवेष्टसिद्धावाश्रीयते । **न सर्वत्रेति**—ज्ञापकसिद्धं न सार्वत्रिकमिति भावः । तेन ज्ञापकसाधितात्मनेपदानित्यत्वादि न सर्वत्र प्रयोज्यम्, किन्तु विशिष्टप्रयोग दर्शनात् क्वचिदेव ।। १२५ ।।

ननु 'द्रोग्धा द्रोग्धा, द्रोढा द्रोढा' इत्यादौ घत्वादीमसिद्धत्वात् पूर्वं द्वित्वे एकत्र घत्वम्, अपरत्र ढत्वमित्यस्याप्यापत्तिरत आह—

**पूर्वत्रासिद्धीयमद्वित्वे ॥ १२६ ॥**

द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्धमित्यर्थः। "पूर्वत्रासिद्धम्" इत्यधिकार-भवं शास्त्रमस्या लिङ्गम्।

यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषः, तत्रैवेयम्। 'कृष्णर्द्धिः' इत्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिरित्यन्यत्र विस्तरः। "सर्वस्य द्वे" इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२६ ॥

---

**द्रोग्धेति**। 'राजा राजा' इत्यादौ नलोपादिसिद्धौ तु स्थाने द्विर्वचनेऽपि प्रत्येकं पदत्वाङ्गीकारान्न दोषः। न च 'वृक्षो वृक्षः' इत्यादौ पूर्वं विसर्गो दुर्वार इति वाच्यम्, अस्यानित्यत्वेनादोषात्।

**इत्यर्थ इति**। पूर्वत्रासिद्धशब्दो लक्षणयाधिकारपरः। तत्र भव इत्यर्थे गहादित्वाच्छः। पूर्वत्रासिद्धीयं शास्त्रं लिङ्गम्। तत्राद्वित्व इत्युपतिष्ठते, तच्च तत्रोपस्थितपूर्वत्रासिद्धमिति— शास्त्रघटकपूर्वत्रपदेनान्वेति। एवञ्च द्वित्वभिन्ने पूर्वत्र कर्त्तव्य इत्यर्थः।

यद्वा पूर्वत्रासिद्धशब्दो लक्षणया तदधिकारस्थशास्त्रपरः। ततश्छः, तत्र भवं विद्यमानं यदसिद्धत्वं तत् छप्रत्ययान्तेनोच्यते। तद् द्वित्वे कर्त्तव्ये नेत्यर्थः। अत्र द्वित्वशब्देन षाष्ठमाष्टमिकं सर्वं गृह्यते। अत्र द्वित्वे कृते तदाश्रयस्य कार्यान्तरे कर्त्तव्येऽप्यसिद्धत्वं नेत्यप्यर्थः। अत एव 'औजिढत्' इत्यादावभ्यासे श्चुत्वादि नेति शेखरे उक्तम्।

न च 'मध्वरिः' 'वाक्' इत्यादौ द्वित्वाश्रयस्यान्यस्मिन्नसिद्धत्वाभावात् "लोपो व्योः०" ( पा० सू० ६।१।६६ ) इति वलोपस्य "स्कोः०" ( पा० सू० ८।२।२९ ) इति कलोपस्य चापत्तिरिति वाच्यम्, द्वित्वादन्यदसिद्धं नेत्येवार्थ इति न दोष इत्याहुः।

**फले विशेष इति**। यथा 'रामात्' इत्यादौ जश्त्वे कृते "वाऽवसाने" ( पा० सू० ८।४।५६ ) इति चर्त्वद्वित्वयोः प्राप्तौ चर्त्वस्यासिद्धत्वात्पूर्वं द्वित्वे रूपद्वयम्, द्वित्वाभावे चर्त्वे तकारघटितमेकमिति रूपत्रयम्। एतत्परिभाषाप्रवृत्तौ पूर्वं चर्त्वे रूपद्वयं चर्त्वाभावे रूपद्वयमिति रूपचतुष्टयमिति फलभेद इत्यस्याः प्रवृत्तिरिति बोध्यम् ॥ १२६ ॥

ननु 'गोष्वश्वेषु च स्वामी' इत्यादिवत् 'गोष्वश्वानां च स्वामी' इत्यपि स्यात् "स्वामीश्वर" इति सूत्रेण षष्ठीसप्तम्योर्विधानात्, अत आह—

**एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ १२७ ॥**

यत्रान्याकृतिकरणे भिन्नार्थत्वसम्भावना तद्विषयोऽयं न्याय इत्यन्यत्र

---

**स्यादिति।** गवामश्वानाञ्च स्वाम्यादिभिः सम्बन्धप्रतिपिपादयिषायाम् "स्वामीश्वराधि०" ( पा० सू० २।३।३९ ) इति सूत्रेण षष्ठीसप्तम्योर्विधानादुभाभ्यामुभयविभक्त्योर्विधानसम्भवादिति भावः।

यत्रैकजातीयार्थप्रतिपिपादयिषायां युगपत्सरूपस्य विरूपस्य वा अनेकशब्दस्य प्रयोगः प्रसक्तस्तत्र प्रथमं यद्रूपविशिष्टस्य प्रयोगः प्रक्रान्तस्तद्रूपविशिष्टस्य तज्जातीयस्यैवापरस्य शब्दस्य प्रयोगः, न तु तादृशार्थकतदन्यार्थकोभयसाधारणरूपान्तरविशिष्टस्य द्वितीयजातीयस्य शब्दस्य प्रयोगः कर्त्तव्यः इत्यर्थः।

अत एव "कृञ्चानुप्रयुज्यते०" ( पा० सू० ३।१।४० ) इति सूत्रे आमन्तस्याव्यक्तार्थकत्वादनुप्रयुज्यमानेन सहाभेदान्वयद्वारा क्रिययोरैक्यावगतौ तद्वारामन्तार्थक्रियासाधनगतप्रत्यक्त्वपराक्त्वसाधनसङ्ख्याविशेषावधारणाय तादृशपरान्तरानुप्रयोगस्यावश्यकतया तत्र 'उषामुवोष' इति समानार्थकानुप्रयोगे उत्तरेणैव सर्वार्थाभिधानादामा तस्यानर्थक्यप्रसङ्गः। 'ईहां पपाच' इति भिन्नार्थस्यानुप्रयोगे आमन्तार्थस्यानभिव्यक्तत्वं तादवस्थ्यम्।

अतः सामान्यवाचिनः कृञादेरनुप्रयोगे विशेषवाचिनः सामान्यवाचिना अभेदान्वयप्रतिपादनानुगुण्यात्तस्यैवानुप्रयोगे सिद्धे सूत्रं किमर्थमित्याशङ्क्य लिट्—परकस्यैव प्रयोगो यथा स्यात्, न तु लिट्समानार्थक"हशश्वतोर्लङ् च" ( पा० सू० ३।२।११६ ) "स्मे लोट्" ( पा० सू० ३।३।१६५ ) इति विहितस्य लङन्तादेरिति नियमार्थं सूत्रमित्युक्त्वा, अनया परिभाषया लङन्तानुप्रयोगस्य वारणं कृत्वा 'ईहाञ्चक्रे' इतिवत् 'चक्रे ईहाम्' 'तं पातयां प्रथममासपवात पश्चात्' इति विपरीतव्यवहितप्रयोगनिवृत्त्यर्थं सूत्रमिति समाहितम्।

एवञ्च 'उक्षां प्रचक्रुर्नगरस्य मार्गान्' इति भट्टिप्रयोगादिकं प्रामादिकमेव। एतेन 'द्रोग्धा द्रोग्धा' इत्यादौ अनया ढत्वव्यावृत्तिसिद्धया "पूर्वत्रासिद्धम्" ( पा० सू० ८।२।१ ) इति व्यर्थमित्यपास्तम्। तदेतन्मनसि निधायाह—**यत्रान्येत्यादि।**

अत्र बीजन्तु यथा दर्शपौर्णमासोपक्रमे 'व्रीहिभिर्यक्ष्ये' इति सङ्कल्पमध्ये प्रयोगे व्रीह्यलाभे यवनीवारयोर्मध्ये सङ्कल्पितव्रीह्यवयवानां नीवारेष्वनुप्रविष्ट-

**विस्तरः। "कृञ्चानुप्रयुज्यते" इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२७ ॥**

**ननु 'विव्याध' इत्यादौ परत्वाद्धलादिःशेषे वस्य सम्प्रसारणं स्यात्, अत आह—**

**सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ॥ १२८ ॥**

**तदाश्रयम् "सम्प्रसारणाच्च" इति पूर्वरूपम्। वस्तुतः "लिट्यभ्यासस्य"**

---

त्वादुपक्रमे व्रीहिणैव प्रयोगस्योपक्रान्तत्वात्तदनुरोधेन नीवारा एवोपादीयन्ते न तु यवाः, एवमिहापीति मञ्जर्यामुक्तम्।

अत्रेदं बोध्यम्—अकर्मकैधादिसमभिव्याहृतकृञ्धातोरप्यकर्मकत्वमिति "कृञ्चा०" ( पा० सू० ३।१।४० ) इति सूत्रे शब्दरत्ने उक्तम्। एवं सकर्मकेक्षत्यादिसमभिव्याहृतभूधातोः सकर्मकत्वम्, धातूनामनेकार्थकत्वात्।

अत एव 'तस्यातपत्रं बिभराम्बभूवे' 'विभावरीभिर्विभराम्बभूविरे' इति माघनैषधप्रयोगः सङ्गच्छते। एवमामन्तादनुप्रयोगस्थले पूर्वत्र कर्तुरुपक्रमे कर्मवाचकलिट्परकस्यानुप्रयोगः। एवं पूर्वत्र कर्मोपक्रमे कर्तृवाचकलिट्परकस्य नानुप्रयोगः। किन्तु पूर्वत्र यत्कारकं प्रकान्तं तत्कारकवाचकलिट्परकस्यैवानुप्रयोगो न तद्विरुद्धकारकवाचकलिडन्तस्येति बोध्यम्।

न चैवम् 'विभावरीभिर्विभराम्बभूविरे' इत्यादावुभयत्र कर्मवाचकलिट एव प्रयोगेन कर्मप्रत्ययसमभिव्याहारे फलस्यैव विशेष्यत्वादुभयत्र विशेष्यभूतफलस्यात्यन्तं भिन्नतया कथमप्यभेदासम्भवात् तद्द्वारामन्तार्थगतप्रत्यक्त्वादेरवधारणासम्भव इति वाच्यम्, कर्मप्रत्ययसमभिव्याहारे फलस्य विशेष्यतेति व्युत्पत्तिमामन्ते त्यक्त्वा व्यापारस्यैवोभयत्र विशेष्यत्वाङ्गीकारेण व्यापारयोरभेदान्वयस्य शब्दरत्नादौ स्पष्टमुक्तत्वेनाऽदोषादित्यलम् ॥ १२७ ॥

**परत्वादिति।** न चाभ्यासविकारे बाध्यबाधकभावाभावेन परत्वादित्युक्तिरयुक्तेति वाच्यम्, "लिटचभ्यासस्य०" ( पा० सू० ६।१।१७ ) इति सूत्रे उभयोरनुवृत्त्यैव सिद्धे, 'उभयेषाम्' ग्रहणेनाभ्यासलोपाभ्याससम्प्रारणविषये तन्न्यायाप्रवृत्तेर्ज्ञापनेनादोषात्। **पूर्वरूपमिति।** 'जुहुवतुः' इत्यादौ "अभ्यस्तस्य च" ( पा० सू० ६।१।३३ ) इति सम्प्रसारणे "वार्णादाङ्गम्०" ( परि० ५५ ) इति न्यायेन प्राप्तात्लोपं बाधित्वानेन पूर्वरूपम्।

न च "द्विर्वचनेऽचि" ( पा० सू० १।१।५९ ) इति निषेधादल्लोपाप्राप्त्या पूर्वरूपेणेष्टसिद्धिः, एवमपि 'शुनः' इत्यादौ पूर्वरूपं बाधित्वा वार्णपरिभाषयाल्लोपः स्यात्। तथा च 'शुनः' इत्यादावल्लोपस्य स्थानिवत्त्वाद् यण् स्यात्, 'बहुश्वा' इत्यादौ "अन उपधालोपिनः०" ( पा० सू० ४।१।२८ ) इति विकल्पापत्तिः। सम्प्रसारणाश्रयकार्यस्य बलवत्त्वे तु पूर्वरूपं सिद्ध्यति।

**इति सूत्रे 'उभयेषां ग्रहणस्योभयेषां सम्प्रसारणमेव यथा स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्था, इति "लिट्यभ्यासस्य" इति सूत्रे भाष्ये स्पष्टम्। फलान्तरान्यथासिद्धिरपि तत्रैव भाष्ये स्पष्टा। "णौ च संश्चङोः" इत्यादौ संश्चङोरित्यादि विषयसप्तमीति तत्रापि न दोष इत्यन्यत्र विस्तरः ॥ १२८ ॥**

**यत्तु—**

**क्वचिद् विकृतिः प्रकृतिं गृह्णाति ॥ १२९ ॥**

**तेन "निसमुपविभ्यो ह्वः" इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रहणसिद्धिः ॥ १२९ ॥**

**तथा—**

**औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ १३० ॥**

**तेन "दादेर्धातोः" इत्यत्रौपदेशिकधातोरेव ग्रहणमिति, तत्, न; तयोर्निर्मूलत्वात्, भाष्याव्यवहृतत्वाच्च, 'न च विकृतिः प्रकृतिं गृह्णाति' इति "ग्रहिज्या" इति सूत्रस्थभाष्येणाद्यायास्तिरस्काराच्च। "निसमुपविभ्यो ह्वः" इत्यादौ ह्वेञोऽनुकरणे सौत्रः प्रयोगः।**

---

**ग्रहणस्येति।** "वचिस्वपि०" ( पा० सू० ६।१।१५ ) इति सूत्रोपात्तस्य "ग्रहिज्या०" ( पा० सू० ६।१।१६ ) इति सूत्रोपात्तस्य चानुवृत्त्यैव सिद्धे 'उभयेषाम्' ग्रहणेन पुनर्विधानेन परमपि हलादिःशेषं बाधित्वाऽपवादत्वात् सम्प्रसारणप्रवृत्त्याऽदोषात्।

ननु 'जुहावयिषति' इत्यादौ बहिरङ्गेण "ह्वः सम्प्रसारणम्" ( पा० सू० ६।१।३२ ) इति सम्प्रसारणेन "शाच्छा०" ( पा० सू० ७।३।३७ ) इति युको बाधानापत्तिरित्यत आह—**"णौ च०" ( पा० सू० ६।१।३१ ) इति।**

न चैवम् 'शुनः' इत्यादावल्लोपो दुर्वारः, वार्णपरिभाषाया अनित्यत्वेनाऽदोष इत्याशयात् ॥ १२८ ॥

**ह्वेञो ग्रहणसिद्धिरिति।** सूत्रे आकारान्तस्यैवोपादानेनैकारान्तस्य तेन ग्रहणासम्भवात् 'निह्वायते' इत्यत्र सूत्रस्य चारितार्थ्यात् 'विश्वराजं तुरासाहम्' इत्यादौ दीर्घषत्वयोरप्रवृत्तिवत् 'निह्वापयते' इत्यादावात्मनेपदानापत्तिरिति भावः ॥ १२९ ॥

**सौत्रः प्रयोग इति।** ह्वेञः ह्व इति प्रयोगः सूत्रेण निष्पन्नः, न तु छान्दस इत्यर्थः। ह्वेञ एवानुकरणं लक्षणवशादात्वं न त्वाकारान्त इहानुकार्यः। 'निह्वायते' इत्यत्र "एकदेशविकृत०" ( परि० ३७ ) न्यायेनाकारान्तेऽप्यात्मनेपदप्रवृत्तेः। न हि लक्षणवशाद्रूपान्यत्वेऽनुकरणत्वं हीयते।

आत्त्वविषय एवात्मनेपदम्, प्रयोगस्थानामेवानुकरणस्य घुसंज्ञासूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये। अस्यापि तत्र तत्रोपदेशग्रहणं कुर्वतः सूत्रकृतो वार्त्तिक-कृतश्चासम्मता।

'इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते—यत्रास्यैतद्रूप-मिति, रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्, तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते, 'क उपदेशो नाम' इति घसंज्ञासूत्रस्थभाष्येण प्रायोगिकासम्भवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्यासम्मता च।

भाष्ये सानुबन्धकेत्यादि प्रकृताभिप्रायेण। "दादेः" इति सूत्रे दादिपदस्यो-पदेशिकदादित्ववति लक्षणेति न दोष इत्यन्यत्र विस्तरः॥ १३०॥

यदपि ननु 'अजर्घा बेभिदीति' इत्यादौ तत्तद्गणप्रयुक्ता विकरणा यङ्लुकि स्युः, तथा यङ्लुकि 'बेभेदिता' इत्यादौ "एकाचः" इतीण्निषेधः स्यात्, अत आह—

शितपा शपानुबन्धेन निर्दिष्टं यद् गणेन च।

यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि॥ १३१॥

अनुबन्धनिर्देशो द्विधा—स्वरूपेण, 'ङितः' इत्यादिपदेन च। 'हन्ति, याति, वाति, "सनीवन्त" इति सूत्रे भरेनि, "दीङो युडचि" "अनुदात्तङितः" "दिवा-दिभ्यः श्यन्" "एकाच उपदेशे" इत्युदाहरणानि।

द्वित्वम् "सनाद्यन्ताः" इति "भूवादयः" इति धातुत्वं च भवत्येव, "गुणो यङ्लुकोः" इत्यादिभिर्निषेधानित्यत्वकल्पनात्। तेन अभ्यासोऽपि 'अजर्घाः' इत्यादौ भवति। अत एव "श्वीदितः" इति सूत्रे कैयटे—'यत्रैकाज्ग्रहणं किञ्चित्' इति पाठः। "एकाच उपदेशेऽनुदात्तात्" इति सूत्र एकाज्ग्रहणेनैकदेशानुमत्येषा

---

किञ्चाकारान्तानुकरणेऽप्याकारान्तादेवात्मनेपदमित्यर्थो दुर्लभ एव, सूत्रे 'अष्टाभ्यः' इतिवदाकारविशिष्टस्याभावात्। प्रयोगसमवायिनां वाचकत्वमिति सिद्धान्तरीत्या लुप्ताकारान्तेन 'ह्वः' इति वान्तेनाकारान्तो बोध्यः। 'सक्थ्यक्ष्णाम्' इत्यत्राक्षिशब्दवत्। तथा च वान्तस्याकारान्तमर्थं इतिवदेकारान्तमर्थं इत्यपि तुल्यमेवेति बोध्यम्।

अन्ये इति। अत एव तत्र घुप्रकृतिमाङिति पठित्वा 'प्रकृतिग्रहणं कर्त्तव्यम्' इति वार्त्तिकं प्रत्याख्यातम्। अन्यथात्रोक्तरीत्यैजन्तानामनुकरणेनाभीष्टसिद्ध्या तद्वैयर्थ्यं स्पष्टमेव॥ १३०॥

**ज्ञाप्यते । अन्यथोपदेशेऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवति ।**

**तदपि न, भाष्यानुक्तत्वात् । एकाज्ग्रहणस्य वधिव्यावृत्त्यर्थमावश्यकत्वाच्च ।**

**न च वधिस्स्थान्युपदेश एकाजेवेति वाच्यम्, साक्षादुपदेशसम्भवेनैतद्विषये स्थान्युपदेशाग्रहणात्, उपदेशत्वावच्छेदेनैकाजित्यर्थाच्च ।**

---

**तद्वैयर्थ्यं स्पष्टमेवेति ।** उपदेशेऽनुदात्तानामुपदेशे एकाच्त्वाव्यभिचारात्तद्व्यर्थमिति भावः । न च वधिव्यावृत्त्यर्थं तत्, कृतेऽपि तस्मिन् तस्य हन्त्युपदेशे एकाच्त्वाव्यभिचाराद् व्यावृत्त्यसम्भवात् । सामर्थ्यादुपदेशत्वावच्छेदेनैकाजित्यर्थाश्रयणे तु लाघवात्तत्रैवाद्युदात्तनिपातनेन सामर्थ्याद्वुपदेशत्वावच्छेदेनानुदात्त इत्यर्थेनैव तद्व्यावृत्तिसिद्ध्यैकाज्ग्रहणवैयर्थ्यस्य तादवस्थ्यात् ।

न चाद्युदात्तनिपातनेन वधिव्यावृत्तिमभ्युपेत्यैकाज्ग्रहणस्य तदेकदेशस्याच इत्यस्य वा ज्ञापकत्वं वक्तव्यम्, ज्ञापितायां परिभाषायामेकाज्ग्रहणस्याच इत्यस्य वा यङ्लुकि निषेधाप्रवृत्त्यर्थं चारितार्थ्यादेकग्रहणसामर्थ्यादनेकाच्कोपदेशो वधिर्व्यावृत्यते इति ग्रन्थासङ्गतिः, एकाज्ग्रहणस्य ज्ञापकत्वसिद्धये तस्याद्युदात्तनिपातनेन पूर्वमेव व्यावर्तितत्वादिति चेत्, न; एकाज्ग्रहणस्य वधिव्यावृत्तिमात्रफलकत्वे लाघवादाद्युदात्तनिपातनमात्रेणैव तत्सिद्ध्या, एकाज्ग्रहणस्य वैयर्थ्यापत्त्या तस्य तदन्यपरिभाषाज्ञापनमात्रफलकत्वेऽच इत्येतावन्मात्रेण मत्वर्थलक्षणयैकाजित्यर्थकेनैव तत्सिद्ध्या सामर्थ्यात्तस्योभयफलकत्वाङ्गीकारेणाद्युदात्तनिपातनमन्तरैव वधिव्यावृत्तिः सिद्ध्यतीत्याशयेनाऽदोषात् ।

न च मत्वर्थलक्षणायामपि तस्यैव प्रकृत्यर्थत्वेन तद्वत्येवैकत्वान्वयः स्यात्, प्रत्ययानां प्रकृत्यर्थे एवान्वय इति नियमात्, न त्वचि, तस्य प्रकृत्यर्थैकदेशत्वादिति वाच्यम्, सर्वस्याप्येकाज्वत्त्वाव्यभिचारेण निस्सङ्ख्यस्य परिच्छेदकत्वासम्भवेन तत्सामर्थ्यादेकाच इत्यर्थस्य शक्त्या बोधोत्तरमेव तद्वति (एकत्वविशिष्टाज्वति ) लक्षणाङ्गीकारेणाऽदोष इत्याशयात् ।

न चाजन्तादित्यर्थवारणायैकग्रहणमावश्यकम्, मत्वर्थलक्षणायां मानाभावादिति वाच्यम्, तथा सति हलन्ते निषेधाप्रवृत्तौ पचत्यादीनामनुदात्तपाठवैयर्थ्यापत्तेः । एतेनैकोपदेशेऽनुदात्तादित्येवास्तु, एकग्रहणसामर्थ्याद् व्युपदेशो वधिर्व्यावर्त्यते, वधिरपि स्थान्यनुरोधेनानुदात्त इत्युपदेशद्वयेऽनुदात्त इत्यपास्तम् । प्रयोगे "धातोः" ( पा० सू० ६।१।१६२ ) इति स्वरप्रवृत्त्यादेशस्यानुदात्तस्थानिकत्वे मानाभावात् । किञ्च 'जिगांस्यते' 'अधिजिगांसते' इत्यव्युपदेशेऽनुदात्तत्वादिण्निषेधानापत्तिः ।

**आवश्यकत्वाच्चेति ।** प्रयोगसमवायिनो हन्तेरेव वधादेशविधानेन तत्र धातुस्वरेणान्तोदात्तत्वादेकाचो हन्तेराद्युदात्तस्यापि सम्भवेनादेशे आद्युदात्तकरणस्य स्थान्यनुरूपतया यत्नाधिक्यासम्भवात्तद्विवक्षायां मानाभाव इति वधिव्यावृत्त्यर्थं

**किञ्च, उत्तरार्थमेकाज्ग्रहणम्। अत एव 'जागरितवान्' इत्यादावुपदेश उगन्तत्वमादाय "श्र्युकः क्किति" इतीण्निषेधो न। तत्रोपदेशे इत्यनुवृत्तिश्च 'स्तीर्णम्' इत्यादाविण्निषेधायेत्याकरे स्पष्टम्।**

---

तच्चरितार्थमिति भावः। किञ्चाद्युदात्तनिपातनस्य तत्सामर्थ्यादुपदेशत्वावच्छेदेनानुदात्तादित्यर्थस्य च परिकल्पने गौरवम्। मम तु उत्तरार्थमावश्यकेनैकाज्ग्रहणेन वधिव्यावृत्तिरपीति लाघवमिति बोध्यम्।

ननु 'अनुदात्तात्' इत्येव सूत्रमस्तु। सर्वत्र धातोरन्त इति स्वरप्रवृत्त्यानुदात्तात्परत्वासम्भवेन सामर्थ्यादौपदेशिकानुदात्तात्परस्येत्यर्थेन 'कर्त्तुम्' इत्यादाविण्णिषेधे सिद्धे उपदेशग्रहणसामर्थ्यादुपदेशत्वावच्छेदेनानुदात्त इत्यर्थाद् वधेर्व्यावृत्त्यैकाज्ग्रहणस्य ज्ञापकत्वं सुस्थम्।

न च 'भवितव्यम्' इत्यादौ शेषनिघातेन धातोरनुदात्तत्वात्तत्र निषेधस्य चारितार्थ्यसम्भवात् 'कर्त्तुम्' इत्यादौ नित्यत्वादाद्युदात्ते कृतेऽनुदात्तात्परत्वाभावान्निषेधानापत्तिरिति वाच्यम्, प्रायोगिकानुदात्तस्य ग्रहणे पचत्यादीनामनुदात्तपाठवैयर्थ्यापत्त्या तत्सामर्थ्यादत्रानुदात्तपदेनौपदेशिकानुदात्तस्यैव ग्रहणेन 'भवितव्यम्' 'कर्त्तुम्' इत्यादावदोषात्।

अत एव "स्मिपूङ्०" (पा० सू० ७।२।७४) इति सूत्रे 'स्मि'ग्रहणं चरितार्थम्। अन्यथा 'सिस्मयिषते' इत्यादौ सनो नित्यत्वादाद्युदात्ते कृतेऽनुदात्तात्परत्वाभावेन निषेधाप्राप्त्येट्सिद्धौ तद्वैयर्थ्यं स्पष्टमेवेत्यरुचेराह—**किञ्चेति**।

**इण्निषेधो नेति**। न च परत्वाद्गुणे रपरत्वेऽनुग[1]न्तत्वान्निषेधाप्राप्त्येट् सिद्ध्यतीति वाच्यम्, गुणात्पूर्वमन्तरङ्गत्वान्निषेधापत्तेः। ननु प्रतिषेधनिमित्तोगन्तत्वापगमोत्तरमिटः प्रवृत्त्या न दोष इत्यत आह—**तत्रेति**।

**'स्तीर्णम्' इत्यादाविति**। ननु "इट् सनि वा" (पा० सू० ७।२।४१) इति सनि वेट्त्वाद् "यस्य विभाषा" (पा० सू० ७।२।१५) इति निषेधान्न दोषः। न च यदुपाधेर्विभाषा तदुपाधेरेव निषेधेन ऋकारान्तोपाधेरेव वैकल्पिकत्वेनेत्त्वरपरत्वयोः ऋदन्तत्वाभाव इति वाच्यम्, वर्णव्यतिरिक्तस्यैवोपाधेस्तत्र ग्रहणात्। 'यस्य धातोर्विकल्पः क्वचिद् दृष्टः तस्य निष्ठायामिण्णिषेध इत्यर्थः, न तु विकल्पकारणमृकारान्तत्वमपीति' कैयटोक्तेरिति न दोषः।

एवमपि 'स्तीर्त्वा' इत्यादौ 'स्तॄ त्वा' इत्यत्रेत्त्वम्, इडागमश्च प्राप्नुतः तत्र "श्र्युकः०" (पा० सू० ७।२।११) इतीण्णिषेधादिटोऽप्राप्तौ "न क्त्वा सेट्" (पा० सू० १।२।१८) इति कित्त्वनिषेधाभावेन गुणादेरप्राप्त्येत्त्वोत्त्वाभ्यामित्य-

---

१. 'अलुगन्तत्वात्' इति पाठः क० पु०।

**न च भाष्ये यङ्लोपे 'बेभिदिता' इत्यादाविट्प्रवृत्त्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणादङ्गादित्यर्थे सनीट्प्रतिषेधो वक्तव्यः, 'बिभित्सति' इति दोषोपन्यासवद् यङ्लुकि दोषानुपन्यासेन तत्रेडिष्टः ।**

**यङ्लोपेत्यादिभाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम् ।**

---

स्याविषयत्वेनेत्त्वादिषु कृतेषु प्रतिषेधनिमित्तोगन्तत्वापगमेन निषेधाप्रवृत्त्येटो दुर्वारत्वात् ।

( न[1] च निमित्तापायपरिभाषाया भाष्येऽनाश्रयणादुगन्तत्वापगमेऽपि प्रतिषेधापगमाभावेन न दोष इति वाच्यम्, भ्रष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रणादिड्विधेः पुनः प्राप्त्या तस्य निवर्त्तयितुमशक्यत्वात् )

नन्वेवम् 'निकुचितः' इत्यत्र कित्त्वनिमित्तकनलोपस्योदुपधत्वद्वारा कित्त्वव्यावर्त्तकत्वं न, यथा च 'उपादास्त' इत्यत्रैज्विषयसन्निपातनिमित्तमात्वं घुसंज्ञाद्वारा कित्त्वस्य तन्निमित्तकघुत्वस्य च निमित्तत्वं यथा न भवति, एवं प्रकृते कित्सन्निपातेन जातं रपरत्वं कित्त्वव्याघातकस्येटो न निमित्तमिति न दोषः ।

न चेत्वविधायकशास्त्रे कित्त्वनिमित्तत्वेनानुपादानात् कथं तदुपजीव्यत्वमित्त्वस्येति वाच्यम्, सन्निपातप्रतियोगिनोरुपादानाग्रहत्यागस्यान्यत्र स्पष्टमुक्तत्वेन वस्तुतः सन्निमित्तमेव तत्र गृह्यत इति तत्राप्यङ्गाधिकारस्य सत्त्वेन प्रत्ययनिमित्तत्वाव्याघातात् "इत्त्वोत्त्वाभ्याम्०" (का० वा० ७।१।१०२) इति वार्त्तिकेन तस्य कित्येव प्रवृत्त्या किन्निमित्तकत्वस्य सूपपादत्वात् इति चेत्, न; "तनिपतिदरिद्रादिभ्यः सन इड्वाच्यः" ( का० वा० ७।२।४९ ) इति वार्त्तिकेन सनि वेट्त्वात्, 'दरिद्रितः' इत्यादौ निषेधाभावाय "यस्य विभाषा" ( पा० सू० ७।२।१५ ) इत्यत्राप्येकाज्ग्रहणानुवृत्तेरावश्यकत्वात् ।

ननूत्तरार्थमावश्यकस्याप्येकाज्ग्रहणस्य 'इह किञ्चित् त्रपो' इति न्यायेन प्राचीनानुमोदितभाष्यध्वनितपरिभाषाज्ञापकत्वेन बाधकत्वमित्याशङ्कते—**न चेति । इडिष्ट इति ।** स च 'शितपा शपा' इति निषेधं विना नोपपद्यत इति भावः ।

ननु तद्भाष्यं यङ्लुक्विषयकमेवेति तत्र दोषोपन्यासेन तत्सिद्ध्यर्थं श्रूयमाणैकाजित्यर्थस्यैवाङ्गीकारेण सिद्धान्ते परिभाषया वारणमित्याशय इति न भवदिष्टार्थसिद्धिरत आह—**भाष्यं त्विति ।** उपक्रमे लोपपदेनोपसंहारे स्थानिवत्त्वाश्रयणेन चेत्यर्थः । न तु तद् विषयत्वमप्युच्यते । लोपपदस्य व्यापकत्वान्नोप-

---

१. 'न च' इत्यादितः 'अशक्यत्वात्' इत्येतत्पर्यन्तं मूलपुस्तके कोष्टके वर्तते क० पु० च नास्ति ।

**किञ्च, तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्वस्येव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम, इड्विषये यङ्लुको लोकेऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात्। अन्यथा 'एकाज्ग्रहणं किमर्थम्' इति प्रश्नस्य 'उत्तरत्र जागर्त्यर्थमिह वध्यर्थम्' इत्युत्तरस्य च भाष्ये निरालम्बनत्वापत्तेः।**

**न चार्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम्। एवं च 'बिभित्सति' इत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येव, उत्तरखण्डेऽस्तित्ववत्। एतच्च "दयतेः" इति सूत्रे भाष्ये स्पष्टम्। एवं च प्रकृतभाष्यासङ्गतिरिति वाच्यम्; आक्षेपे आक्षिप्तस्यान्वये च मानाभावात्।**

---

क्रमविरोधः। समाधानस्य लोकमात्रविषयत्वान्नोपसंहारविरोधोऽपीत्यत आह—**किञ्चेति**।

**तस्येति**। उपक्रमभाष्यस्येत्यर्थः। **न्यूनतापत्तिरिति**। यङ्लुकि समाधानप्रदर्शनस्यावश्यकत्वे तदकथने तव बीजालाभः। मन्मते तु परिभाषयैव निर्वाहात्तत्र शङ्कासमाधाने न कृते इति न्यूनतेति भावः।

**अदोषादिति**। न्यूनतापत्तिरूपदोषाभावादित्यर्थः। उक्तार्थानङ्गीकारे बाधकमाह—**अन्यथेति**। ननूत्तरत्रैव कर्त्तव्यमत आह—**इहेति**। **निरालम्बनत्वेति**। तस्य यङ्लुग्व्यावर्त्यत्वेनोक्तरीत्या साफल्ये प्रश्नादेर्निरालम्बनत्वमिति भावः।

ननु यङ्लुकश्छान्दसत्वाभ्युपगमे प्रकृतभाष्यासङ्गतिरिति शङ्कते—**न चेति**। **असङ्गतिरिति**। अयं भावः—अत्रार्धधातुकपदेन धातोराक्षेपे तस्यैकाजिति विशेषणेनैकाचो धातोः परस्यार्धधातुकस्येत्यर्थेन यङन्तात्तृचि इण्निषेधस्याप्राप्त्याल्लोपात्पूर्वमपरनिमित्तकत्वेनान्तरङ्गत्वादिटि 'बेभिदिता' 'बिभित्सति' इत्यस्य सिद्ध्या क्वापि दोषाभावेनाङ्गविशेषणत्वमाश्रित्य सनीट्प्रतिषेध इति वार्त्तिकाश्रयणासङ्गतिः।

मम तु यङ्लुको लोकेऽपि प्रयोगसत्त्वेन 'बेभिदिता' इत्यत्र पूर्वमेवानैमित्तिकत्वेनान्तरङ्गत्वाल्लुक्युत्तरखण्डस्यैव धातुत्वेन तत्र निषेधापत्तिः। अङ्गविशेषणत्वे त्वङ्गस्यैकाच्त्वाभावान्न दोष इति। **मानाभावादिति**। वृत्त्युपस्थितस्यैव शाब्दबोधे विषयत्वाङ्गीकारादिति भावः।

वस्तुतस्त्वेकाज्ग्रहणस्योत्तरत्रानुवृत्तौ फलाभावादिह वधिव्यावृत्तेरप्यन्यथा सिद्धत्वात्तस्य परिभाषाज्ञापकत्वमेव युक्तम्। न च 'दरिद्रितः' इत्यत्र "यस्य विभाषा" ( पा० सू० ७।२।१५ ) इतीण्निषेधवारणायैकाच इत्यस्यानुवृत्तिरावश्यकीति वाच्यम्, "द्वितीयाश्रिता०" ( पा० सू० २।१।२४ ) इत्यत्र 'पतित' इति निपातनेनौपसङ्ख्यानिकविकल्पवतस्तेन निषेधानङ्गीकारात्। "सेऽसिचिकृत्०"

**अङ्गत्वं तु विशिष्ट एवेति "एकाचो द्वे" इति सूत्रे भाष्ये स्पष्टम्। निरूपितं च तनादिशेषे शब्देन्दुशेखरे। धातुत्वं तूत्तरखण्ड एव। अत एव "एकाचो बशो भष्" इति सूत्रे धातोरवयवस्यैकाच इति वैयधिकरण्येनान्वये गर्धप्सिद्धिः प्रयोजनमुक्तं भाष्ये, न तु प्रसिद्धम् 'अजर्घाः' इति।**

---

( पा० सू० ७।२।५७ ) इति वेट्त्वेन निष्ठायां कृतेरिण्निषेधे सिद्धे 'कृती छेदने' इत्यत्र ईदित्करणेन "यस्य विभाषा" ( पा० सू० ७।२।१५ ) इत्यस्यानित्यत्वज्ञापनाच्च।

एतेन 'वावृतु'धातोर्निष्ठायामिट्प्रतिषेधाभावाय "यस्य विभाषा" ( पा० सू० ७।२।१५ ) इत्यत्रैकाज्ग्रहणानुवृत्तिरावश्यकीत्यपास्तम्। तस्य धातोरनङ्गीकाराच्च। किञ्चैकाज्ग्रहणेनैव वधिव्यावृत्त्याऽऽद्युदात्तनिपातनेन तद्व्यावृत्तिप्रतिपादनपरभाष्यासङ्गत्यापत्तेः।

अत एव भाष्ये 'एकाज्ग्रहणं कर्त्तव्यम्, न कर्त्तव्यम्' इत्येवं नोक्तम्। न च यङ्लुको लोकेऽनभिधानेनैतत्परिभाषाश्रयणं व्यर्थमिति वाच्यम्, तस्य छन्दोमात्रविषयत्वे मानाभावात्।

न च "यङोऽचि च" ( पा० सू० २।४।७४ ) इति चकारेण "बहुलं छन्दसि" ( पा० सू० २।४।७३ ) इत्यत्र बहुलग्रहणानुकर्षणवच्छन्दोग्रहणस्याप्यनुकर्षणाच्छन्दोमात्रविषयत्वमुचितम्। अत एव "हुश्नुवोः०"(पा०सू० ६।४।८७) इति सूत्रे 'यङ्लुगर्थं हुश्नुग्रहणं कर्त्तव्यमिति चेदार्धधातुकत्वात् सिद्धम्' इति वार्त्तिककारेण यङ्लुकि 'अरोरुवन्' इत्यादौ तिङामार्धधातुकत्वाद् यणोऽप्रवृत्त्या हुश्नुग्रहणप्रत्याख्यानं कृतम्। भाषायामपि यङ्लुकस्सत्त्वे तत्र "छन्दस्युभयथा" ( पा० सू० ३।४।११७ ) इति तिङामार्धधातुकत्वाभावेन हुश्नुग्रहणप्रत्याख्यानासङ्गतिरिति वाच्यम्, तत्रैव हुश्नुग्रहणस्य भाषायां यङ्लुकस्सत्त्वे ज्ञापकत्वोपवर्णनेन तस्य वार्त्तिककारोक्तच्छन्दोमात्रविषयत्वस्य निराकरणात्।

न च किमेतस्य ज्ञापने प्रयोजनमिति प्रश्नानन्तरं भाषायां यङ्लुकस्सत्त्वे योयुवतीत्यादेः स्वोपपादकस्योवर्णान्तस्यैवोदाहर्तुमुचितत्वेन तद्विहाय बेभिदिचेच्छिदीत्येतत्सिद्धं भवतीत्यादिग्रहणं विना रूपद्वयस्यैव प्रयोजनत्वेन प्रदर्शनात्तद्रूपद्वयविषये एव भाषायां यङ्लुकस्सत्त्वे ज्ञापकत्वप्रदर्शनेनेतरेषां छान्दसत्वमभ्युपगतमेवेति वाच्यम्, ज्ञापकस्योदाहृतरूपद्वयमात्रविषयकत्वे चारितार्थ्याभावेनानेकाचोऽसंयोगपूर्वोवर्णान्तस्यैव यण्विधानेनोदाहृतरूपद्वये यणोऽप्राप्त्या तन्निवृत्त्यर्थत्वायोगेन रूपद्वयस्य 'रोरुवति' 'योयुवति' इत्याद्यनेकलक्ष्योपलक्षणार्थत्वस्यावश्यमभ्युपगन्तव्यत्वात्।

न हि रूपद्वयमात्रे तज्ज्ञापकं भवितुमर्हति येन भवदुक्तं सङ्गच्छेत। ज्ञापकं

**'अजर्घाः, बेभिदीति' इत्यादौ श्नम्श्यनादयस्तु "चर्करीतं च" इत्यस्यादादौ पाठेन यङ्लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति ।**

**छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः ।**

---

हि यद्विना स्वस्यानुपपत्तिर्येन च स्वस्योपपत्तिस्तमर्थं ज्ञापयत्यन्यथातिप्रसङ्गापत्तेः ।

एवमिहापि बेभिदिचेछिदीतिरूपद्वयं विना स्वस्यानुपपत्त्यभावेन तस्य स्वोपपादकत्वाभावेन च ज्ञापकस्य प्रयोजनस्य चासाङ्गत्यापत्तेः । तस्मादस्य स्वोपपादक-योयुवतीत्याद्यनेकोदाहरणोपलक्षणत्वमवश्यमभ्युपगन्तव्यमिति न छन्दोग्रहणम् "यङोऽचि च" ( पा० सू० २।४।७४ ) इत्यत्र सम्बद्धचत इति भाष्याशयात् । अत एव "न धातुलोप०" (पा० सू० १।१।४) सूत्रप्रत्याख्याने लोलुवादेः सिद्धये तत्र स्थानिवत्त्वाद् गुणवृद्ध्यभावसमर्थनायातो लोपो यस्येति योगविभागेन प्रदर्शनं सङ्गच्छते । अन्यथा "यङोऽचि च" ( पा० सू० २।४।७४ ) इत्यत्रानुवृत्तछन्दोग्रहणादेव 'छन्दसि सर्वे विधयो विकल्प्यन्ते' इति तत्र गुणवृद्ध्यभावयोरुपपत्त्या तद्भाष्यासङ्गतिः ।

न चैवं बहुलग्रहणानुवृत्त्या वाक्यभेदेन विधीयमानस्यानैमित्तिकस्य लुको भाषाविषयत्वे प्रातिपदिके तत एव बहुलग्रहणाद् गुणाभावसमर्थने सिद्धे योगविभागवैयर्थ्यमिति वाच्यम्, बहुलग्रहणेन सूत्रप्रत्याख्यानस्यायुक्तत्वात् ।

यङ्लुकश्छान्दसत्वे तु तत्र सर्वेषां वैकल्पिकत्वेन गुणादेरापादयितुमशक्यत्वेन योगविभागाश्रयणक्लेशासङ्गतिः । "आडजादीनाम्" ( पा० सू० ६।४।७२ ) इत्येतत्प्रत्याख्यानावसरे छन्दसि 'सुरुचो वेन आवः' इति प्रयोजनमुपन्यस्य छान्दसबहुलग्रहणादेव दीर्घं समर्थयित्वा तत्प्रत्याख्यानवदत्रापि छान्दसबहुलग्रहणादेव समर्थनस्य वक्तुं युक्तत्वात् । तस्माद् यङ्लुको भाषाविषयत्वेन तदर्थं योगविभागाश्रयणमिति न किञ्चित्क्लिष्टम् ।

नन्वेवम् "किति च" ( पा० सू० ७।२।११८ ) इति सूत्रस्थभाष्यविरोधः, तत्र हि पूर्वसूत्रे यदार्धधातुकग्रहणं तदनवकाशमिति तदानर्थक्यं प्रतिपादितम् । तच्च यङ्लुकश्छान्दसत्वाभावे न सङ्गच्छते । तथा हि पूर्वसूत्रे आर्धधातुकग्रहणप्रयोजनत्वेनोपन्यस्ते 'रोरवीति'इति प्रत्युदाहरणे यङ्लुकोऽनैमित्तिकत्वेन धातोर्लोपो यस्मिन्निति बहुव्रीह्याश्रयणाद् गुणनिषेधव्यावृत्तिसिद्धावपि 'तोतोर्त्ति' 'मोमोर्त्ति' इत्यादौ तिब्निमित्ते "राल्लोपः" ( पा० सू० ६।४।२१ ) इति धात्वेकदेशयोश्छ्वोर्लोपे प्राप्तस्य लघूपधगुणस्य निषेधप्रसङ्गेनार्धधातुकग्रहणस्यावश्यकत्वात् ।

अत एव यङ्लुकश्छान्दसत्वमभ्युपगम्य भाष्यकारेणोक्तम्, यङ्लुको भाषाविषयत्वे हि बहूनि प्रयोजनानि सन्तीति कैय्यटोक्तं सङ्गच्छते ।

**भाषायां तु तादृशानामभाव एव। श्तिपृशबादिनिर्देशास्तु 'भवतेरः" इत्यादिसूत्रस्थतन्निर्देशवन्नार्थसाधका इत्यन्यत्र विस्तरः ।। १३१ ।।**

---

न च यङ्लुकश्छन्दोविषयत्वे हुश्नुग्रहणज्ञापकपरभाष्यविरोध इति वाच्यम्, उवर्णान्तप्रकृतिकयङ्लुगन्तस्य लोके प्रयोगदर्शनेन किमेतस्य ज्ञापने प्रयोजनमिति प्रश्ने तदङ्गीकृत्य बेभिदि—चेच्छिदीत्येतत्सिद्धं भवति, भाषायामपीति, आदिग्रहणं विना रूपद्वयस्यैव प्रयोजनत्वेनोपन्यासदर्शनेन तस्य ( भिदिच्छिद्योः ) छान्दसत्वस्य स्पष्टमभिधानात् ।

अन्यथा ज्ञापितेऽप्यसार्थक्यादुवर्णान्तेभ्योऽपि यङ्लुक आवश्यकत्वेन 'इत्येतत्' इत्यक्षरस्वारस्यभङ्गापत्तिः। "न धातुलोप०" ( पा० सू० १।१।४ ) सूत्रभाष्यं तु भाषाविषयत्वेऽपि सूत्रस्यानावश्यकत्वबोधनाय प्रवृत्तमिति न युष्मदुक्तार्थे दृढं मानमिति चेत्, न; "क्ङिति प्रतिषेधे तन्निमित्तग्रहणम्" ( का० वा० १।१।५ ) इति वार्त्तिकप्रत्याख्यानप्रस्तावे वार्त्तिककारमतमभ्युपगम्यैव तद्भाष्यप्रवृत्त्या तस्यैकदेशित्वात्। अत एव तत्र कैय्यटेन छान्दसत्वमभ्युगम्येति व्याख्यातम् । तस्य सर्वथा छन्दोविषयत्वेऽभ्युपगम्येत्युक्तिरसङ्गता स्यात् ।

यत्तु—आदिग्रहणं विना रूपद्वयस्य प्रदर्शनात् तन्मात्रस्यैव भाषाविषयत्वमिति तन्मन्दम्, यङ्लुगर्थं तर्हि हुश्नुग्रहणं कर्त्तव्यम् । यङ्लुगन्तमनेकाजसंयोगपूर्वमुवर्णान्तमस्ति तदर्थमिदम् । नेदं योयुवतीनां वृषभं भवति रोरुवतीनामिति प्रयोजने उपन्यस्ते, तस्य यङ्लुगर्थमिति चेत्, तत्, न; किं कारणमार्धधातुकत्वात्सिद्धिमिति प्रतिपादिते तदनुरोधेनास्मादेव हुश्नुग्रहणात् "यङोचि च" ( पा० सू० २।४।७४ ) इत्यत्र छन्दोग्रहणाननुवृत्त्या भाषायामपि यङ्लुग्भवतीत्युक्ते "यङोचि च" ( पा० सू० २।४।७४ ) इति छन्दसि बहुलं विधीयमानस्य यङ्लुको बहुलग्रहणेन हुश्नुग्रहणाज्ज्ञापकाद् भाषायामपि साधुत्वस्य शिष्टप्रयोगानुसारेण क्वचिदेव प्रतिपत्तव्यत्वेन तादृशं किमिति प्रश्ने तत्सम्मतम् 'बेभिदि, चेच्छिदि' इत्येतत्सिद्धं भवति भाषायामपीत्युक्तम् ।

तत्रापिशब्दो भिन्नक्रमः। एतदपि सिद्धं भवतीत्यन्वयः। अन्यथा वेदे तादृशरूपस्य ज्ञापकसाध्यत्वाभावेन भाषायामेव तस्य ज्ञाप्यत्वेन ज्ञाप्यकोटावपिशब्दसमुच्चितस्य यस्य कस्याप्यभावेन भाषायामपीति यथाश्रुतासङ्गतिः स्पष्टैव ।

तस्माद् यङ्लुकश्छन्दोमात्रविषयत्वे गमकान्तरमन्वेष्टव्यमिति "श्तिपा शपा०" ( परि० १३१ ) इति परिभाषाऽऽवश्यकी। अत एव 'बेभिदि' इत्यादौ तत्तद्गणप्रयुक्तश्नमादयो न ।

**ननु 'जभोऽचि, रधेश्च, नेटचलिटि' इत्येव सूत्र्यताम्, किं द्वीरधिग्रहणेनेत्याह—**

**पदगौरवाद् योगविभागो गरीयान् ।। १३२ ।।**

**प्रतिवाक्यं भिन्नवाक्यार्थबोधकल्पनेन गौरवं स्पष्टमेव। परन्तु भाष्यासम्मतेयम् । "टाङसि०" इति सूत्रस्थभाष्यविरुद्धा च । तत्र च इनादेशे इकारप्रत्याख्यानं योगविभागेनैव कृतमिति बहवः ।। १३२ ।।**

**अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ।। १३३ ।।**

**"एओङ्, ऐऔच्" सूत्रयोर्ध्वनितषा भाष्ये ।**

**तत्रानेकपदघटितसूत्रे प्रायः पदलाघवविचार एव, न तु मात्रालाघवविचार इति "ऊकालोऽच्, अपृक्त एकाल्" इत्यादिसूत्रेषु भाष्ये ध्वनितम् ।**

**तत्र हि सूत्रे अल्ग्रहणहल्ग्रहणयोर्विशेषविचारे संज्ञायां हल्ग्रहणम् "ण्यक्षत्रिय" इति सूत्रे अणिञोरिति वाच्यमिति त्रीणि पदान्यल्ग्रहणे, तदेकं स्वादिलोपे हल्ग्रहणम् "ण्य" इति सूत्रे अणिञोरिति न वाच्यम्, अपृक्तस्येति वाच्यमिति त्रीण्येव पदानीति नास्ति लाघवकृतो विशेष इत्युक्तम् ।**

---

न च "चर्करीतं च" ( ग० सू० ) इत्यदादौ पाठेन तेषां तद्गणस्थत्वेन गणान्तरस्थत्वानङ्गीकारान्न श्नमादीनां प्राप्तिरिति वाच्यम्; "चर्करीतं च" इति गणसूत्रेण यङ्लुगन्तेऽदादित्वातिदेशस्य भ्वादिषु विकरणान्तराप्राप्त्या शब्लुगर्थतया चारितार्थ्याद् 'वेभिदि' इत्यादौ शबपवादतया श्नम एव प्राप्त्या तस्यानेन निवृत्त्यसम्भवात् । एकाच इत्यत्र गर्धप्सिद्धिः प्रयोजनमिति भाष्यं तु "अजर्घाः' इत्यादेरुपलक्षणम्, न चोदाहरणमादरणीयमिति भाष्यादिति दिक् ।। १३१ ।।

**किं द्वीरधिग्रहणेनेति ।** न च 'जभोऽचि रधेर्लिटि च नेटि' इति न्यासोऽस्तु, रधेर्लिटि अजादौ प्रत्यये च नुमिति द्वितीयसूत्रार्थः ।

एवञ्च द्विर्नञ्ग्रहणमपि न कर्त्तव्यमिति वाच्यम्, "रधादिभ्यश्च" ( पा० सू० ७।२।४५ ) इतीटि 'रधिता' इत्यादाविव 'रन्धिता' इत्यादावपि निषेधापत्तेः ।

यदि तु "अनन्तरस्य०" ( परि० ६२ ) इति न्यायेन च शब्दसमुच्चितवाक्यस्यैव निषेध इत्युच्यते तदेदं द्विर्नञ्ग्रहणस्याप्युपलक्षणं बोध्यम् ।। १३२ ।।

**अनेकपदेति ।** तेन "नामि" ( पा० सू० ६।४।३ ) इत्यादौ मात्रालाघवविचारस्य नासङ्गतिः । **त्रीण्येवेति ।** अल्ग्रहणपक्षे तु मात्रागौरवं स्पष्टमेव ।

"अचि श्नु" इति सूत्रे इण इत्येव सिद्धे य्वोरिति संमृद्य ग्रहणान्न पूर्वेणेण्ग्रहणम् । तत्र विभक्तिनिर्देशे संमृद्य ग्रहणे च सार्धास्तिस्रो मात्रा इण्-ग्रहणे तिस्रो मात्रा इति लण्सूत्रे भाष्योक्तेः, तथा "ओतः श्यनि" इति सूत्रे शितीति न वक्तव्यम् ।

तत्रायमर्थः—"ष्ठिवुक्लमु" इति सूत्रे 'शितीति न कर्त्तव्यं भवति' इति भाष्ये न केवलं मात्रालाघवं यावदयमप्यर्थ इति कैयटोक्तेः प्रायेणेति शिवम् ॥ १३३ ॥

॥ इति शास्त्रशेषनामकं तृतीयं प्रकरणम् ॥

इति श्रीमन्महामहोपाध्यायशिवभट्टसुतसतीगर्भजनागोजी-
भट्टकृतः परिभाषेन्दुशेखरः समाप्तः ॥



---

**प्रायेण**—इत्यस्य फलमाह—**"अचिश्नु०"** ( पा० सू० ६।४।७७ ) इति । ननु 'य्वोः' इति द्वन्द्वनिर्देशादत्रापि पदलाघवं सम्भवतीत्याह—**"ओतः श्यनि"** ( पा० सू० ७।३।७१ ) इति ।

यद्यपि यथान्यासे पदलाघवम्, शितीति न्यासे पदगौरवम्, तथापि तदनादृत्य मात्रालाघवस्यैव भाष्यकृता विचारितत्वात् क्वचित्तदनाश्रयणमिति भाव इति शिवम् ॥ १३३ ॥

सिद्धान्तेषु यदि प्रमादवशतः स्यादन्यथास्मत्कृता-
वुक्तं तद्दयया समीक्ष्य सुधियः संशोधयन्तु स्वयम् ।
तोषायैव स मे भवेन्न तु पुना रोषाय शाणक्षति-
र्मण्यादेर्वणिजां मुदे न तु पुनः खेदाय वोभूयते ॥

॥ इति शास्त्रशेषनामकं तृतीयं प्रकरणम् ॥

इति श्रीमदद्वैतविद्यापारावारीणसुब्रह्मण्यसूरितनूजशेषशर्मसूरिविरचिता
सर्वमङ्गलाख्यपरिभाषेन्दुशेखरव्याख्या समाप्ता ।



# प्रथमं परिशिष्टम्

## अकारादिक्रमेण परिभाषेन्दुशेखरस्थपरिभाषानुक्रमणी

# द्वितीयं परिशिष्टम्

## तत्तदाचार्यैः स्वीकृतस्तत्तत्परिभाषापाठः

### व्याडिकृतपरिभाषासूचनानुसारिपरिभाषापाठः

( १ )

१. अर्थवद्ग्रहणे नानर्थकस्य ।
२. न वर्णग्रहणेषु ।
३. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम् ।
४. गौणमुख्ययोर्मुख्ये सम्प्रत्ययः ।
५. औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणम् ।
६. कृत्रिमाकृत्रिमयोः कृत्रिमे सम्प्रत्ययः ।
७. कृत्रिमाकृत्रिमयोरुभयगतिर्भवति ।
८. भवति च बहुव्रीहौ तद्गुणसंविज्ञानमपि ।
९. पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते ।
१०. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।
११. उच्चरितप्रध्वंसिनोऽनुबन्धाः ।
१२. नानुबन्धकृतमनेकाल्त्वम् ।
१३. नानुबन्धकृतमसारूप्यम् ।
१४. भूतपूर्वगतिरिह शास्त्रे सम्भवति ।
१५. वसुप्रवृत्त्या इह शास्त्रे कार्यं भवति ।
१६. अनन्तरस्य विधिर्वा प्रतिषेधो वा ।
१७. तद्भक्तस्तद्ग्रहणेन गृह्यते ।
१८. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।
१९. न निमित्तकार्यं नैमित्तिकस्य ।
२०. अभ्यासविकारेष्वपवादा नोत्सर्गान्विधीन् बाधन्ते ।
२१. असति सम्भवे बाधनं भवति ।
२२. सत्यपि सम्भवे बाधनं भवति ।
२३. एकयोगनिर्दिष्टानामप्येकदेशानुवर्तनम् ।
२४. इतरेतराश्रयाण्यपि कार्याणि शास्त्रेषु प्रकल्पन्ते ।
२५. प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
२६. वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते ।

२७. ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति ।
२८. प्रत्येकं वाक्यपरिसमाप्तिः ।
२९. समुदायेऽपि वाक्यपरिसमाप्तिः ।
३०. भाव्यमानोऽण् सवर्णान्न गृह्णाति ।
३१. उकार एवैको भाव्यमानोऽपि सवर्णान् गृह्णाति ।
३२. इह शास्त्रे व्यवस्थितविभाषा भवति ।
३३. स्वरविधौ व्यञ्जनमविद्यमानवत् ।
३४. अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य ।
३५. सकृद्गतौ विप्रतिषेधे यद् बाधितं बाधितमेव तत् ।
३६. असिद्धं बहिरङ्गमन्तरङ्गे ।
३७. धातूपसर्गयोरन्तरङ्गं कार्यं भवति ।
३८. समानाश्रयमसिद्धं व्याश्रयं सिद्धं भवति ।
३९. येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् ।
४०. निमित्ताभावे नैमित्तिकस्याप्यभावो भवति ।
४१. सन्नियोगशिष्टानामेकतरापाये उभयोरप्यपायः ।
४२. येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ।
४३. लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम् ।
४४. उभयत आश्रये नान्तादिवद् भवति ।
४५. एकानुबन्धकृतमनित्यम् ।
४६. एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ।
४७. निरनुबन्धग्रहणे न सानुबन्धकस्य ।
४८. यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते ।
४९. यस्य विधेर्निमित्तं नासौ बाध्यते ।
५०. कार्यकालं संज्ञापरिभाषम् ।
५१. उक्तार्थानामप्रयोगः ।
५२. अनन्त्यविकारेऽन्त्यसदेशस्य ।
५३. संज्ञापूर्वकविधिरनित्यः ।
५४. नञिवयुक्तमन्यसदृशाधिकरणं तथा ह्यर्थः ।
५५. उदित् स्ववर्गमेव गृह्णाति न सवर्णमात्रम् ।
५६. सर्वविधिभ्य इड्विधिर्बलवान् ।
५७. सर्वविधिभ्यो लोपविधिर्बलवान् ।
५८. व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम् ।
५९. चानुकृष्टमुत्तरत्र नानुवर्त्तते ।
६०. प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ।

६१. एकस्मिन्नपि व्यपदेशिवद्भावोऽप्रातिपदिकग्रहणेन ।
६२. तदेकदेशभूतस्तद्ग्रहणेन गृह्यते ।
६३. अर्थवशाद्विभक्तिविपरिणामो भवति ।
६४. पर्जन्यवल्लक्षणप्रवृत्तिः ।
६५. अकृतव्यूहाः पाणिनीयाः ।
६६. अतन्त्रं तरनिर्देशः ।
६७. प्रधानान्वाचयशिष्टयोः प्रधानशिष्टे सम्प्रत्ययः ।
६८. योगविभागादिष्टसिद्धिः ।
६९. प्रातिपदिकविधौ तदन्तविधिर्नास्ति ।
७०. प्रकृतिग्रहणे णिजन्तस्यापि ग्रहणम् ।
७१. संज्ञाविधौ तदन्तविधिर्नास्ति ।
७२. अभिधानलक्षणाः कृत्तद्धितसमासाः ।
७३. सर्वो द्वन्द्वो विभाषयैकवद् भवति ।
७४. प्रतिपदविधानाद्योगविभागो गरीयान् ।
७५. समासान्तविधिरनित्यः ।
७६. अनित्यमागमशासनम् ।
७७. शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति ।
७८. लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः ।
७९. असिद्धं बहिरङ्गमन्तरङ्गे ।
८०. नाजानन्तर्ये बहिष्प्रक्लृप्तिः ।
८१. सकृद्गतौ विप्रतिषेधे यद्बाधितं तद् बाधितमेव ।
८२. पुनः प्रसङ्गविज्ञानात्सिद्धम् ।
८३. अपवादविषयेऽप्युत्सर्गसमावेशः ।
८४. न विकरणस्वरो लसार्वधातुकस्वरं बाधते ।
८५. समुदायेषु शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते ।
८६. प्रकृतिवदनुकरणं भवति ।
८७. अव्यक्तगुणसन्देहे नपुंसकलिङ्गं प्रयुज्यते ।
८८. अवयवलोपिनामतो लोपो नास्ति ।
८९. अन्तरङ्गविधेः प्रतिपदविधिर्बलीयान् ।
९०. धातुप्रातिपदिकादनुबन्धप्रातिपदिकं बलीयः ।
९१. सामान्यातिदेशे विशेषानतिदेशः ।
९२. द्विबद्धं सुबद्धं भवति ।
९३. कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ।

# व्याडिसङ्गृहीतपरिभाषापाठः

## ( २ )

१. अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् ।
२. न वर्णग्रहणेषु ।
३. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम् । न तु लाक्षणिकस्य ।
४. गौणमुख्ययोर्मुख्ये सम्प्रत्ययः ।
५. औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणम् ।
६. कृत्रिमाकृत्रिमयोः कृत्रिमे सम्प्रत्ययः ।
७. भवति बहुव्रीहौ तद्गुणसंविज्ञानमपि ।
८. अवयवेन विग्रहः समुदायः समासार्थः ।
९. पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते ।
१०. मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् ।
११. निरवकाशा हि विधयः सावकाशान् विधीन् बाधन्ते ।
१२. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।
१३. उच्चरितप्रध्वंसिनोऽनुबन्धाः ।
१४. नानुबन्धकृतमनेकाल्त्वम् ।
१५. नानुबन्धकृतमसारूप्यम् ।
१६. एकदेशविकृतमनन्यवद् भवति ।
१७. भूतपूर्वगतिरिह शास्त्रे सम्भवति ।
१८. वसुप्रवृत्त्या इह शास्त्रे कार्यं भवति ।
१९. अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ।
२०. तद्भक्तस्तद्ग्रहणेन गृह्यते ।
२१. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।
२२. अनिमित्तेन कार्यं नैमित्तिकस्य ।
२३. अभ्यासविकारेषु अपवादा नोत्सर्गान् विधीन् बाधन्ते ।
२४. असति हि सम्भवे बाधनं भवति ।
२५. सति सम्भवे बाधनं भवति ।
२६. अस्ति च सम्भवो यदुभयं स्यात् ।
२७. एकयोगनिर्दिष्टानामप्येकदेशानुवर्तनम् ।
२८. इतरेतराश्रयाण्यपि कार्याणि ।
२९. प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
३०. विभक्तौ लिङ्गविशिष्टाग्रहणम् ।

३१. नह्येकदेशा वर्णग्रहणेन गृह्यन्ते ।
३२. ताच्छीलिकेषु न वाऽसरूपविधिः ।
३३. प्रत्येकं वाक्यपरिसमाप्तिः ।
३४. उभयथा वाक्यसमाप्तिः ।
३५. भाव्यमानोऽण् सवर्णान्न गृह्णाति ।
३६. व्यवस्थितविभाषा चेह शास्त्रे सम्भवति ।
३७. स्वरविधौ व्यञ्जनमविद्यमानवत् ।
३८. अङ्गवृत्तौ पुनर्वृत्तावविधिर्निष्ठितस्य ।
३९. वार्णादाङ्गं बलीयः ।
४०. सकृद्गतौ विप्रतिषेधे यद् बाधितं बाधितमेव तत् ।
४१. पुनः प्रसङ्गविज्ञानात् सिद्धम् ।
४२. असिद्धं बहिरङ्गमन्तरङ्गे ।
४३. [ अन्तरङ्गे कार्ये बहिरङ्गमसिद्धं स्यात् । ]
४४. नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ।
४५. समानाश्रयमसिद्धं व्याश्रयं तु सिद्धमेव ।
४६. येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् ।
४७. निमित्ताभावे नैमित्तिकस्याप्यभावः ।
४८. सन्नियोगशिष्टानामेकतराभावे उभयोरप्यभावः ।
४९. येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ।
५०. लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम् ।
५१. उभयत आश्रये नान्तादिवद्भावः ।
५२. एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ग्रहणम् ।
५३. निरनुबन्धग्रहणे न सानुबन्धकस्य ।
५४. तदनुबन्धकग्रहणे नातदनुबन्धकस्य ।
५५. एकानुबन्धकृतमनित्यम् ।
५६. यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते ।
५७. यस्य विधेर्निमित्तं नासौ बाध्यते ।
५८. कार्यकालं संज्ञापरिभाषम् ।
५९. यथोद्देशं संज्ञापरिभाषम् ।
६०. उक्तार्थानामप्रयोगः ।
६१. [ सकृदुक्तार्थस्य प्रयोगः । ]
६२. नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे ।
६३. अनन्त्यविकारे अन्त्यसदेशस्यैव ग्रहणम् ।

६४. संज्ञापूर्वको विधिरनित्यः ।
६५. नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।
६६. अणुदित्सवर्णमेव गृह्णाति न वर्णमात्रम् ।
६७. सहसचरिताहचरितयोः सहचरितस्यैव ग्रहणम् ।
६८. दृष्टानुविधिश्छन्दसि बाहुल्यवत् ।
६९. सर्वविधिभ्य इड्विधिर्बलवान् ।
७०. सर्वविधिभ्यो लोपविधिर्बलवान् ।
७१. सर्वविधिभ्यो लुग्विधिर्बलवान् ।
७२. प्रत्ययाप्रत्यययोः प्रत्यये सम्प्रत्ययः ।
७३. अभिधेयवल्लिङ्गवचनानि भवन्ति ।
७४. स्वार्थिका एव प्रत्ययाः प्रकृतितो लिङ्गवचनान्यनिवर्तन्ते ।
७५. व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ।
७६. चानुकृष्टमुत्तरत्र नानुवर्तते ।
७७. प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ।
७८. एकस्मिन्नपि व्यपदेशिवद्भावोऽप्रातिपदिकेन ।
७९. प्रकृतिग्रहणे णिजन्तस्यापि ग्रहणम् ।
८०. तदेकदेशभूतं तद्ग्रहणेन गृह्यते ।
८१. कार्यनिर्देशः कार्यनिमित्तप्रतिपत्तये ।
८२. अर्थवशाद्विभक्तिविपरिणामः ।
८३. पर्जन्यवल्लक्षणप्रवृत्तिः ।
८४. अकृतव्यूहाः पाणिनीयाः कृतमपि शास्त्रं निवर्तयन्ति ।
८५. अतन्त्रं तरनिर्देशः ।
८६. प्रधानान्वाचयशिष्टयोः प्रधानशिष्टे सम्प्रत्ययः ।
८७. योगविभागादिष्टसिद्धिः ।
८८. ग्रन्थाधिक्यादर्थाधिक्यम् ।
८९. ग्रहणवता प्रतिपदिकेन न तदन्तविधिः ।
९०. अभिधानलक्षणाः कृत्तद्धितसमासाः ।
९१. सर्वो द्वन्द्वो विभाषयैकवद् भवति ।
९२. प्रतिपदविधानाद् योगविभागो गरीयान् ।
९३. अक्षरविधिस्थादपि योगविभागो गरीयान् ।
९४. समासान्तविधिरनित्यः ।
९५. अनित्यमातिदेशिकम् ।
९६. वर्णाश्रये नास्ति प्रत्ययलक्षणम् ।

९७. प्रकृतसम्बन्धाच्छ्रुतसम्बन्धो गरीयान् ।
९८. अलिङ्गमसंख्यमव्ययम् ।
९९. अनित्यमागमशासनम् ।
१००. शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति ।
१०१. अपवादविषये क्वचिदुत्सर्गस्यापि समावेशः ।
१०२. न विकरणस्वरो लसार्वधातुकस्वरं बाधते ।
१०३. धातुस्वरात् प्रत्ययस्वरो बलीयान् ।
१०४. सतिशिष्टस्वरो बलीयानन्यत्र विकरणेभ्यः ।
१०५. आगमा अनुदात्ता भवन्ति ।
१०६. निर्दिश्यमानस्यादेशा भवन्ति ।
१०७. समासवृत्तिस्तद्धितवृत्त्या बाध्यते ।
१०८. अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ।
१०९. सदृशङ्करणमनुकरणम् ।
११०. अव्यक्तेषु गुणसन्देहे नपुंसकलिङ्गं प्रयुज्यते ।
१११. कृदभिहितो भावो द्रव्यवत् प्रकाशते ।
११२. रूढिषु नावयवार्थाः प्रकाशन्ते ।
११३. प्रकृतिवदनुकरणं भवति ।
११४. अवयवालोपिनामतोलोपो नास्ति ।
११५. [ अन्तरङ्गबहिरङ्गयोरन्तरङ्गो विधिर्बलीयान् । ]
११६. अन्तरङ्गविधेः प्रतिपदविधिर्बलीयान् ।
११७. कृताकृतप्रसङ्गी यो विधिः स नित्यः ।
११८. नित्यानित्ययोर्नित्यो विधिर्बलवान् ।
११९. धातुप्रातिपदिकादनुबन्धप्रातिपदिकं बलीयः ।
१२०. प्रधानाप्रधानयोः प्रधाने सम्प्रत्ययः ।
१२१. प्रतिज्ञानुनासिक्याः पाणिनीयाः ।
१२२. प्रतिज्ञास्वरिताः पाणिनीयाः ।
१२३. सामान्यातिदेशे विशेषानतिदेशः ।
१२४. गामादाग्रहणेष्वविशेषः ।
१२५. पदाङ्गाधिकारे तस्य च ग्रहणं भवति तदुत्तरस्य च ।
१२६. कृद्ग्रहणे गतिकारकस्यापि ग्रहणम् ।
१२७. यस्मिन्विधिस्तदादावल्ग्रहणे ।
१२८. अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते ।
१२९. अनिनस्मन्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ।

१३०. विधिनियमसम्भवे विधिरेव ज्यायान् ।
१३१. यत एवकारस्ततोऽन्यत्रावधारणम् ।
१३२. क्विबन्ता धातुत्वं न जहति प्रातिपदिकत्वं च ।
१३३. नैकमुदाहरणं योगारम्भं प्रयोजयति ।
१३४. लुप्तोऽप्यनुबन्धः कार्यं प्रति विशेषको भवति ।
१३५. लघ्वक्षरं हि संज्ञाविधानमनित्यम् ।
१३६. द्विबद्धं सुबद्धं भवति ।
१३७. इष्टार्था बहवः······कार्याः ।
१३८. गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ।
१३९. चक्रकेष्विष्टतो व्यवस्था ।
१४०. ज्ञापकलक्षणं न सर्वत्र ।

●

# शाकटायनपरिभाषासूत्राणि

## ( ३ )

१. अर्थवद्ग्रहणे नानर्थकस्य ।
२. न वर्णग्रहणेषु ।
३. अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च ।
४. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य न लाक्षणिकस्य ।
५. गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ।
६. औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणं न तु प्रायोगिकस्य ।
७. कृत्रिमाकृत्रिमयोः कृत्रिमे सम्प्रत्ययो भवति ।
८. अकर्मका अपि हि धातवः सोपसर्गाः सकर्मका भवन्ति ।
९. बहुव्रीहौ तद्गुणसंविज्ञानमपि ।
१०. पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ।
११. मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते ।
१२. यो यमाश्रित्य समुत्पन्नः स तं प्रति सन्निपातः । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।
१३. उच्चरितप्रध्वंसिनोऽनुबन्धाः ।

१४. नानुबन्धकृतमनेकाल्त्वम् ।
१५. नानुबन्धकृतमनेजन्तत्वम् ।
१६. नानुबन्धकृतमसारूप्यम् ।
१७. एकदेशविकृतमनन्यवद्भवति ।
१८. भूतपूर्वगतिरिह शास्त्रे सम्भवति ।
१९. वत्सप्रवृत्त्येह शास्त्रे कार्याणि सम्भवन्ति ।
२०. अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ।
२१. तदागमस्तद्ग्रहणेन गृह्यते ।
२२. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।
२३. न निमित्तकार्यं नैमित्तिकस्य ।
२४. द्विर्भावे पूर्वविधावपवादा नोत्सर्गान् बाधन्ते ।
२५. असति च सम्भवे बाधनं भवति ।
२६. सत्यपि सम्भवे तदुभयं स्यात् ।
२७. एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्तते ।
२८. इतरेतराश्रयाणि च कार्याणि न प्रकल्प्यन्ते ।
२९. प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
३०. वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते ।
३१. ताच्छीलिके सरूपविधिर्नास्ति ।
३२. प्रत्येकं वाक्यपरिसमाप्तिः ।
३३. समुदाये वाक्यपरिसमाप्तिः ।
३४. उभयथा वाक्यपरिसमाप्तिः ।
३५. व्यवस्थितविभाषा चेह शास्त्रे सम्भवति ।
३६. उभयगतिरिह शास्त्रे सम्भवति ।
३७. स्वरविधौ व्यञ्जनमविद्यमानवत् ।
३८. सकृद्गते स्पर्द्धे यद् बाधितं तद्बाधितमेव ।
३९. सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ।
४०. सामान्याश्रयं सिद्धं व्याश्रयं त्वसिद्धमेव ।
४१. येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादेकेन वर्णेन व्यवधानमाश्रीयते ।
४२. निमित्ताभावे नैमित्तिकस्याप्यभावः ।
४३. सन्नियोगशिष्टानामन्यतराभावे उभयोरप्यभावः ।
४४. येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ।
४५. श्लुग्विकरणाश्लुग्विकरणयोरश्लुग्विकरणम् ।
४६. उभयत आश्रये नान्तादिवत् ।

४७. एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ।
४८. अननुबन्धकग्रहणे न सानुबन्धकस्य ।
४९. तदनुबन्धकग्रहणे नातदनुबन्धकस्य ।
५०. यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते । यं प्रति निमित्तमेव स न बाध्यते ।
५१. कार्यकालं हि संज्ञापरिभाषम् ।
५२. यथोद्देशं संज्ञापरिभाषम् ।
५३. उक्तार्थानामप्रयोगः ।
५४. शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः ।
५५. नानर्थकेऽलोन्त्यविधिः ।
५६. अन्त्याभावे अन्त्यसदेशस्य ।
५७. संज्ञापूर्वको विधिरनित्यः ।
५८. नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।
५९. सर्वविधिभ्य इड्विधिर्बलीयान् ।
६०. सर्वविधिभ्यो लोपविधिर्बलीयान् ।
६१. व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ।
६२. चानुकृष्टमुत्तरत्र नानुवर्तते ।
६३. प्रकृतिग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
६४. प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ।
६५. व्यपदेशिवद्भावो न प्रातिपदिकग्रहणेन ।
६६. तदादेशस्तद्ग्रहणेन गृह्यते ।
६७. अर्थवशाद्विभक्तिपरिणामः ।
६८. पर्जन्यवल्लक्षणे प्रवृत्तिः जले वर्षति स्थले वर्षति ।
६९. अकृतव्यूहाः शाकटायनीयाः कृतमपि शास्त्रं निवर्तयन्ति ।
७०. अतन्त्रं तरनिर्देशः प्रवृद्धबालविशिष्टयोः ।
७१. प्रधानान्वाचयशिष्टयोः प्रधानशिष्टे सम्प्रत्ययः ।
७२. योगविभागादिष्टप्रसिद्धिः ।
७३. ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ।
७४. प्रातिपदिकविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति ।
७५. संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति ।
७६. अभिधानलक्षणाः कृत्तद्धितसमासाः ।
७७. अक्षराधिक्याद्योगविभागो गरीयान् ।
७८. समासान्तो विधिरनित्यः ।
७९. अनित्यमागमशासनम् ।

८०. लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः ।
८१. न लक्षणान्तरबाधनेनानित्यत्वम् ।
८२. पुनः प्रसङ्गविज्ञानात्सिद्धम् ।
८३. असिद्धं बहिरङ्गमन्तरङ्गे ।
८४. नाजानन्तर्ये बहिष्प्रक्लृप्तिः ।
८५. अपवादविषयेऽप्युत्सर्गसमावेशः ।
८६. समुदाये हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते ।
८७. प्रकृतिवदनुकरणं भवति ।
८८. अव्यक्ते गुणसन्देहे नपुंसकलिङ्गं प्रयोक्तव्यम् ।
८९. अवयवलोपिनामतोलोपाभावः ।
९०. अन्तरङ्गविधेः प्रतिपदविधिर्बलवान् ।
९१. धातुप्रतिपदादनुबन्धप्रतिपदं बलीयः ।
९२. सामान्यातिदेशे विशेषानतिदेशः ।
९३. नित्यानित्ययोर्नित्यविधिर्बलवान् ।
९४. [ अन्तरङ्गबहिरङ्गयोरन्तरङ्गविधिर्बलवान् । ]
९५. सावकाशानवकाशयोरनवकाशो विधिर्बलवान् ।
९६. उभयत्रेह शास्त्रे षष्ठी न प्रकल्प्यते ।
९७. उभयनिर्देशे पञ्चमी निर्देशो बलवान् ।
९८. द्विर्बद्धं सुबद्धं भवति ।

●

## चान्द्रपरिभाषासूत्राणि ।

( ४ )

१. अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् ।
२. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ।
३. नामग्रहणे लिङ्गविशिष्टस्यापि ।
४. प्रकृतिग्रहणे यङ्लुगन्तस्यापि ।
५. एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ।
६. निरनुबन्धकग्रहणे न सानुबन्धकस्य ।
७. आगमा गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ।

८. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।
९. यस्मिन्विधिस्तदादावल्ग्रहणे ।
१०. सर्वत्र तदन्तविधिरन्यत्र छतुक्स्वरसन्धेः ।
११. ग्रहणवतान्ते न तदन्तविधिः ।
१२. अन्यार्थे तद्गुणसंविज्ञानमपि ।
१३. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।
१४. उच्चरितप्रध्वंसिनोऽनुबन्धाः ।
१५. एकदेशविकृतमनन्यवत् ।
१६. एकदेशेऽन्यत्र न व्यपदेशोऽपि तत्कृतः तदभावेऽपि तदव्यपदेशात् ।
१७. व्यपदेशिवद्भाव एकस्मिन् ।
१८. आद्यन्तवदेकोऽप्यच् ।
१९. निर्दिश्यमानस्यादेशाः ।
२०. स्थानिवदादेशः ।
२१. णौ कृतं च ।
२२. स्थानेऽन्तरतमः ।
२३. प्रत्यासत्तेः प्रकृतिवदनुकरणम् ।
२४. पूर्वत्रासिद्धीयमद्विर्वचने ।
२५. प्रत्येकं वाक्यपरिसमाप्तिः ।
२६. समुदाये वाक्यपरिसमाप्तिः ।
२७. सापेक्षमसमर्थम् ।
२८. उक्तार्थानामप्रयोगः ।
२९. अनिर्दिष्टार्था विधयः स्वार्थे रुहन्ति ।
३०. अनन्तरस्य विधिः प्रतिषेधो वा ।
३१. येन नाप्राप्ते यो विधिरारभ्यते स तस्य वाधको भवति ।
३२. असति सम्भवे वाधनं भवति ।
३३. सत्यपि सम्भवे वाधे वाधा ।
३४. अस्ति च सम्भवो यदुभयं स्यात् ।
३५. पुरस्तादपवादा अनन्तरान् विधीन् वाधन्ते ।
३६. मध्येऽपवादाः पूर्वान् विधीन् वाधन्ते न परान् ।
३७. यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्वाध्यते ।
३८. यस्य तु विधेर्निमित्तमेव नासौ वाध्यते ।
३९. एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्तते न त्वेकविभक्तिनिर्दिष्टानाम् ।
४०. चानुकृष्टमुत्तरत्र नानुवर्तते ।

४१. कार्यानुबन्धादधिकारानुवृत्तिः ।
४२. भिन्नसम्वन्धे प्रतियोगे प्रतिघाते चाधिकाराणां निवृत्तिः ।
४३. इष्टे तदधिकाराणां प्रवृत्तिनिवृत्ती ।
४४. भाव्यमानोत् सवर्णं गृह्णाति ।
४५. असिद्धं वहिरङ्गमन्तरङ्गे ।
४६. अजानन्तर्ये न वहिरङ्गपरिभाषा ।
४७. अन्तरङ्गवहिरङ्गयोरन्तरङ्गो विधिर्वलीयान् ।
४८. नामविधेरन्तङ्गात् सर्वतो लोपः ।
४९. श्रुतानुमितयोः श्रौतो वलीयान् ।
५०. निरवकाशाः विधयः सावकाशान् विधीन् वाधन्ते ।
५१. सहचरितप्रत्यासत्तेः तदितरेतरयोगः ।
५२. विशेषविधिः सामान्यात् ।
५३. गौणमुख्ययोर्मुख्ये सम्प्रत्ययः ।
५४. इतरेतरं कार्यमसद्वत् ।
५५. व्यवस्थितविभाषया योगविभागाद्वेष्टसिद्धिः ।
५६. वत्स्यंत्प्रवृत्त्या शास्त्रे कार्यम् ।
५७. गमकत्वे कार्ययोगः ।
५८. गमयत्यधिकोऽर्थोऽधिकं कार्यम् ।
५९. प्रकृतिप्रवृत्तेः पुनर्वृत्तौ अविधिर्निष्ठितस्य ।
६०. विप्रतिषेधेन यद्वाधितं तद्वाधितमेव ।
६१. पुनः प्रसङ्गविज्ञानात्सिद्धम् ।
६२. व्यवधानेऽप्युक्तिप्रामाण्यात् ।
६३. निमित्तापाये नैमित्तिकस्याप्यपायः ।
६४. सन्नियोगशिष्टयोरेकतराभावे उभयोरप्यभावः ।
६५. नञिवयुक्ते सदृशसम्प्रत्ययः ।
६६. व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम् ।
६७. विवक्षाव्याप्तेरिष्टावसायः ।
६८. विवक्षातः कारकावसायः ।
६९. उपपदविभक्तेः कारकविभक्तिर्वलीयसी ।
७०. सूत्रे लिङ्गवचनमप्रमाणम्, अविवक्षितत्वात् ।
७१. वाच्यवल्लिङ्गवचने ।
७२. अव्यक्ते गुणसन्देहे नपुंसकलिङ्गं प्रयुज्यते ।
७३. लिङ्गमशिष्यं लोकाश्रयत्वाद् ।

७४. अर्थवशाद् विभक्तिवचनलिङ्गविपरिणामः ।
७५. नानुबन्धकृतमनेकाल्त्वम् ।
७६. कृताकृतप्रसङ्गो विधिर्नित्यः ।
७७. ज्ञापकेऽर्थमनित्यम् ।
७८. अनित्यमागमशासनम् ।
७९. स्वार्थे णिज् नित्यम् ।
८०. प्रादीनां क्रियायोगित्वं विशेषद्योतित्वे स्वभावात् ।
८१. अभिधानप्रत्ययाः सनादिसमासाः ।
८२. भूतपूर्वगतिरत्रास्ति ।
८३. अक्षराधिक्यादपि योगविभागो गरीयान् ।
८४. अर्थापत्त्या शास्त्रे सिद्धिरुक्तिप्रामाण्यात् ।
८५. सिद्धशब्दोपदेशात् नेतरेतराश्रयदोषः ।
८६. स्वरविधौ व्यञ्जनमविद्यमानवत् ।

## दुर्गसिंहविरचितकातन्त्रपरिभाषावृत्त्यनुसारिपरिभाषापाठः

### ( ५ )

१. एकदेशविकृतमनन्यवत् ।
२. नास्वशब्दोक्तत्वात् ।
३. येन विधिस्तदन्तस्य ।
४. अर्थवद्ग्रहणे अनर्थकस्य ग्रहणं न भवति ।
५. वर्णान्तस्य विधिः ।
६. अनेकवर्णः सर्वस्य ।
७. निर्दिश्यमानानामादेशिनामादेशाः ।
८. स्थानिवदादेशोऽवर्णविधौ ।
९. स्वरादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवत् ।
१०. न पदान्तद्विर्वचनवर्गान्तानुस्वारप्रथमतृतीयदीर्घलुग्विधिषु ।
११. योनादिष्टात्स्वरात्पूर्वस्तं प्रति स्थानिवत् ।
१२. प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणम् ।
१३. न स्तिबनुबन्धगणसंख्यैकस्वरोक्तेषु ।

१४. आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ।
१५. यथासंख्यमनुदेशः समानाम् ।
१६. स्थानेऽन्तरतमः ।
१७. लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
१८. अनन्तरस्य विधिः प्रतिषेधो वा ।
१९. विशेषातिदिष्टः प्रकृतं न बाधते ।
२०. आद्यन्तवदेकस्मिन् ।
२१. सप्तम्या निर्दिष्टे पूर्वस्य ।
२२. पञ्चम्या निर्दिष्टे परस्य ।
२३. षष्ठ्या निर्दिष्टे स्वस्य ।
२४. प्रथमया च ।
२५. अर्थवशाद् विभक्तिविपरिणामः ।
२६. भाविनि भूतवदुपचारः ।
२७. निमित्तापाये नैमित्तिकस्याप्यपायः ।
२८. स्वं रूपं शब्दस्याशब्दसंज्ञा ।
२९. गणकृतमनित्यम् ।
३०. संज्ञापूर्वको विधिरनित्यः ।
३१. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।
३२. वर्णग्रहणे निमित्तत्वात् ।
३३. असिद्धं वहिरङ्गमन्तरङ्गे ।
३४. सर्वविधिभ्यो लोपविधिर्बलवान् ।
३५. लोपस्वरादेशयोः स्वरादेशो विधिर्बलवान् ।
३६. सकृद्बाधितो विधिर्बाधित एव ।
३७. अपवादविषये क्वचिदुत्सर्गस्यापि समावेशः ।
३८. प्रधानान्वाचयशिष्टयोः प्रधानशिष्टस्तु नित्यः ।
३९. अन्त्याभावेऽन्त्यसदेशस्यापि ग्रहणम् ।
४०. आगमादेशयोरागमो विधिर्बलवान् ।
४१. आगमात्सर्वादेशो विधिर्बलवान् ।
४२. औपदेशिकप्रायोगिकयोरौपदेशिकस्यापि ग्रहणम् ।
४३. सन्ध्यक्षराणामिदुतौ ह्रस्वादेशे ।
४४. परनिमित्तादेशः पूर्वस्मिन् स एव ।
४५. निरनुबन्धग्रहणे सामान्यग्रहणम् ।
४६. उक्तार्थानामप्रयोगः ।

४७. यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते ।
४८. यस्य तु विधेर्निमित्तमस्ति नासौ बाध्यते ।
४९. नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।
५०. भूतपूर्वस्तद्वदुपचारः ।
५१. अदर्शनं लोपः ।
५२. प्रत्ययलोपे प्रत्ययलक्षणम् ।
५३. सर्वापहारी लोपः प्रत्ययस्य ।
५४. यावत्सम्भवस्तावद्विधिः ।
५५. उच्चरितप्रध्वंसिनो ह्यनुबन्धाः ।
५६. कार्यी निमित्तं कार्यमित्येष निर्देशक्रमः ।
५७. तद्भेदे विधेर्भेदः ।
५८. इकारोक्तः सविभक्तिरादेशोऽस्वरः ।
५९. सिद्धे सत्यारम्भो नियमाय ।
६०. ज्ञापकज्ञापिता विधयो ह्यनित्याः ।
६१. वक्तुर्विवक्षितपूर्विका शब्दार्थप्रतिपत्तिः ।
६२. पदयोः सन्धिर्विवक्षितो न समासान्तरङ्गयोः ।
६३. उत्सर्गापवादयोरपवादविधिर्बलवान् ।
६४. अभ्यासविकारेष्वपवादो नोत्सर्गान् बाधते ।
६५. व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम् ।



## भावमिश्रविरचितकातन्त्रपरिभाषासूत्रवृत्त्यनुसारिपरिभाषापाठः

### ( ६ )

१. अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् ।
२. गौणमुख्ययोर्मुख्यस्य कार्यं न तु गौणस्य ।
३. लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
४. वर्णग्रहणे सवर्णस्यापि ग्रहणम् ।
५. वर्णान्तरस्य विधिः ।
६. अन्त्याभावे अन्त्यसमीपस्यापि ग्रहणम् ।

७. येन विधिस्तदन्तस्य ।
८. नैसर्गिकलाक्षणिकयोर्नैसर्गिकस्यैव ग्रहणं न तु लाक्षणिकस्य ।
९. एकयोगनिर्दिष्टानां सहैव प्रवृत्तिः सहैव निवृत्तिः ।
१०. प्रधानान्वाचयशिष्टयोः प्रधानशिष्टस्तु नित्यः ।
११. उभयोर्विभाषयोर्मध्ये यो विधिः स नित्यः ।
१२. यो यमाश्रित्योत्पद्यते स तं प्रति सन्निपातः । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।
१३. अर्थवशाद् विभक्तिविपरिणामः ।
१४. भाविनि भूतवदुपचारः ।
१५. अनन्तरस्य विधिः प्रतिषेधो वा ।
१६. एकदेशविकृतमनन्यवत् ।
१७. न सामान्यशब्दोक्ते ।
१८. आद्यन्तवदेकस्मिन् ।
१९. अन्तस्था रेफवर्जिताः सानुनासिका निरनुनासिकाश्च ।
२०. प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणम् ।
२१. न श्तिवनुबन्धगणसंख्यैकस्वरोक्तेषु ।
२२. उक्तेऽर्थे तत्प्रत्ययाप्रयोगः ।
२३. निमित्ताभावे नैमित्तिकस्याप्यभावः ।
२४. लुप्तोऽनुबन्धः साध्यसिद्धिवशात् सद्वत् ।
२५. प्रत्ययस्य सर्वापहारी लोपः स्यात् ।
२६. प्रत्ययलोपे प्रत्ययलक्षणम् ।
२७. यावत्सम्भवस्तावद् विधिः स्यात् ।
२८. कार्यी निमित्तं कार्यमित्येष निर्देशक्रमः ।
२९. तद्भेदे विधेर्भेदः ।
३०. सिद्धे सत्यारम्भो नियमाय स्यात् ।
३१. यल्लक्षणेनानुपपन्नं तत्सर्वं निपातनात् सिद्धम् ।
३२. आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ।
३३. निर्दिश्यमानानामादेशिनामादेशाः स्युः ।
३४. यथासंख्यमनुदेशः समानाम् ।
३५. स्थानेऽन्तरतमः ।
३६. अनेकवर्णः सर्वस्य ।
[ परस्यादेः ]
३७. नित्यं सन्ध्यक्षराणि दीर्घाणि ।

३८. इकारोक्तः सविभक्तिरादेशोऽस्वरः ।
३९. स्थानिवदादेशो ह्यवर्णविधौ ।
४०. न पदान्तद्विर्वचनानुस्वारवर्गान्तप्रथमतृतीयदीर्घलुग्विधिषु ।
४१. स्वरादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवत् ।
४२. परनिमित्तादेशः पूर्वस्मिन् स एव ।
४३. असिद्धं बहिरङ्गमन्तरङ्गे ।
४४. सर्वविधिभ्यो लोपविधिर्बलवान् ।
४५. लोपस्वरादेशयोः स्वरादेशो विधिर्बलवान् ।
४६. आगमादेशयोरागमविधिर्बलवान् ।
४७. आगमात्सर्वादेशो विधिर्बलवान्।
४८. पूर्वोक्तपरोक्तयोः परोक्तविधिर्बलवान् ।
४९. नित्यानित्ययोर्मध्ये नित्यो विधिर्बलवान् ।
५०. अन्तरङ्गबहिरङ्गयोर्मध्ये अन्तरङ्गो विधिर्बलवान् ।
५१. परान्नित्यं नित्यादन्तरङ्गमन्तरङ्गाच्चानवकाशं बलीयः ।
५२. उत्सर्गापवादयोरपवादविधिर्बलवान् ।
५३. सामान्योक्तो विधिरुत्सर्गो विशेषोक्तो विधिरपवादः ।
५४. विशेषातिदिष्टः प्रकृतं न बाधते ।
५५. अपवादविषयं परिहृत्योत्सर्गः प्रवर्तते ।
५६. अपवादविषये क्वचिदुत्सर्गस्यापि समावेशः स्यात् ।
५७. सकृद्बाधितो विधिर्बाधित एव ।
५८. पारिभाषिकं क्वचिदनित्यं स्यात् ।
५९. उपपदविभक्तेः कारकविभक्तिर्बलीयसी ।
६० गुणबाधिका वृद्धिर्भवति ।
६१. सूत्रे काललिङ्गवचनान्यतन्त्राणि ।
६२. प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशते ।

# कातन्त्रपरिभाषासूत्राणि

## ( ७ )

### ।। अथ परिभाषासूत्रम् ।।

१. एकदेशविकृतमनन्यवत् ।
२. नास्वशब्दोक्तत्वात् ।
३. येन विधिस्तदन्तस्य ।
४. अर्थवद्ग्रहणे नानर्थकस्य ।
५. वर्णान्तरस्य विधिः ।
६. एकवर्णो विधिरन्ते प्रवर्तते ।
७. अनेकवर्णः सर्वस्य ।
८. निर्दिश्यमानानामादेशिनामादेशाः ।
९. स्थानिवदादेशा ह्यवर्णविधौ ।
१०. स्वरादेशः स्वरनिमित्तकः पूर्वविधिं प्रति स्थानिवत् ।
११. न पदान्तद्विर्वचनवर्गान्तानुस्वारप्रथमतृतीयदीर्घलुग्विधिषु ।
१२. योऽनादिष्टात् स्वरात् पूर्वस्तं प्रति स्थानिवत् ।
१३. प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणम् ।
१४. न श्तिबनुबन्धगणसंख्यैकस्वरोक्तेषु ।
१५. आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ।
१६. यथासंख्यमनुदेशः समानाम् ।
१७. स्थानेऽन्तरतमः ।
१८. लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
१९. अनन्तरस्य विधिः प्रतिषेधो वा ।
२०. विशेषातिदिष्टः प्रकृतं न बाधते ।
२१. आद्यन्तवदेकस्मिन् ।
२२. चानुकृष्टं नोत्तरत्र ।
२३. सप्तम्या निर्दिष्टे पूर्वस्य ।
२४. पञ्चम्या निर्दिष्टे परस्य ।
२५. षष्ठ्या निर्दिष्टे स्वस्य ।
२६. प्रथमया च ।
२७. अर्थवशाद् विभक्तिविपरिणामः ।
२८. भाविनि भूतवदुपचारः ।

२९. निमित्ताभावे नैमित्तिकस्याप्यभावः ।
३०. स्वं रूपं शब्दस्याशब्दसंज्ञा ।
३१. गणकृतमनित्यम् ।
३२. संज्ञापूर्वको विधिरनित्यः ।
३३. यं दृष्ट्वा यस्य सम्भवः स तस्य सन्निपातः । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।
३४. वर्णग्रहणे निमित्तम् ।
३५. असिद्धं वहिरङ्गमन्तरङ्गे ।
३६. सर्वविधिभ्यो लोपविधिर्बलवान् ।
३७. लोपस्वरादेशयोः स्वरादेशविधिर्बलवान् ।
३८. सकृद्गतौ विप्रतिषेधे यद् बाधितं तद्बाधितमेव ।
३९. अपवादविषये क्वचिदुत्सर्गस्यापि समावेशः ।
४०. प्रधानान्वाचयशिष्टयोः प्रधानशिष्टस्तु नित्यः ।
४१. नित्योऽवश्यम्भावी भवति ।
४२. अन्त्याभावे अन्त्यसदेशस्यापि ग्रहणम् ।
४३. आगमादेशयोरागमो विधिर्बलवान् ।
४४. आगमात्सर्वादेशो विधिर्बलवान् ।
४५. औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ।
४६. सन्ध्यक्षराणामिदुतौ ह्रस्वादेशे ।
४७. परनिमित्तादेशः पूर्वस्मिन् स एव ।
४८. निरनुवन्धग्रहणे न सानुवन्धस्य ग्रहणम् ।
४९. उक्तार्थानामप्रयोगः ।
५०. यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमस्ति नासौ बाध्यते ।
५१. नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।
५२. भूतपूर्ववदुपचारः ।
५३. अदर्शनं लोपः ।
५४. प्रत्ययलोपे प्रत्ययलक्षणम् ।
५५. प्रत्ययस्य सर्वापहारी लोपः ।
५६. प्रकृतेरन्तापहारी लोपः ।
५७. यावत्सम्भवस्तावद्विधिः ।
५८. उच्चरितप्रध्वंसिनो ह्यनुबन्धाः ।
५९. कार्यी निमित्तं कार्यमित्येष निर्देशक्रमः ।

६०. तद्भेदाद् विधेर्भेदः ।
६१. इकारोक्तः सविभक्तिरादेशोऽस्वरः ।
६२. सिद्धे सत्यारब्धो विधिर्नियमाय ज्ञापकाय विकल्पाय वा ।
६३. ज्ञापकज्ञापिता विधयो ह्यनित्याः ।
६४. वक्तुर्विवक्षितपूर्विका हि शब्दप्रवृत्तिः ।
६५. पदयोः सन्धिर्विवक्षितो न समासान्तरङ्गयोः ।
६६. उत्सर्गापवादयोरपवादविधिर्बलवान् ।
६७. व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ।

[ इति परिभाषासूत्रम् ]

**॥ अथ बलाबलसूत्रम् ॥**

६८. यत्र द्वौ प्रसङ्गावन्यार्थावेकस्मिन् विषये युगपत् प्राप्नुतः स तुल्यबलविरोधो विप्रतिषेधः ।
६९. विप्रतिषेधे परं कार्यम् ।
७०. पूर्वपरयोः परविधिर्बलवान् ।
७१. प्रकृतेः पूर्वं पूर्वं स्यादन्तरङ्गम् ।
७२. प्रकृत्याश्रितमन्तरङ्गम् ।
७३. प्रत्ययाश्रितं बहिरङ्गम् ।
७४. उपपदसिद्धेः कारकसिद्धिर्बलीयसी ।
७५. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ।
७६. सावकाशनिरवकाशयोर्निरवकाशो विधिर्बलवान् ।
७७ अन्तरङ्गबहिरङ्गयोरन्तरङ्गविधिर्बलवान् ।
७८. आगमादेशयोरागमविधिर्बलवान् ।
७९. अन्तरङ्गाच्चानवकाशं बलीयः ।
८०. वार्णो विधिरन्तरङ्गम् ।
८१. वार्णात् प्राकृतं बलीयः ।
८२. कृताकृतप्रसङ्गी यो विधिः स नित्यः ।
८३. नित्यानित्ययोर्नित्यविधिर्बलवान् ।
८४. विधिनियमसम्भवे विधिरेव ज्यायान् ।
८५. एकाश्रितमन्तरङ्गम् ।
८६. बह्वाश्रितं बहिरङ्गम् ।
८७. सामान्यविधिरुत्सर्गो विशेषविधिरपवादः ।
८८. गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययो न तु गौणे ।

८९. स्थितानामन्वाख्यानं हि व्याकरणम् ।
९०. यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्य ।
९१. यस्य स्थाने य आदेशास्ते तद्ग्रहणेन गृह्यन्ते ।
९२. श्रुतानुमितयोः श्रौतसम्बन्धविधिर्बलवान् ।
९३. नित्यादन्तरङ्गं बलीयः ।
९४. विधिप्रतिषेधयोः प्रतिषेधो विधिर्बलवान् ।
९५. प्रत्यक्षानुमितयोः प्रत्यक्षो विधिर्बलवान् ।
९६. उत्सर्गापवादयोरपवादविधिर्बलवान् ।

[ इति बलाबलसूत्रम् ]



## कालापपरिभाषासूत्राणि

( ८ )

१. असति बाधे ।
२. सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामतो विशेष्ये बाधिते सति ।
३. एकदेशविकृतमनन्यवत् ।
४. नास्वशब्दोक्तत्वात् ।
५. येन विधिस्तदन्तस्य ।
६. न संज्ञाविधौ ।
७. अर्थवद्ग्रहणे नानर्थकस्य ।
८. विशेषनिषिद्धानां सामान्यनिषेधवत्त्वम् ।
९. वर्णान्तस्य विधिः ।
१०. अनेकवर्णः सर्वस्य ।
११. निर्दिश्यमानानामादेशिनामादेशाः ।
१२. स्थानिवदादेशो ह्यवर्णविधौ ।
१३. क्वचिन्नादेशस्य ।
१४. ऊकारोक्तः सविभक्तिरादेशोऽस्वरः ।
१५. स्वरादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवत् ।

१६. न पदान्तद्विर्वचनवरयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ।
१७. योनादिष्टात् स्वरात्पूर्वस्तं प्रति स्थानिवत् ।
१८. परनिमित्तादेशः पूर्वस्मिन् स एव ।
१९. प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणम् ।
२०. न श्तिवनुवन्धगणशवेकाजुक्तेषु ।
२१. आगमशासनमनित्यम् ।
२२. आगमा यद्गुणीभूतास्ते तद्ग्रहणेन गृह्यन्ते ।
२३. यथासंख्यमनुदेशः समानाम् ।
२४. स्थानेऽन्तरतमः ।
२५. लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
२६. क्वचिदर्थवतोऽपि ।
२७. अनन्तरस्य विधिः प्रतिषेधो वा ।
२८. विशेषातिदिष्टः प्रकृतं न बाधते ।
२९. आद्यन्तवदेकम् ।
३०. सप्तम्या निर्दिष्टे पूर्वस्य ।
३१. पञ्चम्या निर्दिष्टे परस्य ।
३२. षष्ठ्या निर्दिष्टे स्वस्य ।
३३. अर्थवशाद्विभक्तिविपरिणामः ।
३४. निमित्तस्याभावे नैमित्तिकस्याप्यभावः ।
३५. स्वं रूपं शब्दस्याशब्दसंज्ञा ।
३६. गणकृतमनित्यम् ।
३७. नञा निर्दिष्टमनित्यम् ।
३८. संज्ञापूर्वको विधिरनित्यः ।
३९. समासान्तश्च ।
४०. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।
४१. वर्णग्रहणे निमित्तत्वात् ।
४२. असिद्धं बहिरङ्गमन्तरङ्गे ।
४३. सर्वविधिभ्यो लोपविधिर्बलवान् ।
४४. लोपस्वरादेशयोः स्वरादेशविधिर्बलवान् ।
४५. आगमादेशयोरागमविधिर्बलवान् ।
४६. आगमात्सर्वादेशविधिर्बलवान् ।
४७. अन्यकार्यात्परा द्विरुक्तिः परोक्षालिङ्गादिषु ।
४८. उत्सर्गापवादयोरपवादविधिर्बलवान् ।

४९. अपवादविषये क्वचिदुत्सर्गस्यापि समावेशः ।
५०. पूर्वपरयोः परो विधिर्बलवान् ।
५१. परान्नित्यम् ।
५२. नित्यादन्तरङ्गं बलवत् ।
५३. कृताकृतप्रसङ्गी यो विधिः स नित्यः ।
५४. नित्यानित्ययोर्नित्यः ।
५५. अनन्यपूर्वा लादेशाः ।
५६. बहुषु च शितः ।
५७. सकृद् बाधितं यत्तद् बाधितमेव ।
५८. प्रधानान्वाचयशिष्टयोः प्रधानशिष्टस्तु नित्यः ।
५९. औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ।
६०. एच इण् ह्रस्वत्वे ।
६१. निरनुबन्धग्रहणे सामान्यग्रहणम् ।
६२. उक्तार्थानामप्रयोगः ।
६३. यं विधिं प्रत्युपदेशो निरर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमस्ति नासौ बाध्यते ।
६४. नञिवयुक्तमन्यसदृशाधिकरणे ह्यर्थगतिः ।
६५. भाविनि भूतवदुपचारः ।
६६. अदर्शनं लोपः ।
६७. प्रत्ययलोपे प्रत्ययलक्षणम् ।
६८. प्रत्ययस्व सर्वापहारी लोपः ।
६९. प्रकृतेरन्तापहारी लोपः ।
७०. यावत्सम्भवस्तावद् विधिः ।
७१. उच्चरितप्रध्वंसिनो ह्यनुबन्धाः ।
७२. कार्यी निमित्तं कार्यमित्येष निर्देशक्रमः ।
७३. तद्भेदे विधेर्भेदः ।
७४. लक्षणविधौ लिखनप्रक्रमाद् विधिः ।
७५. येन निर्दिष्टं तस्यैव ।
७६. चानुकृष्टं नोत्तरत्र ।
७७. सिद्धे सत्यारब्धो विधिर्नियमाय विकल्पाय ज्ञापकाय वा ।
७८. उभयोर्विभाषयोर्मध्ये यो विधिः स नित्यः ।
७९. अप्राप्तिपूर्विका हि विभाषा तदुद्देश आदौ ।

८०. सूत्रे लिङ्गवचनमतन्त्रम् ।
८१. द्वित्वबहुत्वयोरेकत्वं बहुत्वार्थं स्वरूपार्थं वा ।
८२. ज्ञापकज्ञापिता विधयो ह्यनित्याः ।
८३. वक्तुर्विवक्षापूर्विका हि शब्दप्रवृत्तिः ।
८४. पदयोः सन्धिर्विवक्षितो न समासान्तरङ्गयोः ।
८५. आख्यातानाख्यातयोराख्यातं बलीयः ।
८६. अव्यक्तं प्रधानगामि ।
८७. गौणमुख्ययोर्मुख्ये कार्यसम्प्रतिपत्तिः ।
८८. व्याख्यानतो विशेषार्थप्रतिपत्तिर्नहि सन्देहादलक्षणम् ।
८९. अनुशिष्टाननुशिष्टयोरनुशिष्टं प्रमाणम् ।
९०. स्वगुरूपलक्षणोक्तं च ।
९१. परोक्तमविरोधि चेत् ।
९२. एकवर्णो विधिरन्ते प्रवर्तते ।
९३. अन्त्याभावे अन्त्यसदेशस्य ग्रहणम् ।
९४. आगमादेशयोरागमो विधिर्बलवान् ।
९५. सन्ध्यक्षराणामिदुतौ ह्रस्वादेशे ।
९६. यत्र द्वौ प्रसङ्गावन्यार्थावेकस्मिन् युगपत् प्राप्नुतः स तुल्यबलविरोधो विप्रतिषेधः ।
९७. विप्रतिषेधे परं कार्यम् ।
९८. प्रकृतेः पूर्वं पूर्वं स्यादन्तरङ्गम् ।
९९. प्रकृत्याश्रितमन्तरङ्गम् ।
१००. प्रत्ययाश्रितं बहिरङ्गम् ।
१०१. उपपदसिद्धेः कारकसिद्धिर्बलीयसी ।
१०२. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ।
१०३. सावकाशनिरवकाशयोर्निरवकाशो विधिर्बलवान् ।
१०४. अन्तरङ्गबहिरङ्गयोरन्तरङ्गविधिर्बलवान् ।
१०५. अन्तरङ्गाच्चानवकाशं बलीयः ।
१०६. वार्णो विधिरन्तरङ्गम् ।
१०७. वार्णात् प्राकृतं बलीयः ।
१०८. विधिनियमसम्भवे विधिरेव ज्यायान् ।
१०९. एकाश्रितमन्तरङ्गम् ।
११०. बह्वाश्रितं बहिरङ्गम् ।
१११. सामान्यविधिरुत्सर्गो विशेषविधिरपवादः ।
११२. गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययो न तु गौणे ।

११३. स्थितानामन्वाख्यानं हि व्याकरणम् ।
११४. यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्य ।
११५. यस्य स्थाने य आदेशास्ते तद्ग्रहणेन गृह्यन्ते ।
११६. श्रुतानुमितयोः श्रुतसम्बन्धो बलवान् ।
११७. नित्यादन्तरङ्गं बलीयः ।
११८. विधिप्रतिषेधयोः प्रतिषेधविधिर्बलवान् ।



## काशिनाथकृतजैनेन्द्रवृत्त्यनुसारिपरिभाषापाठः

( ६ )

१. सिद्धे सत्यारम्भो नियमार्थः ।
२. कार्यकालं संज्ञापरिभाषम् ।
३. अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् ।
४. अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन ।
५. गौणमुख्ययोर्मुख्ये च ।
६. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्, न तु लाक्षणिकस्य ।
७. गामादाग्रहणेष्वविशेषः ।
८. मृद्ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
९. परिमाणग्रहणे न कालपरिमाणं गृह्यते ।
१०. उभयगतिरिह भवति ।
११. एकदेशविकृतमनन्यवत् ।
१२. प्रकृतिवदनुकरणं भवति ।
१३. अनुकरणशब्दा अनुकार्यशब्दैरर्थवन्तः ।
१४. व्यपदेशिवदेकस्मिन् ।
१५. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।
१६. सुबसुपोरेकादेशः सुब्वद्भवति ।
१७. मृदमृदोरेकादेशो मृद्वद्भवति ।
१८. त्यात्यसम्भवे त्यस्य ग्रहणम् ।
१९. घुग्रहणे ध्वादेः समुदायस्य ग्रहणम् ।
२०. प्रकृतिग्रहणे यङ्‌बन्तस्यापि ग्रहणम् ।

२१. वर्णैकदेशा वर्णग्रहणेन न गृह्यन्ते ।

२२. एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ।

२३. निरनुबन्धकस्य ग्रहणे न सानुबन्धकस्य ।

२४. निर्दिश्यमानस्यादेशा भवन्ति ।

२५. तदागमास्तद्ग्रहणेन गृह्यन्ते ।

२६. तदादेशास्तद्ग्रहणेन गृह्यन्ते ।

२७. अनन्त्यविकारेऽन्त्यसदेशस्य ।

२८. अन्त्याभावेऽन्त्यसदेशस्य कार्यम् ।

२९. निमित्तकार्यं न निमित्तस्य ।

३०. उभयत आश्रयणे न तद्भावः ।

३१. धोः स्वरूपग्रहणे तत्त्यविज्ञानम् ।

३२. येन नाव्यवधानं तेन व्यवहितेऽपि ।

३३. भाविनि भूतवदुपचारः ।

३४. अर्थवशाद् विभक्तिपरिणामः ।

३५. नानुबन्धकृतं हलन्तत्वम् ।

३६. एकानुबन्धकृतमनित्यम् ।

३७. अनित्यमागमशासनम् ।

३८. नानर्थकेऽन्तेऽलोन्त्यविधिः ।

३९. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।

४०. शपा तिपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यच्चैकाज्ग्रहणं किञ्चित् पञ्चैतानि न यङ्लुपि ॥

४१. गुकार्ये निमित्ते पुनर्न तन्निमित्तम् ।

४२. सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यभावः ।

४३. अवयवनाशिनामतः खं न भवति ।

४४. णेप्यण्कृतं भवति ।

४५. वर्णाश्रये नास्ति त्याश्रयम् ।

४६. द्वित्वे कर्त्तव्ये णौ कृतं स्थामिवद् भवति ।

४७. कौ नष्टं न स्थानिवत् ।

४८. पूर्वत्रासिद्धे न स्थानिवत् ।

४९. स्फादिखलत्वणत्वेषु नास्ति ।

५०. इष्टतोऽधिकाराणां प्रवृत्तिनिवृत्ती ।

५१. द्विर्बद्धं सुबद्धं भवति ।

५२. त्यग्रहणे यस्मात्स तदादेर्ग्रहणम् ।

५३. संज्ञाविधौ त्यग्रहणे तदन्तविधिर्नास्ति ।
५४. मृद्ग्रहणे न तदन्तविधिः ।
५५. सत्यविधौ न तदन्तविधिः ।
५६. उगित्कार्यं वर्णकार्यं च तदन्तादपि भवति ।
५७. सुसर्वार्धदिक्शब्देभ्यो जनपदस्य ।
५८. प्राग्वतः संख्यापूर्वपदानां तदन्तग्रहणमनुपि ।
५९. त्यग्रहणे चाकायः ।
६०. ड्यावित्यधिकारे त्यग्रहणं स्वरूपग्रहणमेव ।
६१. स्त्रीत्यग्रहणान्नेष्यते ।
६२. भवति स्त्रीत्यप्रकरणे तदन्तविधिः ।
६३. गोरधिकारे तदन्तस्य च ।
६४. धोरधिकारे तदन्तविधिरप्यस्ति ।
६५. कृद्ग्रहणे तिकारकपूर्वस्यापि ग्रहणम् ।

[ इति तदन्तविधिप्रकरणम् ]

६६. अतुल्यबलयोः पस्पर्धो न भवति ।
६७. पूर्वत्रासिद्धे नास्ति स्पर्धोऽसत्त्वादुत्तरस्य ।
६८. न योगे योगोऽसिद्धोऽपि तु प्रकरणे प्रकरणमसिद्धं भवति ।
६९. आभाच्छास्त्रस्य क्वचित्सिद्धता ।
७०. पूर्वत्रासिद्धीयमद्वित्वे ।
७१. खविधिर्बलवान् ।
७२. वार्णाद् गावं बलीयः ।
७३. सकृद्गते परनिर्णये बाधितो बाधित एव ।
७४. पुनः प्रसङ्गविज्ञानाद् विधिः ।
७५. चविकारेष्वपवादा उत्सर्गान्न बाधन्ते ।
७६. शीलादिषु ण्व्यादयो न भवन्ति ।
७७. परनित्यविचारणे भवेन्नित्यम् ।
७८. कृताकृतप्रसङ्गि नित्यम् ।
७९. यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ।
८०. नित्यात्तथान्तरङ्गम् ।
८१. अल्पाश्रयमन्तरङ्गं बह्वाश्रयं बहिरङ्गम् ।
८२. एकपदाश्रयत्वेनान्तरङ्गत्वम् ।
८३. एकपदाश्रयत्वेनान्तरङ्गानपि जग्ध्यादिविधीन् बहिरङ्गः प्यादेशो बाधते ।

८४. पूर्वोत्तरपदयोः कार्यमन्तरङ्गमप्येकादेशं बाधते ।
८५. अन्तरङ्गानपि विधीन् बहिरङ्ग उब् बाधते ।
८६. अन्तरङ्गानपि विधीन् बहिरङ्गः ल्यादेशो बाधते ।
८७. असिद्धं बहिरङ्गमन्तरङ्गे ।
८८. अकृतवद्व्यूहेन सिद्धिः ।
८९. तस्मादप्यनवकाशं यत् ।
९०. उत्सर्गादपवादः ।
९१. प्रकल्प्य वाऽपवादविषयं तत उत्सर्गोऽभिनिविशते ।
९२. पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ।
९३. मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् ।
९४. गुणप्रधानभावेन प्रकृतिस्त्यश्च त्यार्थं सह ब्रूतः ।
९५. स्वार्थिकाः प्रकृतिलिङ्गसंख्येऽनुवर्तन्ते ।
९६. क्वचित्स्वार्थिकाः प्रकृतिलिङ्गसंख्ये अतिवर्तन्तेऽपि ।
९७. नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।
९८. पूर्वं धुगिना युज्यते पश्चात् साधनवाचिना प्रत्ययेन ।
९९. यत्क्रियायुक्तास्तं प्रति गतिसंज्ञको भवति ।
१००. तिवावकारकाणां प्राक् सुबुत्पत्तेः कृद्भिः सविधिः ।
१०१. प्रधानस्य सापेक्षस्यापि वृत्तिः ।
१०२. सापेक्षस्यापि नञः सविधिर्भवति ।
१०३. सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ।
१०४. वाग्विभक्तेः कारकविभक्तिर्बलीयसी ।
१०५. लिङ्गमशिष्यं लोकाश्रयत्वात् ।
१०६. विशेष्यवल्लिङ्गवचनानि भवन्ति विशेषणानाम् ।
१०७. डलयोः समानविषयत्वं स्मर्यते ।
१०८. अर्थवच्छब्दरूपमनेकान्तात् सिध्यति ।

[ इति सङ्कीर्णप्रकरणम् ]



## जैनेन्द्रपरिभाषापाठप्रयुक्तपारिभाषिकपदानां पाणिनीयाः पर्यायाः

| | | | | | |
|---|---|---|---|---|---|
| अप् | = | चतुर्थी | दि | = | प्रगृह्यम् |
| इप् | = | द्वितीया | दी | = | दीर्घम् |
| ईप् | = | सप्तमी | दु | = | वृद्धम् |
| उङ् | = | उपधा | द्यु | = | उत्तरपदम् |
| उप् | = | लुक् | ध | = | सर्वनामस्थानम् |
| उस् | = | लुप् | धु | = | धातुः |
| एप् | = | गुणः | नि | = | निपातः |
| ऐप् | = | वृद्धिः | न्यक् | = | उपसर्जनम् |
| का | = | पञ्चमी | प्र | = | ह्रस्वम् |
| कि | = | सम्बुद्धिः | व | = | वहुव्रीहिः |
| ख | = | लोपः | भा | = | तृतीया |
| खु | = | संज्ञा | भु | = | घु |
| गि | = | उपसर्गः | म | = | परस्मैपदम् |
| गु | = | अङ्गम् | मृत् | = | प्रातिपदिकम् |
| घि | = | लघु | य | = | कर्मधारयः |
| ङ | = | अनुनासिकः | र | = | द्विगुः |
| च | = | अभ्यासः | रु | = | गुरु |
| जि | = | सम्प्रसारणम् | वा | = | प्रथमा |
| झि | = | अव्ययम् | वाक् | = | उपपदम् |
| त | = | निष्ठा | ष | = | तत्पुरुषः |
| ता | = | षष्ठी | स | = | समासः |
| ति | = | गतिः | स्फ | = | संयोगः |
| त्य | = | प्रत्ययः | स्व | = | सवर्णम् |
| थ | = | अभ्यस्तम् | ह | = | अव्ययीभावः |
| द | = | आत्मनेपदम् | हृत् | = | तद्धितः |



## भोजदेवकृतपरिभाषासूत्राणि

१. स्वं रूपं शब्दस्याशब्दसंज्ञा १।२।१८ ।।
२. येन विधिस्तदन्तस्य १।२।१९ ।।
३. सुसर्वार्धदिक्शब्देभ्यो जनपदस्य १।२।२० ।।
४. ऋतोर्वृद्धिमद्विधावयवेभ्यः १।२।२१ ।।
५. प्रकृत्यधिकारे महदादिभिः १।२।२२ ।।
६. पदाधिकारेऽह्नादिभिः १।२।२३ ।।
७. प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरपञ्चम्याः १।२।२४ ।।
८. कृद्ग्रहणे गतिकारकपूर्वस्यापि १।२।२५ ।।
९. न प्रातिपदिकेन १।२।२६ ।।
१०. यस्मिन्विधिस्तदादावल्ग्रहणे १।२।२७ ।।
११. सप्तम्या निर्दिष्टे पूर्वस्य १।२।२८ ।।
१२. पञ्चम्या परस्य १।२।२९ ।।
१३. षष्ठ्यान्तस्य १।२।३० ।।
१४. ङित् १।२।३१ ।।
१५. अन्त्याभावेऽन्त्यसदेशस्य १।२।३२ ।।
१६. परस्यादेः १।२।३३ ।।
१७. शिदनेकाल् सर्वस्य १।२।३४ ।।
१८. टकितावाद्यन्तौ १।२।३५ ।।
१९. मिदचोऽन्त्यात्परः १।२।३६ ।।
२०. ऋकोऽणो रलौ १।२।३७ ।।
२१. निर्दिश्यमानस्यादेशाः १।२।३८ ।।
२२. स्थानेऽन्तरतमः १।२।३९ ।।
२३. एच इग् ह्रस्वादेशे १।२।४० ।।
२४. इको गुणवृद्धी १।२।४१ ।।
२५. अचो ह्रस्वदीर्घप्लुताः १।२।४२ ।।
२६. स्थानिवदादेशोऽनल्विधौ १।२।४३ ।।
२७. अचः परस्मिन् पूर्वविधौ १।२।४४ ।।
२८. न पदान्तद्विर्वचसवर्णानुस्वारजश्त्वविधिषु १।२।४५ ।
२९. स्वरदीर्घयलोपेषु लोपः १।२।४६ ।।
३०. वरक्विलुकिरवोपधात्वेषु १।२।४७ ।।
३१. पूर्वत्रासिद्धे चासंयोगादिलोपलत्वणत्वेषु १।२।४८ ।।

३२. आदिष्टादचः पूर्वस्य १।२।४९ ॥
३३. द्विर्वचनेऽचि १।२।५० ॥
३४. णिच्यनित् १।२।५१ ॥
३५. आद्यन्तवदेकस्मिन् १।२।५२ ॥
३६. प्रकृतिवदनुकरणम् १।२।५३ ॥
३७. एकदेशविकृतमनन्यवत् १।२।५४ ॥
३८. भूतपूर्वकत्वात्तद्वदुपचारः १।२।५५ ॥
३९. भाविनि भूतवदुपचारः १।२।५६ ॥
४०. अवयवेऽप्यवयविवदुपचारः १।२।५७ ॥
४१. प्रत्ययलोपे प्रत्ययलक्षणम् १।२।५८ ॥
४२. न लुमता प्रकृतेः १।२।५९ ॥
४३. णियकोः १।२।६० ॥
४४. उत्तरपदत्वे चापदादिविधौ १।२।६१ ॥
४५. यथासंख्यमनुदेशः समानाम् १।२।६२ ॥
४६. विवक्षातः कारकाणि १।२।६३ ॥
४७. सूत्रे लिङ्गवचनाद्यप्रामाण्यमविवक्षातः १।२।६४ ॥
४८. अपेक्षातोऽधिकारः १।२।६५ ॥
४९. एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः १।२।६६ ॥
५०. एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्तते १।२।६७ ॥
५१. चानुकृष्टमुत्तरत्र नानुवर्तते १।२।६८ ॥
५२. क्वचिदनुवर्तंते १।२।६९ ॥
५३. अनन्तरस्य विधिः प्रतिषेधो वा भवति १।२।७० ॥
५४. विशेषातिदिष्टः प्रकृतं न बाधते १।२।७१ ॥
५५. अर्थवशाद्विभक्तिविपरिणामः १।२।७२ ॥
५६. समर्थः पदविधिः १।२।७३ ॥
५७. अर्थवद्ग्रहणे नानर्थकस्य १।२।७४ ॥
५८. न वर्णानिनास्मन्ग्रहणेषु १।२।७५ ॥
५९. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् १।२।७६ ॥
६०. प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि १।२।७७ ॥
६१. प्रकृतिग्रहणे यङ्लुगन्तस्यापि १।२।७८ ॥
६२. न तिबनुबन्धगणैकाचां ग्रहणेषु १।२।७९ ॥
६३. आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते १।२।८० ॥

६४. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते १।२।८१ ॥
६५. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य १।२।८२ ॥
६६. न वर्णाश्रयप्रत्ययात्वपुगत्वेड्ह्रस्वानि वर्णविचालपुग्ह्रस्वटाबाल्लोपसम्बुद्धि-लोपानाम् १।२।८३ ॥
६७. मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य १।२।८४ ॥
६८. असिद्धं बहिरङ्गमन्तरङ्गे १।२।८५ ॥
६९. नाजानन्तर्ये १।२।८६ ॥
७०. गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः १।२।८७ ॥
७१. प्रसिद्धे सहचरिते च १।२।८८ ॥
७२. कृत्रिमाकृत्रिमयोः कृत्रिमे १।२।८९ ॥
७३. क्वचिदुभयगतिः १।२।९० ॥
७४. सिद्धे सत्यारम्भो नियमार्थः १।२।९१ ॥
७५. धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् १।२।९२ ॥
७६ नञ्युक्तस्य तत्सदृशे १।२।९३ ॥
७७. उक्तार्थानामप्रयोगः १।२।९४ ॥
७८. निमित्ताभावे नैमित्तिकस्याप्यभावः १।२।९५ ॥
७९. सन्नियोगशिष्टानामेकापायेऽन्यतरस्याप्यपायः १।२।९६ ॥
८०. नान्वाचीयमाननिवृत्तौ प्रधानस्य १।२।९७ ॥
८१. निरनुबन्धकग्रहणे न सानुबन्धकस्य १।२।९८ ॥
८२. एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य १।२।९९ ॥
८३. नानुबन्धकृतान्यसारूप्यानेजन्तत्वानेकाल्त्वानि १।२।१०० ॥
८४. समासान्तागमसंज्ञाज्ञापकगणनञ्निर्दिष्टान्यनित्यानि १।२।१०१ ॥
८५. उत्सर्गापवादयोरपवादो विधिर्बलवान् १।२।१०२ ॥
८६. अपवादविषये क्वचिदुत्सर्गस्यापि समावेशः १।२।१०३ ॥
८७. पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते १।२।१०४ ॥
८८. मध्येऽपवादाः पूर्वान् १।२।१०५ ॥
८९. कृद्वाऽसरूपोऽस्त्रियाम् १।२।१०६ ॥
९०. यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते १।२।१०७ ॥
९१. येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकः १।२।१०८ ॥
९२. बलवन्नित्यमनित्यात् १।२।१०९ ॥
९३. अन्तरङ्गं बहिरङ्गात् १।२।११० ॥
९४. निरवकाशं सावकाशात् १।२।१११ ॥

९५. वार्णात् प्राकृतम् १।२।११२ ॥
९६. सम्प्रसारणं सम्प्रसारणाश्रयं च १।२।११३ ॥
९७. उपपदविभक्तेः कारविभक्तिर्बलीयसी १।२।११४ ॥
९८. लुगन्तरङ्गेभ्यः १।२।११५ ॥
९९. सर्वेभ्यो लोपः १।२।११६ ॥
१००. लोपादजादेशः १।२।११७ ॥
१०१. आदेशादागमः १।२।११८ ॥
१०२. आगमात्सर्वादेशः १।२।११९ ॥
१०३. विप्रतिषेधे परं कार्यम् १।२।१२० ॥
१०४. सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव १।२।१२१ ॥
१०५. पुनः प्रसङ्गविज्ञानात्सिद्धम् १।२।१२२ ॥
१०६. क्वचित्पूर्वम् १।२।१२३ ॥
१०७. नानिष्टार्था शास्त्रप्रवृत्तिः १।२।१२४ ॥
१०८. प्रकृतिवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य १।२।१२५ ॥
१०९. यावत्सम्भवस्तावद्विधिः १।२।१२६ ॥
११०. पर्जन्यवल्लक्षणप्रवृत्तिः १।२।१२७ ॥
१११. अकृतकारि खल्वपि शास्त्रम् १।२।१२८ ॥
११२. कार्यकालं संज्ञापरिभाषम् १।२।१२९ ॥
११३. यथोद्देशं संज्ञापरिभाषं प्रवर्तते १।२।१३० ॥
११४. प्रत्येकं वाक्यपरिसमाप्तिः १।२।१३१ ॥
११५. समुदाये वाक्यपरिसमाप्तिः १।२।१३२ ॥
११६. व्याख्यानतो विशेषप्रतिपत्तिः १।२।१३३ ॥
११७. अभिधानलक्षणाः कृत्तद्धितसमासाः १।२।१३४ ॥
११८. प्रत्ययः परः १।२।१३५ ॥



## हेमहंसगणिसङ्गृहीतः श्रीसिद्धहेमचन्द्रव्याकरणन्यायसङ्ग्रहः

## ( ११ )

१. स्वं रूपं शब्दस्याशब्दसंज्ञा ।
२. सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्य ।
३. ऋतोर्वृद्धिमद्विधाववयवेभ्यः ।
४. स्वरस्य ह्रस्वदीर्घप्लुताः ।

५. आद्यन्तवदेकस्मिन् ।
६. प्रकृतिवदनुकरणम् ।
७. एकदेशविकृतमनन्यवत् ।
८. भूतपूर्वकस्तद्वदुपचारः ।
९. भाविनि भूतवदुपचारः ।
१०. यथासंख्यमनुदेशः समानाम् ।
११. विवक्षातः कारकाणि ।
१२. अपेक्षातोऽधिकारः ।
१३. अर्थवशाद्विभक्तिविपरिणामः ।
१४. अर्थवद्ग्रहणे नानर्थकस्य ।
१५. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ।
१६. नामग्रहणे लिङ्गविशिष्टस्यापि ।
१७. प्रकृतिग्रहणे यङ्लुबन्तस्यापि ।
१८. तिवा शवानुबन्धेन निर्दिष्टं यद् गणेन च ।
एकस्वरनिमित्तं च पञ्चैतानि न यङ्लुपि ॥
१९. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।
२०. असिद्धं बहिरङ्गमन्तरङ्गे ।
२१. न स्वरानन्तर्ये ।
२२. गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः
२३. कृत्रिमाकृत्रिमयोः कृत्रिमे ।
२४. क्वचिदुभयगतिः ।
२५. सिद्धे सत्यारम्भो नियमार्थः ।
२६. धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् ।
२७. नञ्युक्तं तत्सदृशे ।
२८. उक्तार्थानामप्रयोगः ।
२९. निमित्ताभावे नैमित्तिकस्याप्यभावः ।
३०. सन्नियोगशिष्टानामेकापायेऽन्यतरस्याप्यपायः ।
३१. नान्वाचीयमाननिवृत्तौ प्रधानस्य ।
३२. निरनुबन्धग्रहणे न सानुबन्धकस्य ।
३३. एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ।
३४. नानुबन्धकृतानि असारूप्यानेकस्वरत्वानेकवर्णत्वानि ।
३५. समासान्तागमसंज्ञाज्ञापकगणननञ्निर्दिष्टानि अनित्यानि ।
३६. पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ।

३७. मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्।
३८. यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते।
३९. यस्य तु विधेर्निमित्तमस्ति नासौ विधिर्बाध्यते।
४०. येन नाप्राप्ते यो विधिरारभ्यते स तस्यैव बाधकः।
४१. बलवन्नित्यमनित्यात्।
४२. अन्तरङ्गं बहिरङ्गात्।
४३. निरवकाशं सावकाशात्।
४४. वार्णात्प्राकृतम्।
४५. य्वृद् य्वृदाश्रयं च।
४६. उपपदविभक्तेः कारकविभक्तिः।
४७. लुबन्तरङ्गेभ्यः।
४८. सर्वेभ्यो लोपः।
४९. लोपात्स्वरादेशः।
५०. आदेशादागमः।
५१. आगमात्सर्वादेशः।
५२. परान्नित्यम्।
५३. नित्यादन्तरङ्गम्।
५४. अन्तरङ्गाच्चानवकाशम्।
५५. उत्सर्गादपवादः।
५६. अपवादात् क्वचिदुत्सर्गोऽपि।
५७. नानिष्टार्था शास्त्रप्रवृत्तिः।

[ एते श्रीहेमचन्द्राचार्यैः स्वोपज्ञसंस्कृतशब्दानुशासनबृहद्वृत्तौ समुच्चिताः। असमुच्चितास्त्वेतेः— ]

५८. प्रकृतिग्रहणे स्वार्थिकप्रत्ययानामपि ग्रहणम्।
५९. प्रत्ययाप्रत्यययोः प्रत्ययस्यैव।
६०. अदाद्यनदाद्योरनदादेरेव।
६१. प्राकरणिकाप्राकरणिकयोः प्राकरणिकस्यैव।
६२. निरनुबन्धग्रहणे सामान्येन।
६३. साहचर्यात् सदृशस्यैव।
६४. वर्णग्रहणे जातिग्रहणम्।
६५. वर्णैकदेशोऽपि वर्णग्रहणेन गृह्यते।
६६. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते।
६७. आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते।

६८. स्वाङ्गमव्यवधायि ।
६९. उपसर्गो न व्यवधायी ।
७०. येन नाव्यवधानं तेन व्यवहितेऽपि स्यात् ।
७१. ऋकारापदिष्टं कार्यम् ऌकारस्यापि ।
७२. सकारापदिष्टं कार्यं तदादेशस्य शकारस्यापि ।
७३. ह्रस्वदीर्घापदिष्टं कार्यं न प्लुतस्य ।
७४. संज्ञोत्तरपदाधिकारे प्रत्ययग्रहणे प्रत्ययमात्रस्यैव ग्रहणं न तदन्तस्य ।
७५. ग्रहणवता नाम्ना न तदन्तविधिः ।
७६. अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च तदन्तविधिं प्रयोजयन्ति ।
७७. गामादाग्रहणेष्वविशेषः ।
७८. श्रुतानुमितयोः श्रौतो विधिर्बलीयान् ।
७९. अन्तरङ्गानपि विधिन् बहिरङ्गो यबादेशो बाधते ।
८०. सकृद्गते स्पर्द्धे यद् बाधितं तद् बाधितमेव ।
८१. द्वित्वे सति पूर्वस्य विकारेषु बाधको न बाधकः ।
८२. कृतेऽन्यस्मिन् धातुप्रत्ययकार्ये पश्चाद् वृद्धिस्तद्बाध्योट् च ।
८३. पूर्वं पूर्वोत्तरपदयोः कार्यं कार्यं पश्चात् सन्धिकार्यम् ।
८४. संज्ञा न संज्ञान्तरबाधिका ।
८५. सापेक्षमसमर्थम् ।
८६. प्रधानस्य तु सापेक्षत्वेऽपि समासः ।
८७. तद्धितीयो भावप्रत्ययः सापेक्षादपि ।
८८. गतिकारकङस्युक्तानां विभक्त्यन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समासः ।
८९. समासतद्धितानां वृत्तिर्विकल्पेन, वृत्तिविषये च नित्यैवापवादवृत्तिः ।
९०. आदशभ्यः संख्या संख्येये वर्तते न संख्याने ।
९१. एकशब्दस्यासंख्यात्वं क्वचित् ।
९२. णौ यत्कृतं कार्यं तत्सर्वं स्थानिवद् भवति ।
९३. द्विर्बद्धं सुबद्धं भवति ।
९४. आत्मनेपदमनित्यम् ।
९५. क्विपि व्यञ्जनकार्यमनित्यम् ।
९६. स्थानिवद्भावपुंवद्भावैकशेषद्वन्द्वैकत्वदीर्घत्वान्यनित्यानि ।
९७. अनित्यो णिच् चुरादीनाम् ।
९८. णिलोपोऽप्यनित्यः ।
९९. णिच्सन्नियोगे एव चुरादीनामदन्तता ।
१००. धातवोऽनेकार्थाः ।

१०१. गत्यर्था ज्ञानार्थाः ।

१०२. नाम्नां व्युत्पत्तिरव्यवस्थिता ।

१०३. उणादयोऽव्युत्पन्नानि नामानि ।

१०४. शुद्धधातूनामकृत्रिमं रूपम् ।

१०५. क्विबन्ता धातुत्वं नोज्झन्ति शब्दत्वं च प्रतिपद्यन्ते ।

१०६. उभयस्थाननिष्पन्नोऽन्यतरव्यपदेशभाक् ।

१०७. अवयवे कृतं लिङ्गं समुदायमपि विशिनष्टि चेत्तं समुदायं सावयवो न व्यभिचरति ।

१०८. येन धातुना युक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञाः ।

१०९. यत्रोपसर्गत्वं न सम्भवति तत्रोपसर्गशब्देन प्रादयो लक्ष्यन्ते न तु सम्भवत्युपसर्गत्वे ।

११०. शीलादिप्रत्ययेषु नासरूपोत्सर्गविधिः ।

१११. त्यदादिष्वन्योऽन्यं नासरूपोत्सर्गविधिः ।

११२. स्त्रीखलना अलो बाधकाः स्त्रियाः खलनौ ।

११३. यावत्सम्भवस्तावद्विधिः ।

११४. सम्भवे व्यभिचारे च विशेषणमर्थवत् ।

११५. सर्वं वाक्यं सावधारणम् ।

११६. परार्थे प्रयुज्यमानः शब्दो वतमन्तरेणापि वदर्थं गमयति ।

११७. द्वौ नञौ प्रकृतमर्थं गमयतः ।

११८. चकारो यस्मात्परस्तत्सजातीयमेव समुच्चिनोति ।

११९. चानुकृष्टं नानुवर्तते ।

१२०. चानुकृष्टेन न यथासंख्यम् ।

१२१. व्याख्यातो विशेषार्थप्रतिपत्तिः ।

१२२. यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयुज्यते ।

[ इत्येते पञ्चषष्टिः पूर्वैः सह द्वाविंशं शतं न्याया व्यापका ज्ञापकादियुताश्च । अतः परं तु ये वक्ष्यन्ते ते केचिदव्यापकाः प्रायः सर्वे ज्ञापकादिरहिताश्च । अमीः— ]

१२३. यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः ।

१२४. यस्य येनाभिसम्बन्धो दूरस्थस्यापि तेन सः ।

१२५. येन विना यन्न भवति तत्तस्यानिमित्तस्यापि निमित्तम् ।

१२६. नामग्रहणे प्रायेणोपसर्गस्य न ग्रहणम् ।

१२७. सामान्यातिदेशे विशेषस्य नातिदेशः ।

१२८. सर्वत्रापि विशेषेण सामान्यं बाध्यते न तु सामान्येन विशेषः ।

१२९. ङित्त्वेन कित्त्वं बाध्यते ।

१३०. परादन्तरङ्गं बलीयः ।

१३१. प्रत्ययलोपेऽपि प्रत्ययलक्षणं कार्यं विज्ञायते ।

१३२. विधिनियमयोर्विधिरेव ज्यायान् ।

१३३. अनन्तरस्यैव विधिर्निषेधो वा ।

१३४. पर्जन्यवल्लक्षणप्रवृत्तिः ।

१३५. न केवला प्रकृतिः प्रयोक्तव्या ।

१३६. क्विवर्थं प्रकृतिरेवाह ।

१३७. द्वन्द्वात्परः प्रत्येकमभिसम्बध्यते ।

१३८. विचित्राः शब्दशक्तयः ।

१३९. किं हि वचनान्न भवति ।

१४०. न्यायाः स्थविरयष्टिप्रायाः ।

[ एतेऽष्टादश न्यायाः पूर्वैः सर्वैः सह चत्वारिंशं शतं स्तोकस्तोकवक्तव्याः । एक-स्त्वयं बहुवक्तव्यः :— ]

१४१. शिष्टानामनिष्पत्तिप्रयोगधातूनां सौत्रत्वाल्लक्ष्यानुरोधाद्वा सिद्धिः ।



## पुरुषोत्तमदेवकृतलघुपरिभाषावृत्त्यनुसारिपरिभाषापाठः

( १२ )

१. अर्थवद्ग्रहणे नानर्थकस्य ।

२. न वर्णग्रहणेषु ।

३. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य ।

४. औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ।

५. गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ।

६. बहुव्रीहौ तद्गुणसंविज्ञानमपि ।

७. कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः ।

८. पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ।

९. मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् ।

१०. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।

११. नानुबन्धकृतमनेकाल्त्वम् ।

१२. नानुबन्धकृतमसारूप्यम् ।

१३. नानुबन्धकृतमनेजन्तत्वम् ।
१४. एकदेशविकृतमनन्यवत् ।
१५. साम्प्रतिकाभावे भूतपूर्वगतिः ।
१६. वर्त्स्यत्प्रवृत्त्येह कार्याणि क्रियन्ते ।
१७. अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ।
१८. आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ।
१९. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।
२०. अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते ।
२१. असति सम्भवे बाधनं भवति ।
२२. अस्ति च सम्भवो यदुभयं स्यात् ।
२३. सत्यपि सम्भवे बाधनं भवति ।
२४. एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ।
२५. क्वचिदेकदेशोऽप्यनुवर्तते ।
२६. प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
२७. विभक्तौ लिङ्गविशिष्टाग्रहणम् ।
२८. ताच्छीलिकेषु च वासरूपविधिर्नास्ति ।
२९. प्रत्येकं वाक्यपरिसमाप्तिर्ज्ञेया ।
३०. क्वचित्समुदायेन वाक्यपरिसमाप्तिः ।
३१. भाव्यमानोऽण् सवर्णान्न गृह्णाति ।
३२. स्वरविधौ व्यञ्जनमविद्यमानवत् ।
३३. णौ कृतं स्थानिवद् भवति ।
३४. यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः ।
३५. निर्दिश्यमानस्यादेशा भवन्ति ।
३६. निरनुबन्धकग्रहणे न सानुबन्धकस्य ।
३७. एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ।
३८. तदनुबन्धकग्रहणे नातदनुबन्धकस्य ।
३९. सकृद्गतौ विप्रतिषेधे यद्बाधितं तद् बाधितमेव ।
४०. पुनः प्रसङ्गविज्ञानात् सिद्धम् ।
४१. असिद्धं बहिरङ्गमन्तरङ्गे ।
४२. नाजानन्तर्ये बहिरङ्गप्रक्लृप्तिः ।
४३. अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवत् ।
४४. प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ।

४५. स्त्रीप्रत्ययेनानुपसर्जनेन ।
४६. कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ।
४७. गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ।
४८. उपपदविभक्तेः कारकविभक्तिर्बलीयसी ।
४९. सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ।
५०. सर्वो द्वन्द्वो विभाषैकवद् भवति ।
५१. उभयत आश्रये नान्तादिवत् ।
५२. वर्णाश्रये प्रत्ययलोपलक्षणप्रतिषेधः ।
५३. विकरणेभ्यो नियमो बलीयान् ।
५४. अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते ।
५५. धातोः स्वरूपग्रहणे तत्प्रत्यय एव कार्यसंविज्ञानम् ।
५६. सर्वे विधयश्छन्दसि विकल्प्यन्ते ।
५७. अभेदका इह शास्त्रे गुणाः ।
५८. स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि ।
५९. भवति हि क्रियाविशेषणानां कर्मत्वं नपुंसकत्वं च ।
६०. अव्यक्ते गुणसन्देहे नपुंसकलिङ्गं प्रयोजयेत् ।
६१. सन्देहे बहुवचनं प्रयोक्तव्यम् ।
६२. व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ।
६३. उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ।
६४. सामान्यातिदेशे विशेषस्यानतिदेशः ।
६५. सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ।
६६. ताच्छीलिके णेप्यण्कृतानि कार्याणि भवन्ति ।
६७. लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणं भवति ।
६८. अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते ।
६९. गामादाग्रहणेष्वविशेषः ।
७०. उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।
७१. अङ्गवृत्तेः पुनरङ्गवृत्तावविधिर्निष्ठितस्य ।
७२. प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ।
७३. प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ।
७४. वार्णादाङ्गं बलीयः ।
७५. यस्मिन्विधिस्तदादावल्ग्रहणे ।
७६. क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्निष्ठितस्य ।
७७. अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ।

७८. ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ।
७९. व्यपदेशिवद्भावोऽप्रातिपदिकेन ।
८०. समासप्रत्ययविधौ तदन्तविधिप्रतिषेध उगिद्वर्णग्रहणवर्जम् ।
८१. संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति ।
८२. समासान्तो विधिरनित्यः ।
८३. संज्ञापूर्वको विधिरनित्यः ।
८४. अनित्यमागमशासनम् ।
८५. अङ्गाधिकारे तस्य तदुत्तरपदस्य च ।
८६. पर्जन्यवल्लक्षणप्रवृत्तिः ।
८७. चानुकृष्टमुत्तरत्र नाभिसम्बध्यते ।
८८. अर्थाद्विभक्तिविपरिणामः ।
८९. उदित् सवर्णं गृह्णाति न सवर्णमात्रम् ।
९०. सर्वविधिभ्य इड्विधिर्बलीयान् ।
९१. सर्वविधिभ्यो लोपविधिर्बलवान् ।
९२. प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम् ।
९३. नानर्थकेऽलोन्त्यविधिः ।
९४. निमित्तकार्यं न तन्निमित्तस्य ।
९५. न हि कार्यी निमित्तत्वेनाश्रीयते ।
९६. इतरेतराश्रयाण्यपि हि कार्याणि प्रकल्पन्ते ।
९७. नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थः ।
९८. प्रतिपदविधानाद् योगविभागो बलीयान् ।
९९. अबाधकान्यपि निपातनानि भवन्ति ।
१००. योगविभागादिष्टसिद्धिः ।
१०१. अवयवसिद्धेः समुदायसिद्धिर्बलीयसी ।
१०२. श्रुतानुमितयोः श्रौतः सम्बन्धो बलीयान् ।
१०३. सम्प्रसारणं सम्प्रसारणाश्रयं च कार्यं बलवत् ।
१०४. अकृतव्यूहाः पाणिनीयाः प्रवर्तितमपि शास्त्रं व्यावर्तयन्ति ।
१०५. यथोद्देशं संज्ञापरिभाषम् ।
१०६. कार्यकालं संज्ञापरिभाषम् ।
१०७. अनन्त्यविकारोऽन्त्यसदेशस्य ।
१०८. नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन ।
१०९. गणकार्यमनित्यम् ।
११०. पूर्वत्रासिद्धीयमद्वित्वे ।

१११. विधिविधानविधिभाजां त्रयाणां सन्निधाने तदन्तविधिर्भवति ।
११२. पूर्वत्रासिद्धीये न स्थानिवत् ।
११३. निमित्तापाये नैमित्तिकस्याप्यपायः ।
११४. प्रकृतिवदनुकरणं भवति ।
११५. क्वचिदपवादविषयेऽपि उत्सर्गोऽभिनिविशते ।
११६. गर्भवट्टावादयो भवन्ति ।
११७. सूत्रे लिङ्गवचनमतन्त्रम् ।
११८. ज्ञापकसिद्धं न सर्वत्र ।
११९. अगत्या तु परिभाषाश्रीयते ।
१२०. भवति व्याख्यानतो विशेषप्रतिपत्तिर्न सन्देहादलक्षणम् ।

## पुरुषोत्तमदेवकृतः परिभाषापाठः

### ( १२-अ )

१. व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ।
२. यथोद्देशं संज्ञापरिभाषम् ।
३. कार्यकालं संज्ञापरिभाषम् ।
४. अनेकान्ता अनुबन्धाः ।
५. एकान्ताः ।
६. नानुबन्धकृतमनेकाल्त्वम् ।
७. नानुबन्धकृतमनेजन्तत्वम् ।
८. नानुबन्धकृतमसारूप्यम् ।
९. कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः ।
१०. उभयगतिरिह भवति ।
११. कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते ।
१२. यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ।
१३. निर्दिश्यमानस्यादेशा भवन्ति ।
१४. यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ।
१५. अर्थवद्ग्रहणे नानर्थकस्य ।

